अथ

# अभिज्ञानशाकुन्तलम् ।

'लक्ष्मी' नामकाभिनवटीकासहितम् ।

---

या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री,
ये द्वे कालं विधत्तः, श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् ।

---

लक्ष्मीः

कर्णतालानिलावातैरलीनिव मलीमसान् ।
निवारयन्तं विघ्नौघान् महागणपतिं नुमः ॥ १ ॥
शुक्तिवधूमातृगृहं सत्कविसौभाग्यसारसर्वस्वम् ।
ब्रह्मवशीकृतिचूर्णं कलये श्रीपादपांसुकणम् ॥ २ ॥
वाग्देवतावतारः कवितावनितास्वयंवृतो दयितः ।
श्रीहर्ष एव साक्षात् गुरुवरगङ्गाधरो जयति ॥ ३ ॥
तपोमूर्तिं सत्यनिष्ठं शान्तमाचारतत्परम् ।
पितरं भैरवं वन्दे वात्सल्यरससागरम् ॥ ४ ॥

विलासो नु सरस्वत्याः शृङ्गारो नु वपुर्धरः ।
जयत्युक्तिसुधावर्षी कालिदासः कवीश्वरः ॥ ५ ॥

श्रीकालिदासस्य कवीश्वरस्य वचांसि वेदाक्षरसंमितानि ।
व्याख्यां विधित्सोर्मम हन्त तेषां विज्ञोपहासास्पदमेव कृत्यम् ॥ ६ ॥

शाकुन्तले नाटकसार्वभौमे टीका अनेका विहिता बुधेन्द्रैः ।
पाण्डित्यपूर्णाः खलु छात्रवृन्दैर्न ताः सुबोधा इति मे प्रयासः ॥ ७ ॥

श्रीमत्काशिकराजकीयसुरगीर्विद्वत्परीक्षाप्रथा-
ऽध्यक्षैर्मङ्गलदेवशास्त्रिभिरहं सस्नेहमाज्ञापितः ।
छात्राणामुपकारिणीं विरचये शाकुन्तले नाटके
लक्ष्मीं नाम सुलक्षणां सुविवृतिं नारायणः कौतुकात् ॥ ८ ॥

अथ तत्रभवान् कविकुलसार्वभौमः सरस्वतीविलासात्मा श्रीमान् कालिदासः प्रभुसंमितेभ्यो वेदशास्त्रादिभ्यः, सुहृत्संमितेभ्यः पुराणेतिहासादिभ्यः, कान्तासंमितेषु दृश्यश्रव्यात्मतया द्विविधेषु काव्येषु अनभिनेयार्थेभ्यः श्रव्यकाव्येभ्यो येषां न व्युत्पत्तिराविर्भवति तेषामत्यन्तसुकुमारमतीनां राजपुत्रादीनां विनेयानां चतुर्वर्गोपायव्युत्पत्तिसिद्धये अभिनेयार्थं दृश्यकाव्यविशेषं चिकीर्षुर्निर्विघ्नं ग्रन्थसमाप्तये शिष्टाचारपरिपालनाय च नाटकारम्भसमुचितनान्दीद्वारा, स्वेष्टदेवतास्मरणपूर्वकमाशीर्वादात्मकं मङ्गलं विदधाति—या सृष्टिरिति । या स्रष्टुः आद्या सृष्टिः, या विधिहुतं हविः वहति, या होत्री च, ये द्वे कालं विधत्तः, या श्रुतिविषयगुणा विश्वं व्याप्य स्थिता, यां सर्वबीजप्रकृतिमाहुः, यया प्राणिनः प्राणवन्तः, ताभिः प्रत्यक्षाभिः अष्टाभिः तनुभिः प्रपन्नः ईशः वः अवतु—इत्य-

यामाहुः सर्वबीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥ १ ॥

न्वयः । स्रष्टुर्ब्रह्मणो या आद्या प्राथमिकी सृष्टिः सर्गः, जगत् सिसृक्षुर्ब्रह्मा सर्वादौ यामुत्पादयामास सेत्यर्थः । जलरूपेति भावः । 'अप एव ससर्जादौ तासु वीर्यमथासृजत्'—इति स्मृतेः । तथा च जलरूपैका तनुः । या तनुर्विधिना श्रुतिस्मृत्युक्तविधानेन हुतं हविर्होमद्रव्यं वहति देवपित्राद्यर्थं धारयति । अग्निरूपेत्यर्थः ।

तदुक्तं भारते—देवाश्च पितरोऽश्नन्ति जुह्वते मयि यत्सदा । इति ।

या तनुर्होत्री होमकर्तृरूपा यजमानमयीत्यर्थः ।

तथा च लैङ्गे—दीक्षितं ब्राह्मणं प्राहुरात्मानं च मुनीश्वर ।
यजमानाह्वया मूर्तिश्शिवस्य शिवदायिनः ॥ इति ।

ये च द्वे मूर्ती कालं रात्रिंदिवरूपं विधत्तः व्यवस्थापयतः, दिवाकरनिशाकरावित्यर्थः । वस्तुतस्तु नित्यस्य कालस्य न सूर्यचन्द्रौ कर्तारावपि तु परिच्छेदकाविति भावः । तथा च सूर्यात्मकं चन्द्रात्मकं चेति तनुद्वयम् । या तनुः श्रुतिः श्रवणेन्द्रिय तस्य विषयो गोचरो गुणः शब्दरूपो यस्याः सा विश्वं जगद्व्याप्य स्थिता । आकाशरूपा तनुरित्यर्थः । यां तनुं सर्वेषां बीजानां प्रकृतिर्योनिः प्रधानकारणमित्याहुः । पृथिवीरूपा तनुरिति भावः ।

तथा च मनुः—इयं हि भूमिर्भूतानां शाश्वती योनिरुच्यते । इति ।

यया तन्वा प्राणिनो जन्मिनः प्राणवन्तः श्वासोच्छ्वासवन्तो भवन्ति । हृदि प्राणवायुः जीवात्मन आश्रयः तद्वन्त इत्यर्थः । वायुरूपा तनुरिति भावः । ताभिः प्रत्यक्षाभिरक्षमिन्द्रियं प्रति वर्तमानाभिः स्थूलबुद्धिभिरपि संवेद्याभिरित्यर्थः ।

१ सर्वभूत । २ प्रसन्नः ।

तथा चोक्तं—भूमिरापोऽनलो वायुरात्मा व्योम रविश्शशी।

इत्यष्टौ सर्वलोकानां प्रत्यक्षा हरमूर्तयः॥ इति।

अष्टाभिरष्टसंख्याभिस्तनुभिर्मूर्तिभिः प्रपन्नो युक्त ईशश्चराचरजगन्नियन्ता शक्तिविशिष्टः परमेश्वरः शिवः।

यथोक्तम्—ईकारः परमा शक्तिः शकारः परमः शिवः। इति।

शक्तिशक्तिमद्रूपयोर्जगदीश्वरयोर्भेदोऽप्यभेदश्च।

उक्तं च—शक्तिश्च शक्तिमांश्चेति पदार्थद्वयमुच्यते।

शक्तयोऽस्य जगत्सर्वं शक्तिमांश्च महेश्वरः॥

वः सामाजिकानवतु रक्षत्वित्याशीः।

प्रत्यक्षाभिरिति तनुविशेषणेनेशस्य जगदवने सर्वदा सावधानत्वं सूच्यते, तं प्रति सर्वेषां भक्तानां रक्षाप्रार्थनासौकर्यं च ध्वन्यते। तथा भूतपञ्चकगुणानां परोपकारैकमात्रप्रयोजनकत्वात्, यजमानस्य यागानुष्ठानद्वारा, दिवाकरनिशाकरयोर्दिनरात्रिकालव्यवस्थापनेन च परोपकारैकार्थप्रवृत्तिकत्वाच्च ताभिस्तनुभिः प्रपन्न इत्यनेन ईशस्य कैमुतिकन्यायेन सर्वात्मना परोपकारैकप्रवणत्वं सूच्यते।

तथा चोक्तमनेनैव कविना **कुमारसम्भवे**—

विदितं वो यथा स्वार्था न मे काश्चित् प्रवृत्तयः।

ननु मूर्तिभिरष्टाभिरित्थंभूतोऽस्मि सूचितः॥ इति।

एतावताऽयमेव परमेश्वरः स्वाभीष्टसिद्धये सर्वैरुपास्य इति सिद्ध्यति। ईष्टे—इति ईश इत्यर्थेनास्यैव जगत्स्वामित्वेन जगद्रक्षणाधिकारोऽस्तीत्यायाति।

किञ्च भगवन्मूर्तीनां प्रत्यक्षत्वकथनेन तास्वेकां विनाऽपि प्रपञ्चस्थितेर्न निर्वाहो भवतीति ध्वन्यते। तेन तासां प्रपञ्चभरणं प्रति साधनत्वम्, ईशस्य

तत्कर्तृत्वं चेति फलितम् । तथा चोक्तमनेनैव महाकविना—'अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाऽभिमानः' इति ।

'आशीर्नमस्क्रियारूपः श्लोकः काव्यार्थसूचकः । नान्दीति कथ्यते' इतिनान्दीलक्षणानुसारेणात्रापि काव्यार्थसूचनं वर्तते । तथाहि—पञ्चभूतात्मिकया यजमानरूपया तेजोऽधिकत्वेन सूर्यचन्द्ररूपया अष्टाभिरित्यनेनाष्टदिक्पालमात्रात्मिकया तन्वा प्रपन्न ईशो राजा दुष्यन्तः कथानायकः, तस्य भरतवंशादिमत्त्वं, यथायोग्यं करग्रहणं, यागाद्यनुष्ठानं, राजा कालस्य कारणमिति लोकप्रसिद्धिः, प्रजानां भरणविनयाधानादि, तासां रक्षणं चेत्यर्थाः सप्तभिर्वाक्यैः सूच्यन्ते । अथ या सृष्टिः स्रष्टुराद्येत्यनेन शकुन्तला सूचिता । एतावत्कालपर्यन्तं तादृशसृष्टेरजातत्वादाद्यत्वम् । या विधिना सुरतविधिना हुतं निषिक्तं हवी रेतो वहतीति तस्या गर्भः । होत्रीत्यनेन कण्वः । ये द्वे इत्यनेनानसूयाप्रियंवदे सख्यौ कालं शापान्तसमयं विधत्तो बोधयतः । पातिव्रत्यादिभिर्गुणैर्विश्वं व्याप्य श्रुत्या वार्तया विषये देशे गुणैस्त्रिभिः शार्ङ्गरवशारद्वतगौतमीभिरयत एतादृशी स्थिता । श्रुतिविषयगुणाया इत्येकं पदम् । एतेन सगर्भायास्तस्या दुष्यन्तद्वारदेशगमनम् । सर्वेषां बीजं मूलभूतश्चक्रवर्तित्वाद्भरतः । तस्य प्रकृतिरुत्पत्तिरिति भरतोत्पत्तिः । यया प्राणिनः प्राणवन्त इत्यनेन भरतशकुन्तलया सह स्वपुरागमनम् । अष्टाभिः प्रकृत्यादिभिः प्रत्यक्षाभिः प्रपन्न इत्यनेन निर्वहणसंधिसमाप्तौ नटाशंसा 'प्रवर्ततां प्रकृतिहिताय पार्थिवः' इत्यादिका सूचिता ।

भावार्थश्च—'हे सामाजिकाः ! युष्माकं प्रत्यक्षाभिर्जलवह्नियजमानसूर्यसोमव्योमपृथ्वीवायुमयीभिरष्टाभिर्मूर्तिभिरिदं विश्वं बिभ्रद्भगवान्महेश्वरो युष्मान्नाटयरसास्वादप्रतिपन्थिभ्यः प्रत्यूहेभ्यो रक्षत्विति । अत्र च सर्वरीतीनां मुख्यतमा सर्वगुणाश्रया वैदर्भी रीतिः । यत्र तत्रौजःप्रभृतिगुणसद्भावेऽपि प्राधान्येन प्रसादगुण एव । 'सृष्टिस्रष्टुः' इति 'वहतिहुत' इति 'प्राणिप्राण' इति 'भिर्भिः' इति

छेकानुप्रासेन सह सर्वश्लोकगतस्य वृत्त्यनुप्रासस्यैकवाचकानुप्रवेशलक्षणः सङ्करः। 'प्राणिनः प्राणवन्तः' इत्यत्र पुनरुक्तवदाभासश्चेति शब्दालङ्काराः।

अत्रेहविर्वहनादिस्वभाववर्णनात् स्वभावोक्तिः, या सृष्टिः स्रष्टुराद्येत्यादि-दिशा जलादीनां भङ्ग्यान्तरेणाभिधानात् पर्यायोक्तम्, साभिप्रायविशेषणव-त्त्वात् परिकरः, या हविर्या च होत्रीति विरोधाभासः, प्रत्यक्षाभिः ताभिः तनुभिः प्रपन्नः इत्यनेन युगपद्बहुनायिकासंसक्तनायकव्यवहारसमारोपप्रतीतेः समासोक्तिश्चे-त्यर्थालङ्काराः।

अत्रेशस्य सर्वशरीरधारिशरीरापेक्षया वैलक्षण्यप्रतीतेर्व्यतिरेकालङ्कारो व्यङ्ग्यः। किञ्च सर्वथाऽदृश्याया ईश्वरतनोः प्रत्यक्षत्वकथनेनाद्भुतः, हविर्वहनादिव्यापारेणो-त्साहप्रतीतेरीशपदेन जगद्रक्षणप्रवणताप्रतीतेश्च वीरः, पूर्वोक्तसमासोक्त्यलङ्कार-महिम्ना 'ईश' इत्यत्र शिवशक्त्युभयप्रतीतेश्च दाम्पत्यावगमेन शृङ्गारश्च रसो ध्वनिमर्यादया प्रतीयते। प्राधान्येनैतै रसैरनुप्राणित ईशालम्बनः कविकालि-दासात्मसमवेतो भक्तिरूपो भावश्च।

स्रग्धरा छन्दः। "म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्" इति लक्षणात्। चन्द्रनामाङ्कितोयं नान्दीश्लोकः। नान्दीस्वरूपं चोक्तं साहित्यदर्पणे—

आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता॥
मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी।
पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत॥ इति।

इयमष्टपदा नान्दी। पदानि अत्र वाक्योपलक्षकानि। तथा चोक्तम्—

न पदं पदमित्याहुर्वाक्यं तु पदमुच्यते।
पदैर्द्वादशभिः षड्भिरष्टभिर्वाऽप्यलङ्कृताम्॥

मध्यमस्वरसंयुक्तां ततो नान्दीमुदीरयेत् ।
तत्संख्यातैर्भवेन्नान्दी वाक्यैः क्वाऽपि त्रिपर्ययः ॥ इति ।

इत्थं पूर्वरङ्गस्य मुख्याङ्गरूपां नान्दीं कृत्वा नाटकारम्भं सूचयितुमुपक्रमते— **नान्द्यन्ते प्रविशति सूत्रधार इति** । अत्रेदं बोध्यम्—नान्दी नाम मङ्गलाचरणम्, तच्च प्रबन्धकार्यस्य निर्विघ्नपरिसमाप्तये कर्तव्यम्, तथा च सूत्रधारेणाऽपि स्वप्रयोक्तव्यनाटकस्य निर्विघ्नं परिसमाप्तये तदवश्यं कर्तव्यमेव । सोऽपि यथाभिमतं तत्कृत्वैव रङ्गान्तः प्रविशति । एतावता पूर्वं नान्दी ततः सूत्रधारप्रवेश इत्यायाति । जवनिकोद्घाटनात्पूर्वमेव नान्दीप्रारम्भः, नान्दीं पठत्येव सूत्रधारे जवनिकोद्घाटनम्, ततो नान्दीसमाप्तिरित्युचितम् । सम्प्रति प्रायः क्वचिदस्य विपर्ययो दृश्यते । **नान्द्यन्ते** नान्द्याः अन्ते । नान्दीलक्षणं च—

देवतादिनमस्कारमङ्गलारम्भपाठकैः ।
या क्रिया नन्द्यते नाट्यारम्भे नान्दी तु सा स्मृता ॥

इत्यभियुक्तैरुक्तम् । नान्दी च नाटकीयपूर्वरङ्गस्याङ्गभूता । पूर्वरङ्गलक्षणं च—

सभापतिः सभा सभ्या गायका वादका अपि
नटी नटश्च मोदन्ते यत्रान्योन्यानुरञ्जनात् ॥
अतो रङ्ग इति ज्ञेयं पूर्वं यस्मात्प्रकल्प्यते ।
तस्मादयं पूर्वरङ्ग इति विद्वद्भिरुच्यते ॥

इति प्राचीनैरुक्तम् ।

यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके ।
तथाऽप्यवश्यकर्तव्या नान्दी विघ्नप्रशान्तये ॥

इति प्रमाणादवश्यकर्तव्यायां नान्द्या अन्ते समाप्तौ सूत्रधारः प्रविशति रङ्गस्थल-

( नान्द्यन्ते )

[1]**सूत्रधारः**—( नेपथ्याभिमुखमवलोक्य )

अलमतिविस्तरेण। आर्ये ! यदि नेपथ्यविधानमवसितम्, [2]इतस्तावदागम्यताम्।

---

मिति शेषः। **सूत्रधारः** सूत्रं धारयतीति सूत्रधारः। सूत्रं नाटकीयसर्वपात्रप्रवर्त्तनाप्रयोजकं सर्वान्तःस्यूतं पुष्पमालासूत्रमिव प्रकृते भरतशास्त्रं ग्रन्थतोऽर्थतः प्रयोगतश्च यो धारयति स सूत्रधार इत्यर्थः।

**नेपथ्याभिमुखमवलोक्येति**। नेपथ्यम् = वेषविन्यासः। 'आकल्पवेषौ नेपथ्यम्' इत्यमरः। तदर्थं यद्गृहं तदपि नेपथ्यम्। यत्र नाटकीयपात्राणि स्ववेषविन्यासान् कुर्वते तन्नेपथ्यमिति भावः।

तदभिमुखमवलोक्य = तत्सांमुख्येन चक्षुः प्रेरयित्वेत्यर्थः। कृतस्य मङ्गलाचरणस्य पर्याप्तत्वमवधार्य कथयति — **अलमतिविस्तरेण** इति। इतोऽधिकं मङ्गलाचरणमनावश्यकमिति भावः। अथ सूत्रधारो नटीमामन्त्रयन् ब्रूते — **आर्ये इति**। वस्तुत इतः प्रभृत्येव नाटकारम्भः।

सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम्।
स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम्॥

इति लक्षणानुसारेण सूत्रधारनटीसंवादात्मकमिदमामुखं नाम प्रथममङ्गमित एव प्रारब्धम्। 'पत्नी चार्येति संभाष्या' इति भरतवचनानुसारेण सूत्रधारेण स्वपत्नी नटी 'आर्ये' इत्येव सम्बोध्यते। 'रामादिव्यञ्जको वेषो नटे नेपथ्यमिष्यते।' इति भरतोक्तेर्नाटकीयपात्रोचितवेषो नेपथ्यम्, तस्य विधानं करणं समाप्तं यदि

---

१. प्रविशति सूत्रधारः। २. तदिहा।

( प्रविश्य )

**नटी**—[1]अज्जउत्त इअं म्हि । आणवेदु अज्जो को णिओओ अणुचिट्ठिअदुत्ति ।

आर्यपुत्र, इयमस्मि । आज्ञापयतु आर्यः को नियोगोऽनुष्ठीयतामिति ।

**सूत्रधारः**—आर्ये ! [2]अभिरूपभूयिष्ठा परिषदियम्—

---

तर्हि इत आगम्यताम्, मत्समीपमेहीत्यर्थः । अत्र प्राप्तकाले लोट् । त्वदागमनकालः प्राप्त इत्यर्थः ।

सूत्रधारवाक्यश्रवणसमनन्तरं नटी **प्रविश्य** रङ्गान्तः सूत्रधारसमीपमागत्य ब्रूते — **अज्ज, इअं म्हि** इति । 'आर्य ! इयमस्मि' आगता इति शेषः । आज्ञापयतु आर्यः को नियोगोऽनुष्ठीयतामिति । नियोगः आज्ञा । किं मया कर्तव्यमिति भवानाज्ञापयतु इत्यर्थः ।

रङ्गं प्रसाध्य मधुरैः श्लोकैः काव्यार्थसूचकैः ।
ऋतुं कंचिदुपादाय भारतीं वृत्तिमाश्रयेत् ॥
भारती संस्कृतप्रायो वाग्व्यापारो जनाश्रयः ।
भेदैः प्ररोचनायुक्तैर्वीथीप्रहसनामुखैः ॥

इति **धनिकोक्त्यनुसारेण** भारतीवृत्तेः प्ररोचनात्मकमङ्गमुपन्यस्यति सूत्रधारमुखेन **आर्ये ! अभिरूपभूयिष्ठा** इत्यादिना । 'उन्मुखीकरणं प्रशंसातः प्ररोचना' इति **धनिकोक्तेः** परिषत्प्रशंसारूपेयं प्ररोचना ज्ञेया । अभिरूपा विद्वांसो भूयिष्ठा बहुला यस्यां सा विद्वद्वृन्दमण्डितेत्यर्थः । इयं परिषद् पुरःस्थितसामाजिकसमूहः अस्तीति शेषः । तथा च ईदृश्या विद्वद्विशेषविशिष्टायाः सभायाः पुरः साधारणेन प्रयोगेणाभिनीतेन न प्रयो-

---

१. अज । २. रसभावदीक्षागुरोर्विक्रमादित्यस्य ।

अद्य[1] खलु कालिदासग्रथितवस्तुनाऽभिज्ञानशाकुन्तलनामधेयेन[2] नवेन नाटकेनोपस्थातव्यमस्माभिः । तत्प्रतिपात्रमाधीयतां यत्नः ।

**नटी**—सुविहिदप्पओअदाए अज्जस्स ण किं वि [3]परिहावइस्सदि ।

[4]सुविहितप्रयोगतयाऽऽर्यस्य न किमपि परिहापयिष्यते ।

---

जनसिद्धिरित्यवधार्य आह—**अद्य खल्विति** । खलुः विशेषद्योतकः । **कालिदासग्रथितवस्तुना** जगदम्बोपासनावाप्तलोकोत्तरवाग्बुद्धिवैभवेन कालिदास इति विश्वविदितनाम्ना कविना ग्रथितं रसानुगुण्येन निबद्धं न तु कल्पितमिति वस्तुनः प्रख्यातत्वम् । वस्तु इतिहासप्रसिद्धमितिवृत्तं कथाशरीरं यस्मिंस्तत्कालिदासग्रथितवस्तु तेन नवेनापूर्वेण नाटकेन = नाटकाख्येन दशरूपकाऽवान्तरभेदेन । तल्लक्षणं चोक्तं यथा **भरतेन**—

प्रख्यातवस्तुविषयं प्रख्यातोदात्तनायकं चैव ।
राजर्षिवंशचरितं तथा च दिव्याश्रयोपेतम् ॥
नानाविभूतिभिर्युतमृद्धिविलासादिभिर्गुणैश्चाऽपि ।
अङ्कप्रवेशकाढ्यं भवति हि तन्नाटकं नाम ॥ इति ।

'कालिदासग्रथितवस्तुना' 'नवेन'इति विशेषणद्वयेन प्रस्तुत- नाटकस्य रसप्रधानत्वमप्रयुक्तत्वमपूर्वत्वं च व्यज्यते । उपस्थातव्यमाराधनीयमित्यर्थः । तत्तस्मात्कारणात् । प्रतिपात्रं पात्रे पात्रे प्रयोक्ष्यमाणेषु सर्वेषु पात्रेषु । आधीयतां क्रियताम् । यत्नः तत्तदुचितपाठ्यादिप्रयोगेष्वसंमोहेनाध्यवसायः ।

सूत्रधारेण कृतां स्खलितशङ्कां परिहरन्ती नटी आह—सुविहिदप्पओअदाए इति । 'सुविहितप्रयोगतया आर्यस्य न किमपि परिहापयिष्यते' इति संस्कृतम् । सुविहितः

---

१. अस्यां च । २. शाकुन्तलरूपेण । ३. परिहाइस्सदि । ४. सुविदित ।

सूत्रधारः—(सस्मितम्) आर्ये ! कथयामि ते भूतार्थम् ।

आ परितोषाद्विदुषां
न साधु मन्ये प्रयोगविज्ञानम् ।
बलवदपि शिक्षिताना—
मात्मन्यप्रत्ययं चेतः ॥ २ ॥

---

स्वयं सम्यक् शिक्षितः विनेयेषु सहकारिषु संक्रामितश्च प्रयोगोऽभिनयो येन स सुविहितप्रयोगस्तस्य भावस्तया ।

तथा चोक्तमनेनैव कविना—

श्लिष्टा क्रिया कस्यचिदात्मसंस्था संक्रान्तिरन्यस्य विशेषयुक्ता ।

यस्योभयं साधु स शिक्षकाणां धुरि प्रतिष्ठापयितव्य एव ॥ इति ।

आर्यस्य सुविहितप्रयोगतयाऽस्माकमार्य द्वारैव शिक्षितत्वेन अस्माभिः करिष्यमाणे प्रयोगे न किंचिदपि परिहापयिष्यते । ओहाङ्गताविल्यस्मात् णिजन्तात् कर्मणि लट् । न्यूनमसमीचीनं वा न करिष्यते ।

**सूत्रधार इति** । ममाभिनयशिक्षां प्रति तवैतावान् विश्वासो नोचित इत्येतद्-द्योतनार्थं स्मितं मन्दहास्यं तेन सहेति सस्मितं सूत्रधारो नटीं ब्रूते । प्रयोगस्य साधुत्वे सुशिक्षितत्वं न प्रमाणम्; अपि तु विद्वत्परितोष एवेत्याह — **कथयामीत्यादिना चेत**इत्यन्तेन । भूतार्थं सत्यार्थं परमार्थमिति यावत् । 'भूतं क्ष्मादौ पिशाचादौ न्याय्ये सत्योपमानयोः' इति विश्वः । त्वं भूतार्थं परमार्थं न वेत्सि इदानीं सावधानमाकर्णयेति भावः । **आपरीति** । विदुषां प्रयोगरहस्यवेदिनां सामाजिकानां परितोषादा परितोषं मर्यादीकृत्य यावत् परितोषो भवतीत्यर्थः । प्रयोगविज्ञानम् = प्रयोगस्य विज्ञानं विशेषेण ज्ञानम् । आत्मन इति शेषः । साधु

**नटी**—(सविनयम्) अज्ज ! एवं एदम्[१] । अणन्तरकरणिज्जं दाव[२] अज्जो आणवेदु ।

आर्य ! एवमेतत् । अनन्तरकरणीयं तावदार्य आज्ञापयतु ।

**सूत्रधारः**—आर्ये ! किमन्यदस्याः परिषदः [३]श्रुतिप्रसादनतः । तदिममेव[४] [५]तावदचिरप्रवृत्तमुपभोगक्षमं ग्रीष्मसमयमधिकृत्य गीयताम् ।

---

न मन्ये । त्वं साध्विति मन्यसे तन्न युक्तम्, साध्विति न मन्तव्यमिति भावः । साधुमननाभावे हेतुमाह—**बलवदिति**—बलवत् = अत्यर्थम् । शिक्षितानामपि सम्प्रदायपुरःसरं पारम्पर्यवतो गुरोरभ्यस्तविद्यानामपीत्यर्थः । प्रयोगकर्तॄणां चेतः चित्तम् आत्मनि = आत्मप्रयोगे, अप्रत्ययम् = अविश्वासमित्यर्थः । सामाजिकपरितोष एव प्रयोगस्य साधुत्वे विश्वासं जनयति । सुशिक्षितस्यापि नटस्यात्मनः प्रयोगे सामाजिकपरितोषपरिज्ञानमन्तरा विश्वासो न भवतीति भावः । उक्तंच—'प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः' इति । अर्थान्तरन्यासोऽलङ्कारः । विशेषात्मनः पूर्वार्द्धार्थस्य सामान्यात्मनोत्तरार्द्धार्थेन समर्थनात् मतिरूपो भावश्च व्यङ्ग्यः । आर्या छन्दः ।

**नटीति** । स्वोत्त्यनौचित्यपरिज्ञानात् विनयो नम्रत्वं तेन सहेति सविनयम् । "आर्य ! एवमेतत् । अनन्तरकरणीयं तावदार्य आज्ञापयतु" इति संस्कृतम् । एवमेतत् = यत्न आधेय एवेति भावः । अनन्तरकरणीयम् = इदानीं प्रवेशशेषतया कर्तव्यम् । अग्रे यत्कर्तव्यं तदार्यः कथयतु इति भावः ।

**सूत्रधार इति** । **किमन्यदिति** । अस्याः परिषदस्सभायाः । तास्थ्या-

---

१. एवं णेदम् । २. दाणिं । ३. श्रुतिप्रमोदहेतोर्गीतात्करणीयमस्ति । ४. तदमु, नन्वमु । ५. नातिचिर ।

सम्प्रति हि—

सुभगसलिलावगाहाः
पाटलसंसर्गिसुरभिवनवाताः ।
प्रच्छायसुलभनिद्रा
दिवसाः परिणामरमणीयाः ॥३॥

---

तत्र स्थितानां सामाजिकानां श्रुतिप्रसादनतः = श्रुतिप्रसादनहेतोः श्रोत्रेन्द्रियं तद्द्वारा मनोऽपि प्रसादयितुमित्यर्थः । अन्यत्किं करणीयमित्यनुषज्यते । इमं = कार्यद्वारा प्रत्यक्षायमाणम् । एवकारो ग्रीष्मसमयमित्यत्र सम्बध्नाति । अचिरप्रवृत्तं = नवावतारम्, अत एवोपभोगक्षमम् = उपभोगाय चन्दनाद्युपभोगाय क्षमः समर्थस्तम् । अधिकृत्य = विषयीकृत्य । संप्रति = ग्रीष्मे । हि यस्मात् । उपभोगयोग्यत्वमुपपादयति—

**सुभगेति** । अन्वयः स्पष्टः । सुभगः सुन्दरो ग्रीष्मसंतापनिवर्तकत्वेन मनोहर इति यावत् । सलिलावगाहो जलस्नानं येषु ते । अत्रावगाहस्य स्वरूपतोऽनुपयोगात्क्रीडारूपेण परिणमति । तथा च सुभगसलिलक्रीडा इत्यर्थः । पाटलानां पाटलिपुष्पाणां संसर्गस्सम्बन्धो येषु ते । सुरभयो मनोज्ञाः । मनोज्ञत्वं च शीतलत्वेन सुखस्पर्शात् । 'सुगन्धे च मनोज्ञे च सुरभिर्वाच्यवन्मतः' इति विश्वः । एवंभूता वनवाता येषु ते । प्रच्छाये प्रभूतायां तरुच्छायायां सुलभा निद्रा येषु ते । परिणामे दिवसावसाने सायङ्काल इत्यर्थः । आतपोपशमेन चन्द्रोदयादिना च रमणीयाः सुखसंचरणीयाः । अत्र सर्वेषामेव दिवसविशेषणानां साऽभिप्रायत्वेन परिकराऽलङ्कारः । ग्रीष्मसमयस्वभाववर्णनात्स्वभावोक्तिश्च । ग्रीष्मस्योद्दीपकत्वेन शृङ्गारः, प्राधान्येन तदुपस्कृता ग्रीष्मविषयिणी प्रीतिश्च ध्वन्यते ॥३॥

**नटी**—तह । तथा ( इति गायति )

[1]इसिचुंबिआइं भमरेहिं
सुउमारदरकेसरसिहाइं ।
ओदंसयंति दअमाणा
पमदाओ सिरीसकुसुमाइं ॥ ४ ॥

ईषच्चुम्बितानि भ्रमरैः
सुकुमारतरकेसरशिखानि ।
अवतंसयन्ति दयमानाः
प्रमदाः शिरीषकुसुमानि ॥ ४ ॥

---

**नटीति । तहेति ।** 'तथा' इति संस्कृतम् । तथा = तदेव करोमीत्यर्थः' । अथ श्रृङ्गारानुगुणान् ग्रीष्मधर्मानधिकृत्य गायति—**इसीति** । 'ईषच्चुम्बितानि भ्रमरैः सुकुमारतरकेसरशिखानि । अवतंसयन्ति दयमानाः प्रमदाशिशरीषकुसुमानि इति संस्कृतम् । भ्रमरैः मधुकरैः ईषदल्पाल्पं सरभसोपक्रममन्तरेत्यर्थः । चुम्बितानि स्पृष्टानि । चुम्बनेन पुष्परसास्वादो लक्ष्यते । नातिपीडनं व्यङ्ग्यम् । सुकुमारतराः अतिशयेन कोमलाः केसरशिखाः किंजल्काग्राणि येषां तानि । सुकुमारतरकिंजल्काग्रत्वेन यथाकाममवस्थातुमशक्यत्वाद् भ्रमरैः ईषदास्वादितमधूनि । दयमानाः सकृपाः । सौकुमार्यातिशयप्रयुक्तया म्लानिशङ्कया दयां कुर्वत्यः । अकठोरं स्पृशन्त्य इति यावत् । प्रमदाः प्रकृष्टो मदो रूपसौभाग्यजनितो गर्वो यासां ताः । वराङ्गना इत्यर्थः । शिरीषकुसुमानि तदाख्यपुष्पाण्यवतंसयन्ति कर्णभूषणीकुर्वन्ति । अत्र

---

१. ईसीसि, खण,

**सूत्रधारः**—आर्ये ! साधु गीतम्। अहो राग[1]निविष्टचित्तवृत्तिरालिखित[2] इव सर्वतो रङ्गः। तदिदानीं कतमं प्रयोगमाश्रित्यैनमाराधयामः।

**नटी**—णं अज्जमिस्सेहिं[3] पढमं एव्व आणत्तं अहिण्णाणसाउन्दलं णाम अपुव्वं णाडअं पओए[4] अधिकरीअदुत्ति।

नन्वार्यमिश्रैः प्रथममेवाज्ञप्तमभिज्ञानशाकुन्तलं नामापूर्वं नाटकं प्रयोगेऽधिक्रियतामिति।

---

दिवसानामुपभोगयोग्यतया शिरीषकुसुमानामालम्बनविभावपरिपोषकतया च तत्कारणस्य ग्रीष्मस्य शृङ्गारोपयोगितया उत्कर्षाऽतिशयो व्यज्यते। परिकरः काव्यलिङ्गं चालङ्कारौ ॥ ४ ॥

**सूत्रधार इति**। साधु गीतम्, त्वयेति शेषः। गीतसौष्ठवेन विस्मितः सन्नाह—**अहो इति**। अहो इत्याश्चर्ये। अदृष्टपूर्वरङ्गस्तैमित्यदर्शनादाश्चर्यम्। रागनिविष्टचित्तवृत्तिः = रागे = गीतस्वरविशेषे निविष्टा = मग्ना चित्तवृत्तिरन्तःकरणव्यापारो यस्य सः। आलिखित इव=चित्रार्पित इव। रागनिविष्टेत्यनेन चित्तवृत्तेर्वेद्यान्तरसंस्पर्शराहित्यं व्यज्यते; तेन बाह्यकरणानां निष्पन्दत्वं च, तन्निमित्तमिदमालिखितत्वोत्प्रेक्षणम्। सर्वत इति सप्तम्यन्तात् प्रथमान्ताद्वा तसिः। रङ्गः=रङ्गवासी जनः। तत्=तस्मात्। **इदानीमिति**। रङ्गप्रसादने कृते सतीतिभावः। प्रयोगम्=प्रयुज्यते इति प्रयोगो नाट्यम्। एनम् = रङ्गम्।

**नटीति**। 'नन्वार्यमिश्रैः प्रथममेवाज्ञप्तमभिज्ञानशाकुन्तलं नामापूर्वं नाटकं प्रयोगेऽधिक्रियतामिति' इति संस्कृतम्। आर्यमिश्रैः = पूज्यैर्भवद्भिरित्यर्थः। मिश्रशब्दः पूज्यवाची। तत् कथमिदानीं विचार्यत इति भावः। नन्वभिज्ञान-

---

१. रागापहृत। २. बद्ध। ३. अज्जेण। ४. णाडअं अहिणीअदुत्ति।

**सूत्रधारः**—आर्ये ! सम्यगनुबोधितोऽस्मि । ननु अस्मिन्क्षणे विस्मृतं खलु मया[1] । कुतः ?

**तवास्मि गीतरागेण हारिणा प्रसभं हृतः ।**

(कर्णं दत्वा)

**एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा ॥ ५ ॥**

---

शाकुन्तलस्य नाटकस्य नाम पूर्वमनुक्तम्; तत् कथं तस्यानुवादः क्रियते ? उच्यते—कालिदासग्रथितवस्तुना नवेनेति विशेषणद्वयौचित्येनैव तदवगमात् ।

**सूत्रधार इति ।** अनुबोधितः = स्मारितः ।

विस्मृतेर्हेतुमाह-**तवेति ।** अस्मीत्यहमर्थेऽव्ययम् । हारिणा = श्रुतिमनोहरेण, हर्तुं शीलमस्येति तेन वा । तव गीतरागेण=गीते निबद्धो यो रागस्तेन । राग औज्ज्वल्यमिति वा । हृतः = व्याक्षिप्तचित्तः दूरं नीतश्च ।

**कर्णं दत्वेति ।** श्रुत्वेत्यर्थः ।

इत्थं नटीं स्वकार्यं कथयन् मृगयां क्रीडतः प्रकृतनाटकनायकस्य दुष्यन्तस्य रथध्वनिमाकर्णयन्निवाह—**एष इति ।** युगान्तरे देशान्तरे च वृत्तस्य तदानीं सूत्रधारेण श्रवणं नाट्यधर्मेण, तस्य तद्देश्यत्वात्तदानीन्तनत्वाच्च । यथा उत्तररामचरिते—'सूत्रधारः—एषोऽस्मि कार्यवशादायोध्यिकस्तदानीन्तनश्च संवृत्तः' इति । अतिरंहसा = वेगातिशयवता सारङ्गेण । सजातीयैः सह अरं द्रुतं गच्छतीति सारङ्गः तेन मृगेण एषः = पुरोवर्ती राजा दुष्यन्त इव । यथा राजा

---

१. मयैतत् ।

( इति निष्क्रान्तौ )

प्रस्तावना।

( ततः प्रविशति मृगानुसारी सशरचापहस्तो राजा रथेन सूतश्च। )

दुष्यन्तो वेगविशेषवता मृगेणाकृष्ट एतावतीं भूमिमायातः, एवमेवाहमपि तव गीतरागेण हृतोऽवधारितमपि नाटकप्रयोगं विस्मृतवानस्मीति भावः। अत्र श्रौती उपमा काव्यलिङ्गं च। आमुखाङ्गभूतः प्रयोगातिशयोऽयम्,

एषोऽयमित्युपक्षेपात्सूत्रधारप्रयोगतः।
पात्रप्रवेशो यत्रैष प्रयोगातिशयो मतः॥

इति दशरूपके तल्लक्षणात्॥ ५॥

**प्रस्तावनेति**। तल्लक्षणं च—

विधेर्यथैव सङ्कल्पो मुखतां प्रतिपद्यते।
प्रधानस्य प्रबन्धस्य तथा प्रस्तावना मता॥ इति।
एषामन्यतमेनार्थं पात्रं वाऽऽक्षिप्य सूत्रभृत्।
प्रस्तावनान्ते निर्गच्छेत्ततो वस्तु प्रपञ्चयेत्॥ इति च।

इति प्रस्तावना।

'एष राजेव दुष्यन्तः' इत्यामुखसूचितस्य नायकस्य प्रवेशमाह — **तत इति**। अयं धीरोदात्तो नायकः, अतोऽस्य संस्कृतं पाठ्यम्। सूतस्यापि संस्कृतं पाठ्यम्। उक्तं च—

धीरोद्धते धीरललिते धीरोदात्ते तथैव च।
धीरप्रशान्ते च तथा पाठ्यं योज्यं च संस्कृतम्॥ इति,
संमतानां देवतानां राजन्यामात्यसैनिके।
वणिङ्मागधसूतानां पाठ्यं योज्यं तु संस्कृतम्॥ इति च।

**सूतः**—( राजानं मृगं चावलोक्य ) आयुष्मन्!

कृष्णसारे ददच्चक्षुस्त्वयि चाधिज्यकार्मुके।
मृगानुसारिणं साक्षात्पश्यामीव पिनाकिनम् ॥६॥

ततः=सूत्रभृन्निर्गमनानन्तरम्। रथेन मृगानुसारीत्यन्वयः।

राज्ञो वनप्रवेशावस्थां स्तुवन् प्रभावातिशयं प्रतिपादयति—**आयुष्मन्नित्यादिना**। "रथी सूतेन चायुष्मान्" इत्युक्तेरेवं सम्बुद्धिः सावधानश्रवणार्था। कृष्णसारे त्वयि च चक्षुः ददत्=कृष्णसारं त्वां च पश्यन्नित्यर्थः। दानेन प्रेरणं लक्ष्यते। चक्षुषस्तदायत्तत्वं व्यङ्ग्यम्। मृगानुसारिणम्=भयेन पलायमानं यज्ञमृगमनुसरन्तम्,

अथ विद्ध्वा मृगं सोऽथ बाणेन नतपर्वणा।
पृष्ठतो धनुरादाय चचार गहने वने॥
यथा हि भगवान् रुद्रो विद्ध्वा यज्ञमृगं दिवि।

इति **भारतोक्तेः**। साक्षात् = प्रत्यक्षम्। "साक्षात्प्रत्यक्षतुल्ययोः" **इत्यमरः**। पिनाकिनमिति विशेष्यमपि विशेषणत्वेनाप्युपयुज्यते, महाकविवचसां कामधेनुसमानत्वात्। तेन पिनाकिनमित्यस्य अधिज्यपिनाकमीश्वरमित्यर्थः। कृष्णसारे, अधिज्यकार्मुके त्वयि च चक्षुः ददत् अहं मृगानुसारिणं साक्षात् पिनाकिनं पश्यामीवेत्यन्वयः। कृष्णसारानुसारिणमधिज्यकार्मुकं त्वां पश्यन्नहं यज्ञमृगानुसारिणमधिज्यपिनाकं प्रत्यक्षमीश्वरं पश्यामीति तात्पर्यम्।

अस्मिन् पद्ये 'पश्यामीव' इत्यत्रेवशब्दश्रवणेनात्रोपमा वोत्प्रेक्षा वा कल्पयितुं शक्या; तथापि सूक्ष्मेक्षिकया विचार्यमाणे नोपमोत्प्रेक्षे इह सम्भवतः। तथाहि—इवशब्दस्य यथाश्रुतान्वये पिनाकिनं पश्यामीवेत्यत्र

राजा—सूत ! दूरममुना सारङ्गेण [1]वयमाकृष्टाः । [2]अयं पुनरि-

"यथेववादिशब्दा यत्परास्तस्यैवोपमानताप्रतीतिः" इति वचनात् पश्यामीति तिङन्तस्योपमानत्वं प्रसज्येत; तच्च "नोपमानं तिङन्तेन" इति भामहोक्त्या निषिध्यते । तस्मादत्र नोपमा वक्तुमुचिता । अथोत्प्रेक्षाभ्युपगमपक्षेऽपि पिनाकिनं पश्यामीवेत्यात्मनि पिनाकिदर्शनक्रियाकर्तृत्वमुत्प्रेक्षणीयं स्यात्, तदपि दुर्वचम्, "आत्मावस्था हि नोत्प्रेक्ष्या" इत्यभियुक्तोक्तेः । इवशब्दस्य भिन्नक्रमत्वे त्वां पश्यन्नहं पिनाकिनमिव पश्यामीति वाक्यार्थमध्ये पश्यन्नित्यनूद्यमानायां दर्शन-क्रियायां सत्यां कथमत्रोपमोत्प्रेक्षे भवेताम् ? त्वां पिनाकिनमिव पश्यामि इत्युपमायाः परिपाटी, त्वां प्रत्यक्षं पिनाकिनमिव पश्यामि इत्युत्प्रेक्षायाः; इत्यतोऽत्र नोपमोत्प्रेक्षे सम्भवतः । इवशब्दोऽत्र वाक्यालङ्कारे । कः पुनरत्रालङ्कारः ? इति चेदुच्यते—अशक्यवस्त्वन्तरकरणात्मा विशेषोऽत्रालङ्कारः, विशिष्टराजदर्शनं कुर्वता सूतेन तत्क्षणमेव विशिष्टपिनाकिदर्शनस्यापि क्रियमाणत्वात् ।उक्तं च—

विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिः ।
एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरा ॥
अन्यत्प्रकुर्वतः कार्यमशक्यस्यान्यवस्तुनः ।
तथैवकरणं चेति विशेषस्त्रिविधः स्मृतः ॥ इति ।

अत्र विशेषालङ्कारेण राज्ञः प्रभावातिशयलक्षणं वस्तु व्यज्यते ॥६॥

अथ लक्ष्यीकृते कृष्णसारे सुदूरमपगते सति तस्य वेगातिशयेन विस्मयमनु-वदन् तत्स्वभावं वर्णयन्राजा सूतं प्रोत्साहयति—सूतेत्यादिना । आकृष्टाः = आनीताः । अवशा इव दूरमध्वानं समाकृष्टा इत्यर्थः । अत्राकर्षणेना-

१. समा । २. सोऽयम् ।

दानीमपि—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने [1]बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
[2]दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥७॥

---

नयनं लक्ष्यते, तदायत्तगतित्वं व्यङ्ग्यम् । वयमिति सूतमप्यात्मन्यन्तर्भाव्योक्तिर· भिगम्यगुणद्योतिका मृगयाकौशलसूचिका च । वयमप्यमुना दूरं समानीता इति विस्मयः । तस्यैव परिपोषं मृगगतिस्वभाववर्णनेन दर्शयति—अयमिति । इदानीमपि = देहपातयोग्ये कालेऽपि, न केवलं प्रयाणारम्भे ।

**ग्रीवाभङ्गेति ।** पश्य, अयं पुनरिदानीमपि अनुपतति स्यन्दने मुहुर्ग्रीवा· भङ्गाभिरामं बद्धदृष्टिः ( सन् ) शरपतनभयात्पश्चार्द्धेन भूयसा पूर्वकायं प्रविष्टः ( सन् ) श्रमविवृतमुखभ्रंशिभिरर्द्धावलीढैर्दर्भैः कीर्णवर्त्मा ( सन् ) उदग्रप्लुत· त्वाद्वियति बहुतरमुर्व्यां स्तोकं प्रयातीत्यन्वयः ।

पश्य=अवलोकय, अयं=पुरोदृश्यमानमृगः अनुपतति=अनुसरति, अनुधावती· त्यर्थः । स्यन्दने=रथे । मुहुर्वारंवारं ग्रीवाभङ्गाभिरामम्—ग्रीवायाः=कन्धरायाः भङ्गेन = परिवृत्त्या, भङ्गसदृशेन सातिशयेन पश्चादवलोकनार्थेन वलनेन विवर्त्तनेन वा । अभिरामं=दर्शनीयं, वलितग्रीवविलासिनीविभ्रमवीक्षणवन्मनोहरं यथा भवति तथा । मार्गावलोकनाय दृष्टेः पुरोऽपि प्रेरणान्मुहुरिति । अनुपततीति दर्शने हेतुः । बद्धदृष्टिः—बद्धा=अनुबद्धा दृष्टिर्येन सः, स्यन्दनं पश्यन्नित्यर्थः । बद्धदृष्टिरित्यत्र बद्ध-

---

१. दत्त । २. शष्पैः ।

पदेन सम्बन्धो लक्ष्यते । दर्शने तात्पर्यातिशयस्तन्मूलो भयातिशयश्च ध्वन्यते । शरपतनभयात्—शरस्य=बाणस्य पतनभयात् पातशङ्कया, इदानीमिदानीमत्र शरः पतिष्यतीति भयादित्यर्थः। अत्र भयादिति हेतूपन्यासो राज्ञो दुष्यन्तस्य "भयरूपोऽश्च तदिङ्गितबोधनम्" इत्यनुसारिणी काऽपि सिद्धिरासीदिति सूचयति। पश्चार्द्धेन—अपरोऽर्धः पश्चार्द्धः, उत्तरकायः। "अपरस्यार्द्धे पश्चभावो वक्तव्यः" इत्यनेनापरस्य पश्चादेशः। तेन, देहस्य पश्चाद्भागेन करणेन। भूयसा = बाहुल्येन पूर्वकायं = देहपूर्वभागं प्रविष्टः, अत्यल्पमपि वैदूर्यं लब्धुमतितरां सङ्कोचितपृष्ठभागः। पश्चाद्धावितः प्रहर्ता उत्तरकाय एव प्रहरेदित्युत्तरकायं पूर्वकाये सुदूरं प्रवेशयेत्यर्थः। संमुखीनचरणद्वयावकाशे प्रवेशितलाङ्गूलान्तावयव इति भावः। प्रविष्ट इत्यनेन संकोचो लक्ष्यते; भयरहितप्रदेशप्राप्तिश्च ध्वन्यते। श्रमविवृतमुखभ्रंशिभिः—श्रमेण = धावनश्रमेण विवृतं=व्यात्तं यन्मुखं तस्माद् भ्रंशिभिः=पतद्भिः अर्द्धावलीढैः—अर्द्धमसंपूर्णं यथा स्यात्तथाऽवलीढैः = कवलितैश्चर्वितैर्वा दर्भैः = कुशैः कीर्णवर्त्मा—कीर्णं = व्याप्तं वर्त्म=मार्गो येन सः। अत्र कीर्णवर्त्मा इत्युक्त्या मृगस्य कदाचिददर्शनेऽपि दर्भैस्तद्गतिर्ज्ञायते इति गम्यते। उदग्रप्लुतत्वात्—उदग्रमुत्कटं, वेगातिशयशालि प्लुतं = प्लवनं यस्य सः, तद्भावस्तस्मात्। वियत्याकाशे बहुतरं = कालप्रमाणतो देहसंबन्धाच्चाधिकम्, उर्व्यां = भुवि स्तोकम्=अल्पं प्रयाति = गच्छतीत्यर्थः।

अत्र हे सूत! वयममुं सारङ्गं दूरमनुगताः। तत्कारणभूतः प्राणापायभयहेतुकोऽमुष्य वेगातिशयः पूर्ववदेवावतिष्ठत इति फलितोऽर्थः। तेनेयता रथवेगेन दुरासदोऽयमिति व्यज्यते; तेन तूर्णं चोदयाश्वानिति च। अयमेवात्र प्रतिपाद्योऽर्थः।

इह महाकविः प्रायः प्रतिपिपादयिषितानर्थान्व्यङ्ग्यमर्यादया प्रतिपादयति। अत एवास्य महाकवित्वम्। यदुक्तं—"व्यङ्ग्यव्यञ्जकाभ्यामेव सुप्रयुक्ताभ्यां महाकवीनां कवित्वलाभः, न वाच्यवाचकरचनामात्रेण" इति। स्वभावोक्तिरत्रालङ्कारः,

( सविस्मयम् ) तदेष कथमनुपतत एव मे प्रयत्नप्रेक्षणीयः [1]संवृत्तः ?

**सूतः**—आयुष्मन् ! [2]उद्घातिनी भूमिरिति मया रश्मिसंयमनाद्रथस्य मन्दी[3]कृतो वेगः । तेन मृग एष विप्रकृष्टान्तरः संवृत्तः । संप्रति समदेशवर्तिनस्ते[4] न दुरासदो भविष्यति ।

---

बिभ्यतः सारङ्गस्य क्रियारूपवर्णनात् । "स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम्" इति लक्षणात् । स्वभावोक्त्या परिपुष्टो भयानको रसः । स च प्राधान्येन प्रतीयमानस्य अद्भुतरसस्याङ्गम् । स्रग्धरा वृत्तम् ॥७॥

**सविस्मयमिति ।** विस्मयसहितमाहेत्यर्थः । तदेषः = मृगः अनुपतत एव = पश्चाद्धावत एव मे, प्रयत्नप्रेक्षणीयः—प्रयत्नेन = अतिनिपुणदर्शनेन प्रेक्षणीयः = दर्शनीयः संवृत्तः = जातः । पूर्वं स्पष्टलक्ष्योऽपि अधुना कष्टलक्ष्यः कथं सञ्जात इति सूतं प्रति प्रश्नः । सारङ्गदूरीभावे हेतुमाह सूतः—**आयुष्मन्निति । उद्घातिनीति ।** भूमिः=अत्रत्या भूः उद्घातिनी-उद्घातयति पादस्खलनं जनयतीत्युद्घातिनी= निम्नोन्नता, विषमा । "उद्घातः कथ्यते पादस्खलने" इति **विश्वः** । इति हेतोः मया, रश्मिसंयमनात्-रश्मीनां=प्रग्रहाणां संयमनात्=आकर्षणात्, रश्मिसंयमनं कृत्वेत्यर्थः । ल्यब्लोपे पञ्चमी । रथस्य वेगः मन्दीकृतः = अल्पीकृतः । तेन हेतुना एष मृग्यते इति मृग इत्यन्वर्थनामा, विप्रकृष्टान्तरः-विप्रकृष्टं=दूरं सातिशयं वा अन्तरमवकाशो यस्य सः । "अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये" **इत्यमरः** । अतिदूरवर्तीत्यर्थः । संवृत्तः=सञ्जातः । तर्हि दुरासद एवायमित्यत्राह—**सम्प्रतीति ।** समदेशवर्तिनः-समे देशे वर्ततेऽसौ समदेशवर्ती तस्य=समतलभूमिस्थस्य ते=तव

---

१. संवृत्तोऽयं मृगः । २. उत्खातिनी । ३. भूतो । ४. समदेशवर्ती ।

**राजा**—तेन हि मुच्यन्तामभीषवः।

**सूतः**—[1]यदाज्ञापयत्यायुष्मान्। (रथवेगं निरूप्य) आयुष्मन्! पश्य पश्य।

मुक्तेषु रश्मिषु निरायतपूर्वकाया
निष्कम्पचामरशिखा [2]निभृतोर्ध्वकर्णाः।
[3]आत्मोद्धतैरपि रजोभिरलङ्घनीया
[4]धावन्त्यमी मृगजवाक्षमयेव रथ्याः॥८॥

---

राज्ञः दुरासदः=दुष्प्रापः न भविष्यति। **राजेति। तेन हीति।** तर्हीत्यर्थः। अभीषवः=प्रग्रहाः। मुच्यन्ताम्=असंयताः क्रियन्ताम्। अश्वान् धावय, मृगं हन्मीत्यर्थः। **सूत इति। यदाज्ञापयत्यायुष्मानिति।** आयुष्मान्=भवान्। यदाज्ञापयति=आदिशति, अश्वान्धावयामीत्यर्थः। **रथवेगं निरूप्येति।** वेगं=शीघ्रगमनं निरूप्य=नाटयित्वा। हस्तपादादिचालनेनाभिनीयेत्यर्थः। **पश्य पश्येति।** द्विरुक्तिर्विस्मयेन। अश्वानां साधु धावनाद्विस्मयः।

किं द्रष्टव्यमित्यत आह-**मुक्तेष्विति।** रश्मिषु मुक्तेष्वमी रथ्याः मृगजवाक्षमया इव निरायतपूर्वकायाः निष्कम्पचामरशिखाः निभृतोर्ध्वकर्णा आत्मोद्धतैरपि रजोभिरलङ्घनीयाः (सन्तः) धावन्ति इत्यन्वयः।

रश्मिषु=प्रग्रहेषु मुक्तेषु=शिथिलीकृतेष्वसंयतेषु वा सत्सु। भावे सप्तमी। अमी=एते रथ्याः-रथं वहन्ति ते रथ्याः, रथवाहिनोऽश्वाः, "तद्वहति रथयुगप्रासङ्गम्" इति

---

१. यथा। २. च्युतकर्णभङ्गाः। ३. स्वेषामपि प्रसरतां रजसामलङ्घ्याः। ४. धावन्ति वर्त्मनि तरन्ति नु वाजिनस्ते।

**राजा**—( सहर्षम् ) नूनमतीत्य हरितो हरींश्च वर्तन्ते वाजिनः ।

---

सूत्रेण यत् । मृगजवाक्षमया इव—मृगस्य=पुरोधावितस्य हरिणस्य यो जवो =वेगस्तत्र याऽक्षमा=ईर्ष्या तयेव । निरायतपूर्वकायाः—नितरामायताः=रथाकर्षणवेग-वशात् दीर्घाः पूर्वकायाः=देहपूर्वभागाः येषां ते, वेगदीर्घीकृताङ्गा इत्यर्थः । निष्कम्प-चामरशिखाः—निष्कम्पाः=वेगवायुना स्तम्भितत्वान्निश्चलाः चामराणां=कर्णयोरन्तराले भूषणार्थं दत्तानां चमरीपुच्छानां शिखाः=अग्राणि येषां तथाविधाः निभृतोर्ध्वकर्णाः—निभृताः=निश्चलाः ऊर्ध्वाः=ऊर्ध्वाग्राः कर्णा येषां तथाविधाः । अत्र एतैर्विशेषणै रथ्यानां वेगस्य क्रमेणोत्कर्षः प्रतीयते । आत्मोद्धतैः—आत्मभिः=स्वैरुद्धतैः=उत्थापितैः, स्वखुराहतैरित्यर्थः । अपि, न तु केवलं चक्रोद्धतैः । रजःपरमाणूनामतिलाघवेन उत्पतनस्वभावात् तल्लाघवोत्कर्षमपिशब्दो द्योतयति । रजोभिः = धूलिभिः अलङ्घ-नीयाः=अप्राप्याः, अनतिक्रमणीया इत्यर्थः । सन्तो धावन्ति = पलायन्ते ।

अत्र रथ्यगतत्वेन मृगजवं प्रति अक्षमावत्त्वमुत्प्रेक्षते । धावनं निमित्तम् । झटिति मृगासत्तिः फलम् । हेतूत्प्रेक्षैषा । धावतां रथ्यानां संस्थानवर्णनात्स्वभावो-क्तिश्च । तयोरेकत्र वाक्ये परस्परानपेक्षं तिलतण्डुलन्यायेन समवेतत्वात्संसृष्टिरलङ्कारो-ऽयम्, "सैषा संसृष्टिरेतेषां भेदेन यदिह स्थितिः" इति । अत्र तृतीयपादे संबन्धं द्योतयता आत्मशब्देन अनिवार्यार्थक'अलङ्घनीय'पदेन च यथा कश्चित्कस्मिंश्चि-दक्षान्त्या सहसा उत्पतन् आत्मीयैर्निवारितोऽपि न तिष्ठति तथेत्युपमा ध्वन्यते । तया च अक्षमायाः पराकाष्ठा च । रथ्यविषयकप्रीतिभावादिभिरुपस्कृतो विस्मयो रसश्चात्र रस्यते । वसन्ततिलका वृत्तम्, "उक्ता वसन्ततिलका तभजा जगौ गः" इति लक्षणात् ॥८॥

**राजेति** । नूनम् = निश्चयेन । हरितः हरींश्च अतीत्य वाजिनः वर्तन्ते

[1]तथा हि—

यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां
[2]यदर्धे विच्छिन्नं भवति कृतसंधानमिव तत्।
प्रकृत्या यद्वक्रं तदपि समरेखं नयनयो-
र्न मे दूरे किंचित्क्षणमपि न पार्श्वे रथजवात् ॥९॥

---

इत्यन्वयः। हरितः = सूर्याश्वान्। "हरित्सूर्ये च सूर्याश्वे" इति **वैजयन्ती**। हरीन् = इन्द्राश्वान्। अतीत्य = अतिक्रम्य, वेगेन पराभूयेत्यर्थः। चशब्दोऽपि-शब्दार्थे। अनेन वेगातिशय उक्तः। मदीया अश्वाः सूर्याश्वेन्द्राश्वापेक्षयाऽप्यधिक-वेगशालिन इत्यर्थः। उक्तमर्थमुपपादयति— **तथाहीति**।

**यदिति**। रथजवात् सहसा आलोके यत् सूक्ष्मं तत् विपुलतां व्रजति, यत् अर्द्धे विच्छिन्नं तत् कृतसन्धानमिव भवति, यत् प्रकृत्या वक्रं तदपि नयनयोः समरेखम्; क्षणमपि न किंचित् मे दूरे पार्श्वे च न (अस्ति) इत्यन्वयः।

अस्मिन् श्लोके प्रथमपादः पुरोवीक्षणविषयः, द्वितीयोऽर्थभेदेन पृष्ठवीक्षण-विषयः पुरोवेक्षणविषयो वा, तृतीयः पृष्ठवीक्षणविषय इति।

रथजवात्—रथस्य = स्यन्दनस्य जवो = वेगस्तस्मात्। हेतौ पञ्चमी। सहसा = तत्क्षणम्, यत् = गिरिश्रृङ्गादिवस्तु आलोके = दर्शनसमये, "आलोकौ दर्शनोद्योतौ" **इत्यमरः**। सूक्ष्मम् = अतिदूरतयाऽल्पं दृश्यमानं, तत् विपुलतां = स्थूलत्वं बृहत्तां वा व्रजति, स्थूलं दृश्यत इत्यर्थः। दूरेण यत् सूक्ष्मं दृश्यते तदेव रथवेगात् तत्क्षणं समीपमागतं स्थूलं लक्ष्यते इति भावः। अत्र स्वतः-

---

१. यतः। २. यदद्धा।

सिद्धस्यैव स्थूलत्वस्य प्रापणोक्तिः प्रतीत्यनुसारेण । यत् = वस्तु अर्द्धे = अर्द्धभागे विच्छिन्नं = विच्छेदवत् व्यवहितं वा, तत् सहसा = केनापि कृतसन्धानमिव = कृतं सन्धानं योजना यस्य तदिव भवति। यत्पूर्वं छिन्नं तत्तस्मिन्नेव क्षणे दूरत एकमिव दृश्यत इत्यर्थः ।

यद्वा, अत्रार्द्धविच्छिन्नत्वविशिष्टार्थगतत्वेनोत्प्रेक्ष्यमाणात् कृतसन्धानत्वात् अप्रस्तुतात् तन्निमित्तभूतमविच्छिन्नत्वं प्रस्तुतं प्रतीयते । अतः यद्वस्तु नदीस्रोतः-प्रभृति दर्शनसमये अर्द्धे विच्छिन्नम् = समुन्नतसिकतादिप्रच्छादनात् सान्तरम्, तत् तत्क्षणमेवाविच्छिन्नं भवतीत्यर्थः । यत् गिरितटनदीकूलादिवस्तु प्रकृत्या = स्वभावतः वक्रं = कुटिलं तदपि नयनयोः = नेत्रयोः सम्बन्धे, न तु तत्त्वतः । समरेखम्—समा = ऋज्वी रेखा यस्य तत् तथाविधं भवति । क्षणमपि मे किञ्चिदपि वस्तु न दूरे तिष्ठति नापि पार्श्वे = समीपे तिष्ठतीत्यर्थः । अत्र रथ-जवादिति सर्वत्र सम्बध्यते। रथवेगातिशयवशात् यत् दूरतः सूक्ष्मं दृष्टं तदेव समीपं स्थूलं दृश्यते, यत् मध्ये व्यवहितमिव दृष्टं तदेव कृतसन्धानं दृश्यते, एवं स्वभा-वतो वक्रं तदपि दूरतः समरेखं दृश्यते, तस्मात् किमपि वस्तु मम न दूरे नापि समीपे क्षणमप्यवतिष्ठते; यदिदानीं दूरे तदेव क्षणान्तरेण समीपे, यच्चेदानीं समीपे तदेव निमेषमात्रेण दूरे भवतीत्यर्थः ।

अत्र त्रयाणां पूर्ववाक्यार्थानामुत्तरवाक्यार्थं प्रति हेतुत्वेन समर्थकत्वात् काव्य-लिङ्गमलङ्कारः । सूक्ष्मत्वेन आलोकितस्य तत्क्षणमेव विपुलताप्राप्तेरुक्त्या पुर्वं दूर-वर्तित्वं झटिति समीपवर्तित्वं च कारणं गम्यते, एवमन्यत्रापीति कार्यकारणयोर्द्वयोः प्रस्तुतत्वात् पर्यायोक्तम् । मतान्तरे प्रस्तुताङ्कुरो वा । आपाततो विरोधप्रतीते-र्विरोधाभासः, उत्प्रेक्षा, स्वभावोक्तिश्च । शिखरिणी नाम वृत्तम् । तल्लक्षणं यथा—

"रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी" इति ॥९॥

सूत ! पश्यैनं [1]व्यापाद्यमानम् । ( इति शरसंधानं नाटयति । )

( नेपथ्ये )

भो भो राजन् ! आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः ।

सूतः—( आकर्ण्यावलोक्य च ) आयुष्मन् ! अस्य खलु ते बाणपातवर्तिनः कृष्णसारस्यान्तरे [2] तपस्विन उपस्थिताः ।

---

सूतेति । एनम् = हरिणम् । अन्वादेशे एनादेशः । व्यापाद्यमानं, मया हन्यमानं पश्येत्यर्थः । **शरसन्धानं नाटयतीति** । शरस्य सन्धानं = मृगं प्रति प्रयोगाध्यवसायं नाटयति = नाट्येन दर्शयति, अभिनयति । राजवेषो नटः हस्तसञ्चालनादिना बाणप्रयोगोद्योगं सूचयतीत्यर्थः । **नेपथ्ये इति** । अप्रविष्टमेव यज्जवनिकान्तरे वदति तन्नेपथ्ये इत्युच्यते । अन्तरसंधिश्चायं प्रकृतार्थसूचकत्वेन । उक्तं च—

स्वप्नो दूतश्च लेखश्च नेपथ्योक्तिस्तथैव च ।

आकाशवचनं चेति ज्ञेया ह्यन्तरसन्धयः ॥ इति ।

**आश्रममृग इति** । आश्रमस्य = कण्वाश्रमस्य मृगः, अर्थात् कण्वाश्रमे पालितोऽयं मृगः, अत एव न हन्तव्यः । त्वयेति शेषः । न हन्तव्यो न हन्तव्य इति द्विरुक्तिरावेगेन । प्रतिषेधस्य गौरवद्योतनाय हेतोः पूर्वनिर्देशः । **सूत इति** । **बाणपातवर्तिन इति** । पतत्यस्मिन्निति पातः पतनोचितो देशः, तत्र वर्तमानस्येत्यर्थः । अन्तरे = मध्ये उपस्थिताः = प्राप्ताः । एतेन ब्रह्महत्याभयं प्रदर्शितम् ।

---

१. व्यापाद्यम् । २. अन्तरायौ तपस्विनौ संवृत्तौ ।

**राजा**—( ससंभ्रमम् ) तेन हि प्रगृह्यन्तां [1]वाजिनः ।

**सूतः**—तथा । ( इति रथं स्थापयति । )

( ततः प्रविशत्यात्मना[2] तृतीयो वैखानसः । )

---

विप्राग्न्योर्विप्रयोरग्न्योर्दम्पत्योरिपुलक्ष्ययोः ।
नान्तरा गमनं कुर्यान्न देवबलिपीठयोः ॥

इति वचने सत्यपि यत्तपस्विनामिषुलक्ष्ययोर्मध्ये समागमन तन्मृगरक्षार्थमेवेति प्रतिभाति । तत्सहसा शरविमोक्षं मा कार्षीः, इति अनेन द्योत्यते ।

अथ अत्यन्तधार्मिकस्य राज्ञो व्यापारमाह— **ससंभ्रमम्, तेन हीत्यादि** । वाजिनः = अश्वाः प्रगृह्यन्तां = स्थिरीक्रियन्ताम् । अत्र प्रगृह्यन्तामित्यनेन स्थापनं लक्ष्यते, तस्य दुष्करत्वं व्यङ्ग्यम् । **रथं स्थापयतीति** । अत्र रथस्य झटिति स्थापनात्सूतस्य शिक्षाऽतिशयः प्रतीयते । **आत्मना तृतीय इति** । तृतीयः = त्रित्वसंख्यापूरकः, शिष्याभ्यां सहित इत्यर्थः । यथा—**अनर्घराघवे**—"तीर्त्वा-भूतेशमौलिस्रजममरधुनीमात्मनाऽसौ तृतीयः" इति । वैखानसः = तापसविशेषः । "वैखानसो वनेवासी वानप्रस्थश्च तापसः" इति **वैजयन्ती** । अस्यापि संस्कृतं पाठ्यम् । तदुक्तम्—

परिव्राण्मुनिशाक्येषु तापसश्रोत्रियेषु च ।
द्विजा ये चैव लिङ्गस्थाः संस्कृतं तेषु योजयेत् ॥ इति,

"राजन्नित्यृषिभिर्वाच्यः" इति च । समिदाहरणाय प्रस्थितो वैखानसो मध्ये-मार्गं जिघांसया कमपि आश्रममृगमनुसरन्तं राजानमवलोक्य वन्यबुद्ध्याऽयं हन्तुमुद्युक्त इति निश्चित्य परमार्थमभिदधानस्तन्निषिद्धाचरणान्निवारयति—

---

१. अभीषवः । २. सशिष्यः ।

**वैखानसः**—( हस्तमुद्यम्य ) राजन् ! आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः ।

[1]तत्साधुकृतसंधानं प्रतिसंहर सायकम् ।
आर्तत्राणाय वः शस्त्रं न प्रहर्तुमनागसि ॥१०॥

**राजन्नित्यादिना ।** राजन्निति रञ्जनस्वभावस्य तव इदमनुचितमिति द्योतयति । अयं = भवद्बाणलक्ष्यभूतः आश्रममृगः, न वन्य इति भावः ।

**तदिति ।** तत् कृतसन्धानं सायकं साधु प्रतिसंहर । वः शस्त्रम् आर्तत्राणाय, अनागसि प्रहर्तुं न इत्यन्वयः ।

तत्=आश्रममृगत्वेन हन्तव्यत्वाभावाद्धेतोः कृतसंधानम्-कृतं सन्धानं=धनुषि योजना यस्य तं तथाविधं सायकं = बाणं साधु प्रतिसंहर = तूणीरं प्रत्यानय । अत्र साध्विति सन्धानक्रियाविशेषणेन वधाभिसन्धिर्व्यज्यते । प्रतिसंहरणस्य दुष्करत्वमनेन द्योत्यते । तदपि प्रधानधनुर्धरस्य ते सुकरमिति भाव इति केचित् । प्रतिसंहरेति विधौ लोट् । तेनैव नः कृतार्थता स्यादिति भावः । सायकं—स्यति = नाशयतीत्यन्वर्थम् ।

अथ उक्तमर्थमन्वयव्यतिरेकाभ्यां समर्थयति—आर्तेति । वः = युष्माकं पौरवाणां क्षत्रियाणाम् । अनेन जातिधर्मस्त्वयाऽपि परिपालनीय इति द्योत्यते । तथा च **कामन्दकः**—"पीडितानामनाथानां कुर्यादश्रुप्रमार्जनम्" इति । शस्त्रम् = आयुधम्, आर्तत्राणाय = आर्तांस्त्रातुम् । "तुमर्थाच्च भाववचनात्"इति चतुर्थी । विपन्नानां रक्षणार्थमित्यर्थः । अनागसि = निरपराधे प्रहर्तुं न अस्तीत्यर्थः ।

---

१. तदाशु ।

**राजा**—एष प्रतिसंहृतः । ( इति यथोक्तं करोति । )

**वैखानसः**—सदृशमेतत्[1] पुरुवंशप्रदीपस्य भवतः ।

जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव ।
पुत्रमेवंगुणोपेतं चक्रवर्तिनमाप्नुहि ॥११॥

---

अत्र तव सायको दीनममुं व्याघ्रादिभिस्त्रातुम्; सस्यभक्षणाद्यकरणेन निरपराधे अस्मिन्प्रहर्तुं नेति प्रस्तुतो विशेषो गम्यत इति सामान्यनिबन्धनाऽप्रस्तुतप्रशंसा, काव्यलिङ्गं च । मुनिनिष्ठा मतिः राजविषयिणी रतिश्च व्यज्यते ॥१०॥

**एष प्रतिसंहृत इति** । एषः = शरः प्रतिसंहृतः = धनुषोऽवतारितः । अत्र प्रतिसंहृत इति भाविनोऽपि भूतत्वेनोक्तिर्नियोगपालनस्याविलम्बं द्योतयति । इति यथोक्तं करोति = शरं तूणीरे निक्षिपतीति कविवचनम् । यथोक्तकरणात्मना राज्ञो व्यापारेण क्षिप्रकारित्वलक्षणं दक्षत्वं तापसेषु भक्तिविनयादिकं च द्योत्यते ।

**वैखानस इति** । पुरोः = ययातितनयस्य यो वंशः तस्य यः प्रदीपः = प्रदीपवत् उद्भासकः तस्य भवत एतत् = ब्राह्मणानुवर्तित्वं सदृशं = योग्यम् । पौरवाः सदैव ब्राह्मणानामनुकूला आज्ञाकराश्चेत्यर्थः ।

अथ राज्ञ उचितकारित्वेन प्रीयमाणस्तत्प्रशंसापुरःसरमभिलषितं वस्त्वाशास्ते—**जन्मेत्यादिना** । यस्य पुरोर्वंशे जन्म, (तस्य) तव इदं युक्तरूपम् । एवंगुणोपेतं चक्रवर्तिनं पुत्रमाप्नुहि इत्यन्वयः ।

यस्य = भवतः पुरोस्तन्नाम्नो ययातितनयस्य राजर्षेर्वंशे जन्म = उत्पत्तिरस्ति, तस्येत्यध्याहर्तव्यम् । अत्र पुरोवंश इत्यनेन तस्य पितृनियोगनिष्ठत्वेन पित्रे

---

१. मेवैतत् ।

**इतरौ**[1]—( बाहू[2] उद्यम्य ) सर्वथा चक्रवर्तिनं पुत्रमाप्नुहि ।

**राजा**—( सप्रणामम् ) प्रतिगृहीतम् ।

**वैखानसः**—राजन्! समिदाहरणाय प्रस्थिता वयम् । एष [3]खलु

---

स्वयौवनं दत्त्वा तदीयजरास्वीकाररूप इतरविलक्षण उत्कर्षो द्योत्यते । तस्य तव इदं = ब्राह्मणाज्ञापालनं युक्तरूपम् = अतिशयेन युक्तम् । प्रशंसायां रूपप् प्रत्ययः । पुरुवंशजस्य पुरुवद्वर्तनात् युक्ततरमित्यर्थः । एवंगुणोपेतं = एवंविधैर्गुणैरुपेतं चक्रवर्तिनं सार्वभौमं पुत्रं = पुंनाम्नो नरकात् त्रातारमत एवात्यावश्यकं तनयम् आप्नुहि, अस्मद्वचनमहिम्ना लभस्वेत्याशीः ।

अत्र राजविषया रतिर्भावः, आशिषो मुनिप्रयुक्तत्वादव्यभिचारः प्रतीयते । उक्तं च महाकविना **भवभूतिना**—"ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति" इति । अत्र युक्तरूपत्वे प्रथमचरणार्थस्य हेतुत्वेनोपादानात् काव्यलिङ्गमलङ्कारः ॥११॥

**इतराविति** । वैखानसेन सहागतौ शिष्यावित्यर्थः । **बाहू उद्यम्येति** । इदं कविवचनम् । अभयमुद्रया बाहू उपर्युत्क्षिप्येत्यर्थः । बाहूद्यमनमाशीर्वादमुद्रा । **राजेति** । प्रथमं ब्राह्मणा आशिषमुच्चारयन्ति ततो राजा प्रणम्य तामाशिषं स्वीकरोति, इति राजसु नियमः । प्रणामेन सह सप्रणामम् । अनेन राज्ञ आदरातिशयः कृतार्थता च द्योत्यते । प्रतिगृहीतं = स्वीकृतम्, ब्राह्मणवचनमिति शेषः । आशीरियं गृहीता इत्यर्थः । **वैखानस इति** । अयं स्वकार्ये त्वरमाणस्तन्निवेदयन् राजानमवसरोचितं सत्करोति—**राजन्नित्यादि** । समिदाहरणाय-समिधां यज्ञकाष्ठानामाहरणाय = संग्रहाय वयं प्रस्थिताः=चलिताः । एतेन भवता सह आगन्तुं नायमवसर इति विषादो व्यज्यते । एषः=समीपवर्ती, पुरोदृश्यमान इत्यर्थः । अनेन

---

१. इतरोऽपि । २. हस्तम् । ३. चास्मद्गुरोः ।

कण्वस्य कुलपतेरनुमालिनीतीरमाश्रमो दृश्यते । न चेदन्यकार्यातिपातः, तत्प्रविश्य[1] प्रतिगृह्यतामातिथेयः[2] सत्कारः ।

तत्र गमने श्रमाभावो द्योत्यते । खलु निश्चये । कण्वस्य=तन्नाम्नः कुलपतेः,

मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात् ।
अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः ॥ इति,

"सर्वविद्यासु कुशलः सर्वाश्रमपदेश्वरः । मुनिः कुलपतिर्नाम" इति च लक्षणलक्षितस्य । यद्वा कुलस्य = मुनिगणस्य पतिः=रक्षकः तस्य । "कुलं वंशे सजातीयगणे च स्यान्निकेतने" इति केशवः । अनेन कण्वस्य तपःप्रभावातिशयः, तदाश्रमस्य मुनिगणान्वितत्वं, तेन तत्र गत्वा आतिथ्यपरिग्रहस्य सर्वानुग्रहहेतुत्वं च द्योत्यते । कण्वाश्रमविषये यथोक्तं महाभारते—

तं काश्यपतपोगुप्तमाश्रमप्रवरं शुभम् ।
यतिभिर्वालखिल्यैश्च वृतं मुनिगणान्वितम् ॥ इति ।

अनुमालिनीतीरम् = मालिनीति नाम्नी काचिन्नदी तस्यास्तीरे । "अव्ययम्" इत्यादिना विभक्त्यर्थेऽव्ययीभावः। उक्तं च—"अलंकृतं नीपवत्या मालिन्या रम्य-तीरया" इति । अनेन आश्रमस्य उत्कर्षो, वाससौख्यं, तेन प्रवेष्टव्यत्वं च सूचयते । अन्यकार्यातिपात इति। अत्र अन्यशब्दः कार्यान्तरपरामर्शकः । अन्यस्य कार्यस्य अतिपातः = कालविलम्बः, व्याघातो वा न चेदित्यर्थः । नचेदित्यनेन महा-राजत्वात् अवश्यानुष्ठेयानां कार्याणां संभावनां सूचयता तत्सत्त्वे संप्रति तदेवानुष्ठेय-मिति सूच्यते । राज्ञि बहुमानद्योतिका उपचारोक्तिरियमिति केचित् । आतिथेय इति । अतिथिषु साधुरातिथेयः, "पथ्यतिथिवसतिस्वपतेर्ढञ्"

1. प्रविश्यात्र । २. अतिथि ।

अपि च—

'रम्यास्तपोधनानां प्रतिहतविघ्नाः क्रियाः समवलोक्य ।
ज्ञास्यसि कियद्भुजो मे रक्षति मौर्वीकिणाङ्क इति ॥१२॥

इति ढञ् । सत्कारः = पूजा । प्रतिगृह्यतामिति प्रार्थनायां लोट् विधौ च । तेन प्रतिग्रहस्य महाफलत्वमावेद्यते ।

अथ आश्रमं प्राप्य आतिथ्यपरिग्रहे तापसप्रीत्या न केवलं श्रेय एव परन्तु अन्यथाऽपि ते गमनमुपकरिष्यतीत्याह—**अपि च इति ।**

अत्र 'वैखानसः' 'राजन्' 'समिदाहरणाय' इत्यादिना 'सत्कारः' इत्यन्तेन उल्लेखो नाम नाट्यालङ्कार उपक्षिप्तः । तल्लक्षणं—"कार्यदर्शक उल्लेखः" इति ।

**रम्या इति ।** तपोधनानां प्रतिहतविघ्नाः रम्याः क्रियाः समवलोक्य मौर्वीकिणाङ्कः मे भुजः कियत् रक्षति इति ज्ञास्यसि इत्यन्वयः ।

तपोधनानाम् = ऋषीणाम् । अत्र तपःक्षयं विना त्वद्रक्षावैभवेनैव क्रियाणां निर्विघ्नतया निर्वर्तनात् प्रभूततपसामित्यर्थः । अनेन निग्रहानुग्रहसामर्थ्यं व्यज्यते । उक्तार्थे हेतुमाह—**प्रतिहतविघ्ना इति ।** प्रतिहताः = निरस्ताः विघ्नाः = अन्तरायाः याभ्यः यासां वा ताः, अपगतविघ्नत्वादेव समुचितदेशकालद्रव्यसहायतया क्रियमाणत्वात् रम्याः = संतोषकरीः क्रियाः = यज्ञादीः । बहुवचनेन नानाविधत्वमुक्तम् । समवलोक्य—सम्यक् = सावधानं दृष्ट्वा । मौर्वीकिणाङ्कः—मौर्व्या = तदाघातेन सञ्जातः किणो मौर्वीकिणः, ज्याघातरेखेत्यर्थः । सः अङ्कः=चिह्नं यस्य स मौर्वीकिणाङ्कः । "किणो रूढव्रणस्थाने" इति केशवः । "अङ्कश्चिह्नेऽन्तिकोरसोः" इति च । "अङ्को भूषण-

१. धर्म्याः ।

**राजा**—अपि संनिहितोऽत्र कुलपतिः ?

**वैखानसः**—इदानीमेव दुहितरं शकुन्तलामतिथिसत्काराय [1]नियुज्य दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गतः ।

लक्ष्मणोः" इति **हैमश्च** । अनेन रक्षाविषयः क्लेशो व्यज्यते । तस्य विशिष्टफललाभात् तदपगमश्च; "क्लेशः फलेन हि पुनर्नवतां विधत्ते" इति । मे = मम भुजः = बाहुः कियत् = किंपरिमाणं रक्षति = अवति इति ज्ञास्यसि च = प्रत्यक्षीकरिष्यसि च । न केवलं जनपदान्येव किन्तु दुर्गाणि तपोवनान्यपि, न केवलं प्रत्यर्थिभ्यो नरेभ्य एव किन्तु राक्षसेभ्योऽपीति रक्षणस्य इयत्तां ज्ञास्यसीत्यर्थः ।

अनेन रक्षारूपप्रवृत्तेः साफल्यबुद्ध्या तव परमानन्दः, ततः तपोधनानां प्रीतिः, तेन तवाभ्युदयश्चेति द्योत्यत इति प्रस्तुतात्कारणात्प्रस्तुतं कार्यं गम्यते इति प्रस्तुताङ्कुरः, पर्यायोक्तम् , काव्यलिङ्गम्, किणाङ्केत्यंशे पुनरुक्तवदाभासश्च । वीरोपस्कृता राजरतिर्भावः । आर्या छन्दः ॥ १२ ॥

अथ तन्निमन्त्रणेन आश्रमगमनं निश्चिन्वन् कुलपतिदर्शनौत्सुक्येन तत्सान्निध्यं पृच्छति—**अपीत्यादिना** । अत्र अपिः प्रश्ने । "गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि" **इत्यमरः** । अत्र = आश्रमे कुलपतिः = कण्वः सन्निहितः = आत्मना उपस्थितः किमिति प्रश्नः । **वैखानस इति** । इदानीमेव = अस्मिन्नेव क्षणे इत्यर्थः । अत्र एवकारेण कुलपतिदर्शनालाभं प्रति अनुशोचनं व्यज्यते । कुलपतावसन्निहितेऽपि आतिथ्यस्य न विच्छेद इत्याह—**दुहितरमित्यादिना** । दुहितरं = धर्मकन्याम् । एतेन महर्षेस्तस्यां वात्सल्यातिशयः, तस्याश्च गुणातिशयोऽपि सूच्यते । अतिथिसत्काराय, अतिथिसत्कारं कर्तुमित्यर्थः । नियुज्य = आदिश्य

१. आदिश्य ।

**राजा**—भवतु, तामेव द्रक्ष्यामि । सा खलु विदितभक्तिं मां महर्षेः करिष्यति[1] ।

**वैखानसः**—साधयामस्तावत् । ( इति सशिष्यो निष्क्रान्तः । )

---

अस्याः = शकुन्तलायाः प्रतिकूलं = सकोपम् दैवं = भागधेयम्, तद्धेतुकमसुखं चेत्यर्थः । शमयितुं = दूरीकर्तुं सोमतीर्थं = तन्नामकं पुण्यं तीर्थविशेषम् ।

उक्तेन संदर्भेण मुखसन्धेरुपक्षेपनामकं प्रथममङ्गमुपक्षिप्तम् । तल्लक्षणं च यथा—"काव्यस्यार्थसमुत्पत्तिरुपक्षेप इति स्मृतः" इति ।

अथ आश्रमे कुलपतेरसान्निध्यश्रवणेन दूयमानः तस्य स्वभक्तिज्ञानोपायं विचिन्त्य आश्रमगमनं निश्चिन्वन्नाह—**भवत्विति** । 'भवतु' इति अव्ययं मनसा विचारितस्य निश्चयद्योतकम् । "भवत्वान्तरसंवादे निर्दोषे स्मरणेऽपि च" इति यादवः । कर्तव्यं निश्चितमित्यर्थः । तदाह—**तामिति** । शकुन्तलामित्यर्थः । तद्दर्शनफलमाह—**विदितेत्यादि** । विदितभक्तिं—विदितं भक्तिर्यस्य, दृढभक्तिरित्यादिवत् विदितमिति सामान्ये नपुंसकम्, भक्तिपदस्य प्रियादित्वेन पुंवद्भावाप्राप्तेः । "मतिबुद्धि" इत्यादिना वर्तमाने क्तः । तद्योगे "क्तस्य च" इति महर्षेरिति कर्तरि षष्ठी । सा मद्भक्तिं महर्षेर्निवेदयिष्यतीत्यर्थः । अत एव 'तत्र गच्छामि' इत्यनुक्त्वा एवमुक्तिः । अत्र कुलपतिविषया राजनिष्ठा रतिर्व्यज्यते । **वैखानस इति** । स्वकार्यत्वरया राजानमामन्त्रयते—**साधयाम इति** । गच्छाम इत्यर्थः । "प्रायेण ण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यते" इति । यथा रघौ—"साधयाम्यहमविघ्नमस्तु ते" इति । तावदिति वाक्यालङ्कारे अवधारणे वा । सशिष्यः = शिष्याभ्यां सहितः वैखानसो निष्क्रान्तः, रङ्गमञ्चादपगत इति कवेर्वचनम् ।

---

१. कथयिष्यति, निवेदयिष्यति ।

**राजा**—सूत ! तूर्णं [1]चोदयाश्वान् । पुण्याश्रमदर्शनेन तावदात्मानं पुनीमहे ।

**सूतः**—यदाज्ञापयत्यायुष्मान् । ( इति भूयो रथवेगं निरूपयति । )

**राजा**—( समन्तादवलोक्य ) सूत ! अकथितोऽपि ज्ञायत एव यथाऽयमाश्रमाभोगस्तपोवनस्येति ।

---

अत्र वैखानसं प्रवेश्य तन्निमन्त्रणकल्पनमाश्रमप्रवेशोपायलाभाय । तदाशिषः कल्पनं पुत्रलाभस्य, तद्धेतोर्नायिकालाभस्य च अनुकूलदैवसंपादनाय । आशिषो गौरवाय तत्प्रयोक्तॄणां बहुत्वसंपादनार्थं शिष्ययोः कल्पनम् । कण्वगमनकल्पनं नायिकायाः दैवानुकूल्यसंपादनार्थमिव राज्ञः स्वाच्छन्द्येन तद्दर्शनसंलापार्थम्, द्वितीयाङ्के वक्ष्यमाणस्य पुनरप्याश्रमप्रवेशस्य लाभार्थं चेति सर्वमवदातम् ।

**राजेति** । अथ आश्रमप्रवेशे त्वरमाणः सूतं चोदयति—**सूतेत्यादिना** । तूर्णं = शीघ्रम्, अनेन औत्सुक्यं सूच्यते । चोदय = प्रेरय । पुण्याश्रमदर्शनेन—पुण्यस्य = पावनस्य आश्रमस्य = कण्वाश्रमस्य दर्शनेन । यद्वा पुण्यमिति दर्शनविशेषणम्, पुण्येन दर्शनेनेत्यर्थः । आत्मानं = मनः,

आत्माऽर्कचन्द्रवाताहिजीवेषु परमात्मनि ।
देहे यत्ने धृतौ कीर्तौ बुद्धौ मनसि च श्रुतः ॥

**इति केशवः** । पुनीमहे, वर्तमानसामीप्ये भविष्यति लट् । एवमुत्तरत्रापि द्रष्टव्यम् । बहुवचनेन आत्मनि धन्यताबुद्धिर्द्योत्यते । **सूत इति** । आयुष्मान् यत् आज्ञापयति तत्करोमि, अश्वान् नोदयामि इत्यर्थः । भूयः = पुनरपि रथस्य वेगं = सत्वरगमनं निरूपयति = नाटयति, हस्तसञ्चालनादिना वेगाभिनयं करोतीत्यर्थः । कविवचनमिदम् । **राजेति** । समन्तात् = परितः अवलोक्य = दृष्ट्वा ।

---

१. नोदय ।

**सूतः**—कथमिव ?

**राजा**—किं न पश्यति भवान् ? इह हि—

**नीवाराः [1]शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः**
**प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः।**
**विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगा-**
**स्तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः ॥१३॥**

कविवचनमिदम्। अवलोकनेन इदं तपोवनमिति निश्चित्येत्यर्थः। अकथितोऽपि = अन्येन अनिवेदितोऽपि अयं = पुरोदृश्यमानः, तपोवनस्य = तपोवनसंबन्धी आश्रमाभोगः = आश्रमविस्तारः, अकथितोऽपि अयमाभोगस्तपोवनस्येति यथावत् ज्ञायत एवेत्यर्थः। अनेन राज्ञः सूक्ष्मदर्शित्वं सूच्यते। ज्ञानसाधनं राजानं प्रति सूतः पृच्छति—**कथमिवेति**। तद्दिदर्शयिषुः राजा आह—**किन्न पश्यति भवानिति**। यदि भवान् पश्यति तर्हि स्वयमेव जानीयादिति भावः।

ज्ञानसाधनमाह—**इह हि—नीवारा इत्यादिना**। इह हि (क्वचित्) तरूणाम् अधः शुकगर्भकोटरमुखभ्रष्टाः नीवाराः (दृश्यन्ते)। क्वचित् प्रस्निग्धाः उपलाः इङ्गुदीफलभिद एव सूच्यन्ते। (क्वचित्) विश्वासोपगमात् अभिन्नगतयो मृगाः शब्दं सहन्ते। (क्वचित्) च तोयाधारपथाः वल्कलशिखानिःष्यन्दरेखाङ्किताः (दृश्यन्ते) इत्यन्वयः।

इह = अस्मिन्प्रदेशे। हीति हेतौ। क्वचित् = कस्मिंश्चिद्भूभागे तरूणां = वृक्षाणामधः = अधोभागे, तले शुकगर्भकोटरमुखभ्रष्टाः—शुकाः गर्भे = मध्ये येषां तानि

१. शुककोटरार्भक।

यानि कोटराणि तेषां मुखानि = अग्रभागाः तेभ्यो भ्रष्टाः = अधःपतिताः नीवाराः = मुनिधान्यविशेषाः दृश्यन्ते । अत्र शुकगर्भेति विशेषणं कोटरेषु नीवाराणां शुकार्जितत्वम्, तेन तेषां तद्देशेषु बाहुल्यं च सूचयति । कोटराणां मुखेभ्योऽग्रेभ्यो भ्रष्टाः इति अधःसत्त्वे हेतुः । अनया च परिस्थित्या शुकानां तत्र निःशङ्कमवस्थानं, तेन च तस्य प्रदेशस्य खलदुर्जनादिरहितत्वं च सूच्यते । अथ ततोऽपि आश्रमसन्निहितं देशमुपगम्याह—क्वचित् **इङ्गुदीफलभिद इत्यादि** । क्वचित् = कस्मिंश्चिद्भूभागे प्रस्निग्धाः = प्रकर्षेण स्निग्धाः = स्नेहवन्तः, चिक्कणा इत्यर्थः । हेतुगर्भमिदं विशेषणम् । तापसतरूणामिङ्गुदीनां फलानि स्नेहोत्पादनार्थमेभिरेव भिद्यन्ते इति । इङ्गुदीतैलेन हि मुनीनामभ्यङ्गतैलदीपादिकार्यसम्पत्तिर्भवति । उपलाः = पाषाणखण्डाः इङ्गुदीफलभिदः—इङ्गुदीफलानि = तापसतरुफलानि, "इङ्गुदी तापसतरुः" **इत्यमरः** । भिन्दन्ति = छिन्दन्ति तथाविधाः । एव—एवकारेण इङ्गुदीफलभेदनरूपैकविशेषकार्यकारित्वं सूच्यते । सूच्यन्ते=ज्ञायन्ते, 'सूच पैशून्ये' इत्यस्माच्चौरादिकात् कर्मणि लट् । इह क्वचित् प्रस्निग्धा उपला इङ्गुदीफलभिद इति सूच्यन्ते, प्रस्निग्धत्वात् इङ्गुदीफलभिद एते इति ज्ञायन्ते इति वाऽर्थः । अथ ततोऽपि सन्निहिततरं प्रदेशमागत्य आह—क्वचित् **विश्वासोपगमादित्यादि** । क्वचित् = कस्मिंश्चिद् भूभागे विश्वासोपगमात्—विश्वासस्य = हिंसाद्यभावविषयकस्य कस्यापि सरसाकर्षकभावविशेषस्य उपगमात् = आविर्भावात् अभिन्नगतयः—अभिन्ना = विशेषमप्रापिता, पूर्ववदेवावस्थापिता गतिः = गमनं यैः, येषामिति वा, ते तथाभूताः मृगाः = हरिणाः शब्दं = रथनेमिध्वनिं सहन्ते = मर्षयन्ति, तमसहमाना न धावन्तीत्यर्थः । अनेन आश्रमावृत्तिमृगव्यतिरेको दर्शितः । अथ ततोऽप्याश्रमसन्निहितमुद्देशमागम्य आह—क्वचिच्च **तोयाधारपथा इत्यादि** । क्वचिच्च = कस्मिंश्चिद् भूभागे च तोयाधारपथाः—तोयाधाराणां=

**सूतः**—सर्वमुपपन्नम्।

**राजा**—(स्तोकमन्तरं गत्वा) तपोवननिवासिनामुपरोधो[1] माभूत्।

जलाशयानां पन्थानः, जलाशयेभ्यस्तत्तदुटजगमनमार्गा इत्यर्थः। वल्कलशिखा-निःष्यन्दरेखाङ्किताः—वल्कलानां = कृतसंस्काराणां तरुत्वचां शिखाः = अग्राणि ताभ्यः तासां वा निःष्यन्दाः = जलस्रावाः तेषां रेखाः = पङ्क्तयः ताभिरङ्किताः = चिह्निताः दृश्यन्ते। वैखानसानां तथा तापसीनां च वस्त्रनिष्पीडनाभावात् 'निःष्यन्दाः' इत्युक्तम्।

अत्र काव्यलिङ्गम्, अनुमानम्, आश्रमस्वभावोक्तिश्चालङ्काराः। निःशङ्कनीवाराभ्यवहारपरिपुष्टशुकादिमत्त्वेन विश्वस्तहरिणादिसत्तया च सुतरामाकर्षके तपोवने राज्ञः प्रकृष्टा रतिर्व्यज्यते इति भावध्वनिः। शार्दूलविक्रीडितं छन्दः।

राजा सूतं दर्शयति—यत् 'पश्य, पुरोदृश्यमाने अस्मिन् भूभागे मार्गे वर्तमानानां तरूणामधः कोटरासीनाकण्ठपरितृप्तशुकमुखेभ्यो हेलया निपतिताः नीवारा दृश्यन्ते, ततः परमितस्ततः इङ्गुदीतरूणां सन्निधाने निपतितास्निग्धकणाः पाषाणखण्डा दृश्यन्ते, यैः प्रायो मुनिपत्न्यो मुनिबालाश्च इङ्गुदीफलानि भित्त्वा तैलं निष्कासयन्ति। ततः परमिमे स्वभावसरलां गतिमनुवर्तमाना विश्वस्तचेतसो हरिणाः अस्मान् दृष्ट्वा न पलायन्ते। किञ्च एते जलाशयमार्गाः आर्द्रीकृतमुनि-मुनिपत्नीपरिधानीयवल्कलाग्रविगलज्जलधाराङ्किताः सूचयन्ति यत् अधुनैव मुनयो विधायाभिषेकं धौतवल्कलानि गृहीत्वाऽनेन पथा गता इति। तस्मादाश्रमाभोग एवायमिति सिद्ध्यति' इति भावः॥१३॥

**सूत इति।** सर्वम् उपपन्नम् = युक्तम्, युक्तमुक्तं भवता, तपोवनाभोग एवायमित्यर्थः। **राजेति।** स्तोकमन्तरं गत्वा = अल्पं प्रदेशान्तरमतिक्रम्येत्यर्थः।

१. आश्रमोपरोधः।

[1]एतावत्येव रथं स्थापय, यावदवतरामि ।

**सूतः**—धृताः प्रग्रहाः; अवतरत्वायुष्मान् ।

**राजा**—(अवतीर्य[2]) सूत ! विनीतवेषेण प्रवेष्टव्यानि[3] तपोवनानि नाम । इदं तावद्गृह्यताम् । (इति सूतस्याभरणानि धनुश्चोपनीयार्पयति ।)

---

कविवचनमिदम् । तपोवननिवासिनाम् = पुण्याश्रमनिवासिनामित्यर्थः । उपरोधः = रथध्वनिश्रवणजन्यसमाधिभङ्गादिरूपा पीडा मा भूत् = न भवतु । एतावत्येव = आश्रमावधिभूतेऽस्मिन् देशे एव रथं = स्यन्दनं स्थापय = स्थिरीकुरु । अवतरामि यावत् = पद्भ्यामेव गच्छामि, 'यावत्' अवधारणे । **सूत इति** । धृताः प्रग्रहाः = रश्मयः संयमिताः । अवतरत्वायुष्मान्—आयुष्मान् = भवान्, राजा अवतरतु इत्यर्थः । **राजेति** । अवतीर्य = रथाद्भूमिं प्राप्य । कविवचनमिदम् । विनीतवेषेण प्रवेष्टव्यानि गुरुकुलानीत्यादि वचनं मनसिकृत्याह—**विनीतेत्यादि** । अन्यथा तपस्विनां पुरः औद्धत्यं प्रदर्शितं स्यादिति भावः । विनीतवेषेण प्रवेष्टव्यानि तपोवनानि नाम—विनीतः = नम्रतासूचकः किंवा विनीतस्य = नम्रस्य यो वेषः = वस्त्रालङ्कारादिभिः प्रसाधनं तेन प्रवेष्टव्यानि = प्रवेष्टुं योग्यानि, 'नाम' इति प्रसिद्धौ । शान्तेन वेषेण तपोवनं प्रविशेदित्यर्थः । अत्र विनीतेत्यादिना नीतिनामा नाट्यालङ्कार उक्तः । तल्लक्षणं च—"नीतिः शास्त्रेण वर्तनम्" इति । **इदं तावद्गृह्यतामिति** । इदमित्यनेन धनुरादि परामृश्यते । **इति सूतस्य आभरणानि धनुश्चोपनीय अर्पयतीति** । कविवाक्यमिदम् । राजभावप्रच्छादनेऽस्योपयोगः । सूतस्येति दानाभावात् षष्ठ्येव, न चतुर्थी । आभरणानि =

---

१. तदिहैव । २. आत्मानमवलोक्य च । ३. प्रवेश्यानि ।

सूत ! यावदाश्रमवासिनः प्रत्यवेक्ष्याहमुपावर्ते[1] तावदार्द्रपृष्ठाः क्रियन्तां वाजिनः ।

**सूतः**—तथा[2] । ( इति निष्क्रान्तः । )

**राजा**—( परिक्रम्यावलोक्य च ) इदमाश्रमद्वारम् । यावत्प्रविशामि । ( प्रविश्य निमित्तं सूचयन् )[3]

---

अलङ्करणानि उपनीय = उपहृत्य । सूतं तत्कृत्ये नियोजयति— **सूतेत्यादि** । आश्रमवासिनः=ऋषिजनान् प्रत्यवेक्ष्य = योगक्षेमपर्यालोचनपूर्वकमवेक्षणं कृत्वा उपावर्ते= प्रत्यागच्छामि, तावत् वाजिनः = अश्वाः आर्द्रपृष्ठाः क्रियन्ताम्—आर्द्राणि = स्नानेन सरसानि, सिक्तानि वा पृष्ठानि = पृष्ठभागा येषां तथाविधाः, पृष्ठप्रक्षालनं हि विशेषतः अश्वानां श्रमहरम् । यथोक्तं **कादम्बर्याम्**—"स्नानार्द्रपृष्ठतया विगतश्रमेषु वाजिषु" इति । अश्वान् विश्रामयेत्यर्थः । **सूत इति** । तथा, यथा भवानादिशति तथा करोमीत्यर्थः । **इति निष्क्रान्त इति** । निष्क्रान्तः = रङ्गमञ्चादपगतः । कविवचनमिदम् । **राजेति** । परिक्रम्य = रङ्गमञ्चे परितः कतिचित्पदानि गत्वा । नाटकाचारोऽयम् । जिगमिषितदेशं प्रति परिक्रमणेन गमनमभिनीयेत्यर्थः । अवलोक्य च = अग्रतो दृष्ट्वा च आह । **इदमाश्रमद्वारमिति** । अयमाश्रमप्रवेशमार्गो लक्ष्यते इत्यर्थः । यावत्प्रविशामि = आश्रमान्तर्गच्छामि । प्रविश्य = अन्तर्गत्वा । एवं धर्मावाप्तिमुद्दिश्यैव आश्रमपदं प्रविशतोऽपि राज्ञः कामावाप्तिसूचकं किमपि शुभनिमित्तं प्रादुरासीदित्याह—**निमित्तं सूचयन्निति** । तस्य निमित्तत्वमेष्यतः फलस्य ज्ञापकत्वात् । कलत्रावाप्तिर्हि तस्य फलम् । निमित्तं चात्र दक्षिणबाहुस्पन्दनरूपम् ।

---

१. निवर्तिष्ये । २. यथाऽऽज्ञापयत्यायुष्मान् । ३. 'अये !' इत्यधिकं क्वचित् ।

**शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य ।**
**अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र ॥ १४ ॥**

अथ तेन निमित्तेन किञ्चिदुन्मिषितकलत्रैषणावासनः देशानौचित्येन तस्य निष्फलत्वमाशङ्क्य परिहरति—**शान्तमित्यादि** । इदम् आश्रमपदं शान्तम्, बाहुश्च स्फुरति, इह अस्य फलं कुतः ? अथवा भवितव्यानां द्वाराणि सर्वत्र भवन्तीत्यन्वयः ।

इदम् = पुरोदृश्यमानम् आश्रमपदं = तपोवनस्थानं शान्तं = शमप्रधानम् । इदमित्यनेन आश्रमपदान्तरात् व्यतिरेकं दर्शयति । आश्रमपदमित्यनेन तत्रस्था लक्ष्यन्ते । मृगादीनामपि शान्तत्वं व्यङ्ग्यम् । बाहुश्च, अर्थात् दक्षिणः । यथा **विक्रमोर्वशीये**—"अयमास्पन्दितैर्बाहुराश्वासयति दक्षिणः" इति । स्फुरति = अविच्छिन्नं स्पन्दते । लटा फलस्य आसन्नत्वं द्योत्यते । अत्र यौगपद्यं द्योतयता चकारेण वाक्यार्थयोः फलद्वारा विरोधो द्योत्यते, तमेवोद्घाटयन्नाह—**कुत इत्यादि** । किंशब्दः क्षेपे, पञ्चम्यर्थे तसिः । इह = शान्तेऽस्मिन्नाश्रमपदे अस्य = बाहुस्फुरणस्य फल = कलत्रावाप्तिरूपं कुतः ? न संभवतीत्यर्थः । उक्तं च **ज्योतिःशास्त्रे**— "वामेतरकरस्पन्दो वरस्त्रीलाभसूचकः" इति । **रघुवंशेऽपि**—

तस्य स्फुरति पौलस्त्यः सीतासङ्गमशंसिनि ।
निचखानाधिकक्रुद्धः शरं सव्येतरे भुजे ॥ इति ।

अथ निमित्तेषु शुभत्वेन प्रसिद्धमिदं किमपि समीहितमकृत्वा मुधैव न भवेदिति मन्यमान आह—**अथवेत्यादि** । अथवा = उक्तपक्षाक्षेपे, अस्य निमित्तस्यात्रापि फलं भवेदिति भावः । कथमित्याह—**भवितव्यानामित्यादि** । भवितव्यानां = प्राप्तव्यानाम्, 'भू प्राप्तौ' इत्यस्मात् कर्मणि तव्यः । 'भू सत्तायाम्'

( नेपथ्ये )

इदो इदो सहीओ[1] !

इत्यस्मात् कर्तरि तव्य इति केचित् । अवश्यम्भाविनामित्यर्थः । द्वाराणि = उपायाः सर्वत्र, देशकालविशेषमनपेक्ष्येत्यर्थः । भवन्ति = जायन्ते । बलवती हि भवितव्यता देशकालविशेषमनपेक्ष्य प्रवर्तते इति भावः । उक्तं च **मालतीमाधवे**—"सर्वङ्कषा भगवती भवितव्यतैव" इति । अनेन वैखानसप्रयुक्ताशिषः फलोन्मुख्यं दर्शितम् ।

अथवेत्यनेन पूर्वोक्तस्य प्रतिषेधात् आक्षेपालङ्कारः, उत्तरार्धार्थस्य पूर्वार्धार्थसमर्थकत्वात् अर्थान्तरन्यासः, भवितव्यानामित्यादिसामान्योक्त्या विशेषस्य गम्यत्वात् पक्षे सामान्यनिबन्धनाऽप्रस्तुतप्रशंसा, वाक्यार्थहेतुकं काव्यलिङ्गं चेत्यलङ्काराः । पूर्वार्धे वितर्कः, उत्तरार्धे मतिश्चेति भावध्वनिः । आर्या छन्दः । अनया आर्यया परिकर इति द्वितीयमङ्गमुपक्षिप्तम् । तल्लक्षणं तु—"यदुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरस्तु सः" इति ।

कामक्रोधादिदोषरहितानां मुनीनामयमाश्रमः, अत्र प्रविष्टमात्रस्य मम दक्षिणो बाहुः स्पन्दते, वरस्त्रीलाभरूपमस्य फलमिह तु न सम्भवति; अथवा सर्वतो बलवत्या भवितव्यताया द्वाराणि सर्वत्रैव भवन्ति; तस्मात् कदाचित् वरस्त्रीलाभरूपं फलमिहापि संभवेदिति भावः ॥१४॥

एवं राज्ञः शकुन्तलायाश्च दैवानुकूल्यं प्रदर्श्य तत्संगमे दृष्टहेतुं परस्परानुरागं दर्शयिष्यन् तदङ्गभूतमन्योन्यसंदर्शनादिकं सम्पादयितुं सुनिमित्तस्य आसन्नफलकताद्योतनाय तदव्यवधानेनैव दुहितरमिति पूर्वप्रस्तुतां शकुन्तलां सखीभ्यां प्रवेशयितुमारभते—**नेपथ्य इत्यादिना** । नेपथ्ये स्थित्वा वदतीत्यर्थः । **इदो इदो**

१ पिअसहीओ ।

इत इतः सख्यौ !

**राजा**—( कर्णं दत्त्वा ) अये ! दक्षिणेन वृक्षवाटिकामालाप इव श्रूयते, यावदत्र गच्छामि । ( परिक्रम्यावलोक्य च ) अये ! एतास्तपस्विकन्यकाः स्वप्रमाणानुरूपैः सेचनघटैर्बालपादपेभ्यः पयो दातुमित एवा-

---

**सहीओ** ! इति । 'इत इतः सख्यौ !' इति संस्कृतम् । हे सख्यौ ! इत इतः, अस्मिन्प्रदेशे आगच्छतमित्यर्थः । सम्भ्रमेण द्विरुक्तिः । इयं शौरसेनी भाषा, "नायिकानां सखीनां च शौरसेनी प्रकीर्तिता" इति **भरतोक्तेः** । **राजेति** । कर्णं दत्त्वा = श्रवणार्थं कर्णं प्रेरयित्वेत्यर्थः । कविवचनमिदम् । **अये ! इत्यादि** । 'अये' इति सकौतुके स्मरणे । "अये क्रोधे विषादे च संभ्रमे स्मरणेऽपि च" इति **विश्वप्रकाशिका** । दक्षिणेनेत्यव्ययम् । वृक्षवाटिकामिति "एनपा द्वितीया" इति द्वितीया । वृक्षाणां वाटिका = मण्डपः तस्य दक्षिणे देशे, वृक्षवाटिकायाः सन्निकृष्टदक्षिणपार्श्वे इत्यर्थः । वाटः = समूहः, "वाटः पुमान् वृतिश्रेण्योः" इति **यादवः** । स एव वाटिका, स्वार्थे कः, "प्रत्ययस्थात्" इत्यादिना इकारः । आलापः = परस्परसंभाषणम् । इवेति प्रतीतौ, आलापस्य अस्पष्टताद्योतने, वाक्यालङ्कारे वा । अथ जनितकुतूहलः कर्तव्यं निश्चिनोति—**यावदित्यादि** । 'अये' इति तपस्विकन्यानामभिमुखागमनस्य अतर्कितोपनतत्वं द्योतयति । एताः = पुरोदृश्यमानाः तपस्विकन्यकाः = तापसकुमार्यः स्वप्रमाणानुरूपैः = स्वाकृतियोग्यैः, स्वशरीरप्रमाणस्यानुरूपैः । अनेन अग्राम्यत्वं व्यज्यते । सेचनघटैः = सेचनार्थैः कलशैः बालपादपेभ्यः = कोमलेभ्यो वृक्षपोतेभ्यः पयः = जलं दातुं = पाययितुम् इत एव = अस्यामेव दिशि अभिवर्तन्ते = अभिमुखमा-

भिवर्तन्ते । ( निपुणं निरूप्य ) अहो मधुरमासां दर्शनम् !

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य ।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥१५॥

---

गच्छन्ति । निपुणं निरूप्य = सावधानतया निर्वर्ण्येत्यर्थः । कविवचनमिदम् । तासां दर्शनेन प्रीयमाणचक्षुरिन्द्रियः तेन सञ्जातविस्मयो राजा आह—अहो इति । 'अहो' इति विस्मयः, तथाविधस्य दर्शनस्याननुभूतपूर्वत्वात् तास्वसंभाव्यत्वाच्च । मधुरम् = आह्लादकरम् आसाम् = तपस्विकुमारिकाणां दर्शनं, रूपमित्यर्थः ।

तासां दर्शननिमित्तस्य लावण्यस्य अन्तःपुरसीमन्तिनीलावण्यादाधिक्यं प्रतिपादयन्निदर्शनेन तस्य विस्मयावहत्वमाह—शुद्धान्तदुर्लभमिति । इदं शुद्धान्तदुर्लभं वपुः आश्रमवासिनो जनस्य यदि ( अस्ति, तदा ) खलु उद्यानलताः वनलताभिः गुणैः दूरीकृताः ( सन्ति ) इत्यन्वयः ।

इदं = पुरोदृश्यमानम्, अस्मन्नयनामृतायमानम् शुद्धान्तदुर्लभम्—शुद्धान्ते = अन्तःपुरे दुर्लभं = दुष्प्रापम् । अत्र शुद्धान्तपदेन तत्रस्था वधूजना लक्ष्यन्ते । सुलभाङ्गसंस्कारोपकरणत्वं, तेन मलहानगुणाधानादिना संस्कृताङ्गत्वं च व्यङ्ग्यम् । तत्र दुर्लभमित्यनेन एतद्वपुषः अतिशय उक्तः । वपुः = लावण्यम्, सौन्दर्यादीनामुपलक्षणमिदम्, दृष्टान्तवाक्ये 'गुणैः' इत्युक्तेः । वपुः शरीरमिति केचित् । "वपुः शरीरे लावण्ये" इति केशवः । आश्रमे = तपोवने वसति तथाविधस्य जनस्य, तपस्विकन्यकानामित्यर्थः । अनेन अङ्गसंस्कारोपकरणराहित्यं व्यज्यते, तेन तत्पराङ्मुखत्वं च । 'यदि' इति सिद्धानुवादे । यथा रघुवंशे "स्रगियं यदि जीवितापहा" इत्यादौ । 'खलु' निश्चये, अवधारणे, दृष्टान्ते वा । उद्यानलताः—उद्यानस्य = उपवनस्य संबन्धिन्यो लताः = वल्ल्यः वनलताभिः—

यावदिमां छायामाश्रित्य प्रतिपालयामि । ( इति विलोकयन्स्थितः । )

( ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला । )

---

वनस्य = अरण्यस्य, तत्संबन्धिन्यः लताः ताभिः । अत्र उद्यानपदेन अनवरतदोहदादिसंवर्धितत्वम्, जात्युत्कर्षश्च व्यज्यते । वनपदसंबन्धेन लतानां तदभावश्च । गुणैः = सौरभ्यसौकुमार्यादिभिः करणैः दूरीकृताः, तिरस्कृता इत्यर्थः ।

अत्र मुनिकन्यकावपुषः अन्तःपुरस्त्रीवपुरपेक्षया, एवं वनलतागुणस्य उद्यानलतागुणापेक्षया संस्कारमन्तरैव आधिक्यवर्णनादुभयत्र व्यतिरेकः, तथाविधस्य तद्वपुषः तद्गुणस्य च अर्थात् ऐक्यारोपात् वाक्यार्थवृत्तिनिदर्शना च । उभयत्र असंभाव्यत्वादिः साधारणो धर्मः, पर्यवसाने उपमा च व्यज्यते, वनलतानामुद्यानलताऽपेक्षया समधिका गुणसंपदिव मुनिकन्यकानामन्तःपुरवधूवपुरतिशायिनी वपुःसंपत् असंभावनीयेति । आर्या छन्दः ।

पुरोवर्तिनीरेतास्तापसकुमारिकाः दृष्ट्वा बाढमेतत्प्रतीयते यत् वने वर्धितानां प्रायः अकृताङ्गसंस्काराणामप्यासामीदृशी रूपसंपत् अन्तःपुरेषु असूर्यंपश्यतयाऽवस्थितानां प्रायो बहुविधकृताङ्गसंस्काराणां वरस्त्रीणां रूपसंपदं यदि पराजयते तर्हि दोहदादिसंस्कारवर्जिताभिर्वनलताभिः संस्कृताः सुरक्षिताश्चोद्यानलताः स्वगुणैर्निरस्ता एवेत्यहो आश्चर्यमेतदिति भावः ॥ १५॥

इत्थं तद्दर्शनेन विस्मितः सन् राजा स्वकर्तव्यं निश्चिनोति—**यावदिति** । इमां छायामाश्रित्य = अनया छायया अन्तरितः सन् प्रतिपालयामि = प्रतीक्षे । एतासां प्रवृत्तीरवगम्यात्मानं प्रकाशयितुमवसरं प्रतिपालयिष्यामीत्यर्थः । "यावत्पुरा" इति लट् । इति=मनस्येवं चिन्तयन्, विलोकयन्=पश्यन् स्थितः । कविवचनमिदम् । **तत इत्यादि** । ततः = अनन्तरम् , राजनि छायाऽन्तरिते सतीत्यर्थः । यथोक्त-

**शकुन्तला**—इदो इदो सहीओ !

इत इतः सख्यौ !

**अनसूया**—हला सउन्दले ! तुवत्तो वि तादकण्णस्स अस्समरुक्खआ पिअदरेत्ति तक्केमि । जेण[1] णोमालिआकुसुमपेलवा तुमं वि एदाणं आलवालपूरणे णिउत्ता ।

---

व्यापारा = उक्तमनतिक्रम्येति यथोक्तम्, तद्वान् यथोक्तः = कथितानुरूपः व्यापारः = बालपादपश्रेणिसेचनसमुद्यमरूपा चेष्टा यस्याः तादृशी शकुन्तला, सखीभ्यां = प्रियंवदाऽनसूयाभ्यां सह प्रविशति, रङ्गमञ्चमिति शेषः । अत्र सहशब्देन सख्योरपि स एव व्यापार इति गम्यते। कविवचनं चैतत् । अथ शकुन्तला सख्यौ प्राह—**इदो इदो** इति । 'इत इतः सख्यौ !' इति संस्कृतम् । एकान्ते वर्तमानानां तासां मध्ये अनसूया नाम सखी विश्रम्भातिशयेन शकुन्तलां प्रति नर्मालापं वदति—**हलेति** । 'हला ( सखि ) शकुन्तले ! त्वत्तोऽपि तातकण्वस्य आश्रमवृक्षाः प्रियतरा इति तर्कयामि। येन नवमालिकाकुसुमपेलवा त्वमप्येतेषामालवालपूरणे नियुक्ता' इति संस्कृतम् । 'हला'इति सख्या आह्वाने । "हण्डे हञ्जे हलाऽऽह्वाने नीचां चेटीं सखी प्रति" **इत्यमरः** । "समानाभिस्तथा सख्यो हला भाष्याः परस्परम्" इति **भरतोक्तेः** 'हला'इति प्रयोगः । त्वत्तोऽपीत्यस्य प्रियतरा इत्यनेन सम्बन्धः । अपिशब्देन तस्यां कण्वस्य स्नेहातिशयः, अन्येषां प्रियतरत्वासम्भवश्च व्यज्यते । त्वदपेक्षयाऽपि तातकण्वस्याश्रमवृक्षेषु सविशेषः स्नेह इति सम्भावयामीत्यर्थः । प्रियतरत्वे हेतुमाह—**येनेत्यादिना** । नवमालिकाकुसुममिव= सप्तलापुष्पमिव पेलवा = मृद्वी, सुकुमारतनुरित्यर्थः । "सप्तला नवमल्लिका"

---

१ जम् ।

हला शकुन्तले! त्वत्तोऽपि तातकण्वस्याश्रमवृक्षकाः प्रियतरा इति तर्कयामि । येन नवमालिकाकुसुमपेलवा त्वमप्येतेषामालवालपूरणे नियुक्ता ।

**शकुन्तला**—ण केवलं तादणिओओ एव्व, अत्थि मे सोदरसणेहो एदेसु ।

न केवलं तातनियोग एव, अस्ति मे सोदरस्नेह एतेषु ।

( इति वृक्षसेचनं रूपयति । )

---

इत्यमरः, "पेलवं कोमले तनौ" इति शाश्वतश्च । त्वमपीत्यत्र अपिर्भिन्नक्रमः, तेन नवमालिकाकुसुमकोमलाऽपि त्वमित्यर्थः । अत्र असम्भावनाद्योतकः अपिशब्दः आलवालपूरणाशक्तत्वं गमयति । आलवालपूरणे — आलवालानां = वृक्षमूलस्थजलाधाराणां पूरणे भरणे, न तु सेकमात्रे नियुक्ता = आदिष्टा । उक्तं च—"आलवालं विदुर्धाराधारणं द्रवतोऽम्भसः" इति । **शकुन्तलेति** । 'न केवलं तातनियोग एव, अस्ति मे सोदरस्नेह एतेषु' इति संस्कृतम् । तातस्य=कण्वस्य नियोगः=आदेश एव वृक्षालवालपूरणे न हेतुरपि तु ममापि एतेषु=वृक्षेषु सोदरस्नेहः—सहोदरेषु = भ्रातृषु इव स्नेहः=ममता अस्ति । अतः सोऽपि हेतुरित्यर्थः । स्नेहमूलकत्वान्न क्लेश इति भावः । **इति वृक्षसेचनं रूपयतीति** । नटी तद्भावभावनया सहृदयहृदयचमत्कारकारित्वेन वृक्षसेचनमभिनयतीत्यर्थः । तत्राभिनयश्च—नलिनीपद्मकोशौ कृत्वा स्कन्धप्रदेशं नीत्वाऽवधूतेन शिरसा मनाङ्नामितया देहयष्ट्या च सहाधोमुखौ अवनीताविति । तल्लक्षणं तु—

अश्लिष्टस्वस्तिकौ सन्तौ शुकतुण्डावधोमुखौ ।
मिथः पराङ्मुखौ कृत्वा यौ कृतौ पद्मकोशकौ ॥
नलिनीपद्मकोशौ तौ । इति,
यदधः सकृदानीतमवनीतं तदुच्यते । इति च ।

**राजा**—कथमियं सा कण्वदुहिता ! असाधुदर्शी खलु तत्रभवान् कण्वः; य इमामाश्रमधर्मे नियुङ्क्ते ।

इदं किलाव्याजमनोहरं वपु-
　　स्तपःक्षमं[1] साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्रधारया
　　[2]समिल्लतां छेत्तुमृषिर्व्यवस्यति ॥१६॥

कविवचनमेतत् । **राजेति** । सखीवचनश्रवणेन सञ्जातप्रत्यभिज्ञः सादरमाह—**कथमित्यादि** । कथमित्याश्चर्ये । आश्चर्यात्संभ्रमः । "कथं प्रश्ने संभ्रमे च" इति विश्वः । 　इयम्=एवंविधरूपलावण्याद्यतिशयवती सा = वैखानसमुखाच्छ्रुता कण्वदुहिता = कण्वस्य महर्षेर्धर्मकन्या शकुन्तला नाम ।

अथ अलौकिकरूपवतीं तां दृष्ट्वा तद्रूपामृतपानेन प्रीयमाणचक्षुष्कः कामकला-परिशीलनसमुचितेऽपि काले तां धर्मकलायां नियोजयतो मुनेः अविमृश्यकारितां सकरुणमाह—**असाधुदर्शीत्यादिना** । असाधुदर्शी = अविमृश्यकारी । खलु इत्यवधारणे । तत्रभवान् = पूज्यः कण्वः = काश्यपः । असाधुदर्शित्वे हेतुमाह—**य इति** । यः = कण्वः इमां = कामकलापरिशीलनयोग्याम् आश्रमधर्मे = जलाहर-णवृक्षसेचनातिथिसेवारूपाश्रमकृत्ये नियुङ्क्ते = व्यापारयति, उद्योजयतीति वा ।

एवं योग्यायोग्यविचारशून्यत्वरूपामविमृश्यकारितामुक्त्वा शक्याशक्यविचार-शून्यत्वरूपामपि दर्शयति—**इदमिति** । यः ऋषिः अव्याजमनोहरमिदं वपुः तपःक्षमं साधयितुमिच्छति, सः ध्रुवं नीलोत्पलपत्रधारया समिल्लतां छेत्तुं व्यवस्यति किल इत्यन्वयः ।

१. क्लमम् । २. शमीलताम् ।

यः ऋषिः = कण्वः अव्याजमनोहरम्—अव्याजेन = अकपटेन, भूषणादिकं विना; निसर्गत इत्यर्थः। मनोहरं = सुन्दरम् इदम् = एवंविधसौन्दर्यसौकुमार्यादि-गुणशालि पुरोदृश्यमानं वपुः = शरीरम् तपःक्षमम् = मुनिवधूजनोचितस्य जला-हरणवृक्षसेचनादिरूपस्य तपसो योग्यम् साधयितुं = संपादयितुम् इच्छति = वाञ्छति, सः = ऋषिः, ज्ञानवृद्धः। "ऋषिस्तु वेदे भृग्वादौ ज्ञानवृद्धे" इति **वैजयन्ती**। ध्रुवं = निश्चयेन नीलोत्पलपत्रधारया—नीलोत्पलानां = नीलकमलानां पत्राणि = दलानि तेषां धारा = पार्श्वदेशः तया, लक्षणया तैक्ष्ण्यसंभावनात् छिदिक्रियायोग्यत्वं फलम्। समिल्लतां—समिधो लतां=वल्लीं छेत्तुं व्यवस्यति = उद्युङ्क्ते।

अत्र तादृशेच्छातद्व्यवसाययोः अर्थात् ऐक्यारोपात् निदर्शना। तया तद्व्यवसा-यवदसाध्यविषयिका तदिच्छा इति उपमा व्यज्यते। ततो मुनेः शक्याशक्यविचार-रहितत्वं च। असाधुदर्शीत्यादिनिन्दायाः सौकुमार्याद्यतिशयशालिनीयमेतत्कर्मान-र्हेति शकुन्तलास्तुतौ पर्यवसानात् व्याजस्तुतिः, मतान्तरे अप्रस्तुतप्रशंसा वा। पर्वार्धे क्वेदं वपुः, ? क्व तपः ? इत्यर्थव्यञ्जनात् विषमध्वनिश्च। समिल्लतामित्यत्र रूपकोपमयोः सन्देहसंकरः। ध्रुवमित्युत्प्रेक्षा। वंशस्थं वृत्तम्। एवंविधवर्णनेन अभिप्रायरूपं भूषणमुपन्यस्तम्। तल्लक्षणं तु—"अभिप्रायस्तु सादृश्यादभूतार्थ-प्रकल्पनात्" इति।

लोकातिगरूपातिशयसंपदं शकुन्तलामाश्रमधर्मे नियुक्तां दृष्ट्वा राजा चिन्तयति—'अहो! स्वभावसुन्दरेणानेन वपुषा आश्रमधर्मान् यः कारयितुमीहते, सर्वथा अविमृश्यकारी सः नीलकमलपत्रधारया समिल्लताच्छेदनं चिकीर्षति।' यदि नील-कमलपत्रधारया समिल्लताच्छेदनप्रयासः क्रियेत तर्हि समिल्लता तु नांशतोऽपि छिद्येत, नीलोत्पलपत्राणि तु विदलितानि भवेयुः, तद्वत् प्रकृतेऽपीति भावः॥१६॥

भवतु, पादपान्तर्हित एव [1]विश्रब्धं तावदेनां पश्यामि । ( इति तथा करोति । )

**शकुन्तला**—सहि[2] अणसूए ! [3]अदिपिणद्धेण वक्कलेण पिअंवदाए [4]णिअन्तिद ह्मि । सिढिलेहि दाव णं ।

---

अथ स्वकर्तव्यं निश्चिन्वन्नाह—**भवत्विति** । भवतु = आस्तां तावदेतत् । पादपैः = वृक्षैरन्तर्हितः = व्यवहितः । न तु प्रत्यक्षीभूतः, तथा सत्यस्या विश्रब्धरूपदर्शनं विश्रम्भालापानुभवश्च न भवेत्, कदाचिल्लज्जादिना ससम्भ्रममपसरणादिति भावः । एव, प्रकाशमगत्वेति भावः । विश्रब्धं = साश्वासं, सखीजनैकसान्निध्यादव्याकुलमित्यर्थः । एनां = शकुन्तलां; पश्यामि = निर्वर्णयामि । तेन च प्रीतिमनुभवामीत्यर्थः । तावदित्यनेनावसरप्राप्तावात्मानं प्रकाशयिष्यामीति सूच्यते । राज्ञो हृदये शकुन्तलादर्शनसम्भाषणविषयिणी प्रबलोत्कण्ठा च ।

राजोक्तौ "कथमियं सा कण्वदुहिता" इत्यादिना "तावदेनां पश्यामि" इत्यन्तेन सन्दर्भेण चक्षुःप्रतीतेः स्फुटं प्रतीत्या राज्ञः शकुन्तलायां रतिरुद्बुद्धा गम्यत इति बीजवाक्यमिदम् । **केचित्तु** 'अहो मधुरमासां दर्शनम्' इति वाक्यस्यैव बीजवाक्यतामामनन्ति । इति तथा करोति, पादपान्तर्हित एव पश्यतीत्यर्थः । कविवचनमिदम् ।

अथाभिनवेन यौवनेन प्रतिक्षणं परिपुष्टतामासेदुषोः स्तनयोरावरणाय कञ्चुक्यात्मना परिकल्पितस्य वल्कलस्य सातिशयसंश्लेषवशात्पीड्यमाना सुकुमाराङ्गी यौवनमेव स्तनपरिणाहे हेतुरित्यसंविदाना शकुन्तला प्रियसखीमनसूयामाह—**सहि अणसूए ! इत्यादि** । 'सखि अनसूये ! अतिपिनद्धेन वल्कलेन प्रियंवदया नियन्त्रिताऽस्मि । शिथिलय तावदेतत्' इति संस्कृतम् । सखीत्यादि सानुनयसम्बो-

---

१. विश्वस्ताम् । २. हला । ३. आअद । ४. दढं पीडिदाह्मि ।

सखि अनसूये ! अतिपिनद्धेन वल्कलेन प्रियंवदया नियन्त्रिताऽस्मि । शिथिलय तावदेतत् ।

**अनसूया**—तह ।

तथा । ( इति शिथिलयति । )

**प्रियंवदा**—( सहासम् ) एत्थ पओहरवित्थारइत्तअं[1] अत्तणो जोव्वणं उवालह ।

अत्र पयोधरविस्तारयितृ आत्मनो यौवनमुपालभस्व ।

---

धनेन पीडावैक्लव्यं सूच्यते। अतिपिनद्धेन = अतिमात्रं बद्धेन, दृढबद्धेनेत्यर्थः । अपिपूर्वात् 'नह बन्धने' इत्यस्मात् क्तः । अपेरलोपः पाक्षिकः । वल्कलेन = वासोभूतया वृक्षत्वचा प्रियंवदया = तदभिधानयाऽन्यया सख्या । प्रियंवदयेति नामग्रहणेन परिचितयाऽपि सख्यैवं कृतमित्यपराधोद्घाटनम् । नियन्त्रिताऽस्मि = निरुद्धप्रसराऽस्मि । एतत् = वल्कलं तावत् = सद्यः शिथिलय = शिथिलं कुरु । राज्ञो रागसंधुक्षणायैव निरावरणस्तनमुकुलप्रत्यक्षीकरणमिदं वर्णितम् । ततः अनसूयोक्तौ तह । 'तथा' इति संस्कृतम् । शिथिलयति = शिथिलं करोति । कविवचनम् । **प्रियंवदेति** । सहासम् = हासेन सह, विहस्येत्यर्थः । आहेति शेषः । शकुन्तलया अनवगम्यमानां स्तनाभिवृद्धिं प्रियंवदा उक्तिभङ्ग्या बोधयति—**एत्थ इत्यादिना** । 'अत्र पयोधरविस्तारयितृ आत्मनो यौवनमुपालभस्व' इति संस्कृतम् । अत्र = नियन्त्रणे पयोधरविस्तारयितृ—पयोधरयोः = स्तनयोः विस्तारयितृ = वर्धकम्, परिणाहजनकमिति यावत् । यौवनं = बाल्यात्परं वयः, तारुण्यमिति यावत् । उपालभस्व = निन्द । यौवनमेवात्र निन्द, न तु मामिति भावः । यौवनेन वर्धितं

---

१ हेदुअम् ।

**राजा**—काममननुरूपमस्या [1]वयसो वल्कलं न पुनरलंकारश्रियं न पुष्यति । कुतः !

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।

---

स्तनयुगं नाधुना स्वल्पायते वल्कले माति ; अत्र को मम दोष इति परिहासः । अत्र एवंविधवर्णनेन आलम्बनविभावपरिपोषविधायिषु मूर्धाभिषिक्तो यौवनारम्भ उक्तः ।

एवं पादपान्तरितः तां स्वैरमालोकयन् तस्या नवयौवनेन प्रतिक्षणं प्रवर्धमानयोः स्तनयोरननुरूपं वल्कलमालक्ष्यापि तस्य अलंकारत्वं साधयन् तदाकृतेर्लोकोत्तरतां सकौतुकं प्रतिपादयति राजा—**काममित्यादिना** । 'कामम्' इत्यकामानुमतौ । "अकामानुमतौ कामम्" इत्यमरः । वल्कलम् अस्या वयसोऽननुरूपं काममित्यन्वयः । वल्कलं = स्तनाच्छादनीभूता वृक्षत्वक् अस्याः = एवंविधरूपलावण्याद्यतिशयशालिन्याः शकुन्तलायाः वयसः = अलंकारार्हस्य यौवनस्य, "वयः पक्षियौवनयोः" इति **केशवः** । अननुरूपम्=अयोग्यम्, अलंकारवस्तुषु तस्य अननुप्रवेशात् । अस्या वयसोऽननुरूपमित्युक्त्या परिणतावस्थायामनुरूपं स्यादिति द्योत्यते । अकामानुमतौ हेतुमाह—न **पुनरिति** । पुनःशब्दो विशेषद्योतकः । विशेषमाह—**अलंकारश्रियं न पुष्यतीति नेति** । अलंकारेण = हारादिना या श्रीः = शोभा तां न पुष्यतीति न, किन्तु पुष्यत्येव । "सम्भाव्य निषेधनिवर्तनं नञ्द्वयस्यार्थः" इति **व्यक्तिविवेके** । कुत इति उक्तवक्ष्यमाणयोः ज्ञाप्यज्ञापकभावद्योतकम् ।

उक्तमर्थमुपपादयति—**सरसिजमिति** । शैवलेनाप्यनुविद्धं सरसिजं रम्यम्,

---

1 वपुषः ।

इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥१७॥

लक्ष्म मलिनमपि हिमांशोर्लक्ष्मीं तनोति, वल्कलेनापीयं तन्वी अधिकमनोज्ञा; मधुराणामाकृतीनां किमिव हि न मण्डनमित्यन्वयः ।

शैवलेनापि = तुच्छया जलनील्याऽपि, "जलनीली तु शैवालं शैवलः" इत्यमरः । अपिः गर्हायाम् । अनुविद्धं = संबद्धम्, अत्र विद्धमित्यनेन सम्बन्धो लक्ष्यते ; तदतिशयो व्यङ्ग्यः । स एव सातत्यवाचिना अनुना अनूद्यते । रम्यम् = अधिकरम्यम्, तदसंपृक्तावस्थातोऽधिकमनोहरमित्यर्थः । दृष्टान्तान्तरमाह— मलिनमिति । लक्ष्म = चिह्नं, कलङ्क इति यावत् । मलिनम् = असितं हिमांशोः = चन्द्रस्य लक्ष्मीं = शोभां तनोति = विस्तारयति । मलिनेन कलङ्केनापि संबद्धश्चन्द्रः पूर्वस्मादधिकदर्शनीय इत्यर्थः। 'सरसिजम्' 'हिमांशोः' इत्याभ्यां पदाभ्यां तयोः स्वभावत एव चारुत्वं सूच्यते । लक्ष्मणो लक्ष्मीकरत्वोक्त्या चन्द्रस्य पूर्णत्वं च ध्वन्यते । मलिनमित्यस्य तु शैवलवल्कलयोरपि विपरिणामेन सम्बन्ध इति केचित् । दार्ष्टान्तिकवाक्यार्थं बुद्धौ स्थिरीकर्तुं प्रथममेव दृष्टान्तद्वयमुपन्यस्तम् ।

अथ दार्ष्टान्तिकमाह—इयमित्यादि । वल्कलेनापि = स्तनाच्छादनीभूतया वृक्षत्वचाऽपि इयम्—इयमिति शकुन्तलापरामर्श्यपि दृष्टान्तबलात् प्रकरणाच्च स्तनरूपतदवयवे पर्यवस्यति । तन्वी = कृशा, निसर्गसुन्दरीति यावत् । अधिकमनोज्ञेति । अधिकं यथा स्यात्तथा मनोज्ञा = हृद्या, मनोहरतरेत्यर्थः । अस्तीति शेषः। अयमेव हि अलंकाराणां धर्मः यत् स्वत उत्कृष्टस्यापि स्वान्वये उत्कर्षातिशयाधानमिति वल्कलेनापि पूर्वस्मादधिकदर्शनीयत्वात् अलंकारश्रियं पुष्यत्येवेत्यर्थः । अत्र अपिशब्दाः समुच्चयार्थाः स्वस्वोपपदविपरीतान् मधुकरकिरणपट्टांशुकानर्थान्

दृष्टान्तविधया द्योतयन्ति । यथा सरसिजादीनि मधुकरादिभिरधिकमनोज्ञानि, तथा शैवलादिभिरपीति । यथोक्तं कुमारसम्भवे—

यथा प्रसिद्धैर्मधुरं शिरोरुहैर्जटाभिरप्येवमभूत्तदाननम् ।
न षट्पदश्रेणिभिरेव पङ्कजं सशैवलासङ्गमपि प्रकाशते ॥ इति ।

वक्ष्यति च—'अहो ! सर्वावस्थासु रमणीयत्वमाकृतिविशेषाणाम्' इति । अथवा शैवलादीनामपकर्षं व्यञ्जयन्तः अपिशब्दाः शैवलादिभिः कमलाद्यलङ्करणे विरोधमुन्मीलयन्ति । तानि च शैवलादीनि सरसिजादीनां सौन्दर्यबलात्तत्परिभवं कर्तुमशक्नुवन्ति सन्ति तामेव सौन्दर्यशोभामुपस्कुर्वन्तीति भावः ।

अथ शैवलादिभिरधिकमनोज्ञत्वोक्त्या प्राप्तमलंकारभावं सामान्यात्मना समर्थयति—किमिवेत्यादि । मधुराणां = मनोज्ञानाम् । अत्र मधुरशब्देन सर्वविषयरञ्जकत्वतर्पकत्वादिकं लक्षयता सातिशयाभिलाषविषयत्वमिति वक्त्रभिप्रेतं ध्वन्यते इति **लोचनकाराः** । आकृतीनां वपुषां किमिव हि = तुच्छमपि वस्तु न मण्डनम् ? सर्वमेव कान्तमूर्तेर्भूषणं भवतीत्यर्थः । यथोक्तमन्यत्र—"रम्याणां विकृतिरपि श्रियं तनोति" इति ।

अत्र अर्थान्तरन्यासः । पूर्ववाक्यत्रये अधिकरम्यत्वरूपैकधर्मस्य भिन्नशब्दैः प्रतिपादनात् मालाप्रतिवस्तूपमा च । तया पद्मादिकं शैवलादिनेव इयं वल्कलेन अधिकरम्येत्युपमा व्यज्यते । पद्मोपमया स्तनयोः संस्थानसौष्ठवं, चन्द्रोपमया लावण्यबाहुल्यादिकं च सूच्यते । मालिनी वृत्तम्, "ननमयययुतेयं मालिनी भोगिलोकैः" इति लक्षणात् । अत्र माधुर्यं नाम अयत्नजोऽलङ्कार उक्तः । तल्लक्षणं च—"सर्वावस्थाविशेषेषु माधुर्यं रमणीयता" इति । किञ्च प्रसिद्धिर्नाम भूषणमपि अत्र उपक्षिप्तं भवति । तल्लक्षणं च—"प्रसिद्धिर्लोकविख्यातैर्वाक्यैरर्थप्रसाधनम्" इति ।

**शकुन्तला**—( अग्रतोऽवलोक्य ) एसो वादेरिदपल्लवङ्गुलीहिं [1]तुवरेदि विअ मं [2]केसररुक्खओ । जाव णं संभावेमि ।

लोकातिगसौन्दर्यशालिनीमपि सर्वथा अलंकाररहितां वल्कलाच्छादितपृथुस्तनभारां शकुन्तलां विलोकयन् राजा मनसि चिन्तयति—'अहो मनोहारिणी अस्याः शोभा ! सत्यमेव, मलिनेन शैवालेनापि संगतं कमलं नेत्रानन्दं जनयति; राकाशशाङ्कोदरे परिस्फुरन्नपि नीलः कलङ्कः तस्य श्रियमेव पुष्णाति; इत्थमेव निसर्गतः सुन्दरीयं शकुन्तला वल्कलेनापि परिहितेन न जहाति स्वां शोभामपितु अधिकतरं रमणीया दृश्यते; तस्मात् इदमेव सिद्ध्यति—निसर्गसुन्दराणामाकृतिविशेषाणां सर्वमेव वस्तु यथाकथमपि विन्यस्तं शोभाधायकमेव भवति' इति भावार्थः ॥१७॥

**शकुन्तलेति**। अग्रतः = पुरः अवलोक्य = दृष्ट्वा, आहेति शेषः । कविवचनम् । वल्कलशिथिलीकरणेन आश्वस्ता शकुन्तला कमपि केसरमवलोक्य तत्सेचने त्वरमाणा भङ्ग्यन्तरेणाह—**एसो इत्यादि** । 'एष वातेरितपल्लवाङ्गुलीभिस्त्वरयतीव मां केसरवृक्षकः । यावदेनं संभावयामि' इति संस्कृतम् । एषः = अग्रतोदृश्यमानः केसरवृक्षकः = बकुलपादपः वातेरितपल्लवाङ्गुलीभिः—वातेन = पवनेन ईरिताः = चालिताः याः पल्लवरूपा अङ्गुलयः ताभिः । अत्र पल्लवेष्वङ्गुलीत्वारोपात् केसरे बालत्वारोपो व्यङ्ग्यः। मां त्वरयतीव = सत्वरमागमनार्थमाह्वयतीव । अत्र 'त्वरयति' इत्यनेन त्वराकारणमाह्वानं लक्ष्यते । इवेति संभावनायाम् । एष केसरवृक्ष एव बालः पयोदानाय पल्लवाङ्गुलिरूपसंज्ञया मामाह्वयतीति संभावयामीत्यर्थः । अत्र एकस्यारोपस्यार्थत्वादेकदेशविवर्तिरूपकम् । तेनायमर्थः—यथा कश्चन सखा अत्यन्तमुत्कण्ठितोऽङ्गुलीचालनेन मित्रं त्वरयति तद्वदिति । यावदेनं =

१ वाहरेदि । २ चूअ ।

एष वातेरितपल्लवाङ्गुलीभिस्त्वरयतीव मां केसरवृक्षकः । यावदेनं संभावयामि । (इति परिक्रामति[1] ।)

**प्रियंवदा**—हला सउन्दले ! एत्थ[2] एव्व दाव मुहुत्तअं चिट्ठ, जाव तुए [3]उवगदाए लदासणाहो विअ अअं [4]केसररुक्खओ पडिभादि ।

हला शकुन्तले ! अत्रैव तावन्मुहूर्तं तिष्ठ, यावत्त्वयोपगतया लतासनाथ इवायं केसरवृक्षकः प्रतिभाति ।

---

बकुलवृक्षं संभावयामि = जलसेचनेन संवर्धयामि । इति परिक्रामतीति । परिक्रामति = केसरान्तिकगमनमभिनयति । केसरान्तिकगतां तां प्रियंवदा चाटु भाषते—हलेत्यादि । 'हला शकुन्तले ! अत्रैव तावन्मुहूर्तं तिष्ठ, यावत्त्वयोपगतया लतासनाथ इवायं केसरवृक्षकः प्रतिभाति' इति संस्कृतम् । 'हला शकुन्तले' इति आदरद्योतिकया सम्बोधनकाक्वा विश्रम्भस्य पराकाष्ठा द्योत्यते । अत्रैव = केसरवृक्षतले एव तावत्, मुहूर्तं = क्षणमात्रं तिष्ठ = स्थिरा भव । स्थिरीभवने हेतुमाह—यावदित्यादि । यावत् = यस्मात् त्वया = हेतुभूतया उपगतया = समीपवर्तिन्या अयं केसरवृक्षकः=बकुलपादपः लतासनाथ इव—लतया = वल्ल्या सनाथः = नाथवान्, अलंकृत इवेत्यर्थः । इवेत्युत्प्रेक्षायाम् । प्रतिभाति = प्रकाशते, लक्ष्यते इत्यर्थः । लतासाहित्ये इव त्वत्साहित्येऽपि अस्य शोभाविशेषादावयोस्तद्दर्शनार्थं तिष्ठेति भावः । उत्प्रेक्षया लतासाम्यबोधनद्वारा तस्याः सौन्दर्यातिशयो द्योत्यते । तवाप्यनुरूपभर्तृलाभस्य कालः प्राप्त इति गूढार्थश्च । अयमालापो दुष्यन्तात्मसमवेतायाः शकुन्तलाविषयकरतेः परिपोषकः । प्रत्यक्षस्तुतिमसहमाना

---

१. तथा करोति । २. इधज्जेव । ३. उवणदाए, समीवट्टिदाए । ४. चूअ ।

**शकुन्तला**—अदो क्खु[1] पिअंवदा सि तुमं ।

अतः खलु प्रियंवदाऽसि त्वम् ।

**राजा**—प्रियमपि [2]तथ्यमाह शकुन्तलां प्रियंवदा । अस्याः[3] खलु—

**अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।**
**कुसुममिव लोभनीयं यौवनमङ्गेषु संनद्धम् ॥ १८ ॥**

शकुन्तला आह—**अदो इत्यादि**। 'अतः खलु प्रियंवदाऽसि त्वम्'इति संस्कृतम् । अतः = एवंविधप्रियभाषणात् प्रियंवदा = प्रियं वदतीत्यन्वर्थनामधेया । अतस्तवेदं नैसर्गिकमिति नात्र तवापराधमुद्भावयामीति भावः ।

अथ तस्या लतासाम्यं प्रत्यक्षतोऽनुभवन् तया कृतं प्रियंवदावचनापलापमसहमानो राजा आह—**प्रियमपीति**। लोके हि यत् प्रियमुच्यते तत् प्रायो मिथ्यैव भवति, किन्तु यदेतत् प्रियंवदा शकुन्तलामाह = कथयति तत् प्रियमपि = कर्णमधुरं मनोनन्दनमपि तथ्यं = सत्यम्, न मिथ्या । नूनमियं शकुन्तला बकुलमूले स्थिता सती तदाश्रिता लतेव लक्ष्यते, नायं प्रियंवदायाश्चाटुवाद इति भावः । एताभ्यां प्रियंवदाशकुन्तलावचनाभ्यां निरुक्तमिति भूषणमुपक्षिप्तम् । तल्लक्षणं—"निरुक्तिर्निरवद्योक्तिर्नामान्यार्थप्रसिद्धये" इति । यत् प्रियंवदया लतात्वमारोपितं तदेव साधयति—**अस्याः खल्विति**। अस्याः = शकुन्तलायाः। खल्विति हेतौ ।

**अधर इति**। अधरः किसलयरागः ( अस्ति )। बाहू कोमलविटपानुकारिणौ ( स्तः )। अङ्गेषु कुसुममिव लोभनीयं यौवनं सन्नद्धम् ( अस्ति ) इत्यन्वयः ।

१ ज्जेव । २ अवितथम् । ३ तथा ह्यस्याः ।

अधरः=अधरोष्ठः किसलयरागः—किसलयस्य=प्रत्यग्रपल्लवस्य राग इव रागो= रक्तिमा-यस्य सः, रागेण किसलयतुल्य इति भावः। पल्लवाताम्र इति यावत्। बाहू= स्कंधोर्ध्वशाखे कोमलविटपानुकारिणौ, अकोमलस्यापि विटपस्य सत्त्वात्कोमलेत्युक्तम्। कोमलौ=सुकुमारौ, अग्रजातावित्यर्थः। यौ विटपौ=वृक्षोर्ध्वशाखे तयोरनु- कारिणौ=तत्सदृशौ। उक्तं च—"स्कन्धादूर्ध्वं तरोः शाखा कटपो विटपो मतः" इति। अङ्गेषु=स्तनजघनादिप्रतीकेषु। बहुवचनेन यौवनकार्यस्य माधुर्यसौकुमा- र्यादेः सर्वाङ्गीणता व्यज्यते। उक्तं च राजशेखरेण—"विधत्ते सोल्लेखं कतरदिह नाङ्गं तरुणिमा" इति। कुसुममिव=पुष्पमिव लोभनीयम्=उपभोगयोग्यत्वात्स्पृ- हणीयं यौवनं=तारुण्यं सन्नद्धं=सन्नाहं प्रापितम्, सञ्जातमित्यर्थः। यथा रघुवंशे—"लतेव सन्नद्धमनोज्ञपल्लवा" इति। सन्नद्धपदेन सकलहृदयोन्मादन- क्षमत्वं व्यज्यते। एतेन राज्ञ औत्सुक्यं गम्यते।

अधरादेः किसलयादिसाम्यकथनेन शकुन्तलाया लतासाम्यं गम्यते इति एक- देशविवर्तिनी उपमा। अत्र 'अङ्गेषु' इति बहुवचनेन वदने कान्तिमत्ता, नयनयो- स्तारल्यम्, कण्ठे कम्बुत्रिरेखाशालिता, वक्षसि स्तनकलिकोन्मेषः, नाभौ गभीरत्वम्, नितम्बे मध्यनिम्नत्वम्, उभयभागे चतुरस्रत्वम्, जघनजङ्घाकाण्डोरुमूलानां मांस- लत्वम्, गतौ सविलासत्वम् इत्यादि ध्वनितम्। अनेन पदोच्चयं नाम भूषणमुपक्षिप्तम्। तल्लक्षणं तु—"संबद्धार्थानुरूपो यः पदौघः स पदोच्चयः" इति। आर्या छन्दः।

प्रियंवदया शकुन्तलाविषये उक्तिभङ्ग्या दत्तं लतासाम्यं श्रुत्वा तस्य तथ्यता- मनुभवन् राजा तदेव समर्थयन् कथयति—'अहो! अस्याः शकुन्तलाया अधरोष्ठः प्रत्यग्रपल्लवताम्रतां स्मारयति; एतौ चास्या बाहू कोमलविटपाधिकं सौकुमार्यं भजतः; यथा अभिनवोद्भिन्नं कुसुमं नयनाकर्षकं भवति, एवमेवास्याः प्रत्यङ्गं समुच्छलन् तरुणिमोल्लासः प्रतिप्रतीकं द्रष्टृदृशं समाकर्षतीव' इति भावः॥१८॥

**अनसूया**—हला सउन्दले ! इअं सअंवरवहू बालसहआरस्स तुए किदणामहेआ वणजोसिणित्ति णोमालिआ । णं विसुमरिदा सि ?

हला शकुन्तले ! इयं स्वयंवरवधूः बालसहकारस्य त्वया कृतनामधेया वन-ज्योत्स्नेति नवमालिका । एनां विस्मृताऽसि ?

**शकुन्तला**—तदा अत्ताणं वि विसुमरिस्सं । ( लतामुपेत्याव-

---

अन्तिकस्थं सहकारं स्वयमेवोपसर्पन्तीं नवमालिकामुद्दिश्यानसूया शकुन्तला-माह—**हलेति** । 'हला शकुन्तले ? इयं स्वयंवरवधूर्बालसहकारस्य त्वया कृतनामधेया वनज्योत्स्नेति नवमालिका । एनां विस्मृताऽसि' इति संस्कृतम् । इयम् = एषा पुरोवर्त्तिनी । बालसहकारस्य = रसालपोतस्य स्वयंवरवधूः = स्वयंवरप्राप्ता वधूः । या हि स्वयमेव प्रसरन्ती सहकारं प्राप्ता सेत्यर्थः । त्वया स्वयंवरवधूत्वेन परिकल्प्य वर्द्धिता, दैवादद्य तथाभूतेति भावः । त्वया कृतं = विहितं 'वनज्योत्स्ना' इति नामधेयं = नाम यस्याः सा । स्वार्थे धेय-प्रत्ययः । वने ज्योत्स्नेव प्रकाशते इति तथा नामकरणम् । अत्र नवमालिकायां वधूत्वारोपः सहकारे वरत्वं गमयतीत्येकदेशविवर्तिरूपकम् । एनां = नवमालिकां विस्मृता असि, मन्ये विस्मृतिवशात्त्वयैषा न सिक्ता किमित्यर्थः । काका प्रश्नः । विशेषणाभ्यां विस्मरणस्यासम्भाव्यत्वं व्यज्यते । एनामपि सम्भावयेति भावः । शकुन्तलोत्तरयति—**तदा इति** । 'तदा आत्मानमपि विस्मरिष्यामि । हला, रमणीये खलु काले एतस्य लतापादपमिथुनस्य व्यतिकरः संवृत्तः; नवकुसुमयौवना वनज्योत्स्ना, बद्धफलतयोपभोगक्षमः सहकारः' इति संस्कृतम् । यदि वनज्योत्स्नां विस्मरामि, तदा आत्मानमपि विस्मरिष्यामि; अभिन्ना इयं मत्तः, या हि वनज्योत्स्ना

---

१ दोसिणी । २ जइ ।

लोक्य च ) हला ! रमणीए क्खु काले इमस्स लदापाअवमिहुणस्स 'वइअरो संवुत्तो। णवकुसुमजोव्वणा वणजोसिणी,[2] बद्धफलदाए[3] उवभोअक्खमो सहआरो।

तदा आत्मानमपि विस्मरिष्यामि। हला, रमणीये खलु काले एतस्य लतापादपमिथुनस्य व्यतिकरः संवृत्तः। नवकुसुमयौवना वनज्योत्स्ना, बद्धफलतयोपभोगक्षमः सहकारः। ( इति पश्यन्ती तिष्ठति। )

सैवाहमित्यर्थः। एतद्विस्मरणमात्मविस्मरणवदशङ्कनीयमिति भावः। अत्र लताया आत्मसदृशप्रेमास्पदत्वं व्यज्यते। लतां = वनज्योत्स्नाम् उपेत्य = प्राप्य, लतासमीपं गत्वा, अवलोक्य = दृष्ट्वा च। आहेति शेषः। कविवचनम्। नवमालिकासहकारयोः सख्याऽऽरोपितं वधूवरत्वमनुसृत्य सकौतुकमाह—**हलेति**। रमणीये = मनोहरे खलु काले = समये लतायाः = वनज्योत्स्नायाः पादपस्य यन्मिथुनं = द्वयं तस्य व्यतिकरः=समागमः, संश्लेष इति यावत्। संवृत्तः=सञ्जातः। मिथुनस्य मिथोव्यतिकरयोग्यतां दर्शयति—**नवकुसुमेति**। नवकुसुमानां यौवनं=विकाशो यस्याम्, यद्वा नवानि कुसुमानि यस्मिंस्तादृशं यौवनं = तत्तुल्यावस्था यस्याः सा। नवं कुसुमं = स्त्रीरजो यस्मिंस्तादृशं यौवनं यस्या इति नायिकापक्षे। बद्धानि फलानि यस्मिंस्तस्य भावस्तया। फलं = कुसुमपरिणामो रेतश्च। "लाभनिष्पत्तिभोगेषु फले बीजे धने फलम्" इति यादवः। उपभोगक्षमः = फलास्वादच्छायासेवनादियोग्यः, तरुणीसमागमयोग्यश्च। यौवनेनेयं सहकारं प्रीणयति, सोऽपि चैनां फलभरानतच्छायया सम्भावयति, इति अहो नयनमनोहरोऽयमनयोः समागम इति भावः। अत्र व्यतिकरादिपदैर्नवमालिकासहकारयोर्दाम्पत्यव्यवहारसमारोपप्रतीतेः श्लेषमूला

१ रदिअरो। २ णोमालिआ। ३ अअंवि बहुफलदाए।

**प्रियंवदा**—( सस्मितम् ) अणसूए ! जाणासि, किं सउन्दला वणजोसिणीं अदिमेत्तं पेक्खदित्ति ?

अनसूये ! जानासि, किं शकुन्तला वनज्योत्स्नामतिमात्रं प्रेक्षते इति ?

**अनसूया**—ण क्खु विभावेमि, कहेहि[1] ।

न खलु विभावयामि, कथय ।

---

समासोक्तिः । इति पश्यन्ती तिष्ठति, लतापादपाववलोकयन्ती मनसा च समागममाधुर्यमास्वादयन्ती आस्ते इत्यर्थः । कविवाक्यमिदम् । अत्रैवंवर्णनेन शकुन्तलायाः प्रथमचित्तविकारारम्भरूपो भावो गम्यते, "निर्विकारात्मकात्सत्त्वात् भावस्तत्राद्यविक्रिया" इति **दशरूपकोक्तेः** ।

वनज्योत्स्नां सावधानमालोकयन्तीं शकुन्तलामुद्दिश्य प्रियंवदा अनसूयां प्रति सपरिहासमाह—**अनसूये ! इत्यादि** । शकुन्तलामनोगतस्य याथार्थ्येन संवेदनात्प्रियंवदया स्मितं कृतमिति 'सस्मितम्' इति कविवचनम् । 'अनसूये ! जानासि, किं शकुन्तला वनज्योत्स्नाम तिमात्रं प्रेक्षते इति' इति संस्कृतम् । किं = किंनिमित्तम् वनज्योत्स्नां = तन्नामिकां नवमालिकालताम् अतिमात्रम् = अतिगता मात्रा यस्मिन् यथा भवति तथा, सातिशयमित्यर्थः । प्रेक्षते = पश्यन्ती आस्ते, इति = एतत जानासि किम् ? इति काक्वा प्रश्नः । अथ अनसूया तन्निमित्तं जानन्त्यपि प्रियंवदया विवक्षितं तन्मुखेन शकुन्तलां श्रावयितुमाह—**नेत्यादि** । 'न खलु विभावयामि, कथय' इति संस्कृतम् । विभावयामि = जानामि । खल्विति जिज्ञासायाम् । अत एवाह—**कथयेति** । अनेन श्रवणे अवहितत्वं सूच्यते । प्रियंवदा उत्तरयति—

---

१ ता कधेहिमे ।

**प्रियंवदा**—जह वणजोसिणी 'अणुरूवेण पाअवेण संगदा, अवि णाम एव्वं अहं वि अत्तणो अणुरूवं वरं लहेअंत्ति ।

यथा वनज्योत्स्ना अनुरूपेण पादपेन संगता, अपि नामैवमहमप्यात्मनोऽनुरूपं वरं लभेयेति ।

**शकुन्तला**—एसो णूणं तुह अत्तगदो मणोरहो ।

---

**जहेत्यादि** । 'यथा वनज्योत्स्ना अनुरूपेण पादपेन संगता, अपिनाम एवमहमपि आत्मनोऽनुरूपं वरं लभेयेति' इति संस्कृतम् । यथा = यद्वत् वनज्योत्स्ना = नवमालिका अनुरूपेण = सदृशेन पादपेन = सहकारवृक्षेण संगता = मिलिता, अपिनाम = किमिदं संभावितं भवेत् ? यत् अहमपि एवमात्मनोऽनुरूपं = रूपादिगुणैः सदृशं वरं = भर्तारं लभेय = लब्धुं शक्नुयाम् । इति = एतन्मनसिकृत्य, इयं वनज्योत्स्नां सहकारसंगतां प्रेक्षमाणा तिष्ठतीत्यर्थः ।

अथ शकुन्तला वरप्रसङ्गेन लज्जमाना तथ्यमपि तद्वचनमन्यथयति—**एसो इति** । 'एष नूनं तवात्मगतो मनोरथः' इति संस्कृतम् । नूनं = निश्चितम् एषः = त्वया उक्तः तव आत्मगतः = मनसि स्थितः मनोरथः = अभिलाषः । अयं तवान्तर्गतो मनोरथः, न ममेति भावः । मम तु मिथः संगतयोरनयोर्वनज्योत्स्नासहकारयोः शोभाविशेषदर्शने तात्पर्यम् । त्वया तु त्वन्मनसि स्थितोऽभिलाषो मयि आरोप्यते इत्यभिसन्धिः । 'राजा—कथमियं सा कण्वदुहिता' इत्यादिना निरुक्तशकुन्तलावचनान्तेन संदर्भेण विलोभनं नाम अङ्गमुपक्षिप्तम् । तल्लक्षणं तु—"गुणानां वर्णनं तज्ज्ञैर्विलोभनमितीरितम्" इति ।

---

१ सरिसेणेव्व ।

एष नूनं तवात्मगतो मनोरथः । ( इति कलशमावर्जयति । )

**राजा**—अपि नाम कुलपतेरियमसवर्णक्षेत्रसंभवा स्यात् ! अथवा कृतं संदेहेन ।

---

**इति कलशमावर्जयतीति**। कलशं = घटम् आवर्जयति=किञ्चिदधोमुखं करोति । पादपमिथुनतले इति शेषः । कविवचनम् ।

अथ क्रमेण शकुन्तलां प्रति अङ्कुरिताभिलाषस्तस्याः गम्यागम्यताविचारे मुनिकन्यकाया अपि पाक्षिकं गम्यत्वमस्तीत्यवधार्य गम्येति पक्षं संभावयन् राजा आह—**अपि नामेति**। अपि नामेति दैवप्रार्थनायाम् । कुलपतेः = कण्वस्य असवर्णक्षेत्रसंभवा—समानो वर्णः = जातिर्यस्य तन्न भवतीत्यसवर्णम्, तादृशं क्षेत्रं = कलत्रं तस्मिन् संभवः = उत्पत्तिर्यस्याः सा । " क्षेत्रं पत्नीशरीरयोः " **इत्यमरः**। ब्राह्मणस्य चातुर्वर्ण्ये विवाहस्य विहितत्वात् कुलपतेरसवर्णक्षेत्रस्यापि संभवात्तदुत्पन्नेत्यर्थः ।

शूद्रस्य भार्या शूद्रैव सा च स्वा च विशः स्मृते ।
ते च स्वा च क्षत्रियस्य ताश्च स्वा चाग्रजन्मनः ॥

इति स्मृतेः । ईदृशी, इयं = शकुन्तला, स्यादिति संभावनायाम् । अत्र अपि नामेयं मम गम्या स्यादिति प्रस्तुतं कार्यं गम्यते इति कारणनिबन्धनाऽप्रस्तुत-प्रशंसा । एवं सति अस्यामभिलाषो युक्त इति भावः । पुनरपि चिन्तयन्नाह—**अथवेति** । सन्देहेन = संशयेन कृतम् = अलम् । सन्देहोऽनावश्यक इति भावः । "कृतमिति निषेधनिवारणयोः" इति **वर्धमानः**।

असंशयं क्षत्रपरिग्रहक्षमा
यदार्यमस्यामभिलाषि मे मनः ।
सतां हि संदेहपदेषु वस्तुषु
प्रमाणमन्तःकरणप्रवृत्तयः ॥ १९ ॥

---

तदेव द्रढयति—असंशयमिति । (इयम्) असंशयं क्षत्रपरिग्रहक्षमा (अस्ति), यत् आर्यं मे मनः अस्यामभिलाषि (अस्ति)। हि सन्देहपदेषु वस्तुषु सतामन्तःकरणप्रवृत्तयः प्रमाणमित्यन्वयः ।

इयं = शकुन्तला असंशयम्—संशयस्याभावः असंशयम्, नात्र संशयः, निश्चय एवेत्यर्थः । क्षत्रपरिग्रहक्षमा—क्षत्रस्य = क्षत्रियस्य परिग्रहो = भार्या, तत्त्वेन स्वीकारो वा । तस्मै तस्य वा क्षमा = योग्या । "परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः" इति विश्वः । अत्र सामान्यनिबन्धनया अप्रस्तुतप्रशंसया नायकगतं विमृश्यकारित्वं प्रतीयते । इयं मत्परिग्रहयोग्या ध्रुवमिति भावः । तत्र हेतुमाह—यत् = यस्मात् कारणात् आर्यं = श्रेष्ठं, निषिद्धाचरणप्रवृत्तिविमुखमित्यर्थः । मे = विद्याविनयधार्मिकत्वादिगुणशालिनः मनः = चित्तम् । "मुनेरपि मनोऽवश्यं सरागं कुरुतेऽङ्गना" इति नीत्या वनिताऽभिलाषित्वं हि मनोमात्रस्य धर्मः; प्रकृते स्वमनसोऽप्राकृतत्वं बोधयितुमार्यमिति विशेषणम् । अस्यां = शकुन्तलायामभिलाषि = सस्पृहम्, अस्तीति शेषः । अर्थान्तरं न्यस्यति—सतामित्यादि । हि = यस्मात् कारणात् सन्देहपदेषु = संशयास्पदेषु वस्तुषु = विषयेषु सतां = सज्जनानाम्, न तु प्रकृतानामिति यावत् । अन्तःकरणप्रवृत्तयः—अन्तःकरणस्य = मनसः प्रवृत्तयः = चेष्टाः, धारारूपेण स्वरसतः प्रवृत्तिर्बहुवचनेन सूच्यते । प्रमाणं = निर्णयहेतुः । सन्तो हि मनःप्रवृत्तिं प्रमाणत्वेनाङ्गीकुर्वन्तीत्यर्थः । तदुक्तम्—

तथापि तत्त्वत एनामुपलप्स्ये।

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
सम्यक्संकल्पजः कामो धर्ममूलमिद सताम्॥ इति।

अनेन आत्मतुष्टिप्रमाणं दर्शितम्। अत्र स्वेनैव स्वस्य सज्जनत्वकथनं न दोषाय, तस्य तथ्यत्वात्। तदुक्तम्—"स्वगुणाविष्क्रियादोषो नात्र भूतार्थ-शंसिनः" इति। किञ्च आत्मस्तुतिरेव दोषः। अत्र तु अयं स्वयंविचार इति न तदवसरः।

अत्र मतिरूपो भावो व्यङ्ग्यः। अर्थान्तरन्यासः काव्यलिङ्गं चालङ्कारौ। अत्र परिन्यासरूपमङ्गमुपक्षिप्तम्। तल्लक्षणं तु—"तन्निष्पत्तेस्तु कथनं परिन्यासं प्रचक्षते" इति। 'अधरः किसलयरागः' इत्यादिसंदर्भमारभ्य एतावत्पर्यन्तमौत्सु-क्यस्य गम्यमानत्वादारम्भो नाम प्रथमावस्था इति बीजारम्भसमन्वयान्मुखसन्धिः। अयमङ्कसमाप्तिपर्यन्तमनुस्यूतः। वंशस्थं वृत्तम्, "जतौ तु वंशस्थमुदीरितं जरौ" इति तल्लक्षणात्।

(राजा चिन्तयति—'इयं शकुन्तला निश्चयेन मत्परिग्रहयोग्यैव, यतः जितेन्द्रि-यस्य पुरुवंशोत्पन्नस्य दुष्यन्तस्य मे सर्वथा निषिद्धाचरणपराङ्मुखमत एव श्रेष्ठं मनः अस्यां स्त्रीसृष्टिरत्नभूतायां साभिलाषमस्ति; न हि अद्य यावत् मम मनसा अगम्ये वस्तुनि अभिलाषः कृतः, संप्रति मम मनः अस्यां साभिलाषम्; तस्मात् निश्चयेनेयं मत्परिग्रहयोग्यैव। संदिग्धेषु विषयेषु वयमन्तःकरणप्रवृत्त्यैव वस्तुतत्त्वं निश्चिनुमः; इदमेव आत्मतुष्टिप्रमाणम्' इति भावः॥१९॥)

एवम् मनःप्रवृत्त्या गम्यत्वे निश्चितेऽपि तन्मुखेन तत्त्वाज्ञानादपरितुष्यन् अत्यन्तधार्मिको नायकः तत्प्रकारं जिज्ञासुराह—**तथापीत्यादि**। तथापि = मनः-प्रवृत्त्या गम्यत्वनिश्चयेऽपि। अनेन अपरितोषो द्योत्यते। तत्त्वतः = याथार्थ्येन एनां=

**शकुन्तला**—( ससंभ्रमम् ) अम्मो ! सलिलसेअसंभमुग्गदो[1] णोमालिअं उज्झिअ वअणं मे महुअरो अहिवट्टइ[2] ।

अम्मो ! सलिलसेकसंभ्रमोद्गतो नवमालिकामुज्झित्वा वदनं मे मधुकरोऽभिवर्तते । ( इति भ्रमरबाधां रूपयति[3] । )

---

शकुन्तलाम् उपलप्स्ये = ज्ञास्यामि; सखीमुखादस्या वृत्तमवगमिष्यामीत्यर्थः । अथ आलम्बनविभावमवस्थान्तरेणाभिनवीकुर्वन् तद्द्वारा नायकरतिं पोषयितुं तत्प्रकाशावसरं सम्पादयितुं च नायिकाया अवस्थान्तरं वर्णयति—शकुन्तलेति । **ससम्भ्रममिति** । सम्भ्रमेण = संत्रासेन सहेत्यर्थः। आहेति शेषः। कविवचनम् । 'अम्मो ! सलिलसेकसंभ्रमोद्गतो नवमालिकामुज्झित्वा वदनं मे मधुकरोऽभिवर्तते' इति संस्कृतम् । 'अम्मो' आश्चर्ये । "अव्ययम्" इत्यधिकारे "अम्मो आश्चर्ये" इति सूत्रम् । सलिलस्य = जलस्य सेकात् यः सम्भ्रमः = संक्षोभस्तस्मात् उद्गतः = उत्पतितः मधुकरः = भ्रमरः । मधुकर इत्यनेन तस्य मधुपानोद्युक्तत्वं व्यज्यते । नवमालिकां = वनज्योत्स्नाम् उज्झित्वा = परित्यज्य मे वदनं = पद्मगन्धि मम मुखम् अभिवर्त्तते = लोभादनुधावति । वदनं लक्ष्यीकृत्य आगच्छतीत्यर्थः । अनेन शकुन्तलायाः पद्मिनीत्वं गम्यते । यदुक्तम्—"कमलमुकुलमृद्वी फुल्लराजीवगन्धा सुरतपयसि यस्याः सौरभं दिव्यमङ्गे" इति । **इति भ्रमरबाधां रूपयतीति** । भ्रमरात् बाधां = पीडां रूपयति, अभिनयतीत्यर्थः । कविवचनम् । स चाभिनयो विधुतेन शिरसा, कम्पितेनाधरेण, मुखदेशस्थितेन प्राङ्मुखतलेन चञ्चलेन पताकेनेति । तल्लक्षणानि यथा—"तिर्यग्गतं द्रुततरं विधुतं तत्प्रयुज्यते । शीतार्ते ज्वरिते भीते" इति, "व्यथायां कम्पितोऽन्वर्थो भीतौ शीते जये रुषि" इति,

---

१ संभन्तो । २ अहिहोदि । ३ नाटयति ।

राजा—(सस्पृहम्)—

चलापाङ्गं दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः।
करं व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर! हतास्त्वं खलु कृती ॥२०॥

---

तर्जनीमूलसंलग्नकुञ्चिताङ्गुष्ठको भवेत्।
पताकः संहताकारः प्रसारिततलाङ्गुलिः ॥ इति च।

अथ मधुकरपीडापर्याकुलामत एव विशेषदृश्यां शकुन्तलां विलोक्य प्रवृद्धाभिलाषो राजा नवमालिकां विहाय तद्वदनाभिमुखं गच्छन्तं ततस्तया कातरतया तरलतारकमवलोकितं तां च पुनः पुनः स्पृशन्तं तद्दृष्टेः कर्णान्तविश्रान्तत्वात्तदन्तिकेऽपि इन्दीवरधियैव मधुरझङ्कारमुखरं चरन्तं तथैव अभिनवसौरभलोभेन अधरीकृतकुसुमामोदम् अधरकिसलयमभिमृशन्तं कामुकायमानं मधुकरमवलोक्य देदीप्यमानमदनो राजा तमभिमुखीकृत्य तस्मिन् कामुकवृत्तान्तमारोप्य तस्मादात्मनो व्यतिरेकं दर्शयन्नाह—सस्पृहं—चलेत्यादि। सस्पृहम् = वयमपि कदाचित् एवमपाङ्गवीक्षणादीनां पात्रीभूयास्म इत्यौत्सुक्यसहितम्। आहेति शेषः। कविवचनम्। (हे) मधुकर! चलापाङ्गं दृष्टिं (सन्) वेपथुमतीं बहुशः स्पृशसि; रहस्याख्यायीव कर्णान्तिकचरः (सन्) मृदु स्वनसि; करं व्याधुन्वत्याः रतिसर्वस्वमधरं पिबसि; वयं तत्त्वान्वेषात् हताः; त्वं कृती खलु इत्यन्वयः।

हे मधुकर! = हे भ्रमर! चलापाङ्गम्—चलः = लोलतारकः अपाङ्गः = कटाक्षो यत्र तत्तथा, क्रियाविशेषणमिदम्। तारल्यं = भयस्यानुभावः, कामुकपक्षेऽपि तरलदृष्टिः रतेरनुभाव एव, "तरल तदिति प्राहुर्लोलत्तारकनीनिकम्"

इत्युक्तेः । दृष्टः = अवलोकितः सन्, अनयेति शेषः । वेपथुमतीं = भयेन कम्पातिशयवतीम्, कामुकपक्षे कम्परूपसात्विकभावयुक्तां बहुशः = अनेकवारम्, अत्र पौनःपुन्यम् अन्तराऽन्तरा निवारणकृतमवसेयम् । स्पृशसि = आलिङ्गसि, कामुकपक्षे स्पृष्टकेनालिङ्गसीत्यर्थः। इतोऽपि विशेषमाह—रहस्याख्यायीति। रहस्यं = गोपनीयं किञ्चित् आचष्टे = वदतीति रहस्याख्यायी, गुप्तवार्तावक्ता । इवेत्युपमायां, संभावनायाम्, अवधारणे वा । कर्णान्तिकचरः—कर्णयोरन्तिके = समीपे चरतीति तथाभूतः सन्, नेत्रयोः कर्णान्तविश्रान्तत्वादिन्दीवरबुद्ध्यैवेति भावः । मृदु = मन्दाक्षरं स्वनसि = शब्दायसे, मन्त्रयसे वा । कामुकपक्षे चुम्बने आलिङ्गने वा सात्विकविकारेण नायिकाया रागोत्कर्षमवधार्य कर्णान्तिके रहस्यं मन्त्रयसीत्यर्थः । अनेन व्याजेन कपोलचुम्बनेच्छाऽपि प्रतीयते । इतोऽप्यधिकमाह—करमिति । करं = हस्तं व्याधुन्वत्याः = निवारणाय कम्पयन्त्या अस्याः रतिसर्वस्वम्—रतेः= प्रीतेः सर्वस्वं = मूलधनम्, प्रधानहेतुमित्यर्थः । तत्त्वं नैसर्गिकसौरभ्यातिरेकादिति सौरभ्यानुभवलोभः, सौरभ्यलौहित्यादिना पुष्पविशेषभ्रमो वा अधरस्पर्शे हेतुः । कामुकपक्षे रहस्यमाख्याय अस्मदभिलषितानुकूलेयमिति मत्वा मौग्ध्यात् निवारणाय करं कम्पयन्त्याः रतेः = सुरतस्य सर्वस्वं = प्रधानाङ्गभूतमधरामृतमित्यर्थः । पिबसि = आस्वादयसि । व्याधुन्वत्या इति पानसमयविशेषणेन माधुर्यातिशयप्रयुक्ताग्रहातिशयः, अधरस्य निर्दयं ग्रहणं, तेन रससर्वस्वादानं च ध्वन्यते ।

एवं मधुकरस्य वृत्तिं परामृश्य तत एव तस्य धन्यतां प्रतिपादयिष्यन् आत्मनश्च तदलाभात् विषादातिशयं, तन्मूलामधन्यतां च कथयन्नाह—वयमित्यादि । वयम्, कथमस्याः कटाक्षविषया भवेम, कथं ललितं सुकुमारं चास्या अङ्गमालिङ्गेम, कथं च अस्मदभिप्रायबोधकं रहोवचनमेषा समाकर्णयेत्, कथं नु हठात् अनिच्छन्त्या अप्यस्या अधरामृतमास्वादेयम—इत्यादि नानाविधमनोरथशालिनो वयमित्यर्थः ।

बहुवचनेन विशेषज्ञत्वमहाराजत्वादिना समुत्कर्षश्च सूच्यते । तत्त्वान्वेषात् = इयं गम्या वा न वेति गम्यत्वनिश्चिचीषया वस्तुतत्त्वान्वेषणात् हताः = निरुद्धप्रसराः, तत्तन्मनोरथानामलाभात आयासमात्रपात्रीभूता इत्यर्थः । अधन्या इति यावत् । त्वं खलु कृतीति । मधुकरेति संबुद्धिः पुनरावर्तनीया; तया तस्य तिर्यग्जातित्वं, त्वमित्येकवचनेनापकर्षश्च द्योत्यते । कृती = कृतबहुकृत्यः । भूमार्थे इनिः । धन्य इति यावत् । खल्विति निपातेन अयत्नसिद्धं तव चरितार्थत्वमिति सूच्यते ।

अत्र भ्रमरस्वभावोक्तिः, तथा कामुकवृत्तान्तारोपप्रतीतेः समासोक्तिः, 'रहस्याख्यायीव' इति यद्यपि कर्तरि विशेषणं तथापि तदाख्यानं 'स्वनसि' इति क्रियायामुपमीयते, उत्प्रेक्ष्यते, आरोप्यते वेति अत्र उपमा, उत्प्रेक्षा, रूपकं वा अलङ्कारा भवितुमर्हन्ति । रूपकपक्षे 'इवशब्दो वाक्यालङ्कारे, अवधारणे वा । कटाक्षादीनां लाभात्त्वं कृती, वयं हता इति व्यतिरेकश्च । समासोक्त्या व्यतिरेक उत्थाप्यते । स च स्वोत्थापिकायाः समासोक्तेः शोभामावहति । पूर्ववाक्यार्थत्रयस्य 'कृती' इत्यत्र हेतुत्वात् काव्यलिङ्गं च । तथाविधदर्शनस्पर्शनादिक्रियाणामुत्तरोत्तरमुत्कर्षप्रतीतेः सारालङ्कारश्च । समासोक्तिबलात् शृङ्गाररसश्च प्रतीयते । नायकगताश्चिन्ताविषादौत्सुक्यादयो रतेर्व्यभिचारिणो भावाः प्राधान्येन व्यज्यन्ते । अत्र बीजस्य बहुलीकरणात् परिकरनाम अङ्गमिदम् । शिखरिणी वृत्तम् ।

सलिलसेकसंभ्रमान्नवमालिकामुज्झित्वा प्रथमं नीलोत्पलभ्रमात् शकुन्तलाया नेत्रं प्रति धावितो भ्रमरः, समीपस्थः पुनः कर्णशिरीषाभ्यामाकृष्टस्तत्रैव चलितः, ततोऽपि च पक्वबिम्बबुद्ध्याऽधरमभिगतः । राजा तु शकुन्तलायां जातस्पृहो भ्रमरे कामुकतामारोप्य सासूयमाह—'हे भ्रमर ! अनया तरलापाङ्गं दृष्टस्त्वं कम्पमानाङ्गीमेनां निवारितोऽपि वारंवारं स्प्रष्टुमभियासि, एवं स्वाभिलाषं तस्याः कर्णे कथयिष्यन्निव तस्याः कर्णान्तिकं मधुरं गुञ्जसि, किञ्च त्वां निवारयितुं करं

**शकुन्तला**—ण एसो दुट्ठो विरमदि, अण्णदो गमिस्सं। (पदान्तरे स्थित्वा सदृष्टिक्षेपम्) कहं इदो वि आअच्छदि! हला! परित्ताअह मं इमिणा दुव्विणीदेण दुट्ठमहुअरेण अहिहूअमाणं।

न एष दुष्टो विरमति, अन्यतो गमिष्यामि। कथमितोऽप्यागच्छति! हला, परित्रायेथां मामनेन दुर्विनीतेन दुष्टमधुकरेण अभिभूयमानाम्।

**उभे**—(सस्मितम्) का वअं[1] परित्तादुं[2]? दुस्सन्दं एव्व अक्कन्द, राअरक्खिदव्वाइं तवोवणाइं णाम।

---

कम्पयन्त्यास्तस्या रतिसौख्यसारमधरामृतं हठात् पिबसि; तस्माद् दुर्लभस्य वस्तुनोऽनायासेनैव लाभात्त्वमेव धन्योऽसि; इयं गम्या, अगम्या वेति सन्देहदोलारूढा वयं विचारे एव स्थिताः स्मः, लाभस्तु दूर एवेति वयमधन्याः' इति भावः ॥२०॥

अथ भ्रमरानुधावनपर्याकुला शकुन्तला वदति—**ण एसो** इति। 'न एष दुष्टो विरमति। अन्यतो गमिष्यामि' इति संस्कृतम्। एष दुष्टः = भ्रमरः, न विरमति = न निवर्तते। अन्यतः = स्थानान्तरे। पदान्तरे = अन्यत् पदं पदान्तरम्, स्थानान्तरे। स्थित्वा = गमनात् विरता भूत्वा सदृष्टिक्षेपम्—दृष्टेः क्षेपः = पातः तेन सह, भ्रमराभिमुखं दृष्ट्वेत्यर्थः। कविवचनम्। 'कथमितोऽप्यागच्छति! हला! परित्रायेथां मामनेन दुर्विनीतेन दुष्टमधुकरेण परिभूयमानाम्' इति संस्कृतम्। कथम् = किमेतत्। इतोऽपि = अस्मिन्नपि स्थाने। हलेति स्नेहद्योतकेन काकुसहितेन सम्बोधनेन इत्थमवस्थां मां पश्यन्त्योर्वामौदासीन्यं न युक्तमिति व्यज्यते। परित्रायेथाम् = रक्षतम्। दुर्विनीतेन, निवारितेनाप्यनुसरता इत्यर्थः। अभिभूयमानाम् = आकुलीक्रियमाणाम्। **सस्मितमिति**। शकुन्तलाया भ्रमरनिवारणाक्ष-

---

१ अह्मो। २ परित्ताणे।

के आवां परित्रातुम्? दुष्यन्तमेवाक्रन्द, राजरक्षितव्यानि तपोवनानि नाम।

**राजा**—अवसरोऽयमात्मानं प्रकाशयितुम्। न भेतव्यं न भेतव्यम्—(इत्यर्धोक्ते स्वगतम्) 'राजभावस्त्वभिज्ञातो भवेत्! भवतु! एवं तावदभिधास्ये[2]।

---

मताजन्यं वैक्लव्यं दृष्ट्वा सोपहासमित्यर्थः। कविवचनम्। 'के आवां परित्रातुम्? दुष्यन्तमेवाक्रन्द; राजरक्षितव्यानि तपोवनानि नाम' इति संस्कृतम्। के आवां परित्रातुम्? वैरिनिराकरणरूपे रक्षणे आवां न समर्थे इत्यर्थः। तर्हि मया किं कर्तव्यमित्यत आह—**दुष्यन्तमिति**। रोदनसहितमाह्वानमाक्रन्दनम्। तत्र हेतुमाह—**राजेत्यादि**। राज्ञो जनपदरक्षणेनैव न कर्तव्यसमाप्तिः, अपि तु तपोवनरक्षाऽपि राज्ञः कर्तव्यमेव। 'नाम' प्रसिद्धौ।

**अवसरोऽयमिति**। अभयप्रदानव्याजेन तासां पुरोगमनस्यायमुचितः काल इत्यर्थः। अवसरलाभेन प्रमुदितः सन्नाह—**न भेतव्यमिति**। द्विरुक्त्या त्वरा बोध्यते। **इत्यर्द्धोक्ते इति**। 'न भेतव्यम्, दुष्यन्तोऽहं भयाद्भवतीः परित्रास्ये' इति विवक्षितस्य वाक्यस्यैकदेशे 'न भेतव्यम्' इत्येव कथिते सतीत्यर्थः। **स्वगतमिति**। मनोगतमित्यर्थः। परेणाश्राव्यमिति यावत्, "अश्राव्यं स्वगतम्" इति लक्षणात्। पूर्वविवक्षितवाक्योक्तौ दोषमालोचयन्नाह—**राजभावस्त्वति**। एवमुक्ते सति राजाऽहमस्मीति परिज्ञातं भवेत्, तच्च मिथः स्वैरालापादेर्विघातकं स्यादिति भावः। पुनर्विचार्य वक्तव्यं निश्चिन्वन्नाह—**भवतु, एवमित्यादि**। एवं = वक्ष्यमाणप्रकारेण। तावदित्यनेन यथाऽवसरं सर्वं स्फुटं वदिष्यामीति

---

१ एवं हि राजाऽहमस्मीति परिज्ञानं भविष्यति। २ अतिथिसमाचारमेवावलम्बिष्ये।

शकुन्तला—( पदान्तरे स्थित्वा सदृष्टिक्षेपम् ) [३]कहं इदोवि मं अणुसरदि !

कथमितोऽपि मामनुसरति !

राजा—( सत्वरमुपसृत्य ) आः !

**कः पौरवे वसुमतीं शासति शासितरि दुर्विनीतानाम् ।**
**अयमाचरत्यविनयं मुग्धासु तपस्विकन्यासु ॥ २१ ॥**

---

गम्यते । अभिधास्ये = वक्ष्ये । **शकुन्तलेति** । 'कथमितोऽपि मामनुसरति' इति संस्कृतम् । कथमिति वितर्के सम्भ्रमे वा । **राजेति** । सत्वरमुपसृत्य = शीघ्रं मुनिकन्यकासमीपमागत्येत्यर्थः । कविवचनम् । आःकारः कोपद्योतकः । "आस्तु स्यात् कोपपीडयोः" इति कोशः ।

परमार्थं जानन्नप्यजानन्निव व्यवहरति—क इत्यादिना । दुर्विनीतानां शासितरि पौरवे वसुमतीं शासति ( सति ) कः अयं मुग्धासु तपस्विकन्यासु अविनयमाचरति इत्यन्वयः ।

दुर्विनीतानाम् = अशिष्टानां, दुष्टानां शासितरि = दण्डदानादिना शिक्षके पौरवे = पुरुवंशोद्भवे राज्ञि दुष्यन्ते वसुमतीं = पृथ्वीं शासति = दुष्टनिग्रहशिष्टानुग्रहादिद्वारा पालयति सति, "षष्ठी चानादरे" इति सप्तमी । शासतं पौरवमनादृत्येत्यर्थः । वसुमतीमित्यन्वर्थेन नाम्ना शासनसाफल्यं द्योत्यते । कः अयं = दुर्विनीतः मुग्धासु = अचतुरासु प्रतिपत्तिमूढासु तपस्विकन्यासु = मुनितनयासु । अनेन प्रतिकाराक्षमत्वं, तेन चाविनयस्य सुकरत्वं च द्योत्यते । तपस्विशब्देनात्यन्तासम्भाव्याविनयस्थानत्वं च सूच्यते। अविनयं=तत्कार्यम्, अकृत्यम्, अत्याचार-

( सर्वा राजानं दृष्ट्वा किंचिदिव संभ्रान्ताः । )

**अनसूया**—अज्ज ! ण क्खु किंवि अच्चाहिदं । इअं णो पिअसही महुअरेण [1]अहिहूअमाणा कादरीभूदा ।

मित्यर्थः । आचरति = कुरुते । वर्तमाननिर्देशेन अद्य मम पुरोऽपीति धृष्टतातिशयो द्योत्यते ।

अत्र भ्रमर इति, मयि दुष्यन्त इति, शकुन्तलायां चेति च विशेषे प्रस्तुते कोऽयमित्यादेः सामान्यस्योक्तेरप्रस्तुतप्रशंसा, परिकरश्च । आवेगामर्षाद्युपस्कृतः क्रोधोऽत्र व्यङ्ग्यः । कोऽयमित्युक्तिस्तदनुभावः । अत्र पौरव इत्युक्तिरधिकारिपुरुषभावेनात्मगोपनार्थाऽप्यर्थान्तरसंक्रमितवाच्यध्वनिन्यायेन वास्तवार्थं व्यनक्त्येवेति न राजनि असत्यवादित्वदोष आशङ्क्यः । अनेन दण्डनामकं सन्ध्यङ्गमुपक्षिप्तम् । तल्लक्षणं यथा—"दण्डस्त्वविनयादीनां दृष्ट्या श्रुत्या च तर्जनम्" इति । आर्या छन्दः ।

'राज्ञि दुष्यन्ते दुष्टानां शासके—पृथ्वीं दुष्टनिग्रहशिष्टानुग्रहकरणपूर्वकं पालयति सति कोऽयं दुर्विनीतः स्वभावतः सरला मुनिकन्यकाः पीडयितुं तासु कुदृष्टिं कर्तुं प्रयतते ? तन्नामज्ञानमात्रेणैव सद्यः स दण्डितो भवेत्' इति भावः ॥ २१ ॥

**सर्वा इति** । सर्वाः = तिस्रो मुनिकन्यकाः । **किञ्चिदिवेति** । इवेति वाक्यालङ्कारे । अतर्कितोपनतेन राजदर्शनेन समुत्पन्नया लज्जया भयेन च संभ्रमः । कविवचनम् । **अनसूयेति** । 'आर्य ! न खलु किमप्यत्याहितम् । इयं नौ प्रियसखी मधुकरेणाभिभूयमाना कातरीभूता' इति संस्कृतम् । किमपि = युष्मत्प्रतिविधेयम् अत्याहितं = महाभयम् । "अत्याहितं महाभीतिः" इत्यमरः । तर्हि किमर्थमनया परित्राणार्थमाक्रन्दितमित्यत आह—**इयमित्यादि** । नौ = आवयोः प्रियसखी =

१ आउलीकिअमाणा ।

आर्य ! न खलु किमप्यत्याहितम् । इयं नौ प्रियसखी मधुकरेणाभिभूयमाना कातरीभूता । (इति शकुन्तलां [1]दर्शयति । )

**राजा**—( शकुन्तलाभिमुखो भूत्वा ) [2]अपि तपो वर्धते ?

( शकुन्तला साध्वसादवचना[3] तिष्ठति । )

**अनसूया**—दाणिं अदिहिविसेसलाहेण । हला सउन्दले ! गच्छ

---

शकुन्तला । अनेन लीलापरिहासोक्तियोग्यत्वं ध्वन्यते । मधुकरेणेत्येकवचनेन परिभवस्य लाघवं द्योत्यते । कातरीभूता, तन्निवारणाक्षमत्वात् त्रस्ता च । इति शकुन्तलां दर्शयतीति । एतत्सत्यमेव, न तूपचारमात्रमिति अनेन द्योत्यते । कविवचनम् । **शकुन्तलाभिमुखो भूत्वेति** । अत्र शकुन्तलायाः प्राधान्यबोधनम् अभिमुखीभावस्य बाह्यो हेतुः, शकुन्तलाहृदयजिज्ञासा तु आन्तरो हेतुः । अथ मुनिजनानुरूपं पृच्छति—**अपीत्यादि** । साध्वसात् = अतर्कितोपनतमहापुरुषसंदर्शनजनितमनःक्षोभजात् अङ्गसादात् अवचना = अप्रतिवचना । तस्यां तथा स्थितायां तया यद्वक्तव्यं तत् अनसूया स्वयं प्रतिवक्ति—**दाणिमित्यादि** । 'इदानीमतिथिविशेषलाभेन । हला शकुन्तले ! गच्छोटजम्, फलमिश्रमर्घमुपहर, इदं पादोदकं भविष्यति' इति संस्कृतम् । विशिष्टोऽतिथिरतिथिविशेषस्तस्य लाभेन= प्राप्त्या । लाभेनेत्यनेन प्रीत्यतिशयो द्योत्यते । 'तपो वर्धते' इत्यनुषङ्गः । विशिष्टातिथिसत्कारो हि तद्वृद्धिहेतुः । अनेन अनुवृत्तिनामा नाट्यालङ्कार उपक्षिप्तः । तल्लक्षणं तु—"प्रश्रयादनुवर्तनम् । अनुवृत्तिः" इति ।

अथ प्रतिपत्तिमूढां शकुन्तलामतिथिसत्काराय त्वरयति—**हलेत्यादि** । उटजं= पर्णशालाम् । "मुनीनां तु पर्णशालोटजोऽस्त्रियाम्" इत्यमरः । अर्घ्यस्य फलमिश्रत्वं

---

१ दर्शयतः । २ अपि नाम । ३ ऽवनतमुखी ।

उडअं[1]; फलमिस्सं अग्घं उवहर; इदं पादोदअं भविस्सदि ।

इदानीमतिथिविशेषलाभेन । हला शकुन्तले ! गच्छोटजम् ; फलमिश्रमर्घमुपहर; इदं पादोदकं भविष्यति ।

**राजा**—भवतीनां सूनृतयैव गिरा[2] कृतमातिथ्यम् ।

**प्रियंवदा**—तेण हि इमस्सिं दाव पच्छाअसीअलाए सत्तवण्णवेदिआए मुहुत्तअं उववि सिअ परिस्समविणोदं[3] करेदु अज्जो ।

तेन ह्यस्यां तावत् प्रच्छायशीतलायां सप्तपर्णवेदिकायां मुहूर्तमुपविश्य परिश्रमविनोदं करोत्वार्यः ।

---

शास्त्रप्रसिद्धम् । पाद्यमत्रास्तीत्याह—**इदमिति** । इदं = वृक्षसेचनार्थमानीतं घटजलम् । अथ शकुन्तलायामासक्तो राजा तस्याः क्षणिकमप्यदर्शनमसहमानः सन्नाह—**भवतीनामिति** । सूनृतया = प्रिययाऽपि तथ्यया, "प्रियं तथ्यं च सूनृतम्" इति **यादवः** । भवतीनां मधुरभाषणेनैव तृप्तोऽस्मि, अर्घ्यपाद्यादेः प्रयोजनं नास्तीति भावः । अतिथिसमुचितमुपचारमारभमाणा प्रियंवदा प्राह—**तेण होति** । 'तेन ह्यस्यां तावत्प्रच्छायशीतलायां सप्तपर्णवेदिकायां मुहूर्तमुपविश्य परिश्रमविनोदं करोत्वार्यः' इति संस्कृतम् । तेन हि = यदि वाङ्मात्रेणैवातिथ्यं कृतमिति मन्यसे तर्हीत्यर्थः । प्रच्छायशीतलायां = प्रकृष्टा छाया प्रच्छायं तेन, यद्वा प्रकृष्टा छाया यस्याम् ; अत एव शीतलायाम् । सूर्यकिरणप्रवेशासम्भवाच्छैत्यसम्भवः, परिश्रमापनोदनक्षमत्वं च । सप्तपर्णस्य = विषमच्छदस्य वेदिकायाम् । "सप्तपर्णो विशालत्वक् शारदो विषमच्छदः" **इत्यमरः** । परिश्रमस्य=अध्वक्लेशस्य

---

१ उडआदो । २ वाचा । ३ विणोदणम् ।

**राजा**—नूनं यूयमप्यनेन [1]कर्मणा परिश्रान्ताः ।

**प्रियंवदा**—हला सउन्दले ! उइदं णो पज्जुवासणं अदिहीणं । एत्थ उववसिम्ह ।

हला शकुन्तले ! उचितं नः पर्युपासनमतिथीनाम् । अत्रोपविशामः ।

( इति सर्वे उपविशन्ति । )

**शकुन्तला**—( आत्मगतम् ) किं णु[2] क्खु इमं पेक्खिअ[3] तवोवणविरोहिणो विआरस्स गमणीअम्हि संवुत्ता !

किं नु खल्विमं प्रेक्ष्य तपोवनविरोधिनो विकारस्य गमनीयाऽस्मि संवृत्ता !

---

विनोदनम् = अपनयनम् । ताभिः सह स्वैरासिकां काङ्क्षन् राजा प्राह—**नूनमिति** । नूनं = निश्चयेन । यूयमपि, न केवलं वयमेव । अनेन कर्मणा = वृक्षसेचनेन परिश्रान्ताः = क्लान्ताः । अतो युष्माकमपि परिश्रमविनोदनावसरोऽयमित्युपवेष्टव्यमिति भावः । चित्तज्ञा प्रियंवदा राजोक्तिमनुमोदमाना शकुन्तलामपि सहोपवेशनेऽनुकूलयति—**हलेति** । 'हला शकुन्तले ! उचितं नः पर्युपासनमतिथीनाम् । अत्रोपविशामः' इति संस्कृतम् । नः = तपस्विकन्यकानामस्माकम् । पर्युपासनम् = समीहिताचरणात्मकं पूजनम् । **सर्वे उपविशन्तीति** । सर्वे = राजा शकुन्तलाप्रियंवदाऽनसूयाश्च । "पुमान् स्त्रिया" इत्येकशेषः । कविवचनम् । **आत्मगतमिति** । स्वगतमित्यर्थः । "सर्वश्राव्यं प्रकाशं स्यादश्राव्यं स्वगतं मतम्" इति **दशरूपके** ।

राज्ञो दर्शनेन सद्योऽङ्कुरितरतिभावा शकुन्तला स्वयं निरूपयति—**किं णु क्खु इत्यादि** । 'किं नु खल्विमं प्रेक्ष्य तपोवनविरोधिनो विकारस्य गमनीयाऽस्मि संवृत्ता' इति संस्कृतम् । 'किं नु' इति वितर्के । खल्विति जिज्ञासायाम् । इमं =

---

१ धर्मकर्मणा । २ कधम् । ३ देक्खिअ ।

**राजा**—( सर्वा विलोक्य[1] ) अहो ! [2]समवयोरूपरमणीयं भवतीनां सौहार्दम् ।

**प्रियंवदा**—( जनान्तिकम् ) अणसूए ! को णु क्खु एसो चउर-गम्भीराकिदी [3]चउरं पिअं आलवन्तो पहाववन्दो विअ लक्खीअदि ?

---

सौन्दर्यादिविशिष्टं प्रेक्ष्य = दृष्ट्वा, अस्य दर्शनादिति भावः । तपोवनविरोधिनः = तपस्विजनप्रतिकूलस्य । विषयपराङ्मुखं हि तपस्विनां मनो भवति । विकारस्य = विषयानुभवौन्मुख्यरूपस्य मनोविकारविशेषस्य गमनीया = प्राप्या संवृत्ता = जाता । अनेन नायिकायाः प्रथमचित्तविकारारम्भरूपोऽङ्गजो भावः स्फुटं दर्शितः । अभिलाषश्चक्षुःप्रीतिर्वा रतेः प्रथमावस्था भवति । उक्तं च—"निर्विकारात्मके चित्ते भावः प्रथमविक्रिया" इति । तासां सौहार्दमालोक्य प्रसन्नस्ताः समावर्जयितुं राजा चाटुभाषणं कुरुते—**अहो** ! इति । 'अहो' इति कौतुकद्योतकम्, "अहो ! बतासि स्पृहणीयवीर्यः" इतिवत् । समानि = अन्योन्यं तुल्यानि वयांसि रूपाणि च । रूपपदेन आकृतिः सौन्दर्यं स्वभावश्चेति त्रितयमपि विवक्षितम् । "अथ रूपं नपुंसकम् । स्वभावाकृतिसौन्दर्य" इत्याद्यमरः । तैः रमणीयम् । सौहार्दं = मैत्री । **जनान्तिकमिति** । अयं तावन्नाटकसमयः । जनान्तिकलक्षणं यथा **दशरूपके**—

त्रिपताककरेणान्यानपवार्यान्तरा कथाम् ।
अन्योन्यामन्त्रणं यत्स्यात्तज्जनान्ते जनान्तिकम् ॥ इति ।

त्रिपताककरलक्षणं यथा **सङ्गीतरत्नाकरे**—"स एव त्रिपताकः स्याद्वक्रिताऽनामिकाऽङ्गुलिः" इति ।

---

१ अवलोक्य । २ समान । ३ मधुरम् ।

अनसूये ! को नु खल्वेष चतुरगम्भीराकृतिश्चतुरं प्रियमालपन्प्रभाववानिव लक्ष्यते ?

**अनसूया**—[1]सहि ! मम वि अत्थि कोदूहलं । पुच्छिस्सं दाव णं । ( प्रकाशम् ) अज्जस्स महुरालावजणिदो वीसम्भो मं मंतावेदि—कदमो अज्जेण राएसिणो वंसो अलंकरीअदि ? कदमो वा विरहपज्जुस्सुअजणो किदो देसो ? किंणिमित्तं वा सुउमारदरो वि तवोवणगमणपरिस्समस्स अत्ता पदं उवणीदो ?

---

अथ राज्ञो रूपसौन्दर्यादिना प्रलोभिता तत्तत्त्वजिज्ञासया प्रियंवदा अनसूयामाह—अणसूए ! इति । 'अनसूये ! को नु खल्वेष चतुरगम्भीराकृतिश्चतुरं प्रियमालपन् प्रभाववानिव लक्ष्यते ?' इति संस्कृतम् । नुशब्दो वितर्के । खल्विति जिज्ञासायाम् । चतुरगम्भीराकृतिः—चतुरा = सामुद्रिकोक्तगुणविशिष्टत्वेन दर्शनीया गम्भीरा = "गाम्भीर्यं यत्प्रभावेण विकारो नोपलक्ष्यते" इति लक्षणलक्षितस्य गाम्भीर्यस्य आकृतावुपचारः, तदभिव्यञ्जिकेत्यर्थः । विशेषणद्वयेन अभिगम्यत्वाधृष्यत्वे द्योत्येते । तथाविधा आकृतिर्यस्य सः चतुरं = निपुणं प्रियं = हृद्यं, प्रीतिकरमित्यर्थः । प्रभाववानिव = प्रतापशालीव लक्ष्यते = अनुमीयते । आकृत्या वाचा च मन्ये नायं प्राकृतो जन इति भावः । यद्यस्य रूपाद्यनुरूपमाभिजात्यमपि स्यात्तदा अस्मत्सख्याः वरत्वेनायं ग्रहीतुमुचित इति प्रियंवदाया गूढोऽभिसन्धिः । सहीति । 'सखि ! ममाप्यस्ति कुतूहलम् , प्रक्ष्यामि तावदेनम्' इति संस्कृतम् । प्रकाशमिति । तल्लक्षणं तु—"सर्वश्राव्यं प्रकाशं स्यात्" इति । 'आर्यस्य मधुरालापजनितो विश्रम्भो मां मन्त्रयते—कतम आर्येण राजर्षिवंशोऽलंक्रियते ? कतमो वा विरह-

---

1 हला ।

सखि ! ममाप्यस्ति कौतूहलम् । प्रक्ष्यामि तावदेनम् । आर्यस्य मधुरालाप॰ जनितो विश्रम्भो मां मन्त्रयते—कतम आर्येण राजर्षेर्वंशोऽलंक्रियते ? कतमो वा विरहपर्युत्सुकजनः कृतो देशः ? किंनिमित्तं वा सुकुमारतरोऽपि तपोवनगमनपरिश्र॰ मस्यात्मा पदमुपनीतः ?

**शकुन्तला**—( आत्मगतम् ) हिअअ ! मा उत्तम्म; एसा तुए चिन्तिदाइं अणसूया मन्तेदि ।

हृदय ! मा उत्ताम्य; एषा त्वया चिन्तितान्यनसूया मन्त्रयते ।

---

पर्युत्सुकजनः कृतो देशः ? किंनिमित्तं वा सुकुमारतरोऽपि तपोवनगमनपरिश्रमस्यात्मा पदमुपनीतः ?' इति संस्कृतम् । विश्रम्भः = विश्वासः,

यद्यत्स्वचित्ते स्फुरति तत्तत्परिचितान्प्रति ।
निःशेषं बोधयन् भावो विश्वास इति कथ्यते ॥

इत्युक्तलक्षणः । मन्त्रयते = वचनेन योजयति । एतेन तत्पूर्वदृष्टेन राज्ञा सह सम्भाषणे प्रसक्तमनौचित्यं भङ्ग्या परिहृतम् । कतम आर्येण राजर्षे- वंशोऽलंक्रियते, कस्य राजर्षेर्वंशे भवान् उत्पन्न इत्यर्थः । कतमो वा विरहपर्युत्सु- कजनः कृतो देशः—विरहेण = स्ववियोगेन पर्युत्सुकः = उत्कण्ठितो जनो यत्र स देशः कृतः, कस्माद्देशादागतोऽसीत्यर्थः । सुकुमारतर इत्यनेन परिश्रमानर्हत्वम्, तपोवनेत्यनेन यथावत् पानभोजनादेरलाभश्च सूच्यते । आत्मा = देहः पदं = स्थानमुपनीतः = प्रापितः । अत्र क्रमात् वंशदेशौ आगमनहेतुश्च भङ्ग्या पृष्टाः । अथ शकुन्तला राज्ञस्तत्त्वं जिज्ञासुर्लज्जया स्वयं प्रष्टुमशक्नुवती च स्वहृदयं प्रति वदति—**हिअअ ! इति** । 'हृदय ! मा उत्ताम्य, एषा त्वया चिन्तितान्यनसूया मन्त्रयते' इति संस्कृतम् । मा उत्ताम्य = सन्तापं मा कृथाः । अत्र हेतुः 'एषा'

**राजा**—( आत्मगतम् ) कथमिदानीमात्मानं निवेदयामि ? कथं वा 'आत्मापहारं करोमि ? भवतु ; एवं तावदेनां वक्ष्ये—( प्रकाशम् ) भवति ! यः पौरवेण[2] राज्ञा धर्माधिकारे नियुक्तः सोऽहमाश्रमिणामविघ्नक्रियोपलम्भाय धर्मारण्यमिदमायातः ।

---

इत्यादि । चिन्तितानि = प्रष्टव्यत्वेन निरूपितानि । मन्त्रयते = भङ्ग्या पृच्छति । अनेन हावलक्षणो विकारो दर्शितः । तल्लक्षणं च—"भावादीषत्प्रकाशो यः स हाव इति कथ्यते" इति । अथैवं पृष्टो राजा आत्मापहारस्य अधर्म्यत्वात्, आत्मनिवेदनस्य ग्राम्यत्वात्प्रकृतकार्यविघातकत्वाच्च किं कर्तव्यमिति विमृशति—**कथमिति** । 'कथम्' इति विमर्शे । वाशब्दः समुच्चये । आत्मापहारम्—आत्मनः = स्वरूपस्य अपहारः = निगूहनम्, अन्यत्वेन कथनम् । तच्च अधर्म्यम्,

योऽन्यथा सन्तमात्मानमन्यथा सत्सु भाषते ।
स पापकृत्तमो लोके स्तेन आत्मापहारकः ॥

इति **स्मृतेः** । कञ्चिदुपायं विमृश्याह—**भवत्विति** । **भवतीत्यादि** । भवतीति सर्वासां मुनिकन्यानामैक्यमभिप्रेत्य सम्बोधनम् । पौरवेण राज्ञा = दुष्यन्तेन धर्माधिकारे = धर्मरक्षारूपेऽधिकारे नियुक्तः = अधिकृतः । अविघ्नक्रियोपलम्भाय = अविघ्नानां क्रियाणामुपलम्भाय, क्रिया निर्विघ्ना न वेति ज्ञातुमित्यर्थः । राज्ञो दुष्यन्तस्य धर्मसचिवोऽहं धर्मरक्षार्थमिहागत इति आत्मापहारानुगुणो बाह्यार्थः । पौरवेण राज्ञा = इलिलनाम्ना मत्पित्रा धर्माधिकारे = धर्मस्वरूपे प्रजापरिपालनलक्षणेऽधिकारे नियुक्तः = अभिषेकपूर्वं स्थापितः दुष्यन्त इति प्रसिद्धोऽह-

---

१ आत्मनः परिहारम् । २ वेदविदस्मि राज्ञः पौरवस्य नगरधर्माधिकारे नियुक्तः ।

**अनसूया**—सणाहा दाणिं धम्मआरिणो ।

सनाथा इदानीं धर्मचारिणः ।

( शकुन्तला शृङ्गारलज्जां रूपयति[1] । )

मिति आभ्यन्तरोऽर्थः । अथ तद्वचनं सादरमनुमोदमाना अनसूया प्राह—**सणाहा इति** । 'सनाथा इदानीं धर्मचारिणः' इति संस्कृतम् । सनाथाः—नाथेन = रक्षकेण सहिताः । **इदानीमिति** । पूर्वं सनाथत्वमस्पष्टमासीत्, इदानीं तु स्पष्टम-भूदिति भावः । धर्मचारिण इत्यनेन राजैकशरणत्वं सूच्यते । वयमिति विशेषे वक्तव्ये धर्मचारिण इति सामान्योक्तेरप्रस्तुतप्रशंसा ।

राज्ञो रूपदर्शनेन अङ्कुरितायाः पश्चादाभिजात्यादिश्रवणेन परिपोषं प्राप्तायाश्च रतेरवस्थान्तरमनुभावद्वारेण शकुन्तला दर्शयति—**शृङ्गारलज्जां रूपयतीति** । रतिरेव प्रकृष्टा शृङ्गारः, यदुक्तम्—"प्रमोदात्मा रतिः सैव यूनोरन्योन्यसक्तयोः । प्रकृष्यमाणा शृङ्गारः" इति । "शृङ्गारो नाम विषयेषु यथास्वमिन्द्रियाणां प्रवृत्ता-त्मनः सुखानुभवाभिमानः" इति **भोजराजः** । तेन या लज्जा कन्याजनसुलभा—

दुराचारादिभिर्व्रीडा धाष्टर्याभावस्तमुन्नयेत् ।
साचीकृताङ्गावरणवैवर्ण्याधोमुखादिभिः ॥

इत्युक्तप्रकारा, तामभिनयतीत्यर्थः । अन्यत्र च—"लज्जा नाम अन्तरुद्भिन्न-मान्मथविकारजुगोपायिषारूपा मदनविजृम्भणैव शृङ्गाररसतरङ्गिणी; यया रूढा निर्भरतया तांस्तान् विलासान् नेत्रगात्रविकारपरम्परारूपान् सूते" इति । अनेन हेला नाम विकार उक्तः, "हेलाऽत्यन्तसमालक्ष्यविकारः स्यात्स एव तु" इति

१ नाटयति ।

**सख्यौ**—( उभयोराकारं विदित्वा जनान्तिकम् ) हला सउन्दले ! जइ एत्थ अज्ज तादो संणिहिदो भवे ;

हला शकुन्तले ! यद्यत्राद्य तातः संनिहितो भवेत् ;

**शकुन्तला**—तदो किं भवे ?

ततः किं भवेत् ?

**सख्यौ**—इमं जीविदसव्वस्सेण वि अदिहिविसेसं किदत्थं करिस्सदि ।

इमं जीवितसर्वस्वेनाप्यतिथिविशेषं कृतार्थं करिष्यति ।

---

लक्षणात् । शृङ्गारलज्जारूपणं तु परावृत्तेन शिरसा लज्जितया दृशा च । तल्लक्षणं तु—

पराङ्मुखीकृतं शीर्षं परावृत्तमुदीरितम् ।
तत्कार्यं कोपलज्जादि कृते वक्त्रापसारणे ॥ इति,
मिथोऽभिगामिपक्ष्माग्राऽप्यधस्ताद्गततारका ।
पतितोर्ध्वपुटा दृष्टिर्लज्जया लज्जिता मता ॥ इति च ।

तदानीं विदग्धयोः सख्योः प्रवृत्तिमाह—**उभयोरिति** । आकारम् = आकृतिम् । "आकाराविङ्गिताकृती" इत्यमरः । बुद्धिकारिताश्चक्षुर्विकारा इङ्गितम्, अबुद्धिकारिताः स्तम्भस्वेदादय आकाराः । विदित्वा, परस्पराभिलाषमनुभावैरवधार्येत्यर्थः । सोपहासं सख्यौ शकुन्तलामाहतुः—**हलेति** । 'हला शकुन्तले ! यद्यत्र अद्य तातः सन्निहितो भवेत्' इति संस्कृतम् । अद्य = अतिथिविशेषलाभे, त्वदनुरूपवरलाभे इति आन्तरोऽर्थः । शकुन्तला ब्रूते = **तदो इति** । 'ततः किं भवेत् ?' इति संस्कृतम् । ततः, तदेत्यर्थः । किमित्याक्षेपे प्रश्ने वा । विवक्षितार्थगोपायनपुरस्सरं सख्यौ शेषमाहतुः—**इममिति** । 'इमं जीवितसर्वस्वेनाप्यतिथिविशेषं

**शकुन्तला**—तुम्हे अवेध। किं वि हिअए करिअ मन्तेध ! ण वो वअणं सुणिस्सं।

युवामपेतम्। किमपि हृदये कृत्वा मन्त्रयेथे ! न युवयोर्वचनं श्रोष्यामि।

**राजा**—वयमपि तावद्भवत्योः सखीगतं किञ्चित् पृच्छामः।

---

कृतार्थं करिष्यति' इति संस्कृतम्। तात इति पूर्वस्मादनुवर्तते। इमं = लोकोत्तर-गुणविशिष्टं जीवितसर्वस्वेन—जीवितस्य सर्वस्वेन = सारांशेन तपसा, तपः-प्रभावानीतैर्लोकोत्तरपदार्थैरिति यावत्। न केवलमर्घ्यादिना इति अपिशब्दार्थः। कृतार्थं करिष्यति = यथार्हं सम्मानयेत्। वयं तु तद्दाक्षिण्यश्रवणेन अर्घ्यादिकमपि नाकुर्म इत्येवमेव विवक्षितोऽर्थः। व्यङ्ग्यार्थस्तु—अस्मै अतिथित्वेनागताय त्वदनु-रक्ताय महाराजाय जीवितसर्वस्वभूतां त्वां प्रदास्यतीति। अथ नायकसमक्षं प्रस्तुतां सखीजनवक्रतां बुद्ध्वा सलज्जा शकुन्तला कृतककोपेन पुनराह—**तुम्हे इति**। 'युवामपेतम्। किमपि हृदये कृत्वा मन्त्रयेथे ! न युवयोर्वचनं श्रोष्यामि' इति संस्कृतम्। अपेतं = मत्समीपादपसरतम्। किमपि = कन्यकानामवाच्यं लज्जाकरं किञ्चिद् वस्तु। युवयोः = परिहासशीलयोः सख्योः वचनम् = एका-मपि वाचम्।

अथ तथाविधां नायिकामालोक्य परिवृद्धाभिलाषो राजा तस्याः क्षत्रियपरिग्रह-योग्यतां द्रढयितुं तदुत्पत्तिं प्रष्टुमारभते—**वयमपीति**। वयमपि, यथा यूयमस्म-त्कुलनामाद्यपृच्छत, तथेत्यपिशब्दार्थः। तावत् = प्रथमम्। अनेन पश्चात्प्रष्टव्यान्तर-मस्तीति द्योत्यते। सखीगतं=सखीसम्बन्धि। 'भवत्योः सखी' इत्यनेन तद्वृत्तान्त-ज्ञानं भवत्योरस्त्येवेति द्योत्यते। अथ सख्यौ तद्वचनं सादरमभ्युपगच्छतः—

**सख्यौ**—अज्ज ! अनुग्गहो विअ इअं अब्भत्थणा।

आर्य ! अनुग्रह इवेयमभ्यर्थना।

**राजा**—भगवान्कण्वः शाश्वते ब्रह्मणि स्थित[1] इति प्रकाशः, इयं च वः सखी [2]तदात्मजेति कथमेतत् ?

**अनसूया**—सुणादु अज्जो। अत्थि को वि कोसिओत्ति गोत्तणामहेओ महाप्पहावो राएसी।

---

**अज्जेति**। 'आर्य ! अनुग्रह इवेयमभ्यर्थना' इति संस्कृतम्। इवेति संभावनायाम्। अभ्यर्थना = जिज्ञासा। भवत्प्रश्नस्य सखीवृत्तान्तविषयकत्वेन तस्या अभ्युदयहेतुत्वात् अनुग्रहात्मना संभावयाम इत्यर्थः। राजा तद्वचसा सन्तुष्टः पृच्छति—**भगवानित्यादि**। भगवान् = ऐश्वर्यादिषड्गुणपरिपूर्णः,

उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम्।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति॥

इत्युक्तलक्षणो वा। प्रशंसापरमिदं महर्षेः कण्वस्य ब्रह्मस्थितियोग्यतां सूचयति। शाश्वते ब्रह्मणि स्थितः = परब्रह्मणि योजितात्मा, यद्वा नैष्ठिकब्रह्मचर्ये स्थितः। परिग्रहराहित्यादूर्ध्वरेता इति यावत्। इति प्रकाशः, प्रसिद्धोऽयमर्थ इत्यर्थः। चकारो यौगपद्ये विरोधं द्योतयति। एतदित्यनेन विरुद्धं वोक्तवाक्यार्थद्वयं परामृश्यते। कथम्—'संगच्छते' इति शेषः। तत्प्रकारः कथ्यतामिति भावः।

अथ शकुन्तलोत्पत्तिसम्बन्धिनीं कथां कथयितुमनसूयोपक्रमते—**सुणादु** इति। 'शृणोत्वार्यः। अस्ति कोऽपि कौशिक इति गोत्रनामधेयो महाप्रभावो राजर्षिः' इति संस्कृतम्। शृणोतु = आदरेण श्रवणं करोतु। अनेन कथाया रमणीयत्वं विस्तरश्च

---

१ वर्तते। २ तस्यात्मजा।

श्रृणोत्वार्यः । अस्ति कोऽपि कौशिक इति गोत्रनामधेयो महाप्रभावो राजर्षिः ।

**राजा**—[१]अस्ति, श्रूयते ।

**अनसूया**—तं णो पिअसहीए पहवं अवगच्छ । उज्झिआए सरीरसंवड्ढणादिहिं तादकण्णो से पिदा ।

तमावयोः प्रियसख्याः प्रभवमवगच्छ । उज्झितायाः शरीरसंवर्धनादिभिस्तात·कण्वोऽस्याः पिता ।

---

द्योत्यते। **कौशिक इति गोत्रनामधेय इति**। कुशिकस्य गोत्रापत्यं कौशिकः, विश्वामित्र इत्यर्थः। कौशिक इत्यनेन पुरातनवंशप्रभवत्वं, महाप्रभाव इत्यनेन त्रिशङ्कुस्वर्गनयनकौशिकीनिर्माणाद्यनेकाद्भुतकथानिमित्तत्वं, तन्मूला लोकप्रसिद्धिश्च द्योत्यते। राजर्षिः = वँ राजा, पश्चात् वसिष्ठस्पर्धया सञ्चितनिरतिशयतपःप्रभावात् ऋषिश्च। राजत्वोक्त्या वक्ष्यमाणशकुन्तलोत्पादनं राजभावे एवेति द्योत्यते। तेन राजपरिग्रहयोग्यता फलति। आत्मनः श्रवणौत्सुक्यं द्योतयितुं तदुक्तमनुमोदमानो राजा प्राह—**अस्तीति**। आकर्णनमात्रेण तत्सत्तां जानामीत्यर्थः।

श्रोतुरौत्सुक्यमवधार्य अनसूया सोत्साहं प्राह—**तमिति**। 'तमावयोः प्रियसख्याः प्रभवमवगच्छ, उज्झितायाः शरीरसंवर्धनादिभिस्तातकण्वोऽस्याः पिता' इति संस्कृतम्। तं = कौशिकम्। प्रभवं = जनकम्। कथं तर्हि कण्वपुत्रीति व्यपदेश इत्यत आह—**उज्झिताया इति**। उज्झितायाः = प्रसवानन्तरं जनन्या परित्यक्तायाः शरीरसंवर्धनादिभिः = शरीरपोषणादिभिः। आदिना विनयाधानादि गृह्यते। पिता = पातीत्यन्वर्थनामा, न तु जनक इति भावः। यथोक्तम्—

---

१ स खलु भगवान्कौशिकः ।

**राजा**—उज्झितशब्देन जनितं मे[1] कौतूहलम्। आ मूलाच्छ्रोतुमिच्छामि।

**अनसूया**—सुणादु अज्जो। गोदमीतीरे पुरा किल तस्स राएसिणो उग्गे तवसि वट्टमाणस्स किं वि जादसङ्केहिं देवेहिं मेणआ णाम अच्छरा पेसिदा[2] णिअमविग्घकालिणी।

शृणोत्वार्यः। गौतमीतीरे पुरा किल तस्य राजर्षेरुग्रे तपसि वर्तमानस्य किमपि जातशङ्कैर्देवैर्मेनका नाम अप्सराः प्रेषिता नियमविघ्नकारिणी।

---

शरीरकृद् प्राणदाता यस्य चान्नानि भुञ्जते।
क्रमेणैते त्रयः प्रोक्ताः पितरो धर्मसाधने॥ इति,
कन्यादाताऽन्नदाता च ज्ञानदाताऽभयप्रदः।
जन्मदो मन्त्रदो ज्येष्ठभ्राता च पितरः स्मृताः॥ इति च।

अथ सख्योरुक्त्या शकुन्तलाया राजर्षिबीजात्संभवं ज्ञात्वा ताम् आत्मनः परिग्रहयोग्यां मन्यमानः अत एव प्रवर्धमानानुरागो राजा तन्मातरमपि ज्ञातुं तदुत्पत्तिं विस्तरेण श्रोतुकाम आह—उज्झितेति। उज्झित इति शब्दस्तेन। कौतूहलं = श्रवणेच्छाप्रेरको मनोव्यापारविशेषः। उज्झितशब्देनेत्यनेन न त्वनुरागेणेति स्वानुरागगोपनं व्यज्यते। आमूलात् = आदित आरभ्य। अनसूयोत्तरयति—सुणादु इति। 'शृणोत्वार्यः। गौतमीतीरे पुरा किल तस्य राजर्षेरुग्रे तपसि वर्तमानस्य किमपि जातशङ्कैर्देवैर्मेनका नाम अप्सराः प्रेषिता नियमविघ्नकारिणी' इति संस्कृतम्। गौतमीतीरे=गोदावरीतीरे। उग्रे तपसि वर्तमानस्य=घोरं तपोऽनुतिष्ठतः किमपि = अत्यर्थं जातशङ्कैः = स्वर्गभ्रंशभीरुभिः। नियमविघ्नकारिणी = तपोविघ्नोत्पादिका। किलेत्यैतिह्ये। अप्सरसां मध्ये मेनकायाः प्रेषणेन लावण्या-

---

१ जनितकुतूहलः। २ पहिदा।

**राजा**—अस्त्येतदन्यसमाधिभीरुत्वं देवानाम् ।

**अनसूया**—तदो वसन्तोदारसमए से उम्मादइत्तअं[1] रूवं पेक्खिअ—

ततो वसन्तोदारसमये तस्या उन्मादयितृ रूपं प्रेक्ष्य—

( इत्यर्धोक्ते [2]लज्जया विरमति । )

**राजा**—परस्ताज्ज्ञायत[3] एव; सर्वथा अप्सरःसंभवैषा ।

---

द्युत्कर्षो द्योत्यते । "स्त्रियां बहुष्वप्सरसः" इत्यमरवचने जाग्रत्यपि "अनचि च" इति सूत्रे 'अप्सराः' इति एकवचनान्तमहाभाष्यप्रयोगात्, "स्त्रियां बहुष्वप्सरसः स्यादेकत्वेऽप्सरा अपि" इति शब्दार्णवाच्च प्रायिकत्वात् 'अप्सराः' इत्येकवचनम् । अनसूयोक्तिं समर्थयन् राजा प्राह—**अस्त्येतदिति** । देवाः अन्येषां तपांसि दृष्ट्वा स्वपदच्युतिमाशङ्कन्ते इति भावः । अथानसूया अवशिष्टमाह—**तदो इति** । 'ततो वसन्तोदारसमये तस्या उन्मादयितृ रूपं प्रेक्ष्य' इति संस्कृतम् । ततः = मेनकाप्रेषणानन्तरं वसन्तोदारसमये, कुन्दमाकन्दमन्दमारुतादिभिरुत्कृष्टसमये इत्यर्थः । उत्कर्षश्च कामोद्दीपनविभावप्रधानत्वात् । तस्याः=मेनकायाः उन्मादयितृ = उन्मादजनकम् । **लज्जया विरमतीति** । अवशिष्टकथनादिति शेषः । तच्च 'स राजर्षिस्तस्यामासक्तस्तामङ्गीचकार' इति । कन्यकानामवाच्यस्य वचसोपक्रमो लज्जा-हेतुः । विरामस्तदनुभावः । राजोक्तौ-**परस्तादिति** । परस्तात्, अवशिष्टमित्यर्थः । ज्ञायत एव = प्रस्तावात् गम्यत एव । अतो न वक्तव्यमिति भावः । सर्वथा, पूर्वं संक्षेपेण पश्चाद्विस्तरेण च उक्तेन प्रकारेणेत्यर्थः । अप्सरःसंभवा-अप्सरःपदं सामान्य-वाचि मेनकारूपं विशेषं लक्षयति । तेन तत्संभवाया अप्सरस्तुल्यसौन्दर्यादिकं

---

१ हेवुअम् । २ लज्जां नाटयति । ३ अवगम्यते ।

**अनसूया**—अहइं !

अथकिम् !

**राजा**—उपपद्यते ।

मानुषीषु कथं वा स्यादस्य रूपस्य संभवः ।
न प्रभातरलं ज्योतिरुदेति वसुधातलात् ॥ २२ ॥

---

ध्वन्यते । अनसूयोक्तौ—**अहइं** इति । 'अथकिम्' इति संस्कृतम् । 'अथकिम्' इत्यव्ययमङ्गीकारे । तदुक्तम् "अङ्गीकृतौ स्यादथकिम्" इति । अनसूयोक्तिमनुवदन् राजा प्राह—**उपपद्यत** इति । उपपद्यते, अस्या अप्सरःसंभवत्वं युज्यत इत्यर्थः ।

कुत इत्याह—**मानुषीष्विति** । मानुषीषु अस्य रूपस्य संभवः कथं वा स्यात् ! प्रभातरलं ज्योतिः वसुधातलान्न उदेति इत्यन्वयः ।

मानुषीषु, अधिकरणत्वविवक्षया सप्तमी । बहुवचनेन तास्वेकाऽपि नेदृग्विधं रूपमुत्पादयितुं क्षमेति द्योत्यते । अस्य = लोकोत्तरसौन्दर्यादिगुणविशिष्टस्य रूपस्य = आकृतेः संभवः = उत्पत्तिः कथं वा = केन प्रकारेण स्यात् = संभवेत् ! एवंविधसौन्दर्यवत्या अस्या मानुषीषु संभवस्य संभावनाऽपि नास्तीत्यर्थः । उक्तार्थं दृष्टान्तेन द्रढयति—**नेति** । प्रभातरलं ज्योतिः = विद्युत्, चन्द्र इत्यपि केचित् । वसुधातलात् = पृथिव्याः नोदेति = नाविर्भवति ।

अत्र रूपप्रभयोः, नायिकाविद्युतोः, मानुषीवसुधातलयोर्बिम्बप्रतिबिम्बभावेऽपि संभवोदेतिशब्दार्थयोरैक्यात् प्रतिवस्तूपमैव, न दृष्टान्तः । यथा विद्युद् भूमेर्नोदेति तथेयं मानुष्या न संभवतीत्युपमा ध्वनिमर्यादया भासते । विद्युदुपमया प्रभापटल-दुर्निरीक्ष्यत्वादि द्योत्यते । पूर्वार्धे 'क्व मानुष्यः ? क्वेयम् ?' इति विषमालङ्कारो

---

१ नु ।

( शकुन्तला अधोमुखी तिष्ठति । )

**राजा**—( आत्मगतम् ) लब्धावकाशो मे मनोरथः । किंतु सख्याः परिहासोदाहृतां वरप्रार्थनां श्रुत्वा धृतद्वैधीभावकातरं मे मनः ।

---

व्यज्यते । विस्मयो हर्षश्च भावः । अत्र नायिकागुणवर्णनेन नायकानुरागबृंहणात् विलोभनं नाम अङ्गम् । रूपलक्षणं यथा—

अङ्गान्यभूषितान्येव प्रक्षेप्याद्यैर्विभूषणैः ।
येन भूषितवद्भान्ति तद्रूपमिति कथ्यते ॥ इति ।

शकुन्तलाया उत्पत्तिकथां श्रुत्वा तामप्सरःसंभवामवधार्य तस्या रूपसौन्दर्यादिविषये विस्मयमानमानसो राजा कथयति—'अहो ! मया अद्य यावद् दृष्टासु परमरूपशालिनीषु सुन्दरीषु वनितासु नैकाऽपि कलयाऽप्येनामनुकुरुते, तत्सत्यमिदं यत् ता मानुष्यः, इयं तु अप्सरःसंभवा; मानुषीषु ईदृशं रूपं कथंकारं दृग्गोचरो भवेत् ! प्रभातरला विद्युत् तथाविधश्चन्द्रो वा नभस्येव प्रकटीभवति, न वसुधातले । इयमपि यस्मादप्सरःसंभवा तत एवेदृशरूपशालिनी' इति भावः ॥२२॥

**अधोमुखी तिष्ठतीति** । आत्मस्तुतिश्रवणनिमित्तायाः नायकभावज्ञाननिमित्तायाश्च लज्जाया अनुभावोऽयम् । अथ राजा स्वमनोरथानुकूलां शकुन्तलोत्पत्तिमवधार्य परिग्रहयोग्येयमिति निश्चिन्वानः स्वयं परामृशति—**लब्धावकाश इति** । लब्धः अवकाशः = प्रवेशद्वारं येन । मनोरथः = अभिलाषः, समुचितविषयोऽयमभिलाषो जात इत्यर्थः । स्नेहः पापशङ्कीति नीत्या पुनरपायमाशङ्कमान आह—**किन्तु इत्यादि** । सख्याः = प्रियंवदायाः परिहासोदाहृताम् = 'जह वणजोसिणी' इत्यादिना पूर्वोक्ताम्, श्रुत्वेति शेषः । धृतद्वैधीभावकातरम्—धृतः = आरूढः द्वैधीभावः = संशयः, सखीवचनस्य परिहासरूपतया तत्र अप्रामाण्यशङ्कोदयात्

**प्रियंवदा**—( सस्मितं शकुन्तलां विलोक्य नायकाभिमुखी भूत्वा ) पुणो वि वत्तुकामो विअ अज्जो ?

पुनरपि वक्तुकाम इवार्यः ?

( शकुन्तला सखीमङ्गुल्या तर्जयति । )

**राजा**—सम्यगुपलक्षितं भवत्या । अस्ति नः सच्चरितश्रवण-लोभादन्यदपि प्रष्टव्यम् ।

---

अहमेव वरो वा तापसो वेति संशय इति यावत् । अत एव 'वैखानसं किमनया' इत्यादिवक्ष्यमाणः प्रश्नः संगच्छते । तेन कातरम् = अनिष्टाशङ्कि मे = मम मनः = चेतः ।

**सस्मितमिति** । शकुन्तलायां रागहेतुकस्य वैलक्ष्यस्य दर्शनम्, राज्ञो विवक्षुताऽवगमेन पुनरपि तत्परिहासोपायस्य मनसि स्फुरणं च प्रियंवदायाः सस्मितावलोकने हेतुः । 'पुनरपि वक्तुकाम इवार्यः' इति संस्कृतम् । पुनरपीत्यनेन विवक्षाया अनवकाशः सूच्यते । **अङ्गुल्या तर्जयतीति** । पुनरपि मत्संबन्धे किमपि परिहसितुकामयाऽनया सख्या अस्मिन्महापुरुषे विवक्षुत्वमारोपितमिति सखीहृदयकौटिल्यं जानन्ती शकुन्तला रोषेण तां भर्त्सयतीत्यर्थः ।

प्रियंवदामुखेन शकुन्तलाविषये कण्वस्य संकल्पं जिज्ञासुः प्रियंवदां श्लाघमानश्च राजा प्राह—**सम्यगिति** । भवत्या, बुद्धिमत्या त्वयेत्यर्थः । सम्यक् = वास्तवम् उपलक्षितम् = लक्षणैरुन्नीतम् । ओष्ठपरिस्पन्दादिरूपेण मुखविकारेण यदनुमितं तत्समीचीनमित्यर्थः । तदेवाह—**अस्तीत्यादि** । सच्चरितश्रवणलोभात्= सतामैतिह्याकर्णनकुतूहलात्, न तु अन्यपरत्वादिति भावः । बुद्धिमती प्रियंवदा

**प्रियंवदा**—अलं विआरिअ[1] । अणिअन्तणाणुओओ तवस्सि-अणो णाम ।

अलं विचार्य । अनियन्त्रणानुयोगस्तपस्विजनो नाम ।

**राजा**—इति सखीं ते ज्ञातुमिच्छामि—

वैखानसं किमनया व्रतमाप्रदाना-
व्द्यापाररोधि मदनस्य निषेवितव्यम् ।
अत्यन्तमेव [2]मदिरेक्षणवल्लभाभि-
राहो निवत्स्यति समं हरिणाङ्गनाभिः ॥ २३ ॥

नायकमनोगतं जानन्ती तदनुसारेणाह—**अलमिति** । 'अलं विचार्य, अनियन्त्रणानुयोगस्तपस्विजनो नाम' इति संस्कृतम् । अलमिति निषेधे, इदं प्रष्टव्यं न वेति विचारो न कर्तव्य इत्यर्थः । निःशङ्कं सर्वं पृच्छयतामिति भावः । तत्र हेतुः—अनियन्त्रणेति । देशकालादिभिः प्रतिबन्धो नियन्त्रणा । राजादिप्रभुजनानिव मुनिजनान्प्रति प्रश्नस्य देशकालादिभिः प्रतिबन्धो नास्तीत्यर्थः । नामेति प्रसिद्धौ । प्रियंवदावचसा तुष्टो राजा स्वानुरागं गोपयन् भङ्ग्या पृच्छति—**इतीत्यादि** । इति = त्वदुक्तनीत्या अनुयोगनियन्त्रणाभावादित्यर्थः । यद्वा वक्ष्यमाणप्रकारेणेत्यर्थः । ते सखीमित्यनेन तव तद्वृत्तान्तज्ञानमस्तीति सूच्यते ।

जिज्ञासां प्रकटीकरोति—**वैखानसमिति** । अनया मदनस्य व्यापाररोधि वैखानसं व्रतम् आप्रदानात् निषेवितव्यं किम् ? आहो मदिरेक्षणवल्लभाभिः हरिणाङ्गनाभिः सममत्यन्तमेव निवत्स्यति इत्यन्वयः ।

१. विआरिदेण । २. सदृशेक्षण ।

अनया = मुनिकन्यकात्वेन तपश्चरणयोग्यया शकुन्तलया मदनस्य = कामस्य । मदयति = चित्तमुन्मादयतीति व्युत्पत्त्या तद्व्यापाराणां दुर्निवारत्वं व्यज्यते । तथाविधानां तद्व्यापाराणां = मनसः कामसुखोन्मुखीकरणादीनां रोधि = निवारकं वैखानसं व्रतं = मुनिकन्यकोचितं तपश्चरणम् आप्रदानात्—प्रकृष्टं दानं प्रदानं, विवाहः तस्मात्, यद्वा प्रकृष्टाय = उत्तमप्रकृतये राज्ञे मह्यं दानं तस्मात् आ = तदवधि, तथाविधं व्रतमनया विवाहावधि यथावत् अनुष्ठेयं किम् ? इत्यर्थः । अनेन तापसव्यतिरिक्ताय रूपानुरूपाय कस्मैचित् मद्विधाय किमस्याः प्रदानमित्यर्थो भङ्ग्या पृष्टः । पक्षान्तरं पृच्छति—**अत्यन्तमेवेत्यादि** । इयमिति विपरिणमनीयम् । 'आहो' इति विकल्पे । "आहो उताहो किमुत विकल्पे" **इत्यमरः** । मदिरेक्षणवल्लभाभिः—मदिराणि = हर्षकराणि, 'मदी हर्षे' इत्यस्मात् "इषिमदि" इत्यादिना औणादिकः किरच् । ईक्षणानि = नेत्राणि, अवलोकनानि वा तैः वल्लभाः = तपस्विनां प्रियाः, विशेषतः शकुन्तलायाः स्वेक्षणसदृशेक्षणत्वात् अत्यन्तं प्रिया इत्यर्थः । ताभिः हरिणाङ्गनाभिः = मृगीभिः समं = सह अत्यन्तमेव—अत्यन्तम् = आमरणम्, न तु विवाहपर्यन्तमित्येवकारार्थः । निवत्स्यति = निवासं करिष्यति ? इयं यावज्जीवमेव स्वसदृशीभिर्हरिणाङ्गनाभिः सह निवत्स्यति किम् ? इत्यर्थः ।

अत्र सहोक्तिः, विशेषणस्य साभिप्रायत्वात्परिकरालङ्कारश्च । वसन्ततिलका वृत्तम् ।

अत्रायमाशयः—यद्येषा मद्विधाय राज्ञे देया तदा विवाहपर्यन्तमेव तपोवने स्थितिः, तदनन्तरमविरोधी कामोपभोगः । यदि कस्मैचित् तपस्विने देया तदा मृगमिथुनवत् कामोपभोगरहिता वने एव स्थास्यतीति ॥ २३ ॥

अथात्यन्तचतुरा सखी प्रियंवदा नायकाभिप्रायं सर्वं ज्ञात्वा समुचितमुत्तर-

**प्रियंवदा**—अज्ज ! धम्मचरणे[1] वि परवसो अअं जणो । गुरुणो उण से अणुरूववरप्पदाणे संकप्पो ।

आर्य ! धर्मचरणेऽपि परवशोऽयं जनः । गुरोः पुनरस्या अनुरूपवरप्रदाने संकल्पः ।

**राजा**—( आत्मगतम्[2] ) न दुरवापेयं खलु प्रार्थना ।

---

माह—**अज्जेति** । 'आर्य ! धर्मचरणेऽपि परवशोऽयं जनः; गुरोः पुनरस्या अनुरूपवरप्रदाने संकल्पः' इति संस्कृतम् । आर्येति प्रशंसागर्भं भवतो गूढार्थचातुरी ज्ञातेति सूचयति । धर्मचरणेऽपि = धर्मानुष्ठानेऽपि । अत्र धर्मचरणस्य पितृनियोगानपेक्षत्वं द्योतयता अपिशब्देन किमुत कामाचरणे ! इति द्योत्यते । परवशः = गुर्वधीनः अयं जनः = शकुन्तला, आवां च । एतेन अस्याः सर्वथा गुर्वायत्ततया व्रतस्य आप्रदानत्वमत्यन्तत्वं वा गुरुनियोगापेक्ष्यम्, तत्र नास्या आवयोर्वा स्वातन्त्र्यमित्युक्तं भवति । अत एव अनया तापसो वाऽन्यो वा न कश्चिद्वरत्वेन निर्धारितः, तस्मात् अन्यानुरागशङ्का माभूत्, युक्तश्च तवास्यामनुराग इति च द्योत्यते । गुरोर्मतं किमित्यत्राह—**गुरोरिति** । गुरोः = कण्वस्य । पुनःशब्दो विशेषद्योतकः । अनुरूपवरप्रदाने—अनुरूपः = रूपादिगुणैः सदृशो यो वरस्तस्मै प्रदाने संकल्पः = निश्चयः । अनेन व्रतम् आप्रदानमेव गुरुणा संकल्पितमित्युक्तं भवति । गूढवृत्तान्तप्रदर्शनात् उद्भेदो नाम अङ्गमिदम् । **दुरवापेति** । प्रार्थना = प्रार्थ्यते इति प्रार्थना, प्रार्थ्यमानोऽर्थः, अनुरूपो वर इति यावत् । न दुरवापा खलु, नात्यन्तं दुर्लभेत्यर्थः ।

---

१. धम्माअरणपरवसो । २. सहर्षमात्मगतम् ।

भव हृदय ! साभिलाषं संप्रति संदेहनिर्णयो जातः ।
आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम् ॥ २४ ॥

---

अथ आत्मपरिग्रहयोग्यां शकुन्तलां निश्चित्य तल्लाभशङ्काकातरं स्वहृदयं सहर्षमाह राजा—**भवेत्यादि** । हे हृदय ! संप्रति सन्देहनिर्णयो जातः, (अतः) साभिलाषं भव । यत् अग्निमाशङ्कसे तदिदं स्पर्शक्षमं रत्नम् (अस्ति) इत्यन्वयः ।

हे हृदय = मदीयचित्त ! अनेन सम्बोधनेन हृदयकृताभिलाषस्य समुचित-विषयकत्वेन तस्मिन् बहुमानो द्योत्यते । संप्रति = अस्या जन्मवृत्तान्ते गुरुकृत-वरसंकल्पे च सखीवचनेनावगते सति । सन्देहनिर्णयः, सन्देहपूर्वको निर्णय इति मध्यमपदलोपी समासः । यद्वा सन्दिह्यते इति सन्देहः = सन्देहविषयः तस्य तस्मिन् वा निर्णयः जातः = भूतः । संप्रति सर्वात्मना सन्देहो निवृत्त इत्यर्थः । अतः साभिलाषं भव = यथेष्टमेनामभिलष । अनुमतौ लोट् । पूर्वमभिलाषस्य अनुचितविषयकत्वशङ्कया अनुमतिर्न कृतेति अनेन गम्यते, सन्देहनिर्णययोः स्वरूपे दृष्टान्तेनाह—**आशङ्कसे** इति । यत् = पुरोदृष्टं, रात्रौ प्रकाशमानं यद्वस्तु अग्निं = स्पर्शायोग्यमङ्गाररूपं वह्निम् आशङ्कसे = सन्देहं कुरुषे, वर्तमानसामीप्ये भूते लट् । कान्तिसादृश्यात् विशेषाज्ञानाच्च स्पर्शाक्षमोऽयं वह्निः, स्पर्शक्षममिदं रत्नं वेति यत् आशङ्किष्ठा इत्यर्थः । तदिदं = तथाशङ्कितमिदं वस्तु स्पर्शक्षमं रत्नम् = स्पर्शयोग्यो मणिविशेषः, विशेषदर्शनात्तथा निश्चितमित्यर्थः ।

यां मुनिकन्यामगम्यामिति त्वमाशङ्किष्ठाः, संप्रति सेयं गम्या राजकन्यका निश्चितेति प्रस्तुतार्थः अनेन गम्यते इति सादृश्यनिमित्ता अप्रस्तुतप्रशंसा । अत्र अग्निमित्यनेन 'शमप्रधानेषु तपोधनेषु गूढं हि दाहात्मकमस्ति तेजः' इति वक्ष्यमाण-रीत्या तपस्विषु तेजोविशेषोऽस्तीति सूच्यते । तेन तेषामनभिभवनीयत्वम्, तत्स्पर्शे

**शकुन्तला**—( सरोषमिव ) अणसूए! गमिस्सं अहं।

अनसूये ! गमिष्याम्यहम्।

**अनसूया**—किं णिमित्तं ?

किं निमित्तम् ?

---

स्प्रष्टुर्महानिष्टसंभवश्च गम्यते। रत्नमित्यनेन "रत्नहारी तु पार्थिवः" इति नीत्या स्वस्य अवश्यमुपादेयत्वं सूच्यते। अत्र काव्यलिङ्गालङ्कारोऽपि। "जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते" इत्युक्तनीत्या शकुन्तलायां रत्नत्वरूपणम्। नायकगत-हर्षौत्सुक्यादयो भावा व्यङ्ग्याः। आर्या जातिः।

प्रियंवदोक्त्या शकुन्तलाया राजकन्यात्वमनुरूपवरप्रदानविषये कण्वस्य सङ्कल्पं च विदित्वा प्रवृद्धौत्सुक्यो राजा स्वहृदयमाश्वासयन्नाह—'हे हृदय ! अधुना निष्प्रतिबन्धं शकुन्तला भवताऽभिलष्यताम्। पूर्वं ब्राह्मणकन्येति शङ्कया यत् त्वं ससङ्कोचमासीस्तस्य निर्णयेन नेदानीं शङ्काऽवसरः। नायं स्पर्शमात्रेण दहनशीलो वह्निः, किन्तु तरलप्रभासमुल्लासमनोहारि किरीटकोटिनिवेशयोग्यं रत्नमिदम्। दैवानुकूल्ये शकुन्तला त्वया लब्धुं शक्या' इति भावः ॥२४॥

एवं क्रमेण नायकात्मसमवेताया रतेः प्रकर्षं प्रदर्श्य नायिकात्मसमवेतायास्तस्याः प्रकर्षं प्रदर्शयितुं नायिकायाः प्रणयकोपचेष्टां प्रदर्शयति—**सरोषमिवेति**। दुष्यन्तालापजन्यया लज्जया तत्सन्निधौ स्थातुमशक्यतया प्रियंवदां प्रति शकुन्तलाया रोषः। इवेति प्रतीतौ। रोषमभिनीयेत्यर्थः। 'अनसूये ! गमिष्याम्यहम्' इति संस्कृतम्। शकुन्तलाया गमने हेतुं जानन्त्यपि तां निरोद्धुमनसूया पृच्छति—**किं णिमित्तमिति**। 'किं निमित्तम् ?' इति संस्कृतम्। निमित्तमाह—

**शकुन्तला**—इमं असंबद्धप्पलाविणिं पिअंवदं अज्जाए गोदमीए ¹णिवेदइस्सं ।

इमामसंबद्धप्रलापिनीं प्रियंवदामार्यायै गौतम्यै निवेदयिष्यामि ।

**अनसूया**—सहि ! ण जुत्तं अकिदसक्कारं अदिहिविसेसं विसज्जिअ² सच्छन्ददो गमणं ।

सखि ! न युक्तमकृतसत्कारमतिथिविशेषं विसृज्य स्वच्छन्दतो गमनम् ।

( शकुन्तला न किंचिदुक्त्वा प्रस्थितैव । )

**राजा**—आः ! कथं गच्छति ! ( ग्रहीतुमिच्छन्निगृह्यात्मानम्,

---

इममिति । 'इमामसम्बद्धप्रलापिनीं प्रियंवदामार्यायै गौतम्यै निवेदयिष्यामि' इति संस्कृतम् । असम्बद्धप्रलापिनीम् = अश्राव्यभाषणशीलाम् । गौतम्यै = आत्मनो मातृस्थानीयायै कण्वभगिन्यै ।

प्रस्थानाध्यवसायिनीं तां धर्मलोपोपन्यासव्याजेनोपहासगर्भं पुनरप्यनसूया निषेधति—**सहीति** । 'सखि ! न युक्तमकृतसत्कारमतिथिविशेषं विसृज्य स्वच्छन्दतो गमनम्' इति संस्कृतम् । स्वच्छन्दतो गमनं न युक्तमित्यतो मा गा इति भावः । न किञ्चिदुक्त्वेति वचनाभावोऽनसूयां प्रति रोषस्यानुभावः । प्रस्थिता = प्रस्थातुमारब्धवती । नायकदर्शनौत्सुक्याद्वस्तुतः प्रस्थानमनिष्टमेवासीदिति भावः ।

राजोक्तौ—**आः ! कथं गच्छतीति** । कथम् = किम् । सविषादसम्भ्रमद्योतकमिदम् । अनेन तद्गमनं नायकस्यानभिमतमिति द्योत्यते । **ग्रहीतुमिच्छन्निति** । अनेनौत्सुक्यस्य प्राबल्यं ध्वन्यते । ग्रहीतुमिच्छन्, न त्वग्रहीत् । अत्र हेतुः—**निगृह्यात्मानमिति** । विनयाभिजात्यादिनेति शेषः । आत्मानं =

---

१. णिवेदेदुम् । २. उज्झिअ ।

आत्मगतम् ) अहो ! चेष्टाप्रतिरूपिका कामिजनमनोवृत्तिः । अहं हि—

**अनुयास्यन्मुनितनयां सहसा विनयेन वारितप्रसरः ।**
**[1]स्थानादनुच्चलन्नपि गत्वेव पुनः प्रतिनिवृत्तः ॥ २५ ॥**

---

मनः । सामान्यतः कामिजनावस्थामनुसन्दधाति—**अहो !** इति । अहो इति विस्मये । चेष्टा = शरीरव्यापारः तस्याः प्रतिरूपिका = सदृशी । केवलं मनोव्यापारे सति असतोऽपि शरीरव्यापारस्य सत्त्वेन स्फुरणादाश्चर्यम् ।

उक्तमर्थं स्ववृत्तान्तेन समर्थयते—**अहं हि—अनुयास्यन्निति** । मुनितनयां सहसा अनुयास्यन् विनयेन पुनः वारितप्रसरोऽहं स्थानादनुच्चलन्नपि गत्वा प्रतिनिवृत्त इव ( अस्मि ) इत्यन्वयः ।

मुनितनयां = शकुन्तलां सहसा = अविचारितम् अनुगन्तुमुद्यतः, ग्रहीतुमिच्छन्नित्यर्थः । विनयेन = इन्द्रियजयादिजन्यप्रह्वत्वादिकारणीभूतचित्तवृत्तिविशेषेण पुनः वारितप्रसरः—वारितः = निरुद्धः प्रसरः = अनुयानात्मको वेगो यस्य सः । "प्रसरः प्रणये वेगे" इति **विश्वः** । अनेन 'निगृह्यात्मानम्' इत्यस्यार्थ उक्तः । अत एव अहं स्थानात् = विश्रमस्थानात् स्थितेर्वा अनुच्चलन्नपि = अनुत्तिष्ठन्नपि, अचञ्चलोऽपीत्यर्थः । गत्वा प्रतिनिवृत्त इव = गमनव्यापारं निर्वर्त्य कृतप्रत्यागमनव्यापार इव । अत्र गत्वेवेति इवकारेण गमनस्य विशृङ्खलत्वं पुनःशब्देन प्रतिनिवर्तने मान्द्यं च द्योत्यते । गत्वा प्रतिनिवृत्तोऽहमिति मे प्रतिभातीत्यर्थः ।

अत्र गत्वा प्रतिनिवृत्त इवेत्युत्प्रेक्षा, स्थानादनुच्चलन्नपीति विरोधाभासः, चेष्टाप्रतिरूपिकेत्यादिसामान्यस्य अनेन पद्येन समर्थनादर्थान्तरन्यासः, काव्यलिङ्गं

---

१. स्वस्थानादचलन्नपि ।

**प्रियंवदा**—( शकुन्तलां निरुध्य ) हला ! ण दे 'जुत्तं गन्तुं ।

हला ! न ते युक्तं गन्तुम् ।

**शकुन्तला**—( सभ्रूभङ्गम् ) किं णिमित्तं[2] ?

किं निमित्तम् ?

**प्रियंवदा**—रुक्खसेअणे दुवे धारेसि मे । एहि जाव; अत्ताणं मोचिअ तदो गमिस्ससि ।

वृक्षसेचने द्वे धारयसि मे । एहि तावत्; आत्मानं मोचयित्वा ततो गमिष्यसि ।

---

च । विस्मयावेशात् परिभावना नाम अङ्गमुपक्षिप्तम् । तल्लक्षणं तु—"कुतूहलोत्तरावेशो विज्ञेया परिभावना" इति । आर्या जातिः ।

गन्तुमुद्यतां शकुन्तलां दृष्ट्वा तां जिघृक्षू राजा विवेकेनात्मानं निगृह्य स्वगतं विमृशति—'अहो ! चेष्टानुरूपा कामिनां मनोवृत्तिर्भवति । तथाहि—अहमेव इमामनुयान्तीं शकुन्तलां सहसा अनुयातुमिच्छन् विनयेनैव केवलं निवारितोऽस्मि, परंतु केवलमनेन मनोव्यापारेणैव तथा मे प्रतिभाति यथाऽहं शकुन्तलामनुसृत्य पुनः प्रतिनिवृत्तोऽस्मि' इति भावः ॥ २५ ॥

अथ गमनोद्यतां शकुन्तलामपदेशान्तरेण प्रियंवदा निरुणद्धि—**हलेति** । 'हला, न ते गन्तुं युक्तम्' इति संस्कृतम् । **सभ्रूभङ्गमिति** । अयमसूयानुभावः । 'किं निमित्तम् ?' इति संस्कृतम् । निरोधापदेशमाह प्रियंवदा—**रुक्खसेअणे इति** । 'वृक्षसेचने द्वे धारयसि मे । एहि तावत्, आत्मानं मोचयित्वा ततो गमिष्यसि' इति संस्कृतम् । मे = मह्यम् । "धारेरुत्तमर्णः" इति सम्प्रदानत्वम् । धारयसि = ऋणत्वेन धत्से । त्वं यावतो वृक्षान् सिञ्चसि तावतोऽहमपीति पूर्व-

---

१. णारिहसि । २. किं त्ति ।

( इति बलादेनां निवर्तयति । )

**राजा**—भद्रे ! वृक्षसेचनादेव परिश्रान्तामत्रभवतीं लक्षये[1] । तथा ह्यस्याः—

स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा-
दद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः ।
बद्धं[2] कर्णशिरीषरोधि वदने घर्माम्भसां जालकं
बन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्धजाः ॥ २६ ॥

---

प्रतिज्ञानुरोधेनेत्यर्थः, किंवा त्वया सेचनीयं वृक्षद्वयं मया सिक्तम्, तत् त्वम् ऋणत्वेन मह्यं धारयसीत्यर्थः । तावत् = तस्मात् । **बलादेनां निवर्तयतीति** । पुनः प्रतिनिवर्तने अनिच्छामभिनयन्तीं प्रतिनिवर्तयतीत्यर्थः । अथ ऋणमोचन-प्रसङ्गेन विक्लवां नायिकाम् ऋणान्मोचयितुं कारुणिकत्वं व्यपदिशन् राजा सखी-माह—**भद्रे ! इति** । भद्रे इति संबुध्या मदभिप्रायविरोधिनी मा भूरिति प्रार्थना द्योत्यते । वृक्षसेचनात् = पूर्वमनुष्ठितात् बालतरुभ्य उदकदानव्यापारात् । एव-कारेण बहुवृक्षसेचनपरिश्रमं सूचयता पुनर्वृक्षद्वयसेचनेन अस्याः ऋणमोचनाशक्तत्वं द्योत्यते । परिश्रान्तां = खिन्नाम् । परीत्युपसर्गेण अत्यन्तसुकुमाराङ्ग्याः शकुन्तलायाः सर्वाङ्गीणः खेदो व्यज्यते । अत्रभवतीमिति प्रशंसायाम् । लक्षये=लक्षणैस्तर्कयामि ।

तान्येव लक्षणान्याह—**स्रस्तांसाविति** । घटोत्क्षेपणात् अस्याः बाहू स्रस्तांसौ अतिमात्रलोहिततलौ ( स्तः ) । प्रमाणाधिकः श्वासः अद्यापि स्तनवेपथुं जनयति । वदने कर्णशिरीषरोधि घर्माम्भसां जालकं बद्धम् ( अस्ति ) । बन्धे स्रंसिनि मूर्धजाश्च एकहस्तयमिताः पर्याकुलाः (सन्ति) इत्यन्वयः ।

---

१. तर्कयामि । २. स्रस्तम् ।

घटोत्क्षेपणात्—घटस्य = सेचनकलशस्य उत्क्षेपणात् = उत्थाप्योद्वहनात्। हेतौ पञ्चमी। हेतुरयं सर्वत्र योज्यः। अस्याः = शकुन्तलायाः बाहू = भुजौ स्रस्तांसौ—स्रस्तौ = शिथिलौ पतितौ वा अंसौ = स्कन्धौ ययोस्तौ। "उन्नतांसः पुमान् पूज्यः सन्नतांसा तु सुन्दरी" इत्यादिवचनेन स्वभावतः सन्नतावपि सम्प्रति परिश्रमवशादत्यन्तं सन्नतावंसौ जाताविति भावः। अतिमात्रम् = अत्यन्तं लोहितं=रक्तं तलं = करतलं ययोस्तथाभूतौ। अतिमात्रेत्यनेन नैसर्गिकलौहित्यापेक्षयाऽधिकमित्यर्थो गम्यते। तलशब्देन 'भीमो भीमसेनः' इतिवत् करतलं लक्ष्यते, बाहुसान्निध्यात्। प्रमाणात् = स्वमात्रायाः अधिकः = अतिरिक्तः, द्वादशाङ्गुलादधिक इत्यर्थः। उक्तं च—

देहं व्याप्य स्वनाडीभिः प्रमाणं कुरुते बहिः।
द्वादशाङ्गुलमानेन तस्मात्प्राणः समीरितः॥ इति।

श्वासः = निश्वासवायुः अद्याऽपि = वृक्षसेचनेऽवसितेऽपि, इदं सर्वत्र सम्बध्यते। अनेन परिश्रमातिशयः प्रकाश्यते। स्तनयोर्वेपथुं=कम्पं जनयति = सम्पादयति। वदने = मुखे, किंवा "सर्वं वा मुखमुच्यते" इति वचनेन सर्वस्मिन्नङ्गे, सर्वस्याङ्गस्य संवृतत्वात् कपोलयोरलिके चिबुके चेत्यर्थः। कर्णशिरीषरोधि—कर्णाभरणम्=आगण्डविलम्बिकेसरं शिरीषपुष्पं रोद्धुं शीलमस्य तत् घर्माम्भसां = स्वेदजलानाम्। "घर्मः स्यादातपे ग्रीष्मे उष्णस्वेदाम्भसोरपि" इति विश्वः। शिरीषपुष्पस्य घर्माम्भसाऽत्यन्तं सक्तत्वात् पतनाभावः, तेन च स्वेदव्याप्तिः प्रकाश्यते। जालकम्—"क्षारको जालकं क्लीबे" इत्यमरवचनादस्फुटकलिकावाचि जालकपदमशोकादिनवकलिकावृन्दाकारं बिन्दुकदम्बकं लक्षयति। सातिशयोद्दीपकत्वं च व्यञ्जयति। बद्धं = समुदितम्। बन्धे = केशबन्धे स्रंसिनि = शिथिले सति मूर्धजाश्च = केशा अपि एकहस्तयमिताः—एकेन हस्तेन यमिताः = बद्धाः अत एव पर्याकुलाः = अंसावलम्बिनः सन्ति।

तदहमेनामनृणां करोमि । ( इत्यङ्गुलीयं [1]दातुमिच्छति । )

अत्र स्वभावोक्तिरलङ्कारः । तेन च रतिकेलिविरतिपरिश्रममनुस्मारयता आलम्बनविभावोऽभिनवीक्रियते । स्तनवेपथुजननेन हेतुना श्वासस्य प्रमाणाधिकत्वं साध्यमित्यनुमानालङ्कारश्च । शार्दूलविक्रीडितं वृत्तम् । अनेन दृष्टमिति नाम भूषणमुपक्षिप्तम् । तल्लक्षणं तु—

यथादेशं यथाकालं यथारूपं च वर्ण्यते ।
यत्प्रत्यक्षं परोक्षं वा तद्दृष्टं दृष्टवद्भवेत् ॥ इति ।

वृक्षसेचनेन परिश्रान्तायाः शकुन्तलायाः परिश्रमलक्षणानि राजा वर्णयति— 'अत्यन्तसुकुमाराङ्गया अस्याः शकुन्तलाया निसर्गेण सन्नतांसाविमौ बाहू घटोत्क्षेपणादत्यन्तं शिथिलांसौ दृश्येते, किञ्च करतलयोः स्वाभाविकोऽपि रक्तिमा घटोत्क्षेपणादिपरिश्रमवशात् अत्यन्तं वृद्धिं गतः, स्वाभाविको द्वादशाङ्गुलः श्वासः परिश्रमविशेषवशात् वृद्धिं गतः सन् वृक्षसेचने अवसितेऽपि स्तनकम्पं जनयन् लक्ष्यते, भालकपोलचिबुकादिभागेषु स्वेदजलबिन्दुवृन्दानि लक्ष्यन्ते, येषु सक्तं पतनोन्मुखमपि कर्णशिरीषं न पतति; एवमेव चूडाबन्धे शिथिले सति एकेनैव हस्तेन शिथिलं बद्धा अत एव पर्याकुला अलकाश्च लक्ष्यन्ते; एभिर्लक्षणैः सत्यमेवात्यन्तं परिश्रान्ता शकुन्तला' इति भावः ॥२६॥

इत्थमनुभावमुखेन परिश्रमातिशयमुपवर्ण्य ऋणमोचनोपायमाह— **तदिति** । तत = तस्मात् । **अङ्गुलीयं दातुमिच्छतीति** । व्यवहारे प्रतिनिधिवस्तुदानेनापि

1. ददाति ।

( उभे नाममुद्राक्षराण्यनुवाच्य परस्परमवलोकयतः। )

राजा—अलमस्मानन्यथा संभाव्य[1]। राज्ञः 'परिग्रहो[2]ऽयमिति राजपुरुषं मामवगच्छथ।

प्रियंवदा—तेण हि णारिहदि एदं अङ्गुलीअअं अङ्गुलि-

ऋणनिवृत्तिदर्शनादिति भावः। **नाममुद्राक्षराणीति**। नाम = दुष्यन्त इति, मुद्रा = अङ्गुलीयकम्। "मुद्रा मुकुलने बन्धे लिङ्गे चिह्नेऽङ्गुलीयके" इत्यजयः। नामयुक्ता मुद्रा नाममुद्रा तस्यामक्षराणि अनुवाच्य = पुनः पुनर्वाचयित्वा। परस्परमवलोकयत इति। अयं महाराजो दुष्यन्त एव, न त्वधिकारिपुरुष इति तदभिप्रायः। अधिकारिपुरुषव्यपदेशेन गूढस्य नायकस्योद्भेदादत्र उद्भेदो नाम अङ्गम्। अथ इङ्गितज्ञो नायकस्तयोरभिप्रायमवगम्य पुनरप्यात्मनिगूहनायाह—अलमिति। अन्यथा = अस्मदुक्तप्रकारातिरिक्तप्रकारेण, राजत्वेनेति यावत्। संभाव्य अलम्, संभावना न कर्तव्येत्यर्थः। अहम् अधिकारिपुरुष एवेति भावः। कथं तर्हीदमङ्गुलीयकं तव करे? इत्यत आह—राज्ञ इति। पञ्चमीयम्। परिगृह्यते इति परिग्रहः, राज्ञः सकाशाल्लब्धमिदं पारितोषिकमित्यर्थः। अयम्= इदमङ्गुलीयकम्। आन्तरार्थस्तु राज्ञो मम परिग्रहः—परिग्रहणयोग्यं = धारणयोग्यमिदमङ्गुलीयकमित्यर्थः। राजपुरुषम् = राज्ञः पुरुषम्, राजा चासौ पुरुषस्तमिति वा बाह्याभ्यन्तरार्थौ।

अथ अत्यन्त चतुरा प्रियंवदा तदभिप्रायं सम्यक् विदित्वा भङ्ग्या उत्तरयति—**तेण हीति**। 'तेन हि नार्हत्येतदङ्गुलीयकमङ्गुलिवियोगम्। आर्यस्य वचनेनानृणेदानीमेषा' इति संस्कृतम्। तेन हि = राजपरिग्रहत्वात्। अङ्गुलिवियोगं नार्हतीति—

१. संभावनया। २. प्रतिग्रहः।

विओअं[1] । अज्जस्स वअणेण अणिरिणा दाणिं एसा । ( किंचिद्विहस्य ) हला सउन्दले ! मोइदासि अणुअम्पिणा अज्जेण, अहवा महाराएण । गच्छ दाणिं ।

तेन हि नार्हत्येतदङ्गुलीयकमङ्गुलिवियोगम् । आर्यस्य वचनेनानृणा इदानीमेषा । हला शकुन्तले ! मोचिताऽस्यनुकम्पिना आर्येण, अथवा महाराजेन । गच्छेदानीम् ।

**शकुन्तला**—(आत्मगतम्) जइ अत्तणो पहविस्सं । (प्रकाशम्)

---

स्वीयमेव वस्तु दातव्यं भवति, राजप्रसादलब्धमिदं सर्वथा अदेयमेवेति भावः । राज्ञस्तव अङ्गुलिवियोगमेतन्नार्हति, अन्येषामेतद्धारणानर्हत्वादिति व्यङ्ग्यार्थः । कथं तर्ह्यस्या ऋणमोक्ष इत्यत आह—**अज्जस्स** इति । आर्यस्य = तव धर्माधिकारिणः, महाराजस्य वा । अनृणा = ऋणमुक्ता । **किञ्चिद्विहस्येति** । नायकस्य नायिकायामभिनिवेशदर्शनेन संतोषः, नायिकाया औत्सुक्येन गमनाशक्तत्वज्ञानादुपहासो वा तद्धेतुः । 'हला शकुन्तले ! मोचिताऽसि अनुकम्पिना आर्येण, अथवा महाराजेन । गच्छेदानीम्' इति संस्कृतम् । अनुकम्पिना = दयालुना आर्येण = धर्मसचिवेन, अथवा महाराजेन, महाराजस्यैवेयं मुद्रेति मूलभूतेन तेनेत्यर्थः । महाराज एवायमिति आभ्यन्तरोऽर्थः । **गच्छेदानीमिति** । राजपुरुषेण राज्ञा वा त्वम् ऋणान्मोचिताऽसि, अतो यथेष्टं त्वया गम्यतामित्यर्थः ।

अथ सखीवचनेन नायकस्य महाराजत्वमवगम्य तस्य दाक्षिण्यातिशयात्प्रवर्धमानानुरागा शकुन्तला तस्मात्स्थानात् गन्तुमशक्तुवती विचारयति—**जइ इत्यादि** । 'यदि आत्मनः प्रभविष्यामि । का त्वं विसर्जितव्यस्य रोद्धव्यस्य वा ?' इति संस्कृतम् । आत्मनः = मनसः । प्रभविष्यामि यदीति, तर्हि गमिष्यामीति शेषः ।

---

१. विओअस्स ।

का तुमं विसज्जिदव्वस्स रुन्धिदव्वस्स वा ?

यद्यात्मनः प्रभविष्यासि । का त्वं विसर्जितव्यस्य रोद्धव्यस्य वा ?

राजा—( शकुन्तलां विलोक्य आत्मगतम् ) किं नु खलु यथा वयमस्यामेवमियमप्यस्मान्प्रति स्यात् ? अथवा लब्धावकाशा मे प्रार्थना[1] । कुतः !

वाचं न मिश्रयति यद्यपि मद्वचोभिः
कर्णं ददात्यभिमुखं[2] मयि भाषमाणे ।
कामं न तिष्ठति मदाननसंमुखीना[3]
भूयिष्ठमन्यविषया न तु दृष्टिरस्याः ॥ २७ ॥

---

मदीयं मनः एतदायत्तमित्यहं गन्तुमशक्तेति भावः । अगमने निमित्तं प्रकाशमाह—केत्यादि । उभयत्र तव्यप्रत्ययो भावेऽर्थे । वाशब्दः समुच्चये । अनेन विसर्जन-निरोधयोः प्रियंवदायाः प्रभुत्वमाक्षिपति । महाराजेनैव मोचिताऽहं स एव मम निरोधे विसर्जने च प्रभुरिति गूढार्थः । अथ तथाविधां शकुन्तलां दृष्ट्वा प्रवर्धमाना-सक्ती राजा चिन्तयति—किं नु इति । 'किं नु' इति वितर्के । खल्विति जिज्ञा-सायाम् । यथा = येन प्रकारेण, यादृशाभिलाषेणेत्यर्थः । एवं = तादृशाभिलाषेण । स्यादिति संभावनायाम् । किमियम् अहं तस्यामिव मयि सानुरागा स्यात् ? इति भावः । पुनर्विमृश्याह—अथवेति । अत्र विकल्पो मा भूदित्यर्थः । लब्धावकाशा= लब्धविषया प्रार्थना = अनुरागः, सर्वथेयं मय्यनुरागिणीति भावः ।

अनुरागिणीत्वनिश्चये हेतुमाह—वाचमिति । इयं यद्यपि मद्वचोभिर्वाचं न

---

१. मनोवृत्तिः । २. व्यवहिता । ३. सा, यम् ।

मिश्रयति; मयि भाषमाणे अभिमुखं कर्णं ददाति। कामं मदाननसंमुखीना न तिष्ठति; अस्या दृष्टिस्तु भूयिष्ठमन्यविषया न (अस्ति) इत्यन्वयः।

इयं=शकुन्तला। मद्वचोभिः=मम प्रश्नोत्तराद्यात्मकैर्वाक्यैः सह वाचम्=आत्मीयं वचनं न मिश्रयति=न संयोजयति; मया भङ्ग्या बहुषु वचनेषूक्तेष्वपि न किञ्चिदपि प्रतिवक्तीत्यर्थः। कदाचिदिदमनास्थाहेतुकं स्यादित्यत आह—कर्णमिति। मयि भाषमाणे = वदति सति अभिमुखं = सन्मुखं कर्णं ददाति, सावधाना मद्वचनं श्रृणोतीत्यर्थः। एतेन पूर्वमस्याः मद्वचःप्रतिवचनाभावो लज्जाहेतुक एवेति सिद्ध्यति। कामम् = अत्यन्तं मदाननसंमुखीना = मन्मुखाभिमुखी न तिष्ठति; अस्याः = शकुन्तलायाः दृष्टिस्तु = नेत्रव्यापारस्तु भूयिष्ठम् = अत्यन्तम् अन्य-विषया = मन्मुखव्यतिरिक्तविषया न। अस्याः गूढा दृष्टिर्मन्मुखविषयैवेत्यर्थः। एतेन अभिमुखानवस्थानमपि लज्जाहेतुकमेवेति सिद्ध्यति। अत्र अस्याः मद्भाषणे कर्णदानं, दृष्टेर्मन्मुखैकविषयत्वं च मद्भाषणशुश्रूषामन्मुखदिदृक्षाव्यञ्जकम्। तच्च स्थिराया एतद्रतेरनुभावात्मकमिति 'लब्धावकाशः' इति पूर्वोक्तस्य समर्थकम्।

अस्मिन् पद्ये नायिकागतयोर्लज्जौत्सुक्ययोः सन्धिः, नायकगता प्रकृष्टा रतिश्च प्राधान्येन व्यज्यते। छेकानुप्रासवृत्त्यनुप्रासौ शब्दालङ्कारौ। वसन्ततिलका वृत्तम्। अनेन मुग्धाया नायिकाया गात्रजो विलास इति भाव उक्तः। तल्लक्षणं तु नागरसर्वस्वे—

योवल्लभासन्नगतो विकारो गत्यासनस्थानविलोकनादौ।
नानाविधाकूतचमत्कृतिश्च पराङ्मुखं चास्यमयं विलासः॥ इति।

शकुन्तलां तथाविधां दृष्ट्वा राजा चिन्तयति—यत् 'सत्यमिदमियं मयि गाढा-नुरागिणीति, तथा हि—मया भङ्ग्या बहुविधेषु प्रश्नेषूपक्षिप्तेष्वपि नेयं किञ्चि-त्प्रतिवक्ति, परन्तु मयि भाषमाणे सति सावधाना भूत्वा मदीयं वचः श्रृणोति।

( नेपथ्ये )

भो भोस्तपस्विनः ! संनिहितास्तपोवनसत्त्वरक्षायै भवत। प्रत्यासन्नः किल मृगयाविहारी पार्थिवो दुष्यन्तः।

तुरगखुरहतस्तथा हि रेणु-
विटपविषक्तजलार्द्रवल्कलेषु।
पतति परिणतारुणप्रकाशः
शलभसमूह इवाश्रमद्रुमेषु॥ २८॥

---

यद्यपि लज्जया असौ अत्यन्तं मन्मुखाभिमुखी न तिष्ठति, तथापि अस्या दृष्टिः विहाय मन्मुखं नान्यत्र गच्छति। इत्यादि लक्षणैः स्पष्टमेवास्या मयि अनुराग इति निश्चीयते' इति भावः॥ २७॥

इत्थं नायिकानुरागस्फुटपरिज्ञानेन कृतकृत्यप्रायस्य नायकस्य गमनावकाशं सम्पादयितुं प्रकृतकथाविच्छेदार्थं च अन्तरसन्धिमुपक्षिपति— **नेपथ्ये इति। भो भो इत्यादि।** सैनिकान् दृष्ट्वा केषाञ्चित्तपस्विनां वचनमिदम्। द्विरुक्तिः संभ्रमसूचिका। सत्त्वानि = जन्तवः। प्रत्यासन्नो दुष्यन्त इति कथनेन तत्सत्कारायं सन्नद्धा भवतेति व्यज्यते। मृगयाविहारी इति प्रत्यासत्तौ हेतुः। किलेति वार्तायां संभावने वा।

दुष्यन्तप्रत्यासत्तिं समर्थयितुमाह— **तुरगेत्यादि।** तथा हि तुरगखुरहतः परिणतारुणप्रकाशो रेणुः शलभसमूह इव विटपविषक्तजलार्द्रवल्कलेषु आश्रमद्रुमेषु पतति इत्यन्वयः।

तथा हि = राज्ञः प्रत्यासन्नत्वाद्धेतोः तुरगखुरहतः— तुरगाणाम् = अश्वानां खुरैः = शफैः हतः = हननेनोत्क्षिप्तः, उत्थापितो वा परिणतारुणप्रकाशः— परिणतः = अस्तमयोन्मुखः, सायंकालीन इत्यर्थः। यः अरुणः = सूर्यस्तद्वत् प्रकाशः =

अपि च—

तीव्राघातप्रति[1]हततरुः स्कन्धलग्नैकदन्तः

[2]पादाकृष्टव्रततिवलयासङ्ग[3]संजातपाशः ।

उज्ज्वलः, सायङ्कालीनसूर्यप्रभासदृशप्रभावानित्यर्थः । "अरुणोऽस्फुटरागे च सूर्ये सूर्यस्य सारथौ" इति **धरणिः**, "प्रकाशोऽपि प्रसिद्धे स्यात्प्रहासातपयोः स्फुटे" इति **विश्वश्च**। रेणुः = धूलिकदम्बम् , जातावेकवचनम् । तापसानुभवसिद्धामुपमामाह— **शलभेति।** शलभसमूह इव = पतङ्गनिकर इव । अनयोपमया रेणूनां सान्द्रत्वादिकं द्योत्यते। तेन सैन्यबाहुल्यं च। विटपविषक्तजलार्द्रवल्कलेषु—विटपेषु= शाखासु विषक्तानि = आसञ्जितानि जलार्द्राणि = वारिसिक्तानि वल्कलानि येषां तथाविधेषु आश्रमद्रुमेषु = तपोवनतरुषु पतति ।

अत्र पार्थिवप्रत्यासन्नत्वे कारणे प्रस्तुते तत्कार्यं रेणूद्धूलनादिकमुक्तमित्यप्रस्तुतप्रशंसा, वृत्त्यनुप्रासः, उपमा, काव्यलिङ्गं च। पुष्पिताग्रा वृत्तम् ।

मृगयाविहारप्रसङ्गेन धर्मारण्ये राज्ञो दुष्यन्तस्य प्रत्यासत्तिं ज्ञात्वा तपोवनस्थितजन्तुरक्षणाय सर्वानाश्रमवासिनः समुद्योजयन्ति केचन तपस्विनः, दुष्यन्तप्रत्यासत्तिं च समर्थयन्ति—'तथा हि—राजानुगबहुलसैनिकाश्वखुरोत्थापितः सायन्तनतपनप्रभाभासुरो रेणुः शाखासक्तजलार्द्रवल्कलविभूषितेषु तपोवनतरुषु शलभसमूह इव निपतति । यथा पुञ्जीभूताः शलभाः सम्भूय वृक्षश्रेणिषु निपतन्ति, तथैवायं राजानुजीविबहुलसैनिकाश्वखुरोत्थापितो रेणुनिकरस्तपोवनवृक्षेषु सहसा निपतति । तेन स्पष्टमिदं यत् प्रत्यासन्नो राजा' इति भावः ॥ २८ ॥

अथ क्षणादेव दर्शनपथमागतां सेनां, तद्दर्शनेन भीतं कञ्चिद्वन्यगजं चावलोक्य ससम्भ्रममुच्यते—**अपि च—तीव्रेति ।** स्यन्दनालोकभीतः तीव्राघातप्रतिहतत-

१ घातादभिमुख । २ प्रौढा । ३ सज्जनाज्जात ।

मूर्तो विघ्नस्तपस इव नो भिन्नसारङ्गयूथो
धर्मारण्यं [1]प्रविशति गजः स्यन्दनालोकभीतः ॥२९॥

रुस्कन्धलग्नैकदन्तः पादाकृष्टव्रततिवलयासङ्गसञ्जातपाशो भिन्नसारङ्गयूथो गजो नस्तपसो मूर्तो विघ्न इव धर्मारण्यं प्रविशतीत्यन्वयः ।

स्यन्दनालोकभीतः—स्यन्दनानां = रथानामालोकेन = दर्शनेन भीतः=अदृष्टपूर्वत्वात् त्रस्तः तीव्रेण = गमनवेगवशादमन्देन आघातेन = संघट्टनेन प्रतिहताः = भग्नाः तरवः = वृक्षा येन सः । स चासौ स्कन्धे = स्कन्धभागे पार्श्वावलोकनेन लग्नः = संसक्तः एको दन्तो यस्य सः । अत्र स्कन्धो दन्तश्च दक्षिण इति सांप्रदायिकाः । उक्तं च पालकाप्ये—"दक्षिणे वलितुं शक्तो गजो वामे प्रयत्नतः" इति । यद्वा तीव्रो य आघातः = मदेन भीत्या च दिङ्मूढत्वेनाहननं तेन प्रतिहतः= भग्नः पश्चात्तरुस्कन्धे = तरोर्मध्यदेशे लग्नः, दृढावगाढतया समुद्धर्तुमशक्यत्वान्निलीन इत्यर्थः । एकदन्तो यस्य सः इति । पादेन आकृष्टाः या व्रततयः = मार्गप्राप्ता लतास्तासां यानि वलयानि = मण्डलानि तेषामासङ्गेन = संसर्गेण सञ्जातपाशः = प्राप्तबन्धनरज्जुः, पादेन लताजालं वहन् पाशबद्ध इव प्रतीयमान इत्यर्थः । भिन्नानि = विभक्तानि, विद्रावितानि वा सारङ्गाणां = मृगाणां यूथानि = कुलानि येन । विशेषणचतुष्टयेन वेगातिशयो व्यज्यते । गजः = वनहस्ती नः = अस्माकं तपसः = अनुष्ठानस्य मूर्तः = मूर्तिमान् विघ्न इव, धृतदेह इव धर्माचरणप्रत्यूह इत्यर्थः । धर्मारण्यं = तपोवनं प्रविशति । गज इति एकवचनेन यूथात् स्वभावत एव पृथक्चारी केवलो नाग इति लक्ष्यते । अनेन तदविवेकस्य पराकाष्ठा द्योत्यते ।

१ विरुजति ।

( सर्वाः कर्णं दत्त्वा किंचिदिव संभ्रान्ताः । )

**राजा**—(आत्मगतम्) अहो धिक्! सैनिका अस्मदन्वेषिणस्तपो-

---

आघातादिनिमित्तेन गजे मूर्तिमत्तपोविघ्नत्वमुत्प्रेक्ष्यते । उत्प्रेक्षया मुनीनां तत्तद्धर्मक्रियालोपस्य अवश्यम्भावो द्योत्यते ।

पूर्वार्धे वृत्त्यनुप्रासश्रुत्यनुप्रासयोरेकवाचकानुप्रवेशलक्षणः संकरः । उत्तरार्धे श्रुत्यनुप्रास एव । स्वभावोक्तिकाव्यलिङ्गपरिकरालङ्काराश्च । अत्र भयानको रसः । गजगतभयं स्थायिभावः, दुष्यन्तसेनारथावलोकनं विभावः, पार्श्वावलोकनपलायनादयो व्यभिचारिणः । मन्दाक्रान्ता वृत्तम् । अत्र आदौ रेणुवर्णनं सेनागमनज्ञापनेन अयं महाराज एवेति तासां बोधनाय, पुनर्गजागमनवर्णनं तासां गमनावसरसम्पादनायेति ज्ञेयम् ।

गजागमनं तद्विलोकनजन्यः सम्भ्रमश्च वर्ण्यते, तथाहि—राज्ञः सैन्यसंबन्धिरथनेमिध्वनिं श्रुत्वा तस्य अदृष्टाश्रुतपूर्वत्वात्सुतरां त्रस्तः दन्तेन विद्धं भग्नं तरुं दन्तेनैव कर्षन् पादेन लताजालं वहन् पाशबद्ध इव प्रतीयमानो मध्येमार्गं संगतानां हरिणानां यूथं विद्रावयन् मूर्तिमानिवास्माकं तपश्चरणस्यान्तरायः अयं वन्यो गजः इदं धर्मारण्यं प्रविशति; तस्मात् भो भो आश्रमवासिनः! यूयं सर्वे अपसरत, महता भयेन परित्रस्तोऽयं वनगजो न दक्षिणतो नापि वामतः, किन्तु समरेखमेव धावति ; मार्गे यद्यदापतति तत्सर्वं मर्दयित्वा चलति, हरिणयूथेषु सहसा पतितस्तानि विद्रावयति, क्रमेण च इत एव आयाति तत् झटिति मार्गमस्मै दत्त्वा आत्मानं रक्षत इति भावः ॥ २९ ॥

**किञ्चिदिवेति** । सम्भ्रमस्य किञ्चित्त्वं महाराजसामीप्यात् । इवेति वाक्यालङ्कारे । नेपथ्ये तपोधनोक्तिं श्रुत्वा राजा तपोवनबाधामाशङ्क्याह—**अहो! धिगि-**

वनमुपरुन्धन्ति । भवतु, प्रतिगमिष्यामस्तावत् ।

**सख्यौ**—अज्ज ! इमिणा 'आरण्णअवुत्तन्तेण पज्जाउल ह्म । अणुजाणोहि णो उडअगमणस्स ।

आर्य ! अनेनारण्यकवृत्तान्तेन पर्याकुलाः स्मः । अनुजानीहि न उटजगमनाय ।

**राजा**—(ससंभ्रमम्) गच्छन्तु भवत्यः । वयमप्याश्रमपीडा यथा न भवति तथा प्रयतिष्यामहे ।

(सर्वे उत्तिष्ठन्ति ।)

**सख्यौ**—अज्ज ! असंभाविदअदिहिसक्कारं भूओ वि पेक्खणणिमित्तं लज्जेमो अज्जं विण्णविदुं ।

---

त्यादि । अहो इति विषादे । धिगिति निन्दायाम् । उपरुन्धन्ति = पीडयन्ति । तपःप्रतिरोधमाशङ्कमानो धार्मिको राजा तत्प्रतीकारोपायं विचार्य निश्चिन्वन्नाह—भवत्विति । प्रतिगमिष्यामः = प्रत्यावृत्ता भविष्यामः । तावच्छब्देन सम्भ्रमो द्योत्यते । सख्यौ आहतुः—**अज्जेति** । 'आर्य ! अनेनारण्यकवृत्तान्तेन पर्याकुलाः स्मः, अनुजानीहि नः उटजगमनाय' इति संस्कृतम् । आरण्यकवृत्तान्तेन = वनगजागमनलक्षणेन पर्याकुलाः = भीताः । राजा उत्तरयति—**ससम्भ्रममित्यादि** । उद्विग्नत्वात् सम्भ्रमेण = त्वरया सहेत्यर्थः । आश्रमपीडा = तपोवनोपरोधः ।

अथ वचनभङ्ग्या नायकमावर्जयन्त्यौ सख्यौ स्वगमनं निवेदयतः—**अज्जेति** । 'आर्य ! असम्भावितातिथिसत्कारं भूयोऽपि प्रेक्षणनिमित्तं लज्जावहे आर्यं विज्ञापयितुम्' इति संस्कृतम् । असम्भावितः, णिजन्तस्य भवतेः करोत्यर्थत्वात् अकृत इत्यर्थः । अतिथिसत्कारः = अर्घ्याद्युपचारो यस्य तम् । प्रेक्षणनिमित्तम्—प्रेक्षणमेव निमित्तं = फलं यस्य तद्यथा तथा, भूयोऽपि भवद्दर्शनमुद्दिश्येत्यर्थः । अद्य

---

१ हस्तिसम्भ्रमेण ।

आर्य ! असंभावितातिथिसत्कारं भूयोऽपि प्रेक्षणनिमित्तं लज्जावहे आर्यं विज्ञापयितुम् ।

**राजा**—मा मैवम् । दर्शनेनैव भवतीनां पुरस्कृतोऽस्मि ।

( शकुन्तला राजानमवलोकयन्ती सव्याजं विलम्ब्य सह सखीभ्यां निष्क्रान्ता । )

**राजा**—मन्दौत्सुक्योऽस्मि नगरगमनं प्रति, यावदनुयात्रिकान्समेत्य नातिदूरे तपोवनस्य निवेशयेयम् । न खलु शक्नोमि शकुन्तला-

---

गन्तव्यतया भवते निवेद्य गच्छामः, भूयोऽपि अत्रागत्यास्माकमातिथ्यं स्वीकर्तव्यमिति भावः । राजोत्तरयति—**मा मैवमिति** । 'मा मा' इति सम्भ्रमे द्विरुक्तिः । 'एवम्' इत्यस्य 'वादीः' इति शेषः । कुत इत्याह—**दर्शनेनेति** । अनेन तद्दर्शनस्य सर्वेन्द्रियतर्पणत्वं द्योत्यते । पुरस्कृतोऽस्मि = पूजितोऽस्मि । "पुरस्कृतः पूजितेऽरात्यभियुक्तेऽग्रतः कृते" **इत्यमरः** । **सव्याजमिति** । व्याजप्रकारो 'दर्भाङ्कुरेण चरणः क्षतः' इत्यादिना वक्ष्यते । विलम्ब्य=गमनमान्द्यमुत्पाद्य निष्क्रान्ता, दर्शनौत्सुक्यात् व्याजमुद्भाव्य प्रियदर्शनं प्रियं भूयो भूयः पश्यन्ती गतेत्यर्थः । अनेन नायिकागतस्यानुरागस्य पराकाष्ठा दर्शिता । मनःसङ्गरूपेयं द्वितीयावस्था ।

अथात्मनि निश्चितशकुन्तलाऽनुरागो राजा तस्यामत्यन्तासक्तः सन् स्वावस्थां परामृशति—**मन्दौत्सुक्योऽस्मीति** । नगरगमनं प्रति, भूयो राजधान्यां प्रत्यावर्तनविषये इत्यर्थः । मन्दं = मृदु औत्सुक्यम् = उत्कण्ठा यस्य तथाविधः । मन्दौत्सुक्यो न त्वनुत्सुक इत्यनेन नायकस्य अन्तःपुरेषु दाक्षिण्यं प्रतीयते । **यावदिति** । अत इत्यर्थः । अनुयात्रिकान् = अनुगामिनः, सैनिकानित्यर्थः । **नातिदूर इति** । यद्यतिदूरे, तदा प्रभुत्वस्य शैथिल्यं स्यात् ; समीपे चेत्, आश्रमस्य पीडा स्यात् इति भावः । इत्थं विचिन्त्य पुनः प्रगाढप्रेमप्रकर्षशालिनीमात्मनो मनोवृत्तिमनुसन्दधाति—**न खल्विति** । शकुन्तलाव्यापारात्—शकुन्तलायां यो व्यापारः =

व्यापारादात्मानं निवर्तयितुम्। मम हि—

गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं[1] चेतः।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य॥ ३०॥

अङ्गप्रत्यङ्गचङ्क्रमणस्वरूपस्तस्मात्। यद्वा षष्ठीतत्पुरुषः, शकुन्तलाया यो व्यापारः= अनुरागद्योतकः स्निग्धवीक्षणादिस्तस्मात्। 'निवर्तयितुं न शक्नोमि' इत्यनेन मया निवर्तनाय बहुशो यत्नः क्रियते इति द्योत्यते।

'न खलु शक्नोमि' इति पूर्वोक्तमर्थं समर्थयति—मम हि-गच्छतीत्यादि। मम = दृढचित्तस्यापि। हीति हेतौ। प्रतिवातं नीयमानस्य केतोरिव मम शरीरं पुरो गच्छति। चीनांशुकमिव असंस्तुतं चेतः पश्चाद्धावतीत्यन्वयः।

प्रतिवातं = वायोः प्रतिकूलम्, प्रतिकूलवातमित्यर्थः। क्रियाविशेषणमिदम्। नीयमानस्य = उह्यमानस्य, न तु स्वयं गच्छतः, केतुपक्षे अचेतनत्वात्, राजपक्षे औत्सुक्याभावात्। केतोरिव = ध्वजदण्डस्येव मम शरीरं = देहः पुरः = सेनासमीपं प्रति गच्छति। चित्तव्याक्षेपादनिच्छया कथं कथमपि गच्छतीत्यर्थः। चीनांशुकं = चीनदेशीयपट्टवस्त्रम्, तत्कृतपताकेत्यर्थः। चीनपदेन अंशुकस्य लाघवस्वच्छत्वादयो गुणा द्योत्यन्ते। असंस्तुतम्=अपरिचितमित्यर्थः। सर्वो हि तत्परिचये सति तदधीनो भवतीति अनेन धावने कारणाभावो द्योत्यते। चेतः = चित्तं पश्चाद्धावति, जवेन प्रतिकूलं गच्छतीत्यर्थः। अकाण्डविजृम्भितेन प्रतिवातेनेव अतर्कितोपनतेन तदभिलाषेण पुनः पुनः प्रेर्यमाणं ध्वजदुकूलमिव मदीयं चेतः पश्चाद्धावति; शरीरं च ध्वजवत्पुरो मन्दं गच्छतीति भावः। उपमया चेतसो विनयधर्यादिभिरनिवार्यत्वं ध्वन्यते। चीनांशुकसाम्यात् लाघवचाञ्चल्याद्यतिशयश्च। ध्वजोपमया शरीरस्य हृदयशून्यत्वात् परेण नीयमानकाष्ठतुल्यता चेति।

१ असंस्थितम्।

( इति निष्क्रान्ताः सर्वे । )

इति प्रथमोऽङ्कः ।

---

अत्र बीजस्य पुनरावर्तनात् समाधानं नाम अङ्गम् । उत्तराङ्कप्रस्तूयमानविप्रलम्भस्य आरम्भणात् करणं नाम अङ्गं च । अत्र सम्बन्धे असंबन्धलक्षणा असम्बन्धे संबन्धलक्षणा च द्विविधा अतिशयोक्तिः, वृत्त्यनुप्रासः, उपमा चेत्यलङ्काराः । आर्या जातिः ।

राजा चिन्तयति—'कर्तव्यबुद्धिर्मां नयति, न त्वहमितो यामि; तेनाहं ध्वज इव, शकुन्तला च वातसंहतिरिव, शरीरं मे ध्वजदण्ड इव, चेतश्च ध्वजवस्त्रमिव । शकुन्तलारूपाया वातसंहतेः प्रतिकूलमहं कर्तव्यबुद्ध्या नीयमानोऽस्मि । देहो ध्वजदण्ड इव मन्दं पुरो याति, चेतस्तु अस्थिरं सत् ध्वजवस्त्रमिव पश्चाद्धावति । मनसा शकुन्तलानुगाम्यहं केवलं कर्तव्यबुद्ध्यैव तां परित्यज्य शरीरमात्रेण यामि' इति भावः ॥३०॥

**निष्क्रान्ताः सर्वे इति ।** तदुक्तं **दशरूपके**—

एकाहाचरितैकार्थमित्थमासन्ननायकम् ।
पात्रैस्त्रिचतुरैरङ्कं तेषामन्तेऽस्य निर्गमः ॥ इति ।

अत्र तपोवनसंरोधस्य प्राप्तत्वात्, स च नाटके साक्षान्न निदर्शनीयः, अङ्कान्ते निबद्धव्य इति अत्र अङ्कसमाप्तिः । अङ्कलक्षणं **दशरूपके**—

यदा तु सरसं वस्तु मूलादेव प्रवर्तते ।
आदावेव तदाऽङ्कः स्यादामुखाक्षेपसंश्रयः ॥
प्रत्यक्षनेतृचरितो बिन्दुव्याप्तिपुरस्कृतः ।
अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ॥ इति ।

इति **नारायणो**न्नीते **लक्ष्मी**रित्यभिधान्विते ।
**शाकुन्तलस्य व्याख्याने प्रथमो**ऽङ्कः समाप्तिमैत् ॥

---

इति श्रीमन्**नारायणशास्त्रिणा** प्रणीतायामभिज्ञानशाकुन्तलस्याभिनवटीकायां **लक्ष्मी**नामिकायां **प्रथमो**ऽङ्कः ।

## द्वितीयोऽङ्कः ।

( ततः प्रविशति विषण्णो विदूषकः । )

**विदूषकः**—( निःश्वस्य ) भो [1]दिट्ठं । एदस्स मअआसीलस्स

---

इत्थं प्रथमाङ्के शकुन्तलादुष्यन्तयोः सौभाग्योपनतेन दर्शनेन मिथो रतेरुद्बोधम्, अभिमुखसंलापादिना तस्याः क्रमेण परिपोषम्, "न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते" इति न्यायेन पर्यवसाने नायकयोर्वियोगं चोपवर्ण्य, द्वितीयेऽङ्के नायकगताया रतेश्चिन्ताविषादादिभिर्व्यभिचारिभिः, गुणकीर्तनादिभिरनुभावैश्च परिपोषप्रदर्शनपूर्वकं विप्रलम्भशृङ्गारं वर्णयिष्यन् महाकविस्तदुपयोगाय, तथा "शृङ्गाराद्धि भवेद्धास्यः" इति न्यायेन हास्यरससमुद्भावनाय, वृत्तवर्तिष्यमाणवृत्तान्तसंघटनाय च नायकानुयात्रिकान्तर्गतस्य नायकशृङ्गारसचिवस्य विदूषकस्य प्रवेशमाह—**तत इति** । विश्वं विमृश्य दूषयतीति विदूषकः ।

कुसुमवसन्ताद्यभिधः कर्मवपुर्वेषभाषाद्यैः ।
हास्यकरः कलहरतिर्विदूषकः स्यात्स्वकर्मज्ञः ॥

इति तल्लक्षणम् । अस्य चेष्टावचनादौ प्रायो हास्यो रसः । प्राकृतं चास्य पाठ्यम् । उक्तं च—"विदूषकविटादीनां पाठ्यं तु प्राकृतं भवेत्" इति । विदूषकस्य विषण्णत्वे हेतुर्वक्ष्यमाणः । **निःश्वस्येति** । निःश्वासश्चिन्तानिर्वेदयोरनुभावः ।

अथ पटमण्डपे सुखशयने शयानं वयस्यं राजानं रात्रौ स्वाधिकारेण सम्भाव्य पुनः प्रभाते मृगयासम्भावनया त्वरितं तत्समीपमुपसर्पन् विषण्णो नर्मसचिवो विदूषकः मार्गमध्ये स्वीयां दुरवस्थां स्वयं विमृशति—**भो इति** । 'भो दृष्टम् ।

---

1 हदोह्मि ।

रण्णो वअस्सभावेण णिव्विण्णो ह्मि। अअं मओ अअं वराहो अअं

एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन निर्विण्णोऽस्मि। अयं मृगोऽयं वराहोऽयं शार्दूल इति मध्याह्नेऽपि ग्रीष्मविरलपादपच्छायासु वनराजीष्वाहिण्ड्यतेऽटवीतोऽटवी, पत्रसंकरकषायाणि कटूनि गिरिनदीजलानि पीयन्ते, अनियतवेलं शूल्यमांसभूयिष्ठ आहारो भुज्यते, तुरगानुधावनकण्डितसन्धेः रात्रावपि निकामं शयितव्यं नास्ति। ततो महत्येव प्रत्यूषे दास्याःपुत्रैः शकुनिलुब्धकैर्वनग्रहणकोलाहलेन प्रतिबोधितोऽस्मि। इयतेदानीमपि पीडा न निष्क्रामति। ततो गण्डस्योपरि पिटकः संवृत्तः। ह्यः किलास्मास्ववहीनेषु तत्रभवतो मृगानुसारेणाश्रमपदं प्रविष्टस्य तापसकन्यका शकुन्तला ममाधन्यतया दर्शिता। साम्प्रतं नगरगमनस्य मनः कथमपि न करोति। अद्यापि तस्य तामेव चिन्तयतोऽक्ष्णोः प्रभातमासीत्। का गतिः? यावत्तं कृताचारपरिक्रमं पश्यामि' इति संस्कृतम्। 'भोः' इति चिन्तायाम्। यथोक्तम्—"प्रमोदभयचिन्तासु विषादे च निरूपणे। भोः" इति। निर्वेदस्य तद्धेतोर्दुःखस्य चानुभावरूपा चिन्ताऽत्र बोद्धया। तत्स्वरूपं च 'क्व गच्छामि' 'किं करोमि' इत्यादि। 'भो दृष्टम्' इति भिन्नं वाक्यम्। मृगयैकरसिकस्य परसुखानपेक्षिणोऽस्य राज्ञः स्वार्थैकपरत्वं दृष्टमिति संबन्धः। चिन्ताहेतुमाह—**एतस्येति**। राज्ञ इति कथनेन तदनुमतिं विना स्वस्य गृहगमनादिकं न युज्यते इति द्योत्यते। वयस्यभावेन = स्निग्धत्वेन। "वयस्यः स्निग्धः सवयाः" **इत्यमरः**। निर्विण्णोऽस्मि—निर्वेदः स्वावमानना, सा च दुःखजन्येति दुःखमप्यत्र द्योत्यते। दुःखितोऽस्मीत्यर्थः। 'राज्ञो वयस्यभावेन निर्विण्णोऽस्मि' इति कथनेन राज्ञो निन्दा च भवति।

राज्ञो मृगयाशीलत्वं तन्मूलस्य स्वदुःखस्य मूलं च विवृणोति—**अयमिति**। मध्याह्नेऽपि—किमुतान्यदेति अपिशब्देन द्योत्यते। ग्रीष्मविरलपादपच्छायासु—

सद्दूलो त्ति मज्झण्णे वि गिह्मविरलपाअवच्छाआसु वणराईसु आहिण्डी-अदि अडवीदो अडवी, पत्तसंकरकसाआइं कडुआइं गिरिणईजलाइं पीअन्ति, अणिअदवेलं [1]सुल्लमंसभूइट्ठो आहारो अण्हीअदि, तुरगाणुधा-

ग्रीष्मेण = शुचिना विरलाः = पक्वपत्त्रापगमादल्पाः पादपच्छाया यासु । एतेन पादपमूलेष्वपि श्रमविनोदस्य दुष्करत्वं ध्वन्यते । वनराजिषु = वनपङ्क्तिषु । वन-पदेन कण्टकादिबाहुल्यात् दुःसञ्चरत्वम्, राजिष्वित्यनेन मृगयाया निरर्गलत्वं च सूच्यते । आहिण्ड्यते = अत्यर्थं गम्यते । 'राज्ञा' इति विपरिणामेन अनुषङ्गः । स्व-स्याप्याहिण्डनमर्थादायातम् । अनेन आतपपीडा क्षुत्पिपासापीडा च ध्वन्यते । तत्र पिपासाप्रतीकाराभावमाह—**पत्त्रसंकरकषायाणीति** । पत्त्राणां संकरः = भिन्न-जातीयानामेकत्र मेलनम्, तेन कषायाणि = तुवराणि । "तुवरस्तु कषायोऽस्त्री" इत्यमरः । अत एव कटूनि । अनियतवेलं = विषमसमयम्, अकालमित्यर्थः । शूल्यमांसभूयिष्ठः—शूले कृत्वा कृतपाकं शूल्यम्, तादृशं मांसं भूयिष्ठं = बहुलं यस्मिन्, लोहशलाकया मांसं संग्रथ्य यत्पच्यते तत् शूल्यमांसमित्यर्थः । काल-क्षेपासहिष्णुत्वाच्छूले पच्यमान इति यावत् । "शूलाकृतं भटित्रं स्याच्छूल्यम्" इत्यमरः । आहारः—आह्रियते इत्याहारः = भोज्यम् । भुज्यते = अश्यते । यथोक्तमरण्यपर्वणि महाभारते—

रुरून् कृष्णमृगांश्चैव मेध्यानन्यान्वनेचरान् ।
उन्मथ्य विविधैर्बाणैर्ब्राह्मणेभ्यो निवेदयन् ॥ इति,
ब्राह्मणार्थे पराक्रान्ताः शुद्धैर्बाणैर्महारथाः ।
निघ्नन्तो भरतश्रेष्ठा मेध्यान् बहुविधान् मृगान् ॥ इति च ।

अथ निद्राऽपि न लभ्यते इत्याह—**तुरगेति** । तुरगानुधावनकण्डितसन्धेः—

१ उणोण ।

वणकण्डिदसंधिणो रत्तिम्मि वि णिकामं सइद्व्वं णत्थि । तदो महन्ते एव्व पच्चूसे दासीएपुत्तेहिं सउणिलुद्धएहिं वणग्गहणकोलाहलेण पडिबोधिदो ह्मि। एत्तएण दाणिं वि पीडा ण [1]णिक्कमदि । तदो गण्डस्स उवरि पिडओ संवुत्तो । हिओ किल अह्मेसु ओहीणेसु तत्तहोदो मओणुसारेण

तुरगे = अश्वे यदनुधावनं तेन कण्डितसन्धेः = कुट्टिताङ्गसन्धेः । निकामं = पर्याप्तं शयितव्यं = स्वास्थ्यहेतुः स्वापः। निकामं नास्तीत्यनेन चरमयामे किञ्चिन्निद्रालाभो भवतीति द्योत्यते। ततः = कथञ्चिन्निद्राप्राप्तेरनन्तरं महत्येव प्रत्यूषे—सूर्योदयात्प्राक् नाडीचतुष्टयात्मकः कालः प्रत्यूषः, तस्य महत्त्वं = दीर्घत्वम् , प्रत्यूषारम्भसमये इत्यर्थः । अतिप्रातरिति यावत् । दास्याःपुत्रैः-आत्मन उद्वेगदायित्वात् गालिप्रदानमिदम्। "पुत्रेऽन्यतरस्याम्" इति षष्ठ्या अलुक्। निकृष्टैरित्यर्थः । शकुनिलुब्धकैः = पक्षिव्याधैः । "व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः" इत्यमरः । वनग्रहणकोलाहलेन—वनग्रहणं = मृगयाङ्गं पूर्वं वनशोधनम्, अरण्यवेष्टनमित्यर्थः । यदुक्तं कौटिल्येन—"लुब्धकैश्च श्वगणिभिरपास्तस्तेन व्यालपराबाधभयं चललक्ष्यपरिचयार्थं मृगयारण्यं गच्छेत्" इति । तत्र यः कोलाहलस्तेन । इयता = उक्तदुःखानुभवेन । पीडा = दुःखानुभवः न निष्क्रामति = न निर्गच्छति, न पर्यवस्यतीति यावत् । इतः परमपि दुःखान्तरानुभवोऽस्तीति भावः । ततः, दुःखे सति दुःखान्तरापतनादित्यर्थः । गण्डस्योपरि पिटकः संवृत्तः—गण्डः = रोगविशेषः पिटकः = विस्फोटः, स्फोटस्योपरि स्फोट इत्यर्थः । लौकिकानामाभाणकोऽयम् । एकस्मिन् दुःखकारणे सत्येव द्वितीयं दुःखकारणमुत्पन्नमिति यावत् । तदेवाह—ह्यः = पूर्वदिने । "ह्यो गतेऽह्नि" इत्यमरः । किलेति वार्तायाम् । अवहीनेषु =

१ समत्ता ।

अस्समपदं पविट्ठस्स तावसकण्णआ सउन्दला मम अधण्णदाए दंसिदा। संपदं णअरगमणस्स मणं कहं वि ण करेदि। अज्ज वि से तं एव्व चिन्तअन्तस्स अक्खीसु प्रभादं आसि। का गदी! जाव णं किदाचारपरिक्कमं

---

पश्चात्स्थितेषु। 'अस्मासु' इति बहुवचनेन आत्मनो नैपुण्यं द्योत्यते। वयं चेत्समीपे अभविष्याम तर्हि उपायैः सर्वं पर्यहरिष्यामेति ध्वनिः। तापसकन्यका = मुनिदुहिता। निन्दागर्भमिदं विशेषणं जन्मतो रूपतो वेषतश्च राजायोग्यत्वं तस्या ध्वनयति। अधन्यतया = दुर्भाग्येन।

अथ तद्दर्शनस्य पीडाहेतुत्वमुपपादयति— **साम्प्रतमिति**। नगरगमनस्य= नगरगमनायेत्यर्थः। मनः कथमपि न करोति, मनसि नगरगमनस्य विचारमपि न करोतीत्यर्थः। उक्तार्थे हेतुमाह— **अद्यापीति**। अद्यापि = वनग्रहणकोलाहलश्रवणेऽपि। अपिशब्दः अद्भुतं द्योतयति। तस्य = राज्ञः तामेव = तापसकन्यामेव, न तु मृगयां वा नगरगमनं वा चिन्तयत इति हेतुगर्भम्। अक्ष्णोः प्रभातमासीत्, तच्चिन्तया निद्रां विना निशा नीतेति भावः। तुल्यः प्रयोगो यथा **अनर्घराघवे**— "धिक् चिन्तया रजनिरक्षिषु नः प्रभाता" इति। अत्र शकुन्तलाचिन्तनेनैव निशां नीतवतो राज्ञः शकुन्तलाचिन्तनेन सुखम्, निद्राच्छेदेन दुःखमिति विधानं नाम अङ्गमिदमुपक्षिप्तम्। तल्लक्षणं तु—"सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतम्" इति। का गतिः—केति चिन्तायाम्, गतिः = उपायः, मम दुःखोन्मूलने क उपाय इत्यर्थः। अथ गत्यभावात् तदानीमवश्यानुष्ठेयं विमृशन्नाह— **यावदिति**। यावत् = अद्य। कृताचारपरिक्रमम्—कृतः = विहितः आचारस्य = स्नानसन्ध्योपासनादेः परितः क्रमः = प्रतिकर्मप्रसाधनं येन तं पश्यामि। कृतेत्यादिना सेवावसरोऽयमिति सूच्यते।

पेक्खामि। (इति परिक्रम्यावलोक्य च) एसो बाणासणहत्थाहिं जवणीहिं वणपुप्फमालाधारिणीहिं पडिवुदो इदो एव्व आअच्छदि पिअवअस्सो। होदु, अङ्गभङ्गविअलो विअ भविअ चिट्ठिस्सं। जइ एव्व विस्सामं लहेअं।

भो दृष्टम्। एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन निर्विण्णोऽस्मि। अयं मृगोऽयं वराहोऽयं शार्दूल इति मध्याह्नेऽपि ग्रीष्मविरलपादपच्छायासु वनराजी-

---

**परिक्रम्यावलोक्येति।** रङ्गमञ्चं परितो गमनमभिनीय दृष्ट्वा चेत्यर्थः। **एसो इत्यादि।** 'एष बाणासनहस्ताभिर्यवनीभिर्वनपुष्पमालाधारिणीभिः परिवृत इत एवागच्छति प्रियवयस्यः। भवतु, अङ्गभङ्गविकल इव भूत्वा स्थास्यामि। यद्येवमपि नाम विश्रमं लभेय' इति संस्कृतम्। बाणासनहस्ताभिः—बाणः अस्यते यस्मिन् तत् बाणासनं = धनुः तत् हस्ते यासां ताभिः यवनीभिः = आसन्नपरिचारिकाभिर्म्लेच्छस्त्रीभिः। बाणेत्यादिविशेषणेन यवनीनां मृगयोद्यमो द्योत्यते। यवन्यः पुरुषायमाणाः मृगयाकुशलाः वनचारिण्यः स्त्रीविशेषाः। तथा चोक्तं **मातृगुप्ताचार्यैः**—

बृहत्कक्षा विचारिण्यस्तथोपवनसंचराः।
यामेषु च नियुक्तानां यामशुद्धिविशारदाः॥
सञ्चारिकास्तु ता ज्ञेया यवन्योऽपि मताः क्वचित्। इति।

प्रत्युत्पन्नमतिर्विदूषको विश्रमलाभे उपायं विमृशन्नाह—**भवत्विति।** अङ्गभङ्गविकल इव—अङ्गानां भङ्गेन विकलः = पीडित इव। पश्यतां यथा सर्वाङ्गपीडासम्भावना स्यात्तथेत्यर्थः। ततः किमित्यत्राह—**यदीति।** यद्येवं = सर्वाङ्गपीडामभिनीय स्थितं चेत्। लभेयेति संभावनायां लिङ्।

श्वाहिण्ड्यतेऽटवीतोऽटवी, पत्रसंकरकषायाणि कटूनि गिरिनदीजलानि पीयन्ते, अनियतवेलं शूल्यमांसभूयिष्ठ आहारो भुज्यते, तुरगानुधावनकण्डितसंधेः रात्रावपि निकामं शयितव्यं नास्ति । ततो महत्येव प्रत्यूषे दास्याःपुत्रैः शकुनिलुब्धकैर्वन-ग्रहणकोलाहलेन प्रतिबोधितोऽस्मि । इयतेदानीमपि पीडा न निष्क्रामति । ततो गण्डस्योपरि पिटकः संवृत्तः । ह्यः किलास्मास्ववहीनेषु तत्रभवतो मृगानुसारेणा-श्रमपदं प्रविष्टस्य तापसकन्यका शकुन्तला ममाधन्यतया दर्शिता । सांप्रतं नगर-गमनस्य मनः कथमपि न करोति । अद्यापि तस्य तामेव चिन्तयतोऽक्ष्णोः प्रभात-मासीत् । का गतिः ! यावत्तं कृताचारपरिक्रमं पश्यामि । एष बाणासनहस्ताभि-र्यवनीभिर्वनपुष्पमालाधारिणीभिः परिवृत इत एवागच्छति प्रियवयस्यः । भवतु, अङ्गभङ्गविकल इव भूत्वा स्थास्यामि । यद्येवमपि नाम विश्रमं लभेय ।

( इति दण्डकाष्ठमवलम्ब्य स्थितः । )

( ततः प्रविशति यथानिर्दिष्टपरिवारो राजा । )

**राजा—कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि ।**
**अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥ १ ॥**

---

दण्डकाष्ठमवलम्ब्य स्थित इति । आधारयष्टौ शरीरं निधाय स्थित इत्यर्थः । न तु समीपागतं राजानं प्रत्युज्जगामेति भावः । एतदस्वास्थ्यद्योतकम् । यथानिर्दिष्टपरिवारः, वनपुष्पमालाधारिणीभिर्बाणासनहस्ताभिर्यवनीभिः परिवृत इत्यर्थः ।

अथ शकुन्तलाविरहोद्विग्नस्तामेव मनसा ध्यायन्नात्मनो वियोगावस्थां परामृशति राजा—काममिति । प्रिया न सुलभा कामम् , मनस्तु तद्भावदर्शना-श्वासि ; मनसिजे अकृतार्थेऽपि उभयप्रार्थना रतिं कुरुते इत्यन्वयः ।

प्रिया = प्रीणातीति प्रियेत्यन्वर्थगुणा शकुन्तला । सुलभा न = सुखप्राप्या न, दुर्लभेत्यर्थः । तस्याः प्रदानस्य गुर्वधीनत्वात्, गुरोश्च असान्निध्यात्, बलात्तदपहारस्य च अयुक्तत्वादिति भावः । 'कामम्' इति अकामानुमतौ । अभ्युपगन्तव्यं मयैतदिति भावः । मनः = मननशीलं मे चेतः । तुशब्दो विशेषद्योतकः । तद्भावदर्शनाश्वासि—तस्याः ये भावाः = स्निग्धवीक्षणमन्दगमनादयश्चेष्टाविशेषास्तेषां दर्शनेन = अवलोकनेन आश्वासि = सहर्षम् । अस्तीति शेषः । प्रियाया दुर्लभत्वेऽपि मे चेतः तस्या अनुरागचिह्नानि दृष्ट्वा आश्वस्त भवति । प्रियादौर्लभ्येण निराशस्य मे तद्भावदर्शनेन किञ्चिद्दुःखोपशमो भवतीति भावः । उक्तमर्थं लोकप्रसिद्ध्या समर्थयते—**अकृतार्थेऽपीति ।** मनसिजे = कामे अकृतार्थेऽपि—भोगसामग्रीसम्पादनद्वारा अनुरक्तयोः स्त्रीपुरुषयोः मिथःसंयोजनमेव हि कामस्यार्थः, तदसंपादनात् अकृतकृत्ये सत्यपीत्यर्थः । उभयप्रार्थना—उभयोः = स्त्रीपुरुषयोः प्रार्थना = अनुरागः रतिं = प्रीतिं कुरुते = जनयति । अनधिगतसंगमावसरयोः स्त्रीपुरुषयोः सङ्गमोपायानधिगमेन निराशयोरपि परस्परानुरागचर्वणं मनसि कमपि प्रमोदमुल्लासयतीत्यर्थः । उक्तार्थच्छाया यथा **मालविकाग्निमित्रे**—

अनातुरोत्कण्ठितयोः प्रसिध्यता समागमेनापि रतिर्न मां प्रति ।
परस्परप्राप्तिनिराशयोर्वरं शरीरनाशोऽपि समानुरागयोः ॥ इति ।

अत्र अर्थान्तरन्यासः, मनसिजकृतार्थतारूपकारणाभावेऽपि रतिरूपकार्यसद्भाववर्णनात् विभावना च । विषादहर्षयोः संकरो मतिश्च भावः । अयमभिलाषाख्यो वियोगः । अयोगाख्योऽयमित्यपि केचित् । आर्या जातिः ।

राजा चिन्तयति—'मदीयं चेतस्तु सर्वात्मना शकुन्तलामेव कामयते, किन्तु सा न सुलभा । अस्वतन्त्रा हि सा, तस्याः प्रदाने महर्षिः कण्व एव प्रभवति, स चात्र असन्निहितः । किं वा तन्मनोगतमित्यप्यहं न वेद्मि । इत्थमपि शकु-

(स्मितं कृत्वा) एवमात्माभिप्रायसम्भावितेष्टजनचित्तवृत्तिः प्रार्थयिता [1]विडम्ब्यते । तथा हि—

स्निग्धं वीक्षितमन्यतोऽपि नयने यत्प्रेषयन्त्या[2] तया
यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव ।

न्तलाया अनुरागचेष्टितानि दृष्ट्वा निराशमपि मे मनः किञ्चिदुच्छ्वसतीव । तथा हि—प्रसिद्धोऽयं लोके न्यायः यत्—अनुरक्तयोः स्त्रीपुरुषयोः मिथःसमागमे असम्भवत्यपि इतरेतरानुरागो द्वयोरपि मनसि कमपि स्मर्यमाणमधुर प्रमोदमुल्लासयति' इति भावः ॥ १ ॥

स्मितं कृत्वेति—

ईषद्विकसितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः ।
अलक्षितद्विजं धीरमुत्तमानां स्मितं भवेत् ॥

इत्युक्तलक्षणलक्षितं स्मितमभिनीयेत्यर्थः । कामिजनमनोवृत्तेर्लोकविलक्षणत्वावगमोत्थो विस्मयः स्मितस्य हेतुः । अलीकेऽपि सत्यबुद्धिं विदधानाः कामिनोऽवश्यं विडम्ब्यन्त इत्याह—**एवमिति** । एवम् = तस्या मय्यनुरागोऽस्तीति विश्वासेनेत्यर्थः । आत्मनः=प्रार्थयितुरभिप्रायेण, न तु वास्तवेन हेतुना सम्भाविता = कल्पिता 'इष्टजनस्य = दयितारूपस्य चित्तवृत्तिर्येन सः प्रार्थयिता = कामुकः विडम्ब्यते = परिहस्यते, परिहासास्पदं भवतीत्यर्थः । अत्र अप्रस्तुतात् सामान्यात् प्रस्तुतो विशेषः प्रतीयते—प्रार्थयिताऽहं विडम्ब्ये इति । तस्या मयि रागोऽस्तीत्येतदात्माभिप्रायेण सम्भावनमेव; अतस्तेनाश्वसन्नहं बुद्धिमतां परिहासपात्रमस्मीत्यर्थः ।

अत एव तस्याः स्निग्धवीक्षितादीनामपि मत्परत्वं न सम्भवतीत्याह—**तथाहीत्यादिना मत्परायणमित्यन्तेन** । अन्यतोऽपि नयने प्रेषयन्त्या तया

१ विप्रलभ्यते । २ प्रेरयन्त्या ।

मा गा इत्युपरुद्धया यदपि सा सासूयमुक्ता सखी
सर्वं तत्किल मत्परायणमहो! [1]कामी स्वतां पश्यति ॥ २ ॥

यत् स्निग्धं वीक्षितम् ( इति ), नितम्बयोः गुरुतया विलासादिव यत् मन्दं यातम् (इति), मा गा इत्युपरुद्धया सखी यत् सासूयमुक्ता (इति) तत् सर्वं मत्परायणं किल । अहो ! कामी स्वतां पश्यति इत्यन्वयः ।

तथाहि = तस्माद्धेतोरित्यर्थः । अन्यतोऽपि = निर्लक्ष्यमेव । अपिशब्देन दृश्याध्यगते मय्यपीति द्योत्यते । नयने = नेत्रे प्रेषयन्त्या = पातयन्त्या तया = शकुन्तलया यत् स्निग्धं वीक्षितं = स्निग्धदृष्ट्या अवलोकितम् । स्निग्धदृष्टिलक्षणं यथा—

विकासिस्निग्धमधुरा चतुरे बिभ्रती भ्रुवौ ।
कटाक्षिणी साभिलाषा दृष्टिः स्निग्धाऽभिधीयते ॥ इति ।

अनेन वीक्षणस्य स्वस्मिन् यादृच्छिकत्वं स्निग्धत्वस्य च स्वाभाविकत्वं दर्शितम् । नितम्बयोः = कटिपश्चाद्भागयोः, द्विवचनं मध्यनिम्नतागौरवाधिक्यं यौवनोज्जृम्भणं च द्योतयति । गुरुतया = भारवत्तया, दुर्वहत्वादित्यर्थः । विलासादिव = स्वाभाविकश्रृङ्गारजक्रियाविशेषादिव मन्दं = शनैः यातं = गतम् । मा गा इति । 'सहि ! न युक्तं गन्तुम्' इत्युक्त्वेत्यर्थः । उपरुद्धया = निरुद्धया । सासूयं = भ्रूभङ्गसूचितया ईर्ष्यया सहितम् । उक्ता = 'किं निमित्तम्' इति कथिता । तत्सर्वं = चाक्षुषकायिकवाचिकव्यापारात्मकं पूर्वोक्तम् । मयि परायणं मत्परायणम्, मद्विषयकानुरागाविष्करणतत्परमित्यर्थः । किलेत्यलीके । "वार्तासंभाव्ययोः किल । हेत्वरुच्योरलीके च" इति हैमः । न तत् मत्परायणमिति भावः । अत्र वीक्षितयातोक्तीनां स्निग्धत्वमान्द्यसासूयत्वानि मत्परायणत्वप्रतीतौ बीजानि । **अयमत्र सारः**—पूर्वं प्रस्थानकाले यत् शकुन्तलायाः स्निग्धवीक्षणा-

१ कामः ।

दिकमासीत्, तत्सर्वं विलासिन्यास्तस्या वस्तुतः स्वाभाविकमपि मया मूढेन मत्परायणत्वेन कल्पितम् । वस्तुतत्त्वविचारे स्निग्धत्वमान्द्यसासूयत्वानां यथाक्रमं स्वभाव-नितम्बगौरव-सखीनिरोधहेतुकत्वात् मत्परायणताकल्पनमपार्थमेवेति । आत्मनो मत्परायणताप्रतीतौ विस्मयमान आह—अहो ! इति । अहो इत्यद्भुते । कामी = कामुकः स्वताम् = आत्मीयताम्, सर्वत्र स्वाभिप्रायरूपतामित्यर्थः । पश्यति = जानाति । "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इत्यमरः । सर्वोऽपि कामी जनः स्वकामनाविषयीभूतवनिताजनादिव्यापारमात्मपरायणत्वेन सम्भावयति; एतदाश्चर्यकरमित्यर्थः ।

अत्र अर्थान्तरन्यासः, कामिजनस्वभावोक्तिः, विलासादिवेत्युत्प्रेक्षा, 'तया' इत्यस्य वीक्षणादिनानाक्रियासंबन्धात् कारकदीपकं चालंकाराः । अत्र हर्षस्य शान्त्या विषादोऽभिनवीकृत इति प्राधान्येन विषादः, चिन्तादयश्च भावा व्यज्यमानाः स्वोपस्कृतं विप्रलम्भशृङ्गारं परिपोषयन्ति । शार्दूलविक्रीडितं वृत्तम् ।

शकुन्तलाविषये निराशो राजा विचारयति—'मया मूढेन किल शकुन्तलामात्मानुरागिणीं मत्वा तस्याः सर्वा अपि चेष्टाः स्वानुकूलत्वेन सम्भाविताः । एवमेव आत्माभिप्रायानुकूलामिष्टजनचित्तवृत्तिं सम्भावयन्तो विडम्ब्यन्ते खलु कामिनः । तथा हि—यदृच्छया निसर्गमधुरया दृशा तया यत् मदभिमुखमीक्षित तत् मया मद्विषये तस्याः स्निग्धवीक्षणमेव कल्पितम् । नितम्बशैलोद्वहनपरिश्रमादेव यत्तया शनकैः सविलासं प्रयातं तत् मद्वीक्षणनिमित्तं तया विलम्बितमित्येव मया सम्भावितम् । सखीवचनाकर्णनेन कृतकृतककोपां गच्छन्तीं तां निरुन्धानां सखीं प्रति यदपि तया 'किं निमित्तम्' इत्यादिः सासूया वागभिहिता, तत्सर्वमेव मन्निमित्तमेव तया कृतमिति मया अवधारितम् । अहो ! कामिजनः सर्वत्र सर्वमपि स्वानुकूलमेव सम्भावयति' इति भावः ॥ २ ॥

**विदूषकः**—( तथास्थित एव ) भो वअस्स[1] ! ण मे हत्थपाआ पसरन्ति । वाआमेत्तएण जई करीयसि ।

भो वयस्य ! न मे हस्तपादाः प्रसरन्ति । वाचामात्रेण जयीक्रियसे ।

**राजा**—कुतोऽयं गात्रोपघातः ?

**विदूषकः**—कुदो किल सअं अच्छी आउलीकरिअ[2] अस्सुकारणं पुच्छेसि ?

कुतः किल स्वयमक्षि आकुलीकृत्याश्रुकारणं पृच्छसि ?

**राजा**—न खल्ववगच्छामि ।

---

अथ एवं विचारयतो नायकस्य नायिकासंबन्धिसंवादसंपादनार्थं नायकस्य नर्मसचिवं विदूषकमुपस्थापयति—**विदूषकः—तथास्थित एवेति** । तथास्थित एव = दण्डकाष्ठमवलम्ब्य अङ्गभङ्गविकल इव । **भो वअस्सेति** । 'भो वयस्य ! न मे हस्तपादाः प्रसरन्ति, वाचामात्रेण जयी क्रियसे' इति संस्कृतम् । "विदूषकेण वक्तव्यो वयस्येति च भूपतिः" इत्युक्तेः 'वयस्य' इति संबुद्धिः । वाचामात्रेण, हस्तमुद्रां विनेत्यर्थः । जयी क्रियसे, जयेत्युच्यसे इत्यर्थः । तस्य व्याजं जानन्नपि राजा अजानन्निव पृच्छति—**कुत इति** । गात्रोपघातः = अङ्गभङ्गः । पीडाबहुत्वं पुनर्द्योतयन्नाह—**कुदो इति** । 'कुतः किल स्वयमक्षि आकुलीकृत्य अश्रुकारणं पृच्छसि ?' इति संस्कृतम् । कुतः पृच्छसीति संबन्धः । इदमनुचितमिति भावः । अक्षि आकुलीकृत्य, नेत्रयोरङ्गुलिप्रवेशं कृत्वेत्यर्थः । त्वयैव कृतोऽयं गात्रोपघातः, कुतः पुनस्तत्कारणं पृच्छसीति भावः । अत्र वर्ण्यप्रतिबिम्बार्थवर्णनात् ललितालङ्कारः । पुनरप्यविदन्निवाह राजा—**न खल्विति** । तव वक्रोक्तेः कारण-

---

१ महाराअ । २ भज्जिअ ।

**विदूषकः**—भो वअस्स ! जं वेदसो खुज्जलीलं विडंवेदि, तं किं अत्तणो पहावेण, उद णईवेअस्स ?

भो वयस्य ! यद्वेतसः कुब्जलीलां विडम्बयति, तत्किमात्मनः प्रभावेण, उत नदीवेगस्य ?

**राजा**—नदीवेगस्तत्र कारणम् ।

**विदूषकः**—मम वि भवं ।

ममापि भवान् ।

**राजा**—कथमिव ?

**विदूषकः**—'एव्वं राअकज्जाणि उज्झिअ तारिसे आउलप्पदेसे

मिति शेषः । खल्विति जिज्ञासायाम् । स्पष्टं कथयेति भावः । भूयोऽपि पृच्छति विदूषकः—**भो वअस्सेति** । 'भो वयस्य ! यद्वेतसः कुब्जलीलां विडम्बयति, तत्किमात्मनः प्रभावेण, उत नदीवेगस्य ?' इति संस्कृतम् । कुब्जलीलाम्—कुब्जः = वक्रस्तस्य लीलां = क्रियां विडम्बयति = अनुकरोति, नम्रीभवतीत्यर्थः । **नदीवेगस्येति** । 'प्रभावेण' इत्यनुषज्यते ।

विदूषको हेतुं दर्शयन्नाह—**एव्वमिति** । 'एवं राजकार्याण्युज्झित्वा तादृशे आकुलप्रदेशे वनचरवृत्तिना त्वया भवितव्यम् । यत्सत्यं प्रत्यहं श्वापदसमुत्सारणैः संक्षोभितसन्धिबन्धानां मम गात्राणामनीशोऽस्मि संवृत्तः । तत्प्रसादयिष्यामि विसर्जितुं माम् एकाहमपि तावद्विश्रमितुम्' इति संस्कृतम् । एवम्, मृगयातिसेवनेन स्वप्नेऽपि राजकार्याण्यस्मरतेत्यर्थः । राजकार्याणि = राजकर्तव्यानि अनुपेक्षणीयानि प्रजारक्षणादीनि । बहुवचनेन बहुविधत्वं द्योत्यते । तादृशे = अनुभवैकवेद्यत्वाद्वर्णयितुमशक्ये आकुलप्रदेशे = सघनवनक्रूरश्वापदसञ्चारदुर्गमे वनचर-

१ जेण तुए ।

वणचरवुत्तिणा तुए होदव्वं। जं सच्चं पच्चहं सावदसमुच्छारणेहिं संखोहिअसंधिबन्धाणं मम गत्ताणं अणीसो म्हि संवुत्तो। त्ता पसादइस्सं विसज्जिदुं मं एक्काहं वि दाव विस्समिदुं।

एवं राजकार्याण्युज्झित्वा तादृशे आकुलप्रदेशे वनचरवृत्तिना त्वया भवितव्यम्। यत्सत्यं प्रत्यहं श्वापदसमुत्सारणैः संक्षोभितसंधिबन्धानां मम गात्राणामनीशोऽस्मि संवृत्तः। तत्प्रसादयिष्यामि विसर्जितुं मामेकाहमपि तावद्विश्रमितुम्।

**राजा**—(स्वगतम्[1]) अयं [2]चैवमाह। ममापि कण्वसुतामनुस्मृत्य मृगयाविक्लवं चेतः। कुतः!

---

वृत्तिना = राजोचितदेहसंस्कारवर्जं वनाद्वनमाहिण्डता। भवितव्यम् = अभूयत। भावे भूते तव्यप्रत्ययः। 'यत्सत्यम्' इदमव्ययम्, सत्यमेवेत्यर्थः। स्वोक्तौ असत्यताशङ्कापरिहारार्थमिदमुक्तम्। 'प्रत्यहम्' इत्यनेन मृगयायाश्चिरकालात्प्रवृत्तत्वं सूच्यते। श्वापदसमुत्सारणैः = व्याघ्रादिहिंस्रजन्तूनामपसारणैः संक्षोभितसन्धिबन्धानाम्—संक्षोभिताः = मृगयावसरे इतस्ततः पलायनप्रसक्त्या व्यथिताः सन्धिबन्धाः = ऊरुमूलादिस्थानानि येषाम्। गात्राणाम् = अवयवानाम्। प्रसादयिष्यामि, मां विसर्जयितुं त्वां प्रीणयिष्यामीति चाटूक्तिः। विश्रमितुं = विश्राममनुभवितुम्। विदूषकोक्तमाकर्ण्य राजा स्वगतं चिन्तयति—**अयं चेति**। अयम् = अर्थान्तरसंक्रमितध्वनिमर्यादया अङ्गीकार्यवचन इत्यर्थः। ममापीत्यत्र अपिशब्दश्चार्थः। अनुस्मृत्येति शकुन्तलास्मरणं चेतसो मृगयाव्यापारशैथिल्ये हेतुः। मृगयाविक्लवं = मृगयाविषये शिथिलादरम्।

चेतसो मृगयाविषये शिथिलादरत्वमेव प्रपञ्चयति—**कुतः!**—

---

१ आत्मगतम्। २ अयमेवाह।

न नमयितुमधिज्यमस्मि शक्तो[1]
धनुरिदमाहितसायकं मृगेषु ।
सहवसतिमुपेत्य यैः प्रियायाः
कृत इव[2]मुग्धविलोकितोपदेशः ॥ ३ ॥

न नमयितुमिति । अधिज्यम् आहितसायकम् इदं धनुः मृगेषु नमयितुं न शक्तोऽस्मि । यैः प्रियायाः सहवसतिमुपेत्य मुग्धविलोकितोपदेशः कृत इव (अस्ति) इत्यन्वयः ।

अधिज्यम् = आरोपितमौर्वीकम् आहितसायकं = संयोजितबाणम् इदं=प्रत्यक्षतः परिदृश्यमानम् धनुः = चापम् । अधिज्यमाहितसायकमिति धनुर्विशेषणाभ्यां राज्ञो मृगयासन्नाहो द्योत्यते । ईदृशमप्यात्मीयं धनुः मृगेषु = हरिणेषु विषये नमयितुं = कर्णान्तमाक्रष्टुम् न शक्तोऽस्मि = न समर्थोऽस्मि । तत्र हेतुमाह—सहेति । यैः = मृगैः प्रियायाः = शकुन्तलायाः सहवसतिं = वने एकत्रवासम् उपेत्य = प्राप्य, कृत्वेत्यर्थः । विद्योपदेशाय प्रियासन्निधौ चिरमुषित्वेति भावः । एतेन मुग्धविलोकनविद्याया गौरवं, तदधिगमस्य चिरकालसाध्यत्वं च द्योत्यते । मुग्धविलोकितोपदेशः—मुग्धानि = स्वभावसुन्दराणि, अनधिगतहावभावानि यानि विलोकितानि = विलोकनानि तेषामुपदेशः कृत इवेत्युत्प्रेक्षा । उपदेशो हि—अज्ञातज्ञापनम् । मुग्धविलोकितलक्षणं यथा भावप्रकाशे—"स्वभावालोकितं मुग्धं भावगर्भमपि च्छलात्" इति । प्रियाया इति द्विर्योज्यम् । सहवसतिमित्यत्र प्रियाया इति षष्ठ्यन्तं, मुग्धविलोकितोपदेश इत्यत्र च पञ्चम्यन्तमवधेयम् ।

अत्रोत्प्रेक्षया प्रियामृगवीक्षयोः साम्यं ध्वन्यते । मृगदर्शनेन प्रियानुस्मरणात्

१ मुत्सहिष्ये । २ लोचनकान्तिसंविभागः ।

**विदूषकः**—(राज्ञो मुखं विलोक्य) अत्तभवं किं वि हिअए करिअ मन्तेदि । अरण्णे मए रुदिअं आसि !

अत्रभवान्किमपि हृदये कृत्वा मन्त्रयते । अरण्ये मया रुदितमासीत् !

---

स्मृतिमदलङ्कारः । मृगैः प्रियासकाशान्मुग्धवीक्षणोपदेशो लब्ध इति कथनेन प्रियया सह मृगाणां गुरुशिष्यभावात्तस्याः पुत्रस्थानीया एते मया न वध्या एवेति धनुर्नमनाशक्तिहेतुरुत्प्रेक्षा च व्यङ्ग्यमर्यादया प्रतीयते । उत्तरार्द्धार्थस्य शक्त्यभावे हेतुत्वेनोपात्तत्वात् काव्यलिङ्गम् । चेतोविक्लवत्वे कारणे प्रस्तुते तत्कार्यस्य धनुर्नमनाशक्तत्वस्योक्तत्वात्पर्यायोक्तम् । पुष्पिताग्रा वृत्तम् ।

विदूषकोक्तिमाकर्ण्य राजा चिन्तयति—'अयमित्थं वदन् मृगयां निषेधति, ममापि च सर्वदा शकुन्तलामेवानुध्यायतो न मृगयायां साभिनिवेशं चेतः । किञ्च यद्यपि मृगयार्थं सज्यं संयोजितबाणमिदं मे धनुः पुरस्तिष्ठति, तथाऽपि कथमहमिदं मृगेषु नमयिष्ये ? यैर्मृगैर्वने मम प्रियया सह चिरमुषित्वा तस्याः सकाशात् मुग्धविलोकितविद्या प्राप्ता, तानेव मृगान् कथमहं लक्ष्यीकरिष्यामि ? मया लक्ष्यीकृतास्ते भयतरलतारं यदा मां द्रक्ष्यन्ति तदाऽनुस्मृतप्रियामुग्धवीक्षणस्य मम कराद्धनुर्बाणाश्च पतिष्यन्ति' इति भावः ॥ ३ ॥

विदूषकोक्तौ—**राज्ञो मुखं विलोक्येति** । अनेन शकुन्तलाचिन्तनासक्तमानसेन राज्ञा प्रतिवचनं न दत्तमिति तेन ज्ञातमिति प्रतीयते । उपालम्भसहितमाह—**अत्तभवं इति**। 'अत्रभवान् किमपि हृदये कृत्वा मन्त्रयते। अरण्ये मया रुदितमासीत्' इति संस्कृतम् । अत्रभवान् = पूज्यः । हृदये कृत्वा=मनसि ध्यात्वा । अरण्ये मया रुदितमासीत्, मद्वचनमरण्यरोदनमिव व्यर्थमासीदित्यर्थः । चित्तव्याक्षेपात्

**राजा**—( सस्मितम् ) किमन्यत् ? अनतिक्रमणीयं मे सुहृद्वाक्यमिति स्थितोऽस्मि ।

**विदूषकः**—चिरं जीअ ।

चिरं जीव । ( इति [1]गन्तुमिच्छति । )

**राजा**—वयस्य ! तिष्ठ । सावशेषं मे वचः ।

**विदूषकः**—आणवेदु भवं ।

आज्ञापयतु भवान् ।

**राजा**—विश्रान्तेन भवता ममाप्यनायासे कर्मणि सहायेन भवितव्यम् ।

---

मद्वचनं न शृणोषीत्युपालम्भः । अरण्ये रुदितमिति लोकोक्तिः । राजोक्तौ—**सस्मितमिति** । त्वच्चित्तानुवर्तनं मया क्रियते इति विदूषकं ज्ञापयितुं स्मितेन = मन्दहास्येन सहितमित्यर्थः । **किमन्यदिति** । मन्त्रयामीति विपरिणामेनानुषङ्गः । त्वदुक्तमेव विचारयामीति भावः । अनतिक्रमणीयम् = अनुल्लङ्घनीयम् । इति स्थितोऽस्मि, अनेन हेतुना मृगयोद्यमं परित्यज्य तूष्णीं स्थितोऽस्मीत्यर्थः । विदूषकोक्तौ—**चिरञ्जीवेति** । विश्रमावसरलाभाच्चापलसूचकमिदमाशीर्वचनं हास्याङ्गम् । विदूषकोक्तौ—**आणवेदु भवं इति** । 'आज्ञापयतु भवान्' इति संस्कृतम् । राजोक्तस्य 'सावशेषं मे वचः' इत्यस्य उत्तरत्वेन 'किं तत् कथय' इति वक्तव्ये चाटुकारित्वेन 'आज्ञापयतु भवान्' इत्युक्तवान् विदूषकः ।

शकुन्तलासमागमोपायं चिन्तयन् राजा आह—**विश्रान्तेनेति** । विश्रान्तेन = अपनीतमृगयापरिश्रमेण । अनायासे = आयासरहिते, मृगयाव्यतिरिक्ते

---

१ इत्युत्थातुम् ।

**विदूषकः**—किं मोदअखण्डिआए[1] ? तेण हि अअं सुगहीदो खणो ।

किं मोदकखण्डिकायाम् ? तेन ह्ययं सुगृहीतः क्षणः ।

**राजा**—यत्र वक्ष्यामि । कः कोऽत्र भोः ?

(प्रविश्य)

**दौवारिकः**—(प्रणम्य) आणवेदु भट्टा ।

आज्ञापयतु भर्ता ।

**राजा**—रैवतक ! सेनापतिस्तावदाहूयताम् ।

---

इत्यर्थः । विदूषकः पुनरपि हास्यव्यञ्जकं जगाद—**किं इति** । 'किं मोदकखण्डिकायाम् ? तेन हि अयं सुगृहीतः क्षणः' इति संस्कृतम् । मोदकखण्डिकायाम्—खण्डनं खण्डिका, भक्षणार्थं ग्रासपरिमाणं मोदकानां शकलीकरणमित्यर्थः, तस्मिन् । तेन हि अयं सुगृहीतः क्षणः—मोदकभक्षणं चेदनुजानासि, तर्हि स्वीकृतमिदं निमन्त्रणमित्यर्थः । राजोक्तौ—**यत्र वक्ष्यामीति** । वक्ष्यामीति लृटा विवक्षितस्य गोप्यत्वाद्विजने वक्तव्यत्वं द्योत्यते ।

शकुन्तलावृत्तान्तं विवक्षुः सोत्कण्ठो राजा तस्य देशस्य विविक्ततां सम्पादयितुमुपक्रमते—**कः कोऽत्रेति** । 'कः कः' इति वीप्सा सम्भ्रमद्योतिका । 'भोः' इति सामान्येन परिजनं प्रति सम्बोधने । वर्तते, 'स आगच्छतु' इति शेषः । द्वारे नियुक्तो दौवारिकः । दौवारिकोक्तौ—**आणवेदु भट्टा इति** । 'आज्ञापयतु भर्ता' इति संस्कृतम् । स्वामिभक्तितदाज्ञापालनायौत्सुक्यद्योतकोऽयं समुदाचारः । "नीचेषु प्राकृतं भवेत्" इत्युक्तेर्दौवारिकस्य प्राकृतं पाठ्यम् । "भट्टेति चाधमैः" इत्युक्तेश्च 'भर्ता' इत्युक्तिः । रैवतकेति दौवारिकनाम । सेनापतिलक्षणं यथा—

---

१ खञ्जिआए ।

**दौवारिकः**—तह। (इति निष्क्रम्य सेनापतिना सह पुनः प्रविश्य) एसो 'अण्णावअणुक्कण्ठो भट्टा इदो दिण्णदिट्ठी एव्व चिट्ठदि। उवसप्पदु अज्जो।

तथा। एष आज्ञावचनोत्कण्ठो भर्ता इतो दत्तदृष्टिरेव तिष्ठति। उपसर्पत्वार्यः।

**सेनापतिः**—(राजानमवलोक्य स्वगतम्) दृष्टदोषाऽपि स्वामिनि मृगया केवलं गुण एव संवृत्ता। तथा हि देवः—

अनवरतधनुर्ज्यास्फालनक्रूरपूर्वं[२]

रविकिरणसहिष्णु स्वेदलेशैरभिन्नम्।

---

शीलवान्सत्त्वसम्पन्नस्त्यक्तालस्यः प्रियंवदः।

पररन्ध्रान्तराभिज्ञो यात्राकालविशेषवित्॥

अस्त्रशास्त्रादितत्त्वज्ञो लोके चावक्रतां गतः।

देशवित्कालविच्चैव भवेत्सेनापतिर्गुणैः॥ इति।

'निष्क्रम्य' इत्यादि अविलम्बद्योतकम्। **एसो इति**। 'एष आज्ञावचनोत्कण्ठो भर्ता इतो दत्तदृष्टिरेव तिष्ठति। उपसर्पत्वार्यः' इति संस्कृतम्। आज्ञावचनोत्कण्ठः—आज्ञारूपे वचने उत्कण्ठा = त्वरा यस्य सः। दृष्टदोषा—दृष्टः दोषो यस्यां सा। 'स्त्रियोऽक्षा मृगया पानम्' इत्यादिना, 'न मृगयाभिरतिर्न दुरोदरम्' इत्यादिना च शास्त्रेण लोकतश्च दृष्टदोषेत्यर्थः। विशेषमाह—**स्वामिनीति**। दोषोऽप्याश्रयभेदाद्गुणो भवतीत्यर्थः। स्वामिनि मृगया न केवलं दोषाभावरूपा, अपि तु गुणरूपा संवृत्तेति भावः।

स्वामिनि मृगयाया गुणत्वं समर्थयति—**तथा हि देवः—अनवरतेत्या-**

---

१ आलावदिणकणो। २ वर्ष्मा।

अपचितमपि गात्रं व्यायतत्वादलक्ष्यं
गिरिचर इव नागः प्राणसारं बिभर्ति ॥ ४ ॥

दिना । गिरिचरः नाग इव देवः अनवरतधनुर्ज्यास्फालनक्रूरपूर्वं रविकिरणसहिष्णु स्वेदलेशैरभिन्नमपचितमपि व्यायतत्वादलक्ष्यं प्राणसारं गात्रं बिभर्ति इत्यन्वयः ।

"देवः स्वामीति नृपतिर्भृत्यैः" इत्युक्त्यनुसारेण देव इति भृत्यानां राजानं प्रत्युक्तिर्नाट्याचारः । गिरिचरः—गिरौ = पर्वते चरति = विहरतीति तथाविधः पर्वत-विहारी नाग इव = गज इव देवः = स्वामी । अनवरतधनुर्ज्यास्फालनक्रूरपूर्वम्—अनवरतं = निरन्तरं यत् धनुर्ज्यायाः = चापमौर्व्याः आस्फालनं = ताडनं तेन क्रूरः = कठिनः पूर्वः = पूर्वभागो यस्य । "क्रूरं भयङ्करं ज्ञेयं क्रूरौ कठिननिर्दयौ" इति धरणिः । अनेन सर्वदा मृगयोद्युक्तत्वं तेन शरीरस्य क्लेशसहत्वं च सूच्यते । रविकिरणसहिष्णु—रविकिरणानां = सूर्यतेजसां सहिष्णु = अभ्यासबलात् सहन-शीलम्, आतपेऽप्यक्लान्तमित्यर्थः । अनेन दुःखसहिष्णुत्वं सूच्यते । स्वेदलेशैः = श्रमवारिबिन्दुभिः अभिन्नम् = असम्पृक्तम् । "भिन्नं विदीर्णे सम्पृक्ते" इति कोशः । स्वेदैस्तु न मिश्रम्, तल्लेशैरपि न संपृक्तमित्यर्थः । अनेन श्रमजयित्वं सूच्यते । अपचितं = कृशम् । अपीति विरोधे । व्यायतत्वात् = मृगयाव्यापाररूपव्याया-मात् अलक्ष्यम् = अपचितत्वेन लक्षयितुमशक्यम् । अग्रे कविः स्वयं वक्ष्यति च—'संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते' इति । अनेन विभक्तघनगा-त्रत्वं सूच्यते । प्राणसारम्—प्राणेन = बलेन सारं = स्थिरम् । अनेन ओजस्वित्वं सूच्यते । गात्रं = वपुः बिभर्ति = धारयति ।

गजपक्षेऽपि इमानि विशेषणानि योजयितुं शक्यन्ते । तथा हि—धनुर्ज्या-स्थानीयस्य दन्तद्वयस्य आस्फालनं = गिरितटाघातः तेन क्रूरो = भयङ्करः पूर्वः =

( उपेत्य ) जयतु स्वामी । गृहीतश्वापदमरण्यम् । किमद्याप्यवस्थीयते[1] !

राजा—मन्दोत्साहः[2] कृतोऽस्मि मृगयापवादिना माधव्येन ।

पूर्वभागो यस्य तत् । यद्वा धनुर्ज्यायां = प्रियालद्रुमे, "धनुर्ज्या स्यात् प्रियालद्रौ" इति वैजयन्ती; इति केचित् । शेषं समानम् ।

अत्रोक्तानां वपुर्गुणानामुत्थानोपयोगित्वात् मृगयायां गुणत्वम् । परिकरः, श्लेषः, उपमा चालङ्काराः । अत्र हर्षाद्युपस्कृता राजविषयिका सेनापतिगता रतिर्व्यज्यते । राजवपुरपचयो मृगयाव्यापारजन्य इति सेनापतिरब्रवीत् , किन्तु स शकुन्तलाविषयकौत्सुक्यमूलक इत्यपि केचन रसिकाः । मालिनी वृत्तम् ।

सेनापतिस्तथाविधं राजानं दृष्ट्वा स्वगतं चिन्तयति—'अयमस्माकं देवः सर्वदा राजोपचारानुभवाभ्यस्तोऽपि संप्रति मृगयाप्रसङ्गेन ईषत्कृशमपि निरन्तरधनुर्मौर्वीसमाकर्षणसञ्जातकिणविभूषणं पाणिं बिभ्रत् सूर्यातपसञ्चरणेऽप्यक्लान्तः स्वेदबिन्दुमप्यधारयन् प्रांशुत्वात् श्रमकर्कशशरीरत्वाच्च अलक्ष्यमाणकार्श्यः प्राणबलेन दृढं वपुर्धारयति आरण्यक गज इव । आरण्यको हि गजो राजानुजीविगज इव न घृतपूर्णान् मोदकान् लभते, किन्तु वन्यमूलफलाशनः कृशशरीर एव नागरिकगजापेक्षया महाप्राणतां बिभर्ति, तथाऽयमपि' इति भावः ॥ ४ ॥

**उपेत्येति** । आज्ञावचनोत्कण्ठया समीपं प्राप्येत्यर्थः । 'जयतु' इत्याद्याचारः स्वागमनसूचनाय । अथ राज्ञो हृदयमजानन् तं मृगयायै प्रोत्साहयति—**गृहीतेति** । गृहीताः = शोधिताः श्वापदाः = हिंस्राः यस्मिन् । किमिति प्रश्ने । अद्यापि = वनग्रहणे कृतेऽपि अवस्थीयते = मृगयां विहाय तूष्णीं स्थीयते ! त्वर्यतामिति भावः । अथ राजा आत्मनस्तथावस्थानहेतुमाह—**मन्दोत्साह इति** । मन्दः = शिथिलः

१ तत्किमन्यदनुष्ठीयताम् । २ भग्नोत्साहः ।

**सेनापतिः**—( जनान्तिकम् ) सखे ! स्थिरप्रतिबन्धो भव। अहं तावत्स्वामिनश्चित्तवृत्तिमनुवर्तिष्ये। ( प्रकाशम् ) प्रलपत्वेष[1] वैधेयः। ननु प्रभुरेव निदर्शनम्।

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं[2] वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः।

---

उत्साहः = मृगयाविषयकः सन्नाहो यस्य। मृगयापवादिना = आखेटकनिन्दकेन। "अपवादौ तु निन्दाऽऽज्ञे" **इत्यमरः**। अत्र अनेनेत्यनुक्त्वा माधव्येनेति नामग्रहणेन तद्वचनस्य प्रामाणिकत्वं ग्राह्यत्वं च सूच्यते। किञ्च आत्मनः शकुन्तलाविषयकरागगोपनेन अवहित्थाख्यो भावो व्यज्यते।

राजोक्तमाकर्ण्य विश्रमावसरलाभेन मनसि हृष्यन् सेनापतिर्विदूषकमाह—**सखे इति**। अनेन आदरद्योतकेन सम्बोधनेन 'त्वमिव अहमपि विश्रमोत्सुकोऽस्मि, त्वया मध्ये न विरन्तव्यम्' इति प्रार्थना द्योत्यते। स्थिरप्रतिबन्धो भव = नैसर्गिकेण चापलेन पुनरपि राज्ञो मतं नानुसरेति भावः। स्वकर्तव्यमाह—**अहं तावदिति**। स्वामिन इति कथनेन तच्चित्तवृत्तेरवश्यमनुसरणीयत्वं सूच्यते। अनुवर्तिष्ये, भृत्यत्वादिति भावः। राजानमाह—**प्रलपत्विति**। प्रलपतु = निरर्थकं जल्पतु। वैधेयः = मूढः। अनेन तस्य गौरवाभावस्तद्वचनस्य अकरणीयत्वं च सूच्यते। प्रभुरेव निदर्शनम् = महाराज एव दृष्टान्तः। एवकारेण दृष्टान्तान्तरमनपेक्षणीयमिति सूच्यते। मृगयागुणानां महाराजे दर्शनादिति भावः।

मृगयागुणानाह—**मेदश्छेदकृशोदरमिति**। वपुः मेदश्छेदकृशोदरं लघु उत्थानयोग्यं भवति। भयक्रोधयोः सत्त्वानां विकृतिमच्चित्तमपि लक्ष्यते। चले

---

१ त्वेष। २ त्युत्साहयोग्यं।

उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥५॥

लक्ष्ये इषवः सिध्यन्ति । यत् धन्विनां स च उत्कर्षः, मृगयां मिथ्यैव व्यसनं वदन्ति । ईदृग्विनोदः कुत इत्यन्वयः ।

वपुः = शरीरं मेदः = चतुर्थो धातुः, स च मधुराद्याहारेण वर्धते, तद्वृद्धौ "अल्पेऽपि चेष्टिते श्वासाः" इत्यादय आयुर्वेदोक्ता दोषाः, स एव च 'वसा' इत्युच्यते । तस्य छेदेन = अल्पीभावेन कृशम् उदरं यस्य तत् अत एव लघु = लाघवयुक्तम्, तत एव उत्थानस्य = अनालस्यलक्षणस्योद्योगस्य योग्यम् = आश्रयभूतं भवति । "उद्योगे च तथोत्थानम्" इति धरणिः । भयक्रोधयोः = भीतिकोपाख्ययोर्विकारयोर्निमित्तभूतयोः सत्त्वानां = सिंहव्याघ्रादिजन्तूनां विकृतिमत् = विकृतियुक्तं चित्तं = चेतः, 'भये जन्तोरीदृशं चित्तम्, क्रोधे च ईदृशम्' इति इङ्गिताकाराभ्यां ज्ञायत इत्यर्थः । उक्तं च रघुवंशे—"भयरुषोश्च तदिङ्गितबोधनम्" इति । लक्ष्यते = लक्षणैर्ज्ञायते । चले = चञ्चले, मृगादिरूपे लक्ष्ये = वेध्ये इषवः = भल्लाद्यायुधानि सिध्यन्ति = फलन्ति । रघुवंशेऽपि— "परिचयं चललक्ष्यनिपातने" इति । यत् = यस्मात् कारणात् धन्विनां = धानुष्काणां स च = यत् चले लक्ष्ये इषवः सिध्यन्ति तद्रूपः । चकारस्तथाविधफलान्तरसमुच्चायकः । 'सः' इति पुंस्त्वं विधेयानुरोधात् । उत्कर्षः = धनुर्विद्यापरिपाकविचेष्टितरूपा उन्नतिः । मृगयां मिथ्यैव व्यसनं वदन्ति—नीतिशास्त्रज्ञाः 'मृगया-व्यसनम्' इति मिथ्यैव वदन्तीत्यर्थः । वस्तुतो मृगया नानासद्गुणाधानहेतुभूतेत्युपादेयैवेति भावः । ईदृक् = निरुक्तगुणवत्तया एतत्सदृशः, हितकारीति यावत् । विनोदः—विनुद्यते अनेन काल इति विनोदः = विहारः, क्रीडा वा । कुत इत्याक्षेपे ।

विदूषकः—अत्तभवं पकिदिं आपण्णो । तुमं दाव अडवीदो

न कुत्रापीत्यर्थः । तदुक्तं **कौटिल्येन**—"मृगयायां व्यायामः, श्लेषपित्तस्वेदनाशः, चले स्थिरे च लक्ष्ये परिचयः, क्रोधभयस्थानेङ्गितेषु च चित्तज्ञानम्" इत्यादि । **दण्डिनाऽपि दशकुमारचरिते** अष्टमोच्छ्वासे कौटिल्यानुसारेणैव मृगयागुणा वर्णिताः ।

अत्र पूर्ववाक्यार्थानां मृगयाव्यसनाभावे हेतुत्वेनोपात्तत्वात् काव्यलिङ्गमलङ्कारः, क्रियासमुच्चयश्च । सेनापतिगतो मृगयोत्साहो व्यज्यते । शार्दूलविक्रीडितं वृत्तम् ।

सेनापतिर्मृगयागुणान् वर्णयति—'मृगयायां हि धावनेतस्ततोभ्रमणादिव्यापारस्य सातत्येन वसायाश्छेदात् कृशमत एव लघु सर्वथोद्योगसहिष्णु शरीरं भवति, लक्ष्यवेधावसरे स्वबाणपातभीतानां पलायमानानां मृगाणां भीतिभावाभिव्यक्तिजनकानीङ्गितानि लक्षयितुं शक्यन्ते, एवमेव पुरतो मुखं व्यादाय दुर्दर्शदंष्ट्राङ्कुशप्रदर्शनभैरवं समुत्पतिष्णोः कण्ठीरवस्य कण्ठं लक्ष्यीकृत्य भल्ले समुत्क्षेप्यमाणे सति तदाघातप्रस्फुरत्कोपप्रज्वलितस्य श्रवणभैरवं गर्जतः क्रोधपारुष्येङ्गितानि सुखमवगन्तुं शक्यन्ते, उत्थायोत्थाय निर्भरं धावति परित्रस्ते मृगेऽपि लक्ष्यीकृताङ्गवेधकौशलं च सिध्यति । इदमेव हि धानुष्कतायाः फलम् । एवं सत्यपि "स्त्रियोऽक्षा मृगया पानम्" इत्यादिना नीतिकोविदाः व्यर्थमेव मृगयां निषेधन्ति । मृगयाव्यापारे सक्तस्य तु दिनं कथमतीतमिति नैव प्रतीयते, चित्तं सर्वथोत्साहपरिपूर्णं भवति । नेदृशः क्वापि मनोविनोदः । तस्मादवश्यकर्तव्या मृगया' इति भावः ॥५॥

विदूषको राजानमात्मानुकूलमालक्ष्य स्वोक्तस्यैवोपादेयतां वदन् स्वविरोधिनं सेनापतिं भीषयति—**अत्तभवं इति** । 'अत्रभवान् प्रकृतिमापन्नः । त्वं तावदटवीतोऽटवीमाहिण्डमानो नरनासिकालोलुपस्य जीर्णर्क्षस्य कस्यापि मुखे पतिष्यसि'

अडवीं आहिण्डन्तो णरणासिआलोलुवस्स जिण्णरिच्छस्स कस्स वि मुहे [1]पडिस्ससि।

अत्रभवान्प्रकृतिमापन्नः। त्वं तावदटवीतोऽटवीमाहिण्डमानो नरनासिकालोलुपस्य जीर्णर्क्षस्य कस्यापि मुखे पतिष्यसि।

राजा—भद्र सेनापते! आश्रमसंनिकृष्टे स्थिताः[2] स्मः। अतस्ते वचो नाभिनन्दामि। अद्य तावत्—

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु।

इति संस्कृतम्। कथमपि = मद्वचनबलेन प्रकृतिं = मदुक्तसज्जनोचितमार्गानुसरणरूपं स्वभावमापन्नः = प्राप्तः। मृगयातो निवृत्त इत्यर्थः। आहिण्डमानः = गच्छन्। नरनासिकालोलुपस्येति भल्लूकस्वभावोक्तिः। भल्लूका हि स्वपुरःसमापतितानां नराणां नासिकामाच्छिद्य खादन्तीति प्रसिद्धिः। जीर्णर्क्षस्य = वृद्धभल्लूकस्य। लोलुपत्वातिशयद्योतनार्थं जीर्णपदम्। वार्धके लोलुपता वर्धते इति वृद्धस्वभावोक्तिः। वृद्धभल्लूकस्तव नासिकां भक्षयतु इति शापः। राजा मृगयापरिहारस्य कारणान्तरं निर्दिशन् कथयति—भद्र सेनापते! इति। भद्रेत्युक्तिः सेनापतिवचनावमाननजन्यतदीयखेदापनोदार्था। आश्रमसन्निकृष्टे स्थिताः स्मः = आश्रमसन्निकर्षे मृगयाक्रीडनेन आश्रमस्य बाधा भवेदित्यर्थः।

मृगयोपसंहारमादिशन्नाह—अद्य तावत्—गाहन्तामित्यादि। महिषाः शृङ्गैः मुहुस्ताडितं निपानसलिलं गाहन्ताम्। मृगकुलं छायाबद्धकदम्बकं सत् रोमन्थमभ्यस्यतु। वराहपतिभिर्विश्रब्धं पल्वले मुस्ताक्षतिः क्रियताम्। इदमस्मद्धनुश्च शिथिलज्याबन्धं सत् विश्रामं लभताम् इत्यन्वयः।

१ णिबडिदो होहि। २ स्थितोऽस्मि।

विश्रब्धं[1] क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥६॥

महिषाः—बहुवचनेन पुत्रमित्रकलत्रादयस्तद्वर्ग्या आक्षिप्ताः सूच्यन्ते । शृङ्गैर्मुहुः = वारं वारं ताडितम् = उत्फालितं निपानसलिलम् = आहावजलम्, "आहावस्तु निपानं स्यादुपकूपजलाशये" इत्यमरः । गाहन्ताम् = आलोडयन्तु । सदा प्रज्वलितस्य जाठराग्नेः शान्तये महिषाः जलावगाहनं कुर्वन्तीति प्रसिद्धिः । शृङ्गैर्मुहुस्ताडनं तावत् मुखलग्नानां दंशादीनां निवारणाय । मृगकुलं=हरिणानां समूहः छायाबद्धकदम्बकम्—छायासु = अनातपेषु बद्धं=रचितं कदम्बकं = मण्डलाकारेणावस्थानं यैस्तादृशं सत् रोमन्थम् = उद्गिलितशष्पादिकवलचर्वणम् अभ्यस्यतु = मुहुर्मुहुः करोतु । पूर्वं मृगयाप्रसङ्गे पलायनपरैस्तैर्विस्मृतो रोमन्थ इदानीं पुनरपि निःशङ्कं क्रियतामित्यर्थः । वराहपतिभिः = सूकरश्रेष्ठैर्विश्रब्धं = निःशङ्कं पल्वले = अल्पसरोवरे । "वेशन्तः पल्वलं चाल्पसरः" इत्यमरः । मुस्ताक्षतिः = मुस्ताख्यकन्दग्रहणाय तस्योत्खननम् । 'नागरमोथा' इति भाषायां प्रसिद्धः । क्रियताम् = विधीयताम् । वराहाः प्रायः कर्दमप्राये अल्पजले सरोवरे एव औष्ण्यातिरेकाद्दिवसं यापयन्तीति प्रसिद्धिः । मुस्ताकन्दश्च तेषां सातिशयं प्रियो भवतीति च । उक्तार्थेषु हेतुं दर्शयति—**विश्राममिति** । इदम् = मृगयार्थमारोपितज्यम् अस्मद्धनुश्च = अस्मदीयं चापं च । चकारः समुच्चये । शिथिलज्याबन्धम्—शिथिलः = निरन्तरमाकर्षणात् शैथिल्यमापन्नः, किंवा मृगयाप्रसङ्गविरामात् शिथिलीकारितः ज्याबन्धः = मौर्वीबन्धो यस्य तत् तादृशं सत् विश्रामं लभताम् = अव्यापारं

१ विश्रब्धैः ।

सेनापतिः—'यत्प्रभविष्णवे रोचते ।

तिष्ठतु । अत्र महिषादीनां जलावगाहनादिव्यापारकथनेन तद्धेतुभूतो मृगयोपसंहारः प्रतीयते । सद्यः संह्रियतां मृगयेत्यर्थः ।

अत्र अप्रस्तुतप्रशंसा, कार्यकारणयोर्द्वयोरपि प्रस्तुतत्वे विवक्षिते तु प्रस्तुताङ्कुरः, महिषादिस्वभाववर्णनात् स्वभावोक्तिः, क्रियासमुच्चयः, काव्यलिङ्गं चालङ्काराः । कार्यकारणयोः समकालं वर्णनात् अतिशयोक्तिश्च । शार्दूलविक्रीडितं वृत्तम् ।

मृगयोपसंहारमादिशन् राजा प्राह—'पूर्वं मृगयाप्रसङ्गे वनग्रहणकोलाहलेन विक्षुब्धाः ये महिषाः पलायन्त, ते एव सम्प्रति उपकूपजलाशयेषु शृङ्गैर्जलोत्फालनात् दंशादीन् निवारयन्तो निःशङ्कं जलावगाहक्रीडां कुर्वन्तु । अस्मद्बाणपातशङ्कया उत्प्लुत्योत्प्लुत्य पलायमानाः परित्यक्तरोमन्थाः मृगाः मध्यन्दिनमध्यपुञ्जीभूतच्छायाशीतलेषु तरूणां तलेषु निःशङ्कमवस्थिताः सन्तो निगीर्णकवलचर्वणकलया दृढं परिचयं कुर्वन्तु । एवमेव सूकरश्रेष्ठा अपि निःशङ्कचेतसः पल्वलजलेषु अवगाहमवगाहं मुस्ताकन्दखनने प्रवर्तन्ताम् । चिरं नैकविधदानवव्याघ्रसिंहसूकरवधव्यापृतमत एवारोपितमौर्वीकमस्मदीयं धनुरिदानीं गुणावरोपणात् अव्यापारतात्मकं विश्रामं लभताम् । अतः संह्रियतां मृगयासन्नाहः' इति भावः ॥ ६ ॥

अथ मृगयानिवृत्तिमिच्छन्नपि सेनापतिः राजाज्ञायामेव तद्धेतुतां दर्शयिष्यन्नाह—**यदिति** । प्रभविष्णवे = प्रभुताशक्तिसम्पन्नाय, महाराजायेति यावत् । अनेन तदादेशस्यानुल्लङ्घनीयत्वं द्योत्यते । यद्रोचते, तत्तथेति शेषः । "रुच्यर्थानाम्" इति संप्रदानत्वाच्चतुर्थी । पूर्वंगतान् = वनग्रहणार्थं मदाज्ञया पूर्वं प्रेषितान् वनग्राहिणः

१. यथा ।

**राजा**—तेन हि निवर्तय [1]पूर्वगतान्वनग्राहिणः। यथा न मे सैनिकास्तपोवनमुपरुन्धन्ति तथा निषेद्धव्याः। पश्य—

शमप्रधानेषु तपोधनेषु
गूढं हि दाहात्मकमस्ति तेजः।
स्पर्शानुकूला इव सूर्यकान्ता-
स्तदन्यतेजोऽभिभवाद्वमन्ति[2] ॥ ७ ॥

= वनशोधकान्। कर्तव्यान्तरमप्याह—**यथेति**। येन प्रकारेणेत्यर्थः। तपोवनमित्यनेन भयहेतुत्वं प्रदर्श्यते। निषेद्धव्याः = मदाज्ञया तैस्तपोवनोपरोधः परिहर्तव्य इत्याज्ञाप्या इत्यर्थः।

तपोवनोपरोधनिषेधे हेतुमाह—**पश्य—शमप्रधानेष्विति**। शमप्रधानेषु तपोधनेषु दाहात्मकं तेजः गूढमस्ति। हि स्पर्शानुकूलाः सूर्यकान्ता इव अन्यतेजोऽभिभवात् तत् (ते) वमन्ति इत्यन्वयः।

शमः=शान्तिरेव प्रधानं=निसर्गो येषां तेषु, अत एव तप एव धनं=जीवनसर्वस्वं येषां तेषु दाहात्मकं = दाहजनकम्, लक्षणया दाहस्वभावं शीघ्रकार्यकारित्वफलम् तेजः=तपःसामर्थ्यसञ्चितो ब्रह्मवर्चसात्मको बलविशेषः गूढं=गुप्तं यथा स्यात्तथा, अन्यजनैरदृश्यमित्यर्थः। अस्ति। शमप्रधानेष्विति तेजसो गूढत्वे हेतुः। अनेन तपस्विनामनुग्रहपर एव स्वभाव इति द्योत्यते। तपोधनेष्वित्यत्र तपसि धनत्वारोपकरणेन ऋषीणां तदेकार्जनतत्परत्वं, तेन तत्तपसश्चिरसञ्चितत्वं, तन्मूलकं तेषां निग्रहानुग्रहसामर्थ्यं च व्यज्यते। हि=यस्मात् स्पर्शानुकूलाः = सुखकराः, शीतला इति यावत्। सूर्यकान्ता इव = सूर्यसन्निधानेन अग्न्युद्गारिणो मणिविशेषा इव

१. पुरोगतान् धनुर्ग्राहिणः। २. दहन्ति।

**सेनापतिः**—¹यदाज्ञापयति स्वामी ।

**विदूषकः**—धंसदु दे उच्छाहवुत्तन्तो ।

अन्यतेजोऽभिभवात्—अन्यस्य अन्यद्वा यत् तेजः = बलं तस्य अभिभवः = पराभवः, अभितो भवनं वा तस्मात्, अन्यजनकृतबलात्कारजन्यकोपप्रज्वलनात्, परितः सूर्यकिरणसंपातेन परितापप्राचुर्याच्चेत्यर्थः । तत् = दाहात्मकं तेजः ते = तपोधना ऋषयः, सूर्यकान्ताश्च वमन्ति=प्रकटयन्ति, उद्गिरन्ति च । अत्र वमनेन प्रकाशनं लक्ष्यते । तस्य अबुद्धिपूर्वकत्वात्प्रतीकारानर्हत्वं व्यङ्ग्यम् । ऋषीणां शापायुधत्वे प्रमाणं यथा **महाभारते**—"मन्युप्रहरणा विप्रा न विप्राः शस्त्रपाणयः" इति ।

उत्तरवाक्यार्थस्य पूर्ववाक्यार्थे हेतुत्वात् काव्यलिङ्गं श्लेषोत्थापिता उपमा चालङ्काराः । शङ्काऽभावो व्यङ्ग्यः । 'वमन्ति' इति प्रयोगस्य लाक्षणिकत्वात्तस्य अश्लीलत्वं न शङ्क्यम् । यथोक्तं **दण्डिना**—"निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् । अतिसुन्दरम्" इति । इन्द्रवज्रोपेन्द्रवज्रात्मकमुपजातिवृत्तम् ।

स्पर्शे सति शीतलाः प्रतीयमानाः सूर्यकान्ता यथा सूर्यतेजःसंपातेन स्वान्तःस्थितमग्निं बहिरुद्गिरन्ति, तथा स्वभावतः शमप्रधानत्वेन अनुग्रहपरतया सर्वदा उपगम्या अपीमे ऋषयः परकृतबलात्कारसंक्षुब्धचेतसः स्वान्तःस्थितं चिरतपोबललब्धं परनिग्रहसामर्थ्यं सद्यः प्रकटय्य निगृह्णन्ति परानिति तदुपरोधः तदालयोपरोधश्च सर्वथा परिहर्तव्यः, इति भावः ॥ ७ ॥

**धंसदु इति** । 'ध्वंसतां ते उत्साहवृत्तान्तः' इति संस्कृतम् । विदूषकोक्तिरियम् । ते = सेनापतेः उत्साहवृत्तान्तः = मृगयागुणवर्णनेन स्वामिनं तत्रोत्साह-

१. यथा ।

ध्वंसतां ते उत्साहवृत्तान्तः ।

( निष्क्रान्तः सेनापतिः । )

**राजा**—( परिजनं विलोक्य ) अपनयन्तु भवन्तो मृगयावेषम् । रैवतक ! त्वमपि स्वं नियोगमशून्यं कुरु ।

**परिजनः**—जं देवो आणवेदि ।

यद्देव आज्ञापयति । ( इति निष्क्रान्तः । )

**विदूषकः**—किदं भवदा णिम्मच्छिअं । संपदं एदस्सिं पादवच्छाआए विरइदलदाविदाणदंसणीआए आसणे णिसीददु भवं, जाव अहं वि सुहासीणो होमि ।

---

यितुं प्रवर्तितो वार्तालाप इत्यर्थः । ध्वंसताम् = नश्यतु । विदूषकस्य स्वपक्षविजय-सूचकः परिहासोऽयम् । परिजनम् = पूर्वं राज्ञः प्रवेशावसरे 'ततः प्रविशति यथानिर्दिष्टपरिवारो राजा' इत्यनेन 'परिवार'शब्देन सूचितं यवन्याद्यनुचरवृन्दम् । परिजनं प्रति 'अपनयन्तु भवन्तो मृगयावेषम्' इति कथनेन राज्ञा स्वयं मृगयावेषो न धृत आसीदिति व्यज्यते । नियोगम् = द्वारदेशरक्षणरूपं स्वाधिकारम् । अशून्यम् = सम्पन्नम् । जं देवो आणवेदोति । 'यद्देव आज्ञापयति' इति संस्कृतम् । तत्कुर्म इति शेषः । मृगयावेषमपनयाम इत्यर्थः ।

अथ सुखासिकां, राज्ञा सह स्वैरालापं च वाञ्छन् विदूषको वदति—किदं भवदा इति । 'कृतं भवता निर्मक्षिकम् । साम्प्रतमेतस्यां पादपच्छायायां विरचित-लतावितानदर्शनीयायामासने निषीदतु भवान्, यावदहमपि सुखासीनो भवामि' इति संस्कृतम् । निर्मक्षिकम् = मक्षिकाणामभावो निर्मक्षिकम्, सर्वेषामप्यपग-मादत्यन्तं जनराहित्यमित्यर्थः । मक्षिका अप्यत्र न सन्तीत्यतिशयोक्तिः । विरचित-लतावितानदर्शनीयायाम्—विरचितेन = कृतेन लतावितानेन = वल्लीचन्द्रातपेन

कृतं भवता निर्मक्षिकम् । सांप्रतमेतस्यां पादपच्छायायां विरचितलतावितान-दर्शनीयायामासने निषीदतु भवान्, यावदहमपि सुखासीनो भवामि ।

**राजा**—गच्छाग्रतः ।

**विदूषकः**—एदु भवं ।

एतु भवान् ।

( इत्युभौ परिक्रम्योपविष्टौ । )

**राजा**—माधव्य ! अनवाप्तचक्षुःफलोऽसि, येन त्वया दर्शनीयं न दृष्टम् ।

**विदूषकः**—णं भवं अग्गदो मे वट्टदि ।

ननु भवानग्रतो मे वर्तते ।

---

दर्शनीयायां = रमणीयायाम् । यावदहमपि सुखासीनो भवामि—कण्डितसन्धिरहं क्षणमपि उपवेशनं विना स्थातुं न शक्नोमि, तवोपवेशनेन विना ममोपवेशनमनुचितमिति त्वं शीघ्रमुपविशेति भावः । विदूषकोक्तौ—एदु भवं इति । 'एतु भवान्' इति संस्कृतम् । एतु भवानित्याचारः ।

अथ नर्मसचिवेन सह सुखासीनो राजा शकुन्तलामेव ध्यायन् अत्यन्तमुत्कण्ठितस्तल्लाभोपायं चिन्तयन् तद्विषयिणीं कथां प्रस्तौति—**माधव्येति** । संबोधनेन विश्रम्भातिशयो रहस्यनिवेदनार्हत्वं च सूच्यते । अनवाप्तचक्षुःफलः = चक्षुःफलं न लब्धवान् इत्यर्थः । तत्र हेतुमाह—**येनेति** । येन = यस्मात् । विदूषकस्तदाशयमविदन्निव स्वानुगुणं वदति—**णं इति** । 'ननु भवान् अग्रतो मे वर्तते' इति संस्कृतम् । नन्वित्यनुवादे । दर्शनीय इति शेषः । दर्शनीयतमं त्वामेव दृष्ट्वाऽहम-

---

१. द्रष्टव्यानां परं न दृष्टम् ।

**राजा**—सर्वः खलु कान्तमात्मानं पश्यति । तामाश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि ।

**विदूषकः**—( स्वगतम् ) होदु, से अवसरं ण दाइस्सं । ( प्रकाशम् ) भो वअस्स ! दे तावसकण्णआ अब्भत्थणीआ दीसदि !

भवतु, अस्यावसरं न दास्ये । भो वयस्य ! ते तापसकन्यकाऽभ्यर्थनीया दृश्यते !

**राजा**—सखे ! न परिहार्ये वस्तुनि पौरवाणां[1] मनः प्रवर्तते ।

वाप्तचक्षुःफल एवास्मीति भावः । लोकस्वभावमनुवदन् राजा आह—**सर्व** इति । कान्तं = सुन्दरं पश्यति = जानाति । आश्रमललामभूतां = तपोवनालङ्कारभूताम् अधिकृत्य = उद्दिश्य । शकुन्तलैव दर्शनीयेति ममाभिप्राय इत्यर्थः ।

अथ राज्ञो वचनेन विदिततदभिलाषातिशयो विदूषकः स्वकर्तव्यमवधारयति—**होदु** इति । 'भवतु, अस्य अवसरं न दास्ये । ( प्रकाशम् ) भो वयस्य ! ते तापसकन्यका अभ्यर्थनीया दृश्यते' इति संस्कृतम् । अस्य = प्रस्तुतस्य रागानुप्रवेशस्य । अवसरं न दास्ये = नगरगमनादिविघ्नकरणेन अङ्कुरावस्थमेवैनमनुरागमुच्छेत्स्यामीति भावः । धर्मलोपदर्शनेन भीषयन्निवाह—**भो** इति । ते = स्वधर्मज्ञस्य राजर्षेः तापसकन्यका=महर्षिदुहिता अभ्यर्थनीया = अभिलाषयोग्या । अनुचितोऽयमभिलाषः सर्वथा परित्याज्य इति भावः । अथ राजा स्वात्मन्यारोपितं धर्मलोपमसहमान आह—**सखे** इति । दुर्मार्गप्रवृत्तिनिवारणं हि सुहृदो धर्मः, किन्तु चिरपरिचितेन त्वया कथमयमनुचितारम्भो मयि सम्भावितः ? इति 'सखे' इति संबोधनेन सूच्यते । परिहार्ये वस्तुनि = अगम्यागम्यादौ । न प्रवर्तते = नानु-

१. दुष्यन्तस्य ।

[1]सुरयुवतिसंभवं किल मुनेरपत्यं तदुज्झिताधिगतम्।
अर्कस्योपरि शिथिलं च्युतमिव [2]नवमालिकाकुसुमम्॥ ८॥

धावति। तदादित्सा तु दूरापेतेति भावः। अत्र सामान्यनिबन्धना अप्रस्तुतप्रशंसा। पुरुवंशोत्पन्नस्य मम मनः परिहार्यं वस्तु नाभिलषतीति भावः।

शकुन्तलाया अभिलाषयोग्यत्वं समर्थयन्नाह—**सुरयुवतिसम्भवमिति।** शिथिलम् अर्कस्य उपरि च्युतं नवमालिकाकुसुममिव उज्झिताधिगतं सुरयुवतिसंभवं मुनेः अपत्यं तत् किल ( अस्ति ) इत्यन्वयः।

शिथिलम् = वृन्ताद्विश्लथम् अर्कस्य = तदाख्यवृक्षविशेषस्य उपरि च्युतं = पतितं नवमालिकाकुसुममिव उज्झिताधिगतम्—आदौ उज्झितं=त्यक्तम्, मेनकयेति शेषः; पश्चादधिगतं=प्राप्तम्, कण्वेनेतिशेषः। सुरयुवतिसम्भवम्—सुरयुवतिः= देवाङ्गना मेनका सम्भवः = कारणं यस्य तत्। मुनेः = कण्वस्य अपत्यं = कन्या शकुन्तला। तत् किल = निश्चयेन तत्तथाविधमस्तीत्यर्थः। अत्र 'सुरयुवति-सम्भवम्' इत्युक्त्या शकुन्तलाया दिव्यस्त्रीजनितत्वं, तन्मूलकं लोकोत्तरसौन्दर्यं, तत्परिग्रहस्य धर्म्यत्वं च सूच्यते। मुन्यपत्यत्वेन क्षत्रियपरिग्रहायोग्यत्वशङ्कापनो-दनाय 'अर्कस्योपरि' इत्यादिदृष्टान्तः प्रदर्शितः। अर्ककुसुमं हि वर्णाकृतिभ्यां नव-मालिकाकुसुमसदृशं भवति। उपरि च्युतमिति शङ्काबीजम्। अधःपतिते शङ्का न भवति। स्थापनं हि संनिवेशविशेषपूर्वकं भवतीति च्युतमित्युक्तम्।

अत्र मेनकानवमालिकयोः साम्यं, शकुन्तला च नवमालिकापुष्पसदृशी। शिथिलच्युते उज्झिताधिगतयोः प्रतियोगिनी। यथाऽर्कनवमालिकाकुसुमयोर्न

१. ललिताप्सरोभवम्। २. वन।

**विदूषकः**—( विहस्य ) जह कस्स वि पिण्डखज्जूरेहिं उव्वेजिदस्स तिन्तिणीए अहिलासो भवे, तह इत्थिआरअणपरिभाविणो भवदो इअं अब्भत्थणा[1]।

यथा कस्यापि पिण्डखर्जूरैरुद्वेजितस्य तिन्तिण्यामभिलाषो भवेत्, तथा स्त्रीरत्नपरिभाविनो भवत इयमभ्यर्थना।

---

जन्यजनकभावः, किन्तु कश्चित्काकतालीयः सम्बन्ध एव, तथैव मुनिना पालितेयमित्येतावानेवास्या मुनिना सम्बन्धः, वस्तुतो दिव्यवनितायां राजर्षिणा जनितेयमिति मत्परिग्रहयोग्यैवेत्याकूतम्। श्रुत्यनुप्रासच्छेकानुप्रासावलङ्कारौ। आर्या जातिः।

शकुन्तलां ब्राह्मणकन्यां मन्यमानस्य विदूषकस्य सन्देहमपनुदन्, तस्याः स्वपरिग्रहयोग्यत्वं च समर्थयन् राजा शकुन्तलोत्पत्तिवृत्तान्तं तं श्रावयन्नाह—'हे मित्र! पौरवा वयं न खलु परिहार्ये वस्तुनि मनो निवेशयामः। यथाऽर्कस्योपरि दैवात्पतितं नवमालिकाकुसुमं नार्कपुष्पं भवति, किन्तु तन्नवमालिकाकुसुममेव दर्शनेन सौरभेण च सहृदयनेत्रघ्राणतर्पणं करोति। एवमेवेयं शकुन्तला न कण्वस्यौरसी कन्या, किन्तु राजर्षिणा कौशिकेन दिव्याङ्गनायां मेनकायां जनिता, तया परित्यक्ता कण्वेनाधिगता पालिता चेति सर्वथा मत्परिग्रहयोग्यैवेयम्' इति भावः॥ ८॥

वर्णमूलकेऽगम्यत्वे राज्ञा परिहृतेऽपि सांसर्गिकं तत्साधयन् विदूषक आह—जह इति। 'यथा कस्यापि पिण्डखर्जूरैरुद्वेजितस्य तिन्तिण्यामभिलाषो भवेत्, तथा स्त्रीरत्नपरिभाविनो भवत इयमभ्यर्थना' इति संस्कृतम्। पिण्डखजूरैः = खर्जूरविशेषैः उद्वेजितस्य = जिह्वाजाड्यं तन्मूलामरुचिं च प्रापितस्य तिन्तिण्याम् =

---

1. पत्थणा।

राजा—न तावदेनां [1]पश्यसि, येनैवमवादीः ।

विदूषकः—तं क्खु रमणिज्जं जं भवदो वि विह्मअं उप्पादेदि ।

तत्खलु रमणीयं यद्भवतोऽपि विस्मयमुत्पादयति ।

राजा—वयस्य ! किं बहुना ?

चित्रे[2] निवेश्य परिकल्पितसत्त्वयोगा[3]

रूपोच्चयेन [4]मनसा विधिना [5]कृता [6]नु ।

चिञ्चायाम्, तस्या आम्लत्वादिति भावः । स्त्रीरत्नपरिभाविनः—स्त्रीरत्नानि = अन्तःपुरःस्था वरवर्णिन्यः, तत्परिभाविनः = चिरपरिचयवशात्ता अवज्ञाय तद्विरक्त- स्येत्यर्थः । इयमभ्यर्थना = अयमस्यामभिलाषः । परिहासोक्तिरियम् । प्रियाया- मारोपितं दौर्भाग्यमसहमानो राजा आह—**न तावदिति** । 'त्वं तावदेनां न पश्यसि' इत्यनेन अहं तु सङ्कल्पपुरोवर्तिनीं तां सदा पश्यामीति वैधर्म्येण व्यज्यते । येन = अदर्शनेन । यदि त्वमपि पश्येः, तदा नैवं वदेरिति भावः ।

पुनः पुनरुच्यमानराजवचनेन शकुन्तलासौन्दर्यमङ्गीकुर्वन्निवाह विदूषकः—**तं क्खु इति** । 'तत्खलु रमणीयं यद्भवतोऽपि विस्मयमुत्पादयति' इति संस्कृतम् । भवतोऽपीत्यपिशब्देनास्मदादीनां विस्मयोत्पादने किं वक्तव्यमिति सूचितम् । अत्र सामान्यनिबन्धनाऽप्रस्तुतप्रशंसा । सा रमणीयैवेति तर्कयामि, यतस्तवाश्चर्यं जनयतीति भावः । राजोक्तौ—**किं बहुनेति** । बहुना = अङ्गप्रत्यङ्गवर्णनरूपेण बहूक्तेन । किम्, न किमपि फलमित्यर्थः । बहूक्तेनाऽपि यथावद्वर्णनस्याशक्यतया तेन न प्रयोजनसिद्धिरिति भावः ।

शकुन्तलानिर्माणस्य लोकोत्तरतामाह—**चित्रे इति** । धातुः विभुत्वं, तस्या

१. जानासि । २. चित्ते । ३. सर्वयोगात् । ४. विधिना । ५. विहिता । ६. कृशाङ्गी ।

स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥ ९ ॥

---

वपुश्च अनुचिन्त्य मे सा विधिना चित्रे निवेश्य परिकल्पितसत्त्वयोगा, रूपोच्चयेन मनसा कृता नु, अपरा स्त्रीरत्नसृष्टिः प्रतिभाति' इत्यन्वयः।

धातुः = चतुर्दशभुवननिर्मातुः सिद्धहस्तस्य ब्रह्मणः विभुत्वं = निर्माणसामर्थ्यम्। अपरिच्छेद्यं सृष्टिकौशलमिति यावत्। तस्याः = शकुन्तलायाः वपुः = लोकोत्तरसौन्दर्यशालिशरीरं च अनुचिन्त्य = मुहुर्मुहुरनुसन्धाय, स्थितस्येति शेषः। मे = देवेन्द्रसाहाय्याय स्वर्गगमनावसरे प्रागुर्वशीरम्भादिदिव्यस्त्रीरत्नानि दृष्टवतो मम। सा = मन्नेत्रकुमुदविकासराकाशशाङ्कायमाना शकुन्तला विधिना = ब्रह्मणा कर्त्रा चित्रे = आलेख्ये फलकादौ निवेश्य=आकृतिसमर्पणप्रकारेण विलिख्य परिकल्पितसत्त्वयोगा—परिकल्पितः=कृतः, प्रतिष्ठापित इत्यर्थः। सत्त्वस्य=प्राणस्य, जीवस्येत्यर्थः। योगः=सम्बन्धो यस्याः सा। रूपोच्चयेन—रूपस्य = सौन्दर्यस्य उच्चयः = उच्चयनं, चन्द्रपद्मादिसुन्दरपदार्थजातात्तत्सौन्दर्यस्य सारसंग्रहणं तेन। मनसा = तदेकतानेन चेतसैव। अङ्गुल्या निर्माणे तत्र मनःप्रवेशस्य परम्परितत्वान्मनोभिमतनिर्माणं न सुसम्पादमिति साक्षान्मनसैवेत्यर्थः। कृता = सङ्कल्पेन प्रादुर्भाविता। नुशब्दो वितर्के। अपरा=पूर्वकृतदिव्यादिव्यादिसकलस्त्रीरत्नेभ्यो व्यतिरिक्ता। अनन्यसाधारणीति यावत्। स्त्रीरत्नसृष्टिः = स्त्रीरत्नस्य सृष्टिः, स्त्रीरत्नत्वेन सृष्टेत्यर्थः। उत्कृष्टस्त्रीसृष्टिरिति यावत्। "रत्नं स्वजातिश्रेष्ठेऽपि" इत्यमरः। प्रतिभाति = मम मनसीदृशो वितर्कः समुल्लसतीत्यर्थः।

अत्र रूपोच्चयेनेत्युक्त्या शकुन्तलानिर्माणे त्रिभुवनवर्तिसकलसौन्दर्यसंग्रहस्यैवोपादानकारणत्वं सूच्यते। मनसा करणेनेति करतलपरामर्शाद्यभावादक्लिष्ट-

**विदूषकः**—जइ[1] एव्वं, पच्चादेसो दाणिं रूववदीणं।

यद्येवम्, प्रत्यादेश इदानीं रूपवतीनाम्।

---

कान्तिमत्त्वसौकुमार्यातिशयप्रतीतिः। "यत्स्पर्शासहताऽङ्गेषु कोमलस्यापि वस्तुनः। तत्सौकुमार्यम्" इति सौकुमार्यलक्षणम्। ब्रह्मणा चित्रे निवेश्य प्रतिष्ठापितप्राणा, सर्वसौन्दर्यसारेणोपादानेन, केवलं मनसैव करणेन, न तु कराङ्गुलिभिरियं लोकोत्तराऽभिनवा स्त्री सृष्टा इति मे प्रतिभाति इत्यर्थः। उत्प्रेक्षा, काव्यलिङ्गम्, अतिशयोक्तिश्चालङ्काराः। अतिशयोक्त्या सृष्टेर्लोकोत्तरत्वस्य ध्वनिः। अत्र 'चित्रे काव्ये परिकल्पितसत्त्वात्मकध्वन्याख्यप्राणयोगशालिनी रूपणीयनैकविधकाव्योचितशब्दोच्चयेनोपादानेन विधिना कालिदासात्मना काव्यपुरुषेण मनसा प्रतिभानुगृहीतेन अलौकिकचमत्कारकारिणी एषा कविताख्यस्त्रीरत्नस्य सृष्टिः कृता' इत्याद्यर्थप्रतीतेः कवितासृष्टिसमाधिः। वसन्ततिलका वृत्तम्।

शकुन्तलारूपस्यालौकिकत्वं वर्णयन् राजा कथयति—'हे मित्र! तस्या अङ्गप्रत्यङ्गवर्णनं तु दुःशकमेव, न च तेन वस्तुयाथात्म्यप्रतिपत्तिः स्यात्। एतावदेव कथयितुं शक्यते, यत्—ब्रह्मणोऽद्य यावत् दृश्यमानं निर्माणकौशलं, तदतिशायि शकुन्तलाशरीरं च विचिन्त्य ब्रह्मणा परमादर्शनिर्मित्सया साधारणसर्गप्रकारप्रभिन्नेन प्रकारेण करपरामर्शक्लेशपरिजिहीर्षया केवलं मनसैव करणेन, पञ्चभूतेषु जाड्यकाठिन्यादिदोषदर्शनेन केवलं सौन्दर्यसारेणैवोपादानेनैषाऽन्यैव काऽपि परमादर्शभूता स्त्री सृष्टा। वर्णनातीतं तस्याः सौन्दर्यम्' इति भावः॥ ९॥

राजोक्तिमनुवदन् विदूषक आह—**जइ** इति। 'यद्येवम्, प्रत्यादेश इदानीं रूपवतीनाम्' इति संस्कृतम्। यद्येवम् = भवदुक्तं यदि सत्यम्, प्रत्यादेशः =

---

१. सब्बधा।

**राजा**—इदं च मे मनसि वर्तते—

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
[1]रनाविद्धं रत्नं मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥१०॥

निराकरणम्, निन्देति यावत् । "प्रत्यादेशो निराकृतिः" इत्यमरः । रूपवतीनाम् = रूपाभिमानिनीनाम् । अनन्यसाधारणसौन्दर्यशालिनी सेति भावः । अथ राजा तस्या रूपसम्पदा यौवनेन च सन्धुक्षिताभिलाषस्तल्लाभालाभविषये स्वमनोव्यापारं प्रकटयन्नाह—**इदं चेति** । इदमप्यहं विचारयामीत्यर्थः ।

विचारणीयं प्रकटयति—**अनाघ्रातमिति** । अनाघ्रातं पुष्पम्, कररुहैरलूनं किसलयम्, अनाविद्धं रत्नम्, अनास्वादितरसं नवं मधु, अखण्डं पुण्यानां फलमिव च अनघं तद्रूपम्, विधिः इह कं भोक्तारं समुपस्थास्यति, न जाने इत्यन्वयः ।

अनाघ्रातम् = अकृताघ्राणम्, अकृतसुरभिगन्धोपभोगमित्यर्थः । पुष्पं = कुसुमम् । निषेधस्य प्राप्तिपूर्वकत्वादाघ्राणनिषेधेन आघ्राणयोग्यता सूच्यते । अत एव पुष्पमित्युक्तं, न कलिकेति । अनेन मकरन्दसौरभपूर्णत्वं द्योत्यते । कररुहैः = नखैः । अलूनं = अच्छिन्नम्, अत्रोटितम् । किसलयम् = अशोकादिनवदलम् । अनेनाम्लानत्वं ध्वन्यते । अनाविद्धम् = आसमन्तात् वेधरहितम्, अथवा अकुटिलम् । "आविद्धं कुटिलं भुग्नम्" इत्यमरः । यद्वा आभरणत्वेन न धृतम् । तथात्वे गात्रसंपर्केण मालिन्यप्रसंगादौज्ज्वल्यहानिर्भवति । रत्नं = हीरकादिविशिष्ट-

१. रनामुक्तम् ।

मुक्तादामादि । अनेन औज्ज्वल्यातिशयः सूच्यते । अनास्वादितरसम् = अगृहीतास्वादम् । अनेन पीतशेषत्वादिदोषराहित्यं सूचितम् । नवं = तत्कालानीतम् । पुराणापेक्षया नवस्याधिकगुणकरत्वात् नवमित्युक्तम् । मधु = पुष्परसात्मकम्, न मद्यम् । केचित् मधुपदेन मद्यं गृह्णन्ति, तत्पक्षे नवमिति विशेषणस्य न सार्थक्यम्, "मद्यं नवं सर्वविकारकारि" इति वचनेन नवीनमद्यस्य हेयत्वोक्तेः । अनेन अतिहृद्यत्वं सूच्यते । अखण्डं = पूर्णं पुण्यानाम् = अनेकजन्मार्जितानां शुभकर्मणां फलमिव च = स्वर्गादिफलमिव च, चकारः समुच्चये । अनघम् = अदुःखं, निष्पापं च, "अंहो दुःखव्यसनेष्वघम्" इत्यमरः । निर्मलं, मनोज्ञं वा, "अनघो निर्मलापापमनोज्ञेषु च मेघवत्" इति विश्वः । तद्रूपम्—

अङ्गान्यभूषितान्येव प्रक्षेप्याद्यैर्विभूषणैः ।

येन भूषितवद्भान्ति तद्रूपमिति कथ्यते ॥

इत्युक्तलक्षणम् । विधिः = स्रष्टा इह = जगति कं = पुरुषं भोक्तारम्—भोगः = संभोगस्तत्कर्तारं समुपस्थास्यति = उपसंक्रमिष्यति । तत् अहं न जाने । एतद्रूपानुरूपतरुणसृष्टेरभावादिति भावः ।

अत्र चतुर्थचरणेन लोकोत्तरस्य तद्रूपस्य निर्मात्रा विधिना तथाविध एव कश्चित् तद्भोक्ताऽपि निर्मित एव स्यात्! कश्च सः? इति चिन्ता, मयि स्थिते किमन्यमेव तथाविधं विधिर्घटयेत्! तदहं न जाने इति विषादश्च, विधिशब्देन "को जानीते विधिविलसितानि" इत्यादिन्यायात् तामभिलषतः स्वस्य कदाचित्तल्लाभो नैव भवेत्! इति नैराश्यं चेत्यादिभावाः प्रतीयन्ते । अत्र पुष्पकिसलयरत्नमधुपुण्यफलानामनाघ्रातमित्यादिविशेषणापादितव्यतिरेकाणां प्रतीयमानसादृश्येन शकुन्तलारूपेण रूपणात् व्यतिरेकरूपकमिति भोजदेवः । मालोपमा, श्रुत्यनुप्रासवृत्त्यनुप्रासौ च । शिखरिणी वृत्तम् । पूर्वोक्ताभ्यां पद्याभ्यां गुणकीर्तन-

**विदूषकः**—तेण हि लहु[1] परित्ताअदु णं भवं। मा कस्सवि

रूपा चतुर्थी अवस्था दर्शिता। तथा चोक्तम्—"सौन्दर्यादिगुणश्लाघा गुणकीर्तनमत्र हि" इति।

शकुन्तलाया लोकोत्तरं सौन्दर्यं विचिन्तयन् आत्मनस्तल्लाभः संभवेन्न वा, इति सन्दिहानो राजा नर्मसचिवं वदति—'सखे! माधव्य! तामनुध्याय इदमहं चिन्तयामि, यत्—यथा आरामे पूर्णतया विकसितमपि केनाप्यनाघ्रातत्वाल्लेशतोऽप्यनुच्छिष्टसौरभसम्भारं पुष्पम्, यथा नखैर्वृन्तादत्रोटितमशोककिसलयम्, यथा वेधकौटिल्यादिदोषरहितम् अधारितपूर्वं हीरकादिरत्नयुक्तं मुक्तादाम, यथा अनास्वादितरसं सद्यः संगृहीतमनुच्छिष्टं क्षौद्रं मधु, यथा वा लेशतोऽप्यभुक्तपरिपाकं बहुविधसुकृतानां फलम्, तथैव सर्वथा निरवद्यं मनोज्ञतमं पुरुषप्रत्यासत्त्यभावेन सर्वात्मना अक्लेशिततत्तदङ्गलावण्यं रसपरिपूर्णं पूर्णविकासं तस्या रूपमस्ति। तथाविधस्य तस्य भोक्ताऽपि तत्तादृशरूपनिर्माणकुशलेन विधिना योग्य एव कश्चित् निर्मितः स्यादेव। कः सः? अहं वा, अन्यो वा, न जाने। दुर्ज्ञेयानि खलु विधेर्विलसितानि' इति भावः॥ १०॥

राजोक्तिं श्रुत्वा विदूषक आह—**तेण हीति**। 'तेन हि लघु परित्रायतामेनां भवान्। मा कस्यापि तपस्विन इङ्गुदीतैलमिश्रचिक्कणशीर्षस्य हस्ते पतिष्यति' इति संस्कृतम्। तेन हि = यस्मात् सा स्त्रीललामभूता भवत्परिग्रहयोग्या च तस्मात् लघु = द्रुतम्। "लघु क्षिप्रमरं द्रुतम्" इत्यमरः। इदानीमेवेत्यर्थः। परित्रायताम्=परपरिग्रहरूपाद्भयाद्रक्षतु, स्वयमङ्गीकुरुतामित्यर्थः। भयमाह—**मेत्यादि**।

1. लहुं लहुं गच्छदु भवम्।

तवस्सिणो इङ्गुदीतेल्लमिस्सचिक्कणसीस्सस्स आरण्णअस्स हत्थे पडिस्सदि।

तेन हि लघु परित्रायतामेनां भवान्। मा कस्यापि तपस्विन इङ्गुदीतैलमिश्रचिक्कणशीर्षस्य हस्ते पतिष्यति।

**राजा**—परवती खलु तत्रभवती। न च संनिहितोऽत्र[1] गुरुजनः।

**विदूषकः**—अत्तभवन्तं[2] अन्तरेण कीदिसो से दिट्ठिराओ[3]?

अत्रभवन्तमन्तरेण कीदृशस्तस्या दृष्टिरागः?

---

'एषा' इति विभक्तिविपरिणामेनान्वयः। तपस्विन इति कथनेन विषयवैमुख्यादरसिकत्वं द्योत्यते। इङ्गुदीतैलमिश्रचिक्कणशीर्षस्य—इङ्गुदीतैलेन = तापसतरुफलविशेषसंभवेन स्नेहेन मिश्रं = संपृक्तमत एव चिक्कणं = स्निग्धं शीर्षं = मस्तकं यस्य। "चिक्कणं मसृणं स्निग्धम्" इत्यमरः। एतेन तस्य दुर्भगत्वम्, अविदग्धत्वं च सूच्यते। हस्ते पतिष्यतीत्यत्र हस्तपतनेन स्वीकारो लक्ष्यते। दुःखजनकत्वं व्यङ्ग्यम्। तद्धस्तपतनात्पूर्वमेव भवान् तां स्वीकुरुतामिति भावः।

अथ राजा विदूषकसूचितस्य तस्या लघु परित्राणस्य अशक्यतामवधारयन् सविषादमाह—**परवतीति**। परवती = पराधीना। "परतन्त्रः पराधीनः परवान्नाथवान्" इत्यमरः। खल्विति निश्चये। तत्रभवती = पूज्या, स्त्रीरत्नभूतत्वात् पूज्यत्वम्। तस्या गुरुजनः किमिति नाभ्यर्थ्यते? इत्यत आह—**न चेति**। अतः शीघ्रं न सा सुलभा इति भावः। राजविषये शकुन्तलाया अनुरागं जिज्ञासमानो विदूषक आह—**अत्तभवन्तं इति**। 'अत्रभवन्तमन्तरेण कीदृशस्तस्या दृष्टिरागः' इति संस्कृतम्। अत्रभवन्तं = पूज्यं भवन्तमित्यर्थः। उद्दिश्येत्यध्याहारः। अन्त-

---

१. सन्निहितगुरुजना। २. तुह उवरि। ३. चित्तराओ।

**राजा**—[1]निसर्गादेवाप्रगल्भस्तपस्विकन्याजनः । तथापि तु—

अभिमुखे मयि संहृतमीक्षितं
हसितमन्यनिमित्तकृतोदयम्[2] ।
विनयवारितवृत्तिरतस्तया
न विवृतो मदनो न च संवृतः ॥ ११ ॥

रेण = विशेषेण । "अन्तरं रन्ध्रावकाशयोः । मध्ये विनाऽर्थे तादर्थ्ये विशेषेऽवसरेऽवधौ" इति हैमः । कीदृशः = कियान् । दृष्टिरागः—दृष्टौ=नेत्रे प्रकाशमानोऽनुराग इत्यर्थः, क्रोधदयारागविरागादयः सर्वेऽपि भावाः प्रायश्चक्षुषैवाभिव्यज्यन्ते इति न्यायात् । अत्रभवन्तमिति सप्तम्यर्थे द्वितीया, न तु "अन्तराऽन्तरेण युक्ते" इति सूत्रेण, तत्र विनार्थकस्यैव तस्य ग्रहणमिति वृत्तिकारैरुक्तत्वात् । स्वभावसरलायां तस्यां दृष्टिरागस्य दुर्लक्ष्यत्वं कथयन् राजा प्राह—**निसर्गादेवेति** । निसर्गादेव = स्वभावादेव । "निसर्गः शीलसर्गयोः" इति विश्वः । अप्रगल्भः = नागरिकयौवतपरिचितदाम्पत्यव्यवहारानभिज्ञत्वादप्रौढः । तथापि = सामान्यतस्तपस्विकन्यानामित्थंभूतत्वेऽपि । तुर्विशेषद्योतकः ।

तमेव विशेषमाह—**अभिमुखे इति** । मयि अभिमुखे सति ईक्षितं संहृतम्, अन्यनिमित्तकृतोदयं हसितम्, अतो विनयवारितवृत्तिर्मदनस्तया न विवृतो न च संवृत इत्यन्वयः ।

मयि अभिमुखे = तस्या वदनकमलं पश्यति सति ईक्षितं = मद्दर्शनं संहृतं = निवर्तितम् । अनभिमुखोऽहं तया गूढं वीक्षित इति द्योत्यते । किञ्च अन्यनिमित्त-

१. स्वभावादेव । २. कथोदयम् ।

कृतोदयम्—अन्यनिमित्तम् = अन्यहेतुकं यथा स्यात्तथा कृतः=प्रकटीकृतः उदयः = प्रादुर्भावो यस्य एतादृशं हसितम्। तल्लक्षणं च—

विकासितकपोलान्तमुत्फुल्लामललोचनम्।
किञ्चिल्लक्षितदन्ताग्रं हसितं तद्विदो विदुः॥ इति।

मत्सम्मुखे मन्दहासेऽपि संजाते तस्य निमित्तान्तरमेवोद्भावितमित्यर्थः। अतः = पूर्वप्रतिपादितकारणद्वयात् विनयवारितवृत्तिः—विनयेन वारिता वृत्तिः = प्रसरो यस्य तथाविधः मदनः = मद्विषयकः प्रेमा तया = शकुन्तलया न विवृतः = न प्रकाशितः, न च संवृतः = न च गोपितः। ईक्षणसंहरणात् मन्दहासस्य अन्यनिमित्तत्वेन गूहनाच्च मद्विषयको भावो न स्फुटं प्रकाशितः, अनभिमुखत्वे गूढमीक्षणात् मद्दर्शने मन्दहासस्य स्वयं प्रवृत्तेश्च मद्विषयको भावो न च गोपितः।

अत्र काव्यलिङ्गम्, अन्त्यपादे विरोधाभासश्च। नायिकायामौत्सुक्यलज्जाहर्षाणां भावानां शबलताया ध्वनिः। द्रुतविलम्बितं वृत्तम्। तल्लक्षणं च—"द्रुतविलम्बितमाह नभौ भरौ" इति।

स्वभावसरलानां तपस्विकन्यानां दृष्टिरागस्य दुर्लक्ष्यत्वेऽपि शकुन्तलायां केनापि विशेषेण आत्मनि तदनुरागं सम्भावयन्निव राजा विदूषकं कथयति—'यदा यदाऽहं शकुन्तलायाः सम्मुखे स्थितस्तां सस्नेहमीक्षितवान्, तदा तदा तया केनापि व्याजेन मम दर्शनं परिहृतम्। किन्तु यदाऽहं तस्या अनभिमुखमासम्, तदा सा गूढं मां स्वच्छन्दं वीक्षते स्म। एवमेव ममाभिमुखमापतितायास्तस्या वदने मन्दहासः स्वयमेव प्रादुर्भवति स्म, किन्तु तया सद्य एव तस्य कश्चिदन्य एव हेतुरुद्भाव्यते स्म। एतस्मादहमिदं तर्कयामि, यत्—मामुद्दिश्य वेगेन समुच्छलन् रागस्तया विनयेनैव निवारित इति न बाढं प्रकटीभूतः, गूढविलोकनस्वयंप्रवृत्तमन्दहासाद्यपरिहाराच्च न बाढं गोपित इति मद्विषये प्रकाशाप्रकाशमनोभावा साऽस्ति' इति भावः॥११॥

**विदूषकः**—( विहस्य ) ण क्खु दिट्ठमेत्तस्स तुह अङ्कं समारोहदि ।
न खलु दृष्टमात्रस्य तवाङ्कं समारोहति ।

**राजा**—मिथःप्रस्थाने पुनः शालीनतयाऽपि काममाविष्कृतो भावस्तत्रभवत्या । तथा हि—

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा ।

राज्ञो वचनं श्रुत्वा तस्मिन् शकुन्तलाया अनुरागं निश्चिन्वन् सपरिहासमाह विदूषकः—**ण क्खु इति** । 'न खलु दृष्टमात्रस्य तवाङ्कं समारोहति' इति संस्कृतम् । दृष्टमात्रस्य = तदानीमेव दृष्टस्य, न तु परिचितस्य । तवाङ्कं न समारोहतीति कथनेनाङ्कारोहणहेतोर्विश्वासस्याभावः सूच्यते । अपरिचितस्य तव विश्वासाभावात्तया स्वानुरागो न सम्यक् प्रकटीकृत इति भावः । कार्यनिबन्धनेयमप्रस्तुतप्रशंसा । विदूषकोक्त्या हृष्टः शकुन्तलयाऽऽत्मनः परिचयं, तस्याः स्वस्मिन् विश्वासं, प्रणयचेष्टां च राजा कथयन्नाह—**मिथः प्रस्थाने इति** । मिथः=रहसि । "मिथोऽन्योन्यं रहस्यपि" **इत्यमरः** । उपविश्येत्यध्याहारः । रहसि मया सहोपविश्य मदभिप्रायं ज्ञात्वेति भावः । प्रस्थाने=सखीभ्यां सह गमनारम्भे पुनः = पश्चात शालीनतयाऽपि = अधृष्टतयाऽपि । "शालीनकौपीने अधृष्टाकार्ययोः" इति निपातः । कामम् = अत्यर्थम् । भावः = अनुरागरूपश्चित्ताभिप्रायः आविष्कृतः= प्रकटीकृतः । अत्र लज्जाकार्यं भावगोपनमकृत्वा भावाविष्करणेन लज्जापेक्षया औत्सुक्यभावस्य प्राबल्यम् अपिशब्देन द्योत्यते ।

भावाविष्करणमाह—**दर्भाङ्कुरेणेति** । तन्वी कतिचिदेव पदानि गत्वा अकाण्डे दर्भाङ्कुरेण चरणः क्षत इति विवृत्तवदना द्रुमाणां शाखासु असक्तमपि वल्कलं विमोचयन्ती स्थिता आसीदित्यन्वयः ।

आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥ १२ ॥

तन्वी = स्वभावतः कृशाङ्गी शकुन्तला कतिचिदेव = द्वित्राण्येव, न तु पञ्चषाणि । अनेन औत्सुक्यं त्वरा च सूच्यते । पदानि = पदप्राप्यस्थानानि गत्वा अकाण्डे = अनवसरे, "काण्डं चावसरे बाणे" इति धरणिः । अकस्मादित्यर्थः । दर्भाङ्कुरेण = कुशस्य सूक्ष्मेणाग्रेण, न तु दर्भेण । अत्र अङ्कुरपदेन दर्भस्य सूक्ष्ममग्रं लक्ष्यते । तस्य सूचिवद्व्यथाकारित्वं व्यङ्ग्यम् । दर्भेणेत्युक्तौ व्याजो न स्यात् । अङ्कुरस्यालक्ष्यतया व्याजसंभवः । चरणः = सुकुमारो लोहिततलश्च पादः क्षतः=विद्ध इति = इत्युक्त्वा, यद्वा इतिर्हेतौ, एवं हेतुमभिनीयेत्यर्थः । विवृत्तवदना = विवृत्तं वदनं यया सा, वदनं विवृत्य पश्यन्तीत्यर्थः । उद्यतेऽनेनेति वदनमिति व्युत्पत्त्या तत्कालं तस्या वचनोद्यमोऽपि द्योत्यते । द्रुमाणां = वृक्षाणां शाखासु = स्कन्धेषु असक्तमपि = असंबद्धमपि वल्कलं = वृक्षत्वचानिर्मितं परिधानीयम् । वल्कलस्य काठिन्यात् क्षौमादिवद्गात्रे असंश्लेषात् शाखासङ्ग उपपद्यते । विमोचयन्ती = मन्दं मन्दं मोचनव्यापारमभिनयन्ती स्थिता = अवस्थिता आसीत् ।

अत्र अकाण्डे इति कथनेन दर्भरहितेऽपि तस्मिन्देशे अदृश्यमानेन दर्भाङ्कुरेण चरणस्य क्षतत्वमभिधाय दर्भाङ्कुरोद्धरणव्याजेन गतौ विलम्बः, एवमेव द्रुमाणां शाखासु वस्तुतोऽसक्तस्यापि वल्कलस्य वेदनादिपरिहारपुरस्सरं मोचनव्यापाराभिनयनात् गतौ क्रियमाणो विलम्बः शकुन्तलाया राजदर्शनौत्सुक्यं तद्धेतुं प्रेमातिशयं च सूचयति । तथावस्थायास्तस्याः स्थितिर्दर्शनं च प्रकृष्टरागानुभावौ । उक्तं च— "विलम्बस्तु पथि व्याजात्परावृत्त्याऽपि दर्शनम्" इति । 'अकाण्डे' 'असक्तमपि' इत्याभ्यां शकुन्तलाया राजविषयकः प्रेमा स्फुटीकृतः । अत्र विभावना, हेतुः,

**विदूषकः**—तेण हि गहीदपाहेओ होहि । किदं तुए उववणं तवोवणं त्ति पेक्खामि ।

तेन हि गृहीतपाथेयो भव । कृतं त्वयोपवनं तपोवनमिति पश्यामि ।

---

श्रुत्यनुप्रासवृत्त्यनुप्रासौ चालङ्कारः । नायिकागताः लज्जौत्सुक्यादयः, नायिकाव्यापारेण च "स्त्रीणामशिक्षितपटुत्वम्" इत्यादिरूपेण नायकस्य विस्मयश्चेति भावा व्यज्यन्ते । वसन्ततिलका वृत्तम् ।

शकुन्तलाया भावाविष्करणप्रकारं वर्णयन् राजा कथयति—'सखीभ्यां सह आश्रमं प्रति प्रस्थानोपक्रमे सा तन्वी त्रिचतुराण्येव पदानि गत्वा मध्येमार्गं दर्भाङ्कुरेण मे चरणो विद्ध इति ससीत्कारं तद्दुःखमभिनयन्ती समीपस्थवृक्षशाखासु वस्तुतोऽसक्तमपि स्ववल्कलं मन्दं मन्दं मोचयितुं प्रयतमानेव वदनं विवृत्य मां बहुशः पश्यन्ती किञ्चित्कालं स्थिताऽऽसीत् । तस्या एतादृशचेष्टाविशेषेण इदं स्पष्टमनुमातुं शक्यते, यत्—तया किञ्चित्कालं मद्दर्शनेच्छयैव गमनविघ्नमुत्पादितम्, तस्य हेतुस्तस्या मद्विषयकः प्रेमातिशय एव' इति भावः ॥१२॥

राजोक्तं श्रुत्वा विदूषकः अनन्तरकर्तव्यं भङ्ग्या उपदिशति—तेण हि इति । 'तेन हि गृहीतपाथेयो भव । कृतं त्वयोपवनं तपोवनमिति पश्यामि' इति संस्कृतम् । तेन हि = भावः काममाविष्कृतश्चेत्, गृहीतपाथेयः—अत्र पाथेयपदेन तत्प्राप्त्युद्योगस्य अवश्यकर्तव्यता द्योत्यते । यथा देशान्तरं जिगमिषुं प्रति कश्चिद्वदति 'पाथेयं गृहाण' इति, तद्वत् । पथि साधु पाथेयम्, "पथ्यतिथिवसतिस्वपतेर्ढञ्" इति ढञ् । यद्वा पाथेयपदेन आश्वाससाधनं प्रेम लक्ष्यते । लाभपर्यन्तं तस्यानुपक्षीणत्वं च व्यज्यते । यथा **किराते**—"जग्राहपाथेयमिवेन्द्रसूनुम्" इति । उक्तं च अनेनैव महाकविना—"मनस्तु तद्भावदर्शनाश्वासि" इति ।

**राजा**—सखे! तपस्विभिः कैश्चित्परिज्ञातोऽस्मि। चिन्तय तावत्केनापदेशेन सकृदप्याश्रमे वसामः[1]!

**विदूषकः**—को अवरो अवदेसो तुह रण्णो? णीवारच्छट्ठभाअं अह्माणं[2] उवहरन्तु त्ति।

कोऽपरोऽपदेशस्तव राज्ञः? नीवारषष्ठभागमस्माकमुपहरन्त्विति।

---

तपोवनं त्वया उपवनं कृतमिति पश्यामि–इति उद्देश्यविधेयभावे व्यत्ययो ज्ञेयः। तपोवनमपीदं शकुन्तलाविषयकप्रेमव्यापारेण त्वया उपवनमिव कामिजनविहारयोग्यं कृतमिति भावः।

कण्वाश्रमे निवासमिच्छन् राजा विदूषकं तदुपायं पृच्छति—**सखे! इति**। परिज्ञातः = मृगयार्थमागतो दुष्यन्तस्तपोवनमागत इतिरूपेणेत्यर्थः। अतो राजभावगोपनपूर्वकमत्रोषितुं न शक्यते। राजभावेन वासश्चानुचित इत्यत आह—**चिन्तयेति**। चिन्तयेत्यनेन विदूषकस्य प्रतिभाकौशलमात्मनश्च तथाविधोपायाप्रतिभानं च सूच्यते। अपदेशेन = व्याजेन निमित्तेन वा। "अपदेशस्तु लक्ष्ये स्यान्निमित्तव्याजयोरपि" इति **यादवः**। सकृदपि = एकवारमपि, सोऽपि महान् लाभ इति भावः। विदूषकश्चिन्तयन्नाह—**को अवरो इति**। 'कोऽपरोऽपदेशस्तव राज्ञः? नीवारषष्ठभागमस्माकमुपहरन्त्विति' इति संस्कृतम्। 'कोऽपरोऽपदेशः? न कोऽपीत्यर्थः। राज्ञ इत्यनेन तस्य षड्भागार्हत्वं सूच्यते, "राजा हि फलषड्भागं तस्मादाप्नोति रक्षिता" इति **स्मृतेः**। नीवारषष्ठभागं = मुनिधान्यस्य षष्ठमंशं, राजग्राह्यं भागम्। इतिशब्दः प्रकारे। 'नीवारषष्ठभागमुपहरत' इति तापसान् नियुञ्जानः अत्र निवस इति भावः।

---

१ गच्छामः। २ मे।

**राजा**—मूर्ख[1] ! अन्यद्भागधेयमेतेषां रक्षणे निपतति, यद्रत्नराशीनपि विहायाभिनन्द्यम्[2] । पश्य—

**यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तत्फलम्[3] ।**
**तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः ॥ १३ ॥**

नायमुपायः समुचित इति विचारयन् राजा विदूषकमाह—**मूर्ख !** इति । मूर्ख = विशेषानभिज्ञ ! अन्यत् = नीवारषष्ठभागव्यतिरिक्तं भागधेयं = राजग्राह्यो भागः एतेषां = तापसानां रक्षणे = पालने कृते सति, तन्निमित्तत्वेनेत्यर्थः । निपतति = स्वयमेवाविर्भवति । यत् = भागधेयं रत्नराशीन् = हीरकादिरत्नपुगान् विहाय = परित्यज्य अभिनन्द्यं = श्लाघ्यम्, रत्नराश्यपेक्षयाऽपि विशेषतः प्रशस्यमित्यर्थः । भागधेयमित्यत्र "भागरूपनामभ्यो धेयः" इत्यनेन स्वार्थे धेयप्रत्ययः ।

तदेव भागधेयं विवृण्वन्नाह—**यदिति** । वर्णेभ्यो नृपाणां यत्फलमुत्तिष्ठति, तत् क्षयि । हि आरण्यका नः अक्षय्यं तपःषड्भागं ददति इत्यन्वयः ।

वर्णेभ्यः = ब्राह्मणादिवर्णेभ्यः नृपाणां = रक्षयितॄणां राज्ञां कृते यत् = धान्यषड्भाग-हिरण्यदशभागादि मन्वादिस्मृतिकारनिर्दिष्टम्, फलं = राजग्राह्यो भागः उत्तिष्ठति = उत्पद्यते, तत् = फलं क्षयि = विनाशि, उपभोगादिना क्षयशीलमिति यावत् । उक्तं च—"सर्वे क्षयान्ता निचयाः" इति । प्रकारसहस्रैरपि न स्थायि इति व्यज्यते । हीति प्रसिद्धौ । आरण्यकाः = तपस्विनः नः = अस्माकं कृते अक्षय्यम् = अविनाशि, अशक्यक्षयमिति यावत् । "क्षय्यजय्यौ शक्यार्थे" इति निपातनात्साधु । प्रकारसहस्रैरपि अविनश्वरमिति ध्वन्यते । तपःषड्भागं=

१ मूढ । २ अभिनन्द्यते । ३ तद्धनम् ।

( नेपथ्ये )

हन्त ! सिद्धार्थौ स्वः ।

राजा—( कर्णं दत्त्वा ) अये ! [1]धीरप्रशान्तस्वरैस्तपस्विभिर्भवितव्यम् ।

---

तपसः षष्ठं भागम्, तद्रूपं भोगापवर्गप्रदं सुकृतमित्यर्थः । ददति = वितरन्ति । अनेन मुनिजनरक्षणं राज्ञोऽवश्यकर्तव्यमिति सूचितम् ।

अत्र क्षयि, अक्षय्यमित्यादिना द्वयोर्भागयोर्व्यतिरेकवर्णनात् व्यतिरेकालङ्कारः ।

विदूषकेण नीवारषष्ठभागाहरणापदेशेन कण्वाश्रमगमनोपाये सूचिते तस्यानुचितत्वं विवृण्वन् राजा प्राह—'मूर्ख ! एते खलु तापसा मह्यं यादृशं राजभागं ददति, स खलु रत्नराशीनपि विहाय अभिनन्दितुं योग्यः । पश्य—वयं राजानो ब्राह्मणक्षत्रियादिवर्णानां यथाविधि रक्षणेन तेभ्यो धान्यषड्भागहिरण्यदशभागादिरूपं यं राजग्राह्यं भागं गृह्णीमः, स खलु भोगेन क्षीयते एव; महानुभावा एते आरण्यकास्तपस्विनस्तु मद्भुजरक्षिते तपोवने निरुपसर्गं निवसन्तस्तपोऽनुतिष्ठन्तः स्वतपःषड्भागं यं सानुग्रहं मह्यं ददति, स खलु कथमपि क्षयी न भवति, इहामुत्र च शुभफलप्रदानेन बाढमुपकरोति ; इति हेतोर्मुनिभ्यो नीवारषड्भागाहरणमनुचितमेव' इति भावः ॥ १३ ॥

अथ मुनिप्रवेशं सूचयन्नाह—**नेपथ्ये-हन्तेति** । हन्तेति हर्षे । हर्षहेतुमाह—**सिद्धार्थाविति** । निष्पन्नप्रयोजनौ, कृतकृत्यावित्यर्थः । राजदर्शनेनेति हेतुः । राजोक्तौ—**अये इति** । अये इति स्मरणे । धीरप्रशान्तस्वरैः—धीरः = धैर्यव्यञ्जकः,

---

[1] धीरप्रशान्तः स्वरः ।

( प्रविश्य )

**दौवारिकः**—जेदु भट्टा । एदे दुवे इसिकुमारआ पडिहार-भूमिं उवट्ठिदा ।

जयतु भर्ता । एतौ द्वौ ऋषिकुमारौ प्रतीहारभूमिमुपस्थितौ ।

**राजा**—तेन ह्यविलम्बितं प्रवेशय तौ ।

**दौवारिकः**—एसो पवेसेमि । ( इति निष्क्रम्य, ऋषिकुमाराभ्यां सह प्रविश्य ) इदो इदो भवन्तौ ।

एष प्रवेशयामि । इत इतो भवन्तौ ।

( उभौ राजानं विलोकयतः । )

**प्रथमः**—अहो दीप्तिमतोऽपि विश्वसनीयताऽस्य वपुषः ! अथवो-

---

अथवा गम्भीरः, प्रशान्तः = प्रशमव्यञ्जकः, स्वरो येषां तैः । प्राकृतानां नेदृशः स्वरो भवतीति भावः। तपस्विभिः=मुनिभिः। एवंविधस्वरेणैते तपस्विनः समागता इत्यनुमीयत इत्यर्थः ।

दौवारिकोक्तौ—**जेदु भट्टा इति** । 'जयतु भर्ता । एतौ द्वौ ऋषिकुमारौ प्रतीहारभूमिमुपस्थितौ' इति संस्कृतम् । प्रतीहारभूमिम् = द्वारस्थानम् । "स्त्री-द्वार्द्वारं प्रतीहारः" **इत्यमरः** । "भूमिः स्यात् स्थानमात्रके" इति **विश्वश्च** । राजोक्तौ तेन हीत्यादि भक्तिद्योतकम् । दौवारिकोक्तौ—**एसो इति** । 'एष प्रवेशयामि' इति संस्कृतम् । **इदो इति** । 'इत इतो भवन्तौ' इति संस्कृतम् । **प्रथम इति** । द्वयोरेक इत्यर्थः । अहो इत्याश्चर्ये । **दीप्तिमतोऽपीति** । परैरनभि-भवनीयस्तेजोविशेषो दीप्तिः, तद्वतः । अपिर्विरोधद्योतकः । विश्वसनीयता = विश्वासोत्पादकप्रसादगुणशालिता । अनेनाधृष्यत्वाभिगम्यत्वे दर्शिते । **अथवेति** ।

पपन्नमेतदृषिभ्यो नातिभिन्ने[1] राजनि। कुतः!

अध्याक्रान्ता वसतिरमुनाऽप्याश्रमे सर्वभोग्ये
रक्षायोगादयमपि तपः प्रत्यहं संचिनोति।
अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ॥१४॥

नेदं विस्मयास्पदमित्यर्थः। उपपन्नं = उचितम्। नातिभिन्ने = अत्यन्तभेदरहिते। राजनि = प्रजारञ्जनशीले भूपे।

राज्ञः ऋषिभ्यो नातिभिन्नत्वं समर्थयति—**अध्याक्रान्तेति**। अमुना अपि सर्वभोग्ये आश्रमे वसतिः अध्याक्रान्ता। अयमपि रक्षायोगात् प्रत्यहं तपः सञ्चिनोति। वशिनः अस्यापि चारणद्वन्द्वगीतः केवलं राजपूर्वः मुनिः इति पुण्यः शब्दः मुहुः द्यां स्पृशति इत्यन्वयः।

अमुना = राज्ञा दुष्यन्तेन। अपिशब्दः सर्वत्र मुनेः समुच्चायकः। मुनिवत् अनेनापीत्यर्थः। सर्वभोग्ये—सर्वैः = ब्रह्मचारिप्रभृतिभिराश्रमिभिर्भोग्ये = आश्रयणीये, गृहस्थाश्रमे इत्यर्थः। यथोक्तम्—

यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः।
वर्तन्ते गृहिणस्तद्वदाश्रित्येतर आश्रमाः॥ इति।
गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान् बिभर्ति हि।

इति मनुश्च। यद्वा सर्वाणि पृथ्वीधनरत्नवरवनिताप्रभृतीनि भोग्यानि यस्मिन् तथाविधे आश्रमे = राज्याश्रमे वसतिः = गृहं निवासो वा। अध्या-

१ ऋषिकल्पे राजनि।

क्रान्ता = स्वीकृता । मुनिपक्षे—सर्वैः = अध्ययनार्थमाश्रमवासिभिः शिष्यैराश्रयणीये मठरूपाश्रमे वसतिः = स्थानमङ्गीकृतमिति । "आश्रमो व्रतिनां मठे" इति, "वसतिः स्यादवस्थाने निशायां सदनेऽपि च" इति च हैमः । ऋषिवदसावप्याश्रमवासीति भावः । अयमपि = एष राजाऽपि । रक्षायोगात्—रक्षैव=प्रजापालनमेव योगः = उपायः, यद्वा रक्षाया योगः = उद्योगस्तस्मात् । प्रत्यहं = नित्यम्, सर्वदेत्यर्थः । तपः = लोकोत्तरं धर्मम्, ऋषिकृततपःषष्ठांशं वा, "पुण्यात् षड्भागमागमादत्ते न्यायेन परिपालयन्" इति याज्ञवल्क्योक्तेः । सञ्चिनोति = संगृह्णाति । मुनिपक्षे—रक्षार्थं = शरीरस्थैर्यसम्पत्तये योगः = अष्टाङ्गो यमनियमाद्यात्मकस्तन्निमित्तम् तपः = चान्द्रायणादि । सञ्चिनोति = करोति । "तपश्चान्द्रायणादौ स्याद्धर्मे लोकोत्तरेऽपि च" इति विश्वः । वशिनः = जितेन्द्रियस्य अस्याऽपि = राज्ञोऽपि । चारणद्वन्द्वगीतः—चारणानां = गायनकुशलानां सिद्धयोनिविशेषाणां द्वन्द्वैः = मिथुनैर्गीतः । चारणलक्षणं यथा—

किङ्किणीवाद्यवेदी च वृतो विकटनर्तकैः ।
मर्मज्ञः सर्वरागेषु चतुरश्चारणो मतः ॥ इति ।

"स्त्रीपुंसौ मिथुनं द्वन्द्वम्" इत्यमरः । द्वन्द्वगीत इत्यनेन स्त्रीपुरुषयोर्विनोदगोष्ठ्यादौ गानस्य स्वरसतः प्रवृत्तिः सूच्यते । केवलं राजपूर्वः = राजेत्युपपदमात्रेण भिन्न इत्यर्थः । मुनिः इति = मुनिरित्याकारकः पुण्यः शब्दः = वसिष्ठवामदेवादिमहर्षिनामवत्पुण्यकरः 'राजर्षिर्दुष्यन्तः' इति शब्दः मुहुः = शश्वत् । अस्य गीत इत्यत्रान्वयः । प्रतिक्षणनवीनत्वं व्यङ्ग्यम् । द्याम् = देवलोकं स्पृशति = गच्छति । अत्र स्पर्शेन व्याप्तिर्लक्ष्यते । प्रकृष्टसम्बन्धप्रतीतिः फलम् । मुनिपक्षेऽपि—जितेन्द्रियाणां मुनीनां तपोऽनुष्ठानप्रभावेण चारणद्वन्द्वैर्भक्त्या तन्नामस्मरणगीतानि देवलोके गीयन्त इति समानम् ।

द्वितीयः—गौतम[1] ! अयं स बलभित्सखो दुष्यन्तः ?

प्रथमः—अथकिम् !

---

अत्र श्लेषः, व्यतिरेकः, काव्यलिङ्गं चालङ्काराः । मुनिगतो विस्मयाख्यो भावः । तदुपस्कृतो राजविषयको रतिभावः प्राधान्येन व्यज्यते । मन्दाक्रान्ता वृत्तम् ।

ऋषिकुमारो राज्ञः ऋषिसमानतां समर्थयति—'यथा ऋषयो वेदशास्त्राद्यध्ययनाय सादरं समागतान् बटून् अन्नवस्त्रादिदानपुरस्सरमध्यापयन्तस्तैरुपभोग्ये मठादिरूपे स्वाश्रमे तपोवने वसतिं कुर्वन्ति, एवमेवासौ राजा ब्रह्मचारिगृहस्थादिः सर्वानाश्रमिणः परिपालयन् सर्वाणि धनरत्नादिभोग्यानि भुञ्जानश्च सर्वभोग्ये गृहस्थाश्रमे निवसति । यथा ऋषयः अयुतवत्सरादिचिरकालिकतपोऽनुष्ठानौपयिकं स्वदेहं चिकीर्षन्तो यमनियमाद्यष्टाङ्गयोगद्वारा तं तथाविधं सम्पादयन्तश्च कृच्छ्र-चान्द्रायणादितपांसि कुर्वन्ति, एवमयमपि यथाशास्त्रं सर्वेषां पालनं कुर्वन् ऋषिभ्यस्तेषां तपःषष्ठांशमाददानस्तपोराशिं सञ्चिनोति । यथा वा चारणद्वन्द्वैः जितेन्द्रियाणामृषीणां पुण्यनामानि देवलोके गीयन्ते, तथैव जितेन्द्रियस्य सञ्चित-तपोराशेरस्यापि राज्ञो दुष्यन्तस्य 'राजर्षिर्दुष्यन्तः' इति पुण्यनामस्मरणं देवलोके चारणद्वन्द्वैः क्रियते इति ऋषिसमान एवायम्' इति भावः ॥ १४ ॥

अथ द्वितीयो मुनिकुमारः स्वसहचरद्वारा राज्ञो दुष्यन्तस्य तथाविधं माहात्म्य श्रुत्वा सादरं सविस्मयं च पृच्छति—**अयमिति** । सः = प्रसिद्धः । बलभित्सखः = बलभित् = इन्द्रस्तस्य सखा = दुर्द्धर्षदानवजयादौ साहाय्यकरणान्मित्रम् । अथ-किमित्यनुवादे ।

---

१ सखे ।

**द्वितीयः**—तेन हि—

**नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्री-**
**मेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति।**
**आशंसन्ते [1]सुरयुवतयो बद्धवैरा हि दैत्यै-**
**रस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे ॥१५॥**

अथ द्वितीयो मुनिकुमारो राज्ञः प्रभावं वर्णयन्नाह—**तेन हि—नैतच्चित्रमिति।** यत्, नगरपरिघप्रांशुबाहुः एकः अयम् उदधिश्यामसीमां कृत्स्नां धरित्रीं भुनक्ति, एतत् चित्रं न। हि दैत्यैः बद्धवैराः सुरयुवतयः अस्य अधिज्ये धनुषि पौरुहूते वज्रे च विजयम् आशंसन्ते इत्यन्वयः।

यत् = यस्मात् नगरपरिघप्रांशुबाहुः—नगरस्य = दीर्घस्य पुरस्य परिघः = अर्गलः, "परिघो योगभेदेऽस्त्रे मुद्गरेऽर्गलघातयोः" इति विश्वः। नगरसम्बन्धिनिर्गमद्वारपिधानार्थमर्गलाया आवश्यकत्वं भवति। तद्वत् प्रांशू = उन्नतौ बाहू = भुजौ यस्य सः। बाह्वोः परिघोपमया दुर्दमवैरिविजयसामर्थ्यं द्योत्यते। एकः = अद्वितीयः, असहायश्च। इतरसाहाय्यानपेक्ष इत्यर्थः। अयं = पुरोवर्ती राजा दुष्यन्तः उदधिश्यामसीमाम्—उदधिना = समुद्रेण श्यामा = नीलवर्णा सीमा = पर्यन्तो यस्यास्ताम् कृत्स्नां = निःशेषां धरित्रीं = पृथ्वीं भुनक्ति = पालयति। अनेन तस्य मण्डलनाभित्वमुक्तम्। उदधिश्यामसीमामित्युक्त्या तत्त्वस्य एकदेशेऽपि संभवात् कृत्स्नामित्युक्तम्। एतच्चित्रं न—एतत् = उक्तम् चित्रं न = कृत्स्नमहीमण्डलपालनस्य सामान्यतश्चित्रत्वेऽपि एतद्विषये नाश्चर्यजनकमेतदित्यर्थः। हि =

१ समितिषु सुराः सक्तवैराः।

यस्मात् दैत्यैः = देवयोनिविशेषैः सुरशत्रुभिः बद्धवैराः = बद्धद्वेषाः सुरयुवतयः = देवाङ्गनाः अस्य = राज्ञो दुष्यन्तस्य अधिज्ये = आरूढमौर्वीके धनुषि = चापे पौरुहूते वज्रे च = इन्द्रहस्तस्थिते कुलिशे च विजयम् = अभियोक्तॄणां दैत्यानां पराभवकरणात्मकं जयम् आशंसन्ते = प्रार्थयन्ति । यद्वा निश्चिन्वन्ति । अत्र 'सुरयुवतयः' इति युवतिपदोपादानेन तासामतिभीरुत्वात् युद्धकालिकदुर्व्यवस्था-दुःखासहत्वं सूच्यते । 'अस्याधिज्ये धनुषि' इत्यादिना च राजधनुष एव प्रथमं ग्रहणात् विजयाशंसायामस्यैव प्राधान्यं द्योत्यते । एतेन राज्ञः प्रभावातिशयो ध्वन्यते ।

अत्र उपमा, काव्यलिङ्गम्, धनुर्वज्रयोर्विजयाशंसाविषयत्वरूपैकधर्मान्वयात् तुल्ययोगिता च । 'नगरपरिघप्रांशुबाहुः कृत्स्नां महीं भुनक्ति' इत्यत्र अनेन भुज-सहायेन सर्वे शत्रवो हता इति कारणे वक्तव्ये समस्तोर्वीजयलक्षणं कार्यमेवोक्त-मिति पर्यायोक्तालङ्कारश्च । राजधनुःपुरुहुतवज्रयोः पूर्वपश्चाद्भावेन प्राधान्या-प्राधान्यनिर्देशाभ्यां पुरुहूतापेक्षया राज्ञ उत्कर्षप्रतीतेर्व्यतिरेकालङ्कारो ध्वन्यते । किञ्चात्र राज्ञो युद्धवीरत्वप्रतीतेर्वीरो रसः । तदुपस्कृतो मुनिकुमारगतो विस्मयः प्रधानतः प्रतीयमानां राजविषयकरतिं पुष्णाति । मन्दाक्रान्ता वृत्तम् ।

द्वितीयो मुनिकुमारो राज्ञः प्रभावातिशयं वर्णयन् तस्य बलभित्सखत्वं समथ-यन्नाह—'चतुरुदधिवेलामेखलायितामशेषां धरित्रीम् आजानुपीनदृढबाहुः सहाया-न्तरानपेक्षोऽसौ राजा रक्षतीति नेदं विस्मयकरम् । पृथ्वीतलवर्तिनोऽप्यस्य साहाय्ये कृतविश्वासाः युद्धत्रासादिभीरवो देवाङ्गनाः दैत्यैः सह युद्धे सन्नद्धे अवश्यमिन्द्र-साहाय्याय समागतस्यास्य राज्ञः सज्ये धनुषि बाढं विजयमाशंसन्ति । इन्द्रस्य वज्रं तु तत्सहायत्वेनैव गणयन्ति । तस्मात् लोकोत्तरशौर्यशालिनोऽस्य नरपतेः कृत्स्नमहीमण्डलपरिपालनक्षमत्वं नाश्चर्यास्पदम्' इति भावः ॥ १५ ॥

**उभौ**—( उपगम्य ) विजयस्व राजन् ।

**राजा**—( आसनादुत्थाय ) अभिवादये भवन्तौ ।

**उभौ**—स्वस्ति भवते । ( इति फलान्युपहरतः । )

**राजा**—( सप्रणामं परिगृह्य ) आज्ञापयितुमिच्छामि ।

**उभौ**—विदितो भवानाश्रमसदामिहस्थः[1], तेन भवन्तं प्रार्थयन्ते ।

**राजा**—किमाज्ञापयन्ति ।

**उभौ**—तत्रभवतः कण्वस्य महर्षेरसांनिध्याद्रक्षांसि न इष्टिविघ्न-

---

**विजयस्व राजन्निति** । अयमाचारः । **आसनादुत्थायेति** । अनेन आदरातिशयो द्योत्यते । **फलान्युपहरत इति**—

देवो राजा गुरुर्भार्या वैद्यो नक्षत्रपाठकः ।
रिक्तपाणिर्न गन्तव्यस्तत्र कार्यं न सिद्ध्यति ॥

इत्युक्तेः । **आज्ञापयितुमिच्छामीति** । आत्मानं भवद्भ्यामिति शेषः । आज्ञाप्यतामित्युक्ते तौ प्रति नियोगः कृतः स्यादिति आज्ञापयितुमिच्छामीत्युक्तम् । ऋषिकुमारौ स्वकार्यं निवेदयतः—**विदितो भवानित्यादिना** । विदित इति वर्तमाने क्तः । इहस्थो भवान् आश्रमवासिभिर्ज्ञात इत्यर्थः । 'प्रार्थयन्ते, न तु आज्ञापयन्ति' इत्यनेन आश्रमवासिनां राज्ञि बहुमानो द्योत्यते । राजोक्तौ किमाज्ञापयन्तीति पूर्ववद्बहुमानद्योतकम् ।

आश्रमवासिनां प्रार्थनाप्रकारम् ऋषिकुमारौ आहतुः—**तत्रभवत इत्यादिना** । तत्रभवतः = पूज्यस्य महर्षेः = ऋषिश्रेष्ठस्य । आभ्यां विशेषणाभ्यां कण्वस्य तपःप्रभावातिशयः, तेन तत्सान्निध्ये विघ्नोत्पत्तेरसंभवश्च द्योत्यते । असान्निध्यादिति

---

१ इहस्थस्तपस्विनाम् ।

मुत्पादयन्ति। तत्कतिपयरात्रं सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रम इति।

**राजा**—अनुगृहीतोऽस्मि।

**विदूषकः**—(अपवार्य) [1]एसा दाणिं अणुऊला ते अब्भत्थणा।

एषेदानीमनुकूला तेऽभ्यर्थना।

**राजा**—(स्मितं कृत्वा) रैवतक! मद्वचनादुच्यतां सारथिः, [2]सबाणासनं रथमुपस्थापयेति।

---

कथनेन प्रथमाङ्कवर्णिताया वैखानसोक्तेरनुसन्धानम्। **इष्टिविघ्नम्**—इष्टिः = यागः तत्र विघ्नं = प्रत्यूहः। कतिपयरात्रमिति अत्यन्तसंयोगे द्वितीया। यागदिवसानां रात्रिप्राधान्येन व्यपदेशात् एवमुक्तम्। किञ्च रात्रिशब्देन तस्मिन् काले रक्षःसञ्चारबाहुल्येन भयसम्भावनाऽपि द्योत्यते। **सनाथीक्रियताम्**—नाथेन = रक्षकेण सहितः सनाथः, च्व्यर्थोऽत्र अविवक्षितः। राजोक्तौ—**अनुगृहीतोऽस्मीति**। तपोधनानां नियोगस्य स्वाभ्युदयहेतुत्वात् राज्ञा सः अनुग्रह एव संभावित इति। भवदभ्यर्थनामङ्गीकरोमीति भावः। अत्र केनाप्यपदेशेन पुण्याश्रमं गन्तुमिच्छो राज्ञः ऋषिकुमारकृता अभ्यर्थना अनुग्रहपक्षे एव संवृत्तेति अनुगृहीतोऽस्मीत्यस्य वाच्यार्थोऽपि पर्यवसन्नः।

अपवार्य = त्रिपताककरेण इतरेषामश्रवणमभिनीयेत्यर्थः। विदूषको वदति—**एसा इति**। 'एषेदानीमनुकूला तेऽभ्यर्थना' इति संस्कृतम्। इदानीम् = आश्रमवासोपायविचारावसरे अनुकूला = अपदेशं विनैव आश्रमगमनोपायसम्भावनया अभीष्टा। **स्मितं कृत्वेति**। स्वमनोरथस्य विदूषकेण प्रकाशनात्

---

१ एस दाणिं भअदो अणुऊलो गलहत्थो। २ सबाणकार्मुकम्।

**दौवारिकः**—जं देवो आणवेदि ।

यद्देव आज्ञापयति । ( इति निष्क्रान्तः । )

**उभौ**—( सहर्षम् )—

अनुकारिणि पूर्वेषां युक्तरूपमिदं त्वयि ।
आपन्नाभयसत्रेषु दीक्षिताः खलु पौरवाः ॥ १६ ॥

---

स्मितम् । मद्वचनात् = मदाज्ञया । सबाणासनम् = धनुर्बाणसहितम् । जं देवो इति । 'यद्देव आज्ञापयति' इति संस्कृतम् । **सहर्षमिति** । राजवचनश्रवणं हर्षहेतुः ।

अथ राजवचनश्रवणेन हृष्टौ ऋषिकुमारौ राजानमभिनन्दतः—**अनुकारिणि** इति । पूर्वेषामनुकारिणि त्वयि इदं युक्तरूपम् (अस्ति) । पौरवाः आपन्नाभयसत्रेषु दीक्षिताः (सन्ति) खलु इत्यन्वयः ।

पूर्वेषां = पुरुप्रभृतीनां स्वपूर्वजानाम् । इयं कर्मणि षष्ठी । अनुकारिणि = अनुकरणकर्तरि, सदृशे इत्यर्थः । त्वयि = राज्ञि दुष्यन्ते इदं = मुनिजनप्रार्थनायाः सद्यः स्वीकरणम् युक्तरूपम् = अतिशयेन युक्तम् । प्रशंसायां रूपप् । पौरवाः = पुरुवंशोद्भवा राजानः आपन्नाभयसत्रेषु—आपन्नाः = आपत्तियुक्ताः, "आपन्न आपत्प्राप्तः स्यात्" **इत्यमरः** । तेषाम् अभयानि = अभयदानान्येव सत्राणि = यागविशेषाः तेषु विषये दीक्षिताः = कृतदीक्षाः, धृतव्रताः । नित्योद्युक्ता इति यावत् । अत्र आपन्नाभयप्रदाने सत्रत्वारोपेण तस्यावश्यकर्तव्यत्वम्, लोकोत्तरफलजनकत्वम्, साधारणजनदुष्करत्वं च सूच्यते । खल्विति प्रसिद्धौ ।

अत्र पूर्वार्धे काव्यलिङ्गम्, उत्तरार्धे रूपकम्, तदनुप्राणितोऽर्थान्तरन्यासश्चालङ्काराः । हर्षोपस्कृता मुनिकुमारनिष्ठा राजविषयकरतिश्च व्यज्यते ।

**राजा**—( सप्रणामम् ) गच्छतं पुरो भवन्तौ । अहमप्यनुपदमागत एव ।

**उभौ**—विजयस्व । ( इति निष्क्रान्तौ । )

**राजा**—माधव्य ! अप्यस्ति शकुन्तलादर्शने कुतूहलम् ?

**विदूषकः**—पढमं [1]सपरीवाहं आसि । [2]दाणिं रक्खसवुत्तन्तेण

इष्टिविघ्ननिवारणाय मुनिजनप्रार्थनानुसारेण आश्रमगमने राज्ञा सद्यः प्रतिश्रुते तस्य तथाविधव्यवहारेण भृशं परितुष्टौ ऋषिकुमारौ तमभिनन्दतः—'हे राजन् ! शौर्येण दानेन पावित्र्येण मुनिजनरक्षणतत्परत्वेन च स्वपूर्वजानेव सादरमनुकुर्वतस्तव अस्मत्प्रार्थनासमनन्तरमेव पुण्याश्रमगमनप्रतिश्रवणं योग्यतममेव । यतः भवत्पूर्वजाः सर्वेऽपि पुरुवंशोद्भवा राजानः आपद्ग्रस्तेभ्यः अभयप्रदानरूपेषु सत्रेषु सर्वदा गृहीतव्रता नित्योद्युक्ता एवासन् । यः कोऽप्यापद्ग्रस्तो यदा कदाऽपि तेषां समीपे गत्वा स्वापत्तिं निवेद्य सद्य एव तेभ्यः अभयं लभते स्म, तथैव भवानपि आपद्ग्रस्तानामापत्तिनिवारणे जागरूकः' इति भावः ॥१६॥

**अनुपदमिति** । पदस्य पश्चात् अनुपदमिति अव्ययीभावः । भवत्पदन्यासं लक्ष्यीकृत्य, अनन्तरमेवेत्यर्थः । आगत एवेति भूतत्वेन निर्देशः स्वगमने विलम्बाभावं द्योतयति ।

राजा विदूषकमाह—**माधव्येति** । काक्वा प्रश्नः । विदूषक उत्तरयति—**पढममिति** । 'प्रथमं सपरीवाहमासीत्, इदानीं राक्षसवृत्तान्तेन बिन्दुरपि नावशेषितः' इति संस्कृतम् । प्रथमम् = 'चित्रे निवेश्य' इत्यादिवर्णनात्प्रभृति मुनिकुमारप्रार्थनाश्रवणपर्यन्तमित्यर्थः । सपरीवाहम्—अत्र वृद्धिवाचिना परीवाह-

१ अपरिबाधम् । २ सम्पदम् ।

बिन्दू वि णावसेसिदो ।

प्रथमं सपरीवाहमासीत् । इदानीं राक्षसवृत्तान्तेन विन्दुरपि नावशेषितः ।

**राजा**—मा भैषीः । ननु मत्समीपे वर्तिष्यसे ।

**विदूषकः**—एस रक्खसादो रक्खिदो ह्मि ।

एष राक्षसाद्रक्षितोऽस्मि ।

( प्रविश्य )

**दौवारिकः**—सज्जो रधो भट्टिणो विजअप्पत्थाणं अवेक्खदि । एस उण णअरादो देवीणं आणत्तिहरओ करभओ आअदो ।

सज्यो रथो भर्तुर्विजयप्रस्थानमपेक्षते । एष पुनर्नगराद्देवीनामाज्ञप्तिहरः करभक आगतः ।

**राजा**—( सादरम् ) किमम्बाभिः प्रेषितः ?

---

शब्देन वृद्धिर्लक्ष्यते, तदाधिक्यं च व्यज्यते । सातिशयमित्यर्थः । 'कुतूहलम्' इत्यनुषज्यते । बिन्दुरपीत्यत्र बिन्दुशब्दः अल्पस्य लक्षकः । अल्पतातिशयश्च व्यङ्ग्यः । अत्र कुतूहलस्य जलसाम्यम्, राक्षसवृत्तान्तस्य आतपसाम्यं च व्यज्यते । 'मत्समीपे वर्तिष्यसे' इति कथनेन न तव राक्षसेभ्यो भीतिसंभावना वर्तते इति सूच्यते । विदूषक उत्तरयति—**एस इति** । 'एष राक्षसात् रक्षितोऽस्मि' इति संस्कृतम् । त्वया मद्रक्षणे प्रतिश्रुते रक्षितमेवात्मानमहं मन्ये इति भावः ।

दौवारिकोक्तौ—**सज्जो रधो इति** । 'सज्यो रथो भर्तुर्विजयप्रस्थानमपेक्षते । एष पुनर्नगराद्देवीनामाज्ञप्तिहरः करभक आगतः' इति संस्कृतम् । सज्यः = सन्नद्धः । देवीनाम् = अम्बायाः, राजमातुः । भृत्याचारात् पूज्यत्वाच्च बहुवचनम् । आज्ञप्तिहरः—आज्ञप्तिः = आज्ञा तस्याः हरः = आनेता करभकः = तन्नामा । राजोक्तौ—**अम्बाभिरिति** । अत्रापि पूर्ववत् पूज्यत्वाद्बहुवचनम् ।

**दौवारिकः**—अहइं !

अथकिम् !

**राजा**—[1]ननु प्रवेश्यताम् ।

**दौवारिकः**—तह । ( इति निष्क्रम्य करभकेण सह प्रविश्य ) एसो भट्टा । उवसप्प ।

तथा । एष भर्ता । उपसर्प ।

**करभकः**—जेदु भट्टा । देवी आणवेदि—आआमिणि चउत्थदिअहे पउत्थपारणो मे उववासो भविस्सदि, तहिं दीहाउणा अवस्सं संभाविदव्वा त्ति ।

जयतु भर्ता । देव्याज्ञापयति—आगामिनि चतुर्थदिवसे प्रवृत्तपारणो मे उपवासो भविष्यति; तत्र दीर्घायुषाऽवश्यं संभावितव्येति ।

**राजा**—इतस्तपस्विकार्यम्, इतो गुरुजनाज्ञा । [2]द्वयमप्यनति-

---

आज्ञाप्रकारमाह—**आआमिणि इत्यादि** । 'आगामिनि चतुर्थदिवसे प्रवृत्तपारणो मे उपवासो भविष्यति; तत्र दीर्घायुषा अवश्यं संभावितव्येति' इति संस्कृतम् । आगामिनि चतुर्थदिवसे = अस्मादिनात् चतुर्थदिवसे इत्यर्थः । उपवासः = व्रतविशेषः । पूर्वम् उपवासवचनश्रवणं राज्ञो दुःखं जनयेदिति प्रवृत्तपारण इत्युपन्यस्तम् । पारणा = उपवासाङ्गं व्रतान्तभोजनम् । दीर्घायुषा = चिरजीविना राज्ञा । अनेन अम्बाया वात्सल्यं द्योत्यते । भावितव्या = स्वागमनेन प्रीणनीयेत्यर्थः । तदाकर्ण्य राजा चिन्तयति—**इतस्तपस्विकार्यमित्यादि** । इतः = अत्र तपोवने । पुनः इतः = अन्यत्र, नगरे । गुरुजनाज्ञा = अम्बारूपेण गुरुजनेनाज्ञप्तं कार्यमित्यर्थः । अनतिक्रमणीयमिति निषेधमुखेनोक्तिस्तदतिक्रमणस्य दोषावहत्वं

---

१ तेन हि । २ उभय ।

क्रमणीयम् । किमत्र प्रतिविधेयम् ?

**विदूषकः**—तिसङ्कू विअ अन्तराले चिट्ठ ।

त्रिशङ्कुरिवान्तराले तिष्ठ ।

**राजा**—सत्यमाकुलीभूतोऽस्मि ।

**कृत्ययोर्भिन्नदेशत्वाद्द्वैधीभवति मे मनः ।**
**पुरः प्रतिहतं शैले स्रोतः स्रोतोवहो[1] यथा ॥१७॥**

सूचयति । तपस्विकार्यगुरुजनाज्ञयोः समप्राधान्येन युगपत्कर्तुमशक्यत्वात् राज्ञः प्रतिपत्तिमूढत्वं सूच्यते ।, प्रतिपत्तिमूढः सन्नाह--**किमत्र प्रतिविधेयमिति** । प्रतिविधेयं = प्रतिकर्तव्यम् । अत्र किमनुष्ठेयमित्यर्थः ।

राजानं प्रतिपत्तिमूढं विदित्वा विदूषकः सपरिहासमाह--**तिसंकू इति** । 'त्रिशङ्कुरिव अन्तराले तिष्ठ' इति संस्कृतम् । त्रिशङ्कुकथा रामायणादौ प्रसिद्धा । स यथा विश्वामित्रतपोबलेन ऊर्ध्वलोकं प्रेषितो देवेन्द्रेण चाधः पातितो नोर्ध्वम्, न चाधः, किन्तु अन्तराले एव तिष्ठति स्म, तथैव त्वमपि मुनिजनगुरुजनाज्ञयोः किमप्यकृत्वा अत्रैवं विचारयन्नेव तिष्ठेति परिहासोक्तिः । विदूषकस्य परिहासं जानन् राजा नायं परिहासावसर इत्याह--**सत्यमिति** । आकुलीभूतोऽस्मीति यत्, तत्सत्यमित्यर्थः ।

आकुलतायाः कारणमाह—**कृत्ययोरिति** । पुरः शैले प्रतिहतं स्रोतोवहः स्रोतो यथा, मे मनः कृत्ययोः भिन्नदेशत्वात् द्वैधीभवति इत्यन्वयः ।

पुरः = अग्रे शैले=शिलाः सन्ति यस्मिन्नित्यन्वर्थनामवति प्रतिहननसमर्थे पर्वते । प्रतिहतम् = अवरोधं प्राप्तम्, निरुद्धप्रवाहमिति यावत् । स्रोतोवहः=नद्याः । स्रोतः=

1 स्रोतोवहाम् ।

( विचिन्त्य ) सखे ! त्वमम्बया पुत्र इति प्रतिगृहीतः। अतो भवानितः प्रतिनिवृत्य तपस्विकार्यव्यग्रमानसं मामावेद्य तत्रभवतीनां पुत्रकृत्यमनुष्ठातुमर्हति।

---

प्रवाहः यथा = इत्र मे = मम मनः=चित्तम् कृत्ययोः=मुनिजनाज्ञापालनगुरुजनाज्ञापालनरूपयोः कार्ययोः भिन्नदेशत्वात् = तपोवननगररूपदेशद्वयमध्यस्थत्वात् द्वैधीभवति=संशयदोलारूढं सत् नैकत्र पर्यवस्यति। उपमानपक्षे तु मार्गद्वयगामि भवति।

अत्र 'स्रोतोवहः स्रोतः' इत्यनेन महानद्या महान् प्रवाह एव विवक्षितः। अल्पः प्रवाहश्चेत् स शैलावरुद्धः सन् तत्रैव तिष्ठेत्, न द्विधा गच्छेत्। दृष्टान्तेन मुनिजनगुरुजनाज्ञापालनयोः कृत्ययोः समप्राधान्यं द्योत्यते। अत्र उपमानोपमेययोर्द्वैधीभवने भिन्ने अपि समानधर्मार्थमतिशयोक्त्या एकत्वेन अध्यवसिते। उपमाऽलङ्कारः।

राजा आत्मनश्चित्तस्य आकुलीभावं कथयति—'सखे ! माधव्य ! किं करोमि ? संप्रति व्याकुला मे चित्तवृत्तिः। यथा महता वेगेन प्रवहन् महानद्याः प्रवाहो मध्येमार्गं केनापि महता शैलेनावरुद्धः सन् शैलोभयपार्श्वाभ्यां प्रवहति, द्विधाप्रवाहरूपं द्वैधीभावं च समासादयति; एवम् एकतो मुनिजनाभ्यर्थनया शकुन्तलादर्शनोत्कण्ठया च पुण्याश्रमगमने सत्वरम्, नगरात् करभकद्वारा अम्बानामादेशमासाद्य तस्य अनुल्लङ्घनीयतया नगरगमने प्रवृत्तं च मे मनः 'किं कर्तव्यम्, किमकर्तव्यम्' इति निश्चयाभावात्, कार्यद्वयस्य च समप्राधान्यात् सन्देहदोलारूढं सत् द्वैधीभवति' इति भावः ॥१७॥

इत्थं चिन्तितो राजा तत्कालस्फुरितया प्रतिभया कर्तव्यं निर्धार्य विदूषकमाह—सखे ! इति। सखे इति सम्बोधनेन यस्मात् त्वम् अम्बाभिः पुत्रत्वेन परिगृहीतोऽसि, तस्मात् सफलमद्य सखित्वमिति द्योत्यते। पुत्रकृत्यम्—पुत्रेण =

**विदूषकः**—ण क्खु मं [1]रक्खोभीरुअं गणेसि ।

न खलु मां रक्षोभीरुकं गणयसि ।

**राजा**—( सस्मितम् ) कथमेतद्भवति संभाव्यते !

**विदूषकः**—जह राआणुएण गन्तव्वं, तह गच्छामि ।

यथा राजानुजेन गन्तव्यम् , तथा गच्छामि ।

**राजा**—ननु तपोवनोपरोधः परिहरणीय इति सर्वानानुयात्रिकांस्त्वयैव सह [2]प्रस्थापयामि ।

**विदूषकः**—तेण हि जुवराओ ह्मि दाणिं संवुत्तो ।

---

मया कर्तुमुचितं कर्म । विदूषक उत्तरयति—**ण क्खु इति** । 'न खलु मां रक्षोभीरुकं गणयसि' इति संस्कृतम् । त्वन्नियोगेनैवाहं नगरं गच्छामि, न रक्षोभयेनेति भावः । अनेन विदूषकस्य रक्षोभयं स्थितमेवेति द्योत्यते । राजोक्तौ—**सस्मितमिति** । विदूषकस्य नर्मोक्तिः स्मितहेतुः । बहुमानं दर्शयन्नाह—**कथमिति** । एतत् = रक्षोभीरुत्वं भवति = त्वयि । कथं सम्भाव्यते ! नैवेत्यर्थः । नाहं त्वां रक्षोभीरुकं संभावयामि, त्वमेव स्वमुखेन तत् प्रकाशयसीत्याकूतम् । विदूषकः कथयति—**जह इति** । 'यथा राजानुजेन गन्तव्यम्, तथा गच्छामि' इति संस्कृतम् । अनेन सकलसैनिकादिपरिवारसहितं मां प्रेषयेति सूच्यते । तपोवनोपरोधः = सैनिकानां हस्तितुरगादीनां च कोलाहलेन तपोवनशान्तिभङ्गः । आनुयात्रिकान् = सहागतान् सैनिकादीन् । प्रहृष्टो विदूषकश्चापलं प्रदर्शयन्नाह—**तेण होति** । 'तेन हि युवराजोऽस्मीदानीं संवृत्तः' इति संस्कृतम् । इदानीं = सर्वानुयात्रिकसञ्चालनाधिकारलाभेन संवृत्तः = जातः ।

---

१ भो ! मा रक्खसभीरुअं मं अवगच्छ । २ प्रेषयिष्यामि ।

तेन हि युवराजोऽस्मीदानीं संवृत्तः ।

**राजा**—( स्वगतम् ) चपलोऽयं बटुः । कदाचिदस्मत्प्रार्थनामन्तः-[1]पुरेभ्यः कथयेत्! भवतु, एनमेवं वक्ष्ये—( विदूषकं हस्ते गृहीत्वा प्रकाशम् ) वयस्य ! ऋषिगौरवादाश्रमं गच्छामि । न खलु सत्यमेव तापसकन्यकायां ममाभिलाषः । पश्य—

---

अथ राजा विदूषकस्य प्रस्थापने कञ्चिद्दोषमाशङ्क्य स्वगतं विचारयति—**चपलोऽयमित्यादिना** । चपलः = अनवस्थितचित्तः, वाच्यावाच्यविवेकरहित इति यावत् । बटुरिति ब्राह्मणस्वभावनिन्दायाम् । कथयेत्—संभावनायां लिङ् । मृगयावृत्तान्त संगेन शकुन्तलावृत्तान्तमपि अन्तःपुरिकाभ्यः कथयेदिति संभावयामीत्यर्थः । एवं सति दाक्षिण्यभङ्गदोषः स्यादिति भावः । तत्परिहारं विमृशन्नाह—**भवत्विति** । भवतु, अधिगतः परिहारोपाय इत्यर्थः ।

वक्तव्यं निश्चित्याह—**एवमिति** । एवम् = वक्ष्यमाणप्रकारेण । **हस्ते गृहीत्वेति** । तस्य करं स्वकरेण गृहीत्वेत्यर्थः । अनेन आत्मनः सख्यं व्यञ्जयन् रहस्यनिर्भेदनिराचिकीर्षया तमावर्जयति । तथाभूत एवाह—**वयस्येति** । ऋषिगौरवात् = गुरुकल्पानामृषीणां कार्यस्य अप्रत्याख्येयत्वात् । शकुन्तलादर्शनोत्कण्ठया आश्रमगमनशङ्कां निराकुर्वन्नाह—**न खल्विति** । न खलु = नैव । सत्यमेव= यथार्थमेव तापसकन्यकायां = मुनिदुहितरि शकुन्तलायाम् । अनेन तस्याः स्वाभिलाषानर्हत्वं सूचितम् । मम=नागरस्य चक्रवर्तिनो विदग्धस्य राज्ञो दुष्यन्तस्य ।

---

१ अन्तःपुरिकाभ्यः ।

क्व वयं क्व परोक्षमन्मथो मृगशावैः [1]सममेधितो जनः ।
परिहासविजल्पितं सखे ! परमार्थेन न गृह्यतां वचः ॥१८॥

शकुन्तलायाः स्वाभिलाषानर्हत्वं समर्थयन्नाह—क्व वयमिति । वयं क्व ! परोक्षमन्मथो मृगशावैः समम् एधितो जनः क्व ! हे सखे ! परिहासविजल्पितं वचः परमार्थेन न गृह्यताम् इत्यन्वयः ।

वयमिति अर्थान्तरसङ्क्रमितवाच्यम्, तेन अनेकराजोपचाराभ्यस्ताः नानावैदग्धीकुशला नागरा वयमित्यर्थः । क्व = कुत्र । परोक्षमन्मथः—मनो मथ्नातीति मन्मथः=कामः सोऽपि परोक्षः=अप्रत्यक्षो यस्य । दूरमुक्तमनोभवः, कामकलानभिज्ञ इति यावत् । मृगशावैः=हरिणबालकैः समम् = सह, तुल्यं वा एधितः=वृद्धिं प्राप्तः जनः = शकुन्तलारूपः क्व=कुत्र । नागरग्राम्ययोर्न सामानाधिकरण्यमिति भावः । हे सखे=मित्र माधव्य ! परिहासविजल्पितम्—परिहासेन = सवयसा त्वया सह प्रवृत्तेन मिथ्याभूतेन नर्मालापेन विविधं जल्पितं यत्र तथाभूतं वचः = शकुन्तलायामनुरागकथनरूपं परमार्थेन = याथार्थ्येन न गृह्यताम् = नावधार्यताम् । शकुन्तलानुरागकथादिकं सर्वं मदीयं वचः परिहासोक्तमेव, न यथार्थमिति मन्तव्यमिति भावः ।

अत्र काव्यलिङ्गम्, पूर्वार्धे विषमस्यैको भेदः, सहोक्तिश्चालङ्काराः । वैतालीयं छन्दः । 'राजा स्वगतम्' इत्यादिना 'परमार्थेन न गृह्यतां वचः' इत्यन्तेन सन्दर्भेण संवृतिर्नाम सन्ध्यन्तराङ्गमुपक्षिप्तम् । तल्लक्षणं यथा—"संवृतिः स्वयमुक्तस्य स्वयं प्रच्छादनं भवेत्" इति ।

---

१ सह वर्धितो ।

**विदूषकः**—अहइं !

अथकिम् !

( इति निष्क्रान्ताः सर्वे । )

**इति द्वितीयोऽङ्कः ।**

---

आत्मनः शकुन्तलानुरागं प्रच्छादयन् शकुन्तलायाः स्वाभिलाषानर्हत्वं च समर्थयन् राजा विदूषकमाह—'सखे ! माधव्य ! शकुन्तलानुरागकथादिकं यन्मया पूर्वं प्रस्तुतमासीत्, तत्सर्वं परिहासोक्तमेव । त्वमेव तावद्विचारय—लोकोत्तर-सौन्दर्यशालिनीनां नानावैदग्धीकुशलानामन्तःपुरयुवतीनां भोक्तारः स्वयमनेकराजो-पचाराभ्यस्ता रसिकोत्तंसा वयं क्व ! उत्पत्तिसमनन्तरमेव पितृभ्यां वने परित्यक्तो महर्षिणा कण्वेन धर्मबुद्ध्या स्वकुटीरमानीय स्वाश्रमस्थैर्हरिणबालकैः सह संवर्धितः आरण्यकवृत्तिः सर्वथा कामकलानभिज्ञो वेषभूषादिशून्यो ग्राम्यः शकुन्तलारूपो जनः क्व ! आवयोः सामानाधिकरण्यं स्वप्नेऽपि किं सम्भावयितुं शक्यते ? तस्मात् सर्वमेतत् परिहासोक्तमेव, न यथार्थमिति मत्वा मनसो निस्सारय' इति भावः ॥ १८ ॥

राजोक्तिमाकर्ण्य विदूषक उत्तरयति—**अहइं इति** । 'अथकिम्' इति संस्कृतम् । भवदुक्तिमेवानुमन्ये इति भावः ।

इति **नारायणो**न्नीते **लक्ष्मी**रित्यभिधाङ्किते ।

**शाकुन्तलस्य व्याख्याने द्वितीयोऽङ्कः** समाप्तिमैत् ॥

---

इति श्रीम**न्नारायणशास्त्रिणा** प्रणीतायामभिज्ञानशाकुन्तलाभिनवटीकायां

**लक्ष्मी**समाख्यायां **द्वितीयोऽङ्कः ।**



# तृतीयोऽङ्कः ।

( ततः प्रविशति कुशानादाय यजमानशिष्यः । )

**शिष्यः**—अहो महानुभावः पार्थिवो दुष्यन्तः ! प्रविष्टमात्रे एवाश्रमं तत्रभवति राजनि [1]निरुपद्रवाणि नः कर्माणि प्रवृत्तानि भवन्ति ।

---

अस्मिन्नङ्के पूर्वं शिष्यस्य, ततो राज्ञः, तदनन्तरं सखीजनसहितायाः शकुन्तलाया गौतम्याश्च प्रवेशः । विप्रलम्भश्रृङ्गारो मुख्यो रसः । पूर्वाङ्कावसानकालोपन्यस्तां राज्ञः ऋषिविघ्ननिवारणाय पुण्याश्रमगमनकथां कथयितुं सन्दर्भान्तरं च संघटयितुं विष्कम्भकमुखेन मुनिशिष्यप्रवेशमाह— **तत इति** । शिष्यो यजमानस्य गुरोराज्ञया ब्रह्मकर्मोपयुक्तान् दर्भान् आदाय गुरोर्यज्ञशालां गच्छन् मध्येमार्गं राज्ञो महान्तं प्रभावं विचिन्त्य साश्चर्यं स्वगतमाह— **अहो इति** । अहो इत्याश्चर्ये । महानुभावः— महान् = अपरिच्छेद्यः अनुभावः = अनभिभवनीयताप्रतीतिहेतुतेजोविशेषात्मकः प्रभावो यस्य सः । "अनुभावः प्रभावेऽपि" इत्यमरः । पार्थिव इत्यनेन प्रभुशक्तिमत्ता द्योत्यते । राज्ञोऽनुभावमहत्त्वं कार्यमुखेन कथयति—**प्रविष्टमात्रे इति** । प्रविष्टमात्रे एव = प्रवेशसमकालमेवेत्यर्थः । मात्रपदैवकाराभ्यामविलम्बः सूच्यते । तत्रभवति = पूज्ये निरुपद्रवाणि = राजप्रभावात् रक्षोविद्रावणेन निर्विघ्नानीत्यर्थः । एतेन राज्ञ आश्रमगमनम्, मुनिजनयज्ञप्रतिपन्थिरक्षोनिवारणम्, ततो निर्विघ्नं कर्मसमाप्तिश्चेत्यतीतः कथांशो दर्शितः ।

---

१ निरुपप्लवानि ।

का कथा बाणसंधाने ज्याशब्देनैव दूरतः।
हुंकारेणेव धनुषः स हि विघ्नानपोहति ॥१॥

[1]यावदिमान्वेदिसंस्तरणार्थं दर्भानृत्विग्भ्य [2]उपनयामि। (परिक्रम्यावलोक्य

राज्ञा कथं विघ्ननिवारणं कृतमित्याह—का कथेति। बाणसन्धाने का कथा! स हि धनुषो हुङ्कारेणेव ज्याशब्देन दूरत एव विघ्नानपोहति इत्यन्वयः।

बाणसन्धाने = धनुषा बाणस्य संयोजने का कथा = किमुच्यते! शरसन्धानं नापेक्ष्यते, तत्प्रसंग एव नास्तीत्यर्थः। सः = राजा दुष्यन्तः। हीति हेतौ। धनुषः = चापस्य हुङ्कारेणेव—निग्रहसूचको मन्त्रतुल्यो 'हुम्' इति अनुकरणशब्दः। मुनयस्तेनैव विघ्नानपसारयन्ति। तथाविधेन तेन शब्देनेव ज्याशब्देन—ज्यायाः = मौर्व्याः शब्दः = टणत्काररूपस्तेन दूरत एव = दूरस्थित एव विघ्नान् = यज्ञविघ्नकारिकुलानुपद्रवान् अपोहति = निरस्यति, दूरीकरोतीत्यर्थः।

अत्र धनुषो मुनित्वप्रतीत्या समासोक्तिगर्भा उत्प्रेक्षा, काव्यलिङ्गं च। राज्ञो गणपत्युपमानत्वं गम्यते। व्यज्यमानो वीररसो मुनिनिष्ठविस्मयस्य अङ्गम्, विस्मयादिभिश्च राजविषयिणी रतिः पोष्यते।

राज्ञो दुष्यन्तस्य महाप्रभावत्वं सद्य एव ऋषिजनप्रस्तुतयागविघ्ननिवारकत्वं च वर्णयन् यजमानशिष्य आह—'अहो प्रभावो राज्ञो दुष्यन्तस्य! येन आश्रमपद प्रविष्टमात्रेणैव नः कर्माणि निरुपद्रवाणि सम्पादितानि। रक्षांसि विद्रावयितुं धनुषि शरं सन्धातुं प्रथमं ज्याशब्द एव कृतः, स एव किल हुङ्काररूपो भूत्वा रक्षसां भयजननः पलायनसंपादकश्चाभूत्। बाणसंधानस्य तु प्रसंग एव नागतः। तस्मात् अद्भुतप्रभावोऽयं राजर्षिः' इति भावः ॥१॥

प्रस्तुतं स्वकृत्यमनुसन्धायाह—यावदिति। वेदिसंस्तरणार्थम् = यज्ञीय-

१ यावदेतान्। २ उपाहरामि।

च आकाशे ) प्रियंवदे ! कस्येदमुशीरानुलेपनं मृणालवन्ति च नलिनीपत्राणि नीयन्ते ? ( आकर्ण्य ) किं ब्रवीषि ? आतपलङ्घनाद्बलवदस्वस्था शकुन्तला, तस्याः शरीरनिर्वापणायेति ? तर्हि त्वरितं गम्यताम् । सखि ! सा खलु भगवतः कण्वस्य कुलपतेरुच्छ्वसितम् । अहमपि तावद्वैतानिकं शान्त्युदकमस्यै गौतमीहस्ते विसर्जयिष्यामि । ( इति निष्क्रान्तः । )

---

परिष्कृतभूमावाच्छादनार्थम् । उपनयामि=समर्पयिष्यामि । वर्तमानसामीप्ये लट् ।

**आकाश इति** । प्रियंवदाया अप्रवेशेऽपि तया सह सम्भाषणं सङ्घटयितुमिद-माकाशभाषितं कल्पितम् । तल्लक्षणं यथा **दशरूपके**—

किं ब्रवीष्येवमित्यादि विनापात्रं ब्रवीति यत् ।
श्रुत्वेवानुक्तमप्येकस्तत्स्यादाकाशभाषितम् ॥ इति ।

नाटयधर्मोऽयम् । कस्येति सामान्ये नपुंसकम् । उशीरानुलेपनम् = उशीर-युक्तमनुलेपनमित्यर्थः । तस्य शरीरनिर्वापकत्वात् । आकर्ण्य = आकर्णनमभिनीय । आकर्णनाभिनयस्तु पार्श्वानतेन शिरसा स्तब्धेन नेत्रेण च भवति । यथोक्तम्—

पार्श्वस्याभिमुखं यत्तु तत्पार्श्वानतमुच्यते ।
प्रयोज्यमाकर्णनादौ पार्श्वस्थस्यावलोकने ॥
यत्तु स्यान्निश्चलपुटं स्तब्धनेत्रं प्रचक्षते । इति ।

आतपलङ्घनात्—आतपः = सूर्यप्रकाशः, तस्मिन् लङ्घनात् = सञ्चारादित्यर्थः । शरीरनिर्वापणाय = शरीरस्थतापदूरीकरणाय । त्वरितं गम्यतामित्यनेन आवेगाति-शयः सूच्यते । उच्छ्वसितम् = जीवितम् । इदं रूपकम् । कण्वस्य महर्षेः स्वजीवि-तवत् शकुन्तला अत्यन्तं प्रियेति भावः । वैतानिकं=यज्ञसंबन्धि शान्त्युदकं= शान्त्यर्थमुदकम्, यागावशिष्टं तीर्थजलमित्यर्थः । गौतमीहस्ते—गौतमी = कण्वस्य

---

१ नलिनीदलानि । २ श्रुतिमभिनीय । ३ यत्नादुपचर्यताम् ।

विष्कम्भकः।

( ततः प्रविशति [1]कामयमानावस्थो राजा। )

राजा—(सचिन्तं निःश्वस्य)

जाने तपसो वीर्यं सा बाला परवतीति मे विदितम्।
[2]अलमस्मि ततो हृदयं तथापि नेदं निवर्तयितुम् ॥२॥

स्वसा शकुन्तलाया मातृस्थानीया काचित्तापसी, तद्द्वारा इत्यर्थः। एतेन अग्रे गौतमीप्रवेशोऽपि सूचितः।

विष्कम्भक इति। तल्लक्षणं यथा—

तत्र विष्कम्भको भूतभाविवस्त्वंशसूचकः।
अमुख्यपात्ररचितः संक्षेपैकप्रयोजनः॥
द्विधा स शुद्धो मिश्रश्च मिश्रः स्यान्नीचमध्यमैः।
शुद्धः केवलमध्योऽयमेकानेककृतो द्विधा॥ इति।

अयं त्वेककृत इति शुद्ध एव।

अथ मिथः प्ररूढरागयोः शकुन्तलादुष्यन्तयोः समदनावस्थावर्णनेन विप्रलम्भशृङ्गारं प्रदर्शयिष्यन् कविः पूर्वसूचितस्य नायकस्य प्रवेशमाह—**ततः प्रविशतो**-त्यादिना। कामयमानावस्थः—कामयमानः = विरही, तस्य अवस्थेवावस्था यस्य सः, विरहव्याकुल इत्यर्थः।

मित्रं विदूषकमानुयात्रिकैः सह नगरं प्रेष्य ऋषिप्रस्तुतयागविघ्नांश्च निवार्य ऋषिभिर्विश्रमार्थमादिष्टो राजा रहसि शकुन्तलामेवानुध्यायन् मदनानलज्वालावलीढचेताः सद्यः प्रियाप्राप्त्युपायं विमृशन्नपि नाधिगच्छन् सोत्कण्ठमाह—**जाने इति।** (अहम्) तपसो वीर्यं जाने; सा बाला परवती (अस्ति) इति मे

१ समदनावस्थो। २ न च निम्नादिव सलिलं निवर्तते मे ततो हृदयम्।

विदितम्; तथापि इदं हृदयं ततो निवर्तयितुं न अलमस्मि इत्यन्वयः।

अहम् = राजा तपसः=तपश्चरणस्य वीर्यं = प्रभावं जाने = वेद्मि। तपस्विकन्या शकुन्तला प्रसह्य धर्षयितुं न योग्येति जानामीति भावः। तर्हि सैव कथं नागच्छतीत्याह—**सा बाला परवतीति।** सा = अनुभूतकटाक्षमन्दस्मिता मय्यनुरागिणी शकुन्तला, बाला = षोडशवार्षिकी, अप्रौढत्वात् स्वकर्तव्यमजानतीत्यर्थः। परवती=पराधीना, गुरुजनपरतन्त्रेत्यर्थः। इति मे विदितम् = एतन्मया स्वयं ज्ञातं नान्यमुखेनेति विश्वासो गम्यते। स्वयमनुरक्ताऽपि सा शकुन्तला ऋषिभयेन मया बलादपहर्तुं न शक्यते; अप्रगल्भत्वात् गुरुजनपराधीनत्वाच्च सा स्वयमागमिष्यतीत्यपि न संभवीति पूर्वार्धार्थः। एवं चेत्तर्हि ततो मनो निवर्त्यतामित्यत आह—**अलमस्मीति।** तथापि=पूर्वोक्तप्रकारेण शकुन्तलालाभस्य अनिश्चितत्वेऽपि इदम् = एवं शकुन्तलायां निरर्गलमनुधावत् हृदयं = चेतः ततः= शकुन्तलायाः सकाशात् निवर्तयितुं = परावर्तयितुं नालमस्मि = न शक्नोमीत्यर्थः। अनेन तन्निवर्तनाय मया बहुशो यत्नः क्रियते इति द्योत्यते।

अत्र पूर्वार्धे प्रसह्यधर्षणीयत्वाभावे कार्ये प्रस्तुते 'तपसो वीर्यं जाने' इति तत्कारणमुपन्यस्तमिति कारणनिबन्धना अप्रस्तुतप्रशंसा, हृदयनिवर्तनहेतोः सत्त्वेऽपि तदनुत्पत्तिप्रदर्शनेन विशेषोक्तिः, कामिस्वभावोक्तिश्चालङ्काराः। राजगताः शङ्का, मतिः, चिन्ताविषादादयश्च भावा अभिव्यज्यन्ते। एतैरुपस्कृतस्य विप्रलम्भस्य प्राधान्येन ध्वनिः। आर्या जातिः।

मुनिजनकार्यं विधाय तैर्विश्रमार्थमादिष्ट एकान्ते स्थितो राजा सोत्कण्ठं शकुन्तलाविषये विमृशति—'प्रभुत्वशक्तिसम्पन्नोऽहं यदि शकुन्तलां बलादपहरामि, तर्हि तन्न युक्तं भवेत्; तपस्विकन्या खलु सा; तपस्विनः स्वतपःप्रभावेण निग्रहानुग्रहक्षमाः कदाचिन्मां शापेन दहेयुः। तत्तल्लक्षणैर्मया बाढं मय्यनुरागिणीति

(मदनबाधां निरूप्य) 'भगवन्कुसुमायुध'! त्वया चन्द्रमसा च विश्वसनीयाभ्यामतिसंधीयते कामिजनसार्थः। कुतः!

लक्षिता सा शकुन्तला अप्रगल्भत्वात् गुरुजनपराधीनत्वाच्च स्वयं मामुपस्थास्यतीत्यपि न सम्भवति। इत्थं तस्या मया अपहरणं तस्याः स्वयमुपगमनं च असंभवीति नैकस्मिन्नपि तल्लाभोपाये अवशिष्टे इदं मे दग्धहृदय नाहं तस्याः सकाशात् निवर्तयितुं शक्नोमि, तत्स्वयं निवर्तेतेति तु दूरापेतमेव। किं करोमि? क्व यामि?' इति भावः॥ २॥

अथ विप्रलम्भपरिपोषाय राज्ञो दशां वर्णयन्नाह— **मदनबाधां निरूप्येति**। लोलितेन शिरसा, दोलेन हस्तकेन, शून्यया दृष्टया च मोहप्रायं कामपारवश्यं नाटयित्वेत्यर्थः। लोलितादिलक्षणानि तु—"शिरः स्याल्लोलितं सर्वदिक्कैः शिथिललोचनैः" इति, "लम्बमानौ पताकौ तु श्लथांसौ शिथिलाङ्गुली। दोलो भवेदसौ" इति, "समतारापुटा दृश्यदृष्टिः शून्यविलोकिनी" इति च।

मदनबाधां सोढुमसमर्थ उन्मादवशान्मदनं पुरोऽवस्थितं सम्भावयन् सबहुमानमुपालभमानो राजा प्राह— **भगवन्निति**। भगवन्नित्यनेन गौरवं द्योत्यते। कुसुमायुध इति तथा व्यवहारादुक्तिः। कुसुमानां चाह्लादकरत्वात्तदायुधे त्वयि पीडाकरत्वं न सम्भवतीति विश्वसनीयत्वे हेतुः। त्वयेत्युक्त्या त्वमेव मुख्योऽतिसन्धाता, त्वं चेद्विरमसि दुर्व्यवसितादस्मात्तर्हि चन्द्रोऽपि त्वामेवानुसरेदिति द्योत्यते। चन्द्रमसेत्युक्त्याऽपि तस्याह्लादजनकत्वमेव स्वभाव इति विश्वसनीयत्वं गम्यते। चकारः समुच्चये। विश्वसनीयाभ्याम् = सौम्यत्वादाह्लादकत्वाच्च विश्वासयोग्याभ्याम् अतिसन्धीयते = प्रतार्यते कामिजनसार्थः = सर्वकामिजनसमूहः। न त्वहमेव, अपि तु सर्वेऽपि कामिनस्त्वया चन्द्रमसा च सम्भूयेत्थमेव वञ्च्यन्त

१ मन्मथ।

तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-
र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै-
स्त्वमपि कुसुमबाणान्वज्रसारीकरोषि ॥३॥

इति प्रसिद्धौ प्रतारकौ युवामिति भावः । अत्र परिकरः, 'कामिजनसार्थः' इत्यत्र सामान्यनिबन्धनाऽप्रस्तुतप्रशंसा चालङ्कारौ ।

कामचन्द्रमसोः कामिजनातिसन्धातृत्वं समर्थयन्नाह—**तवेति** । तव कुसुमशरत्वम्, इन्दोः शीतरश्मित्वम् इदं द्वयं मद्विधेषु अयथार्थं दृश्यते । इन्दुः हिमगर्भैः मयूखैः अग्निं विसृजति, त्वं कुसुमबाणान् अपि वज्रसारीकरोषि इत्यन्वयः ।

तव = कुसुमायुधस्य कामस्य कुसुमशरत्वम्—कुसुमशरस्य भावः कुसुमशरत्वम्, पुष्पात्मकबाणवत्त्वम् । अनेन कामशराणां कोमलत्वाह्लादकत्वादयो गुणा व्यज्यन्ते । इन्दोः = आह्लादनस्वभावस्य चन्द्रस्य शीतरश्मित्वम् = शैत्यकारित्वेन तापापनोदककिरणवत्त्वम् । अनेन चन्द्रकिरणेषु दाहकारित्वस्य सर्वथाऽसम्भवो द्योत्यते । इदं द्वयम् = तव कुसुमशरत्वम्, इन्दोः शीतरश्मित्वं चेति द्वयमित्यर्थः। मद्विधेषु = मत्सदृशावस्थेषु विरहिष्वित्यर्थः । अयथार्थम् = विपरीतार्थम् । "तदन्यतद्विरुद्धतदभावेषु नञ् वर्तते" इति विरुद्धार्थेऽत्र नञ् । दृश्यते = अनुभूयते । पूर्वोक्तार्थे हेतुमाह—**विसृजतीति** । इन्दुः = चन्द्रः हिमगर्भैः—हिमं = तुहिनं गर्भे = मध्ये येषां तैः । रश्मीनामन्तर्हिमं तदन्तश्चाग्निरिति भावः । रश्मीनां हिमगर्भत्वाभावे प्रतारणं विदितं स्यादिति तेषां हिमगर्भताऽऽपादनेन प्रतारणकौशलातिशयो द्योत्यते । मयूखैः = किरणैः अग्निं = सर्वाङ्गीणतापजनकं वह्निम्

(सखेदं परिक्रम्य) क्व नु खलु संस्थिते कर्मणि [1]सदस्यैरनुज्ञातः [2]श्रम-

विसृजति = किरति, सातिशयं वर्षतीत्यर्थः। त्वं = कुसुमबाण इति व्यपदिष्टः कामः „कुसुमबाणानपि = कुसुमात्मकत्वेन सौम्यान् आह्लादकान् स्वीयशरानपि वज्रसारीकरोषि—वज्रस्य = कुलिशस्य सार इव सारः = बलं येषाम्; यद्वा अवज्र-सारान् वज्रसारान् करोषि वज्रसारीकरोषि। वज्रस्येव कुसुमेषु काठिन्यमाधाय तैः शरभूतैः कामिनः प्रहरसीत्यहो ते वञ्चनचातुरीत्यर्थः।

अत्रोक्ताभ्यां चन्द्रकामव्यापाराभ्यां बहिरन्तश्च सुदुःसहः सन्तापः, वर्तमान-निर्देशेन तत्समाप्त्यभावः, कामचन्द्रमसोः क्रौर्यातिशयश्च गम्यते। अत्र काव्य-लिङ्गम्, रूपकम्, विरोधः, परिणामश्चालङ्काराः। उन्मादो मतिश्च भावो व्यङ्ग्यः। उत्तरार्द्धे प्रक्रमभङ्गो विरहिणो राज्ञो वचनमिति न दोषाय। मालिनी वृत्तम्।

शकुन्तलाविरहेण सातिशयं क्लिश्यन् सोन्माद इव शिथिलविवेकः सन् चन्द्रं कामं चोपालभमानो राजा तयोः कामिजनातिसन्धातृत्वं समर्थयन्नाह—भगवन्! कुसुमायुध! काम! मुधैव त्वं पुष्पबाण इत्युच्यसे। किञ्च चन्द्रोऽप्यसौ वृथैव शीतरश्मिरित्युच्यते। युवयोः पुष्पशरत्वशीतरश्मित्वे मद्विधेषु विरहिषु बाढं विपरीतार्थे एव प्रतीयेते। यद्यसौ चन्द्रः शीतरश्मिः, कथं तर्हि मयूखैरग्निं वर्षति? मन्ये—हिमगर्भा अन्तःप्रच्छन्नाग्नयोऽस्य मयूखाः सन्ति। एवमेव हे काम! त्वं बहिर्दृष्ट्या कुसुमात्मकानपि स्वान् बाणान् कुलिशवत्तीक्ष्णान् मर्मच्छिदः कुरुषे। इत्थं युवाभ्यां सरलः कामिजनोऽतिसन्धीयते' इति भावः ॥३॥

मदनक्लेशं सोढुमसमर्थः स्वचित्तविनोदनोपायं चिन्तयन्नाह—क्व न्विति। क्व = कस्मिन् प्रदेशे। उपविश्येत्यध्याहारः। नुखलुशब्दौ वितर्कद्योतकौ। संस्थिते

१ निरस्तविघ्नैस्तपस्विभिः। २ खिन्नम्।

क्लान्तमात्मानं विनोदयामि ? (निःश्वस्य) किं नु खलु मे प्रियादर्शनादृते शरणमन्यत् ! यावदेनामन्विष्यामि । (¹सूर्यमवलोक्य) इमामुग्रातपवेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखीजना शकुन्तला गमयति, तत्रैव तावद्गच्छामि । (परिक्रम्य ²संस्पर्शं रूपयित्वा) अहो प्रवातसुभगो-

---

=समाप्ते । "संस्था व्यवस्थाप्रणिधिसमाप्त्याकारमृत्युषु" इति वैजयन्ती । सदस्यैः—सदसि साधवः सदस्यास्तैः = उपद्रष्टृभिः । "सदस्या विधिदर्शिनः" इत्यमरः । श्रमक्लान्तम्—श्रमेण = यागविघ्ननिवारणजन्यपरिश्रमेण क्लान्तं = खिन्नम् आत्मानं = मनः विनोदयामि—विनोदेन = कौतुकेन क्लेशमपहरामीति भावः । निःश्वस्येति दुःखानुभवः ।

विनोदनोपायं विमृश्याह—**किं नु खल्विति** । किमित्याक्षेपे । खल्विति सम्भावनायाम् । मे = एतादृग्दुःखमनुभवतो मम । प्रियादर्शनादृते = प्रियादर्शनं वर्जयित्वा । शरणम् = रक्षकम्, आत्मनिर्वापणक्षममित्यर्थः । प्रियादर्शनमेव शरणं नान्यदिति भावः । अत एवाह—**यावदिति** । अन्विष्यामि=गवेषयामीति भावः । सूर्यमवलोक्येति कालपरिज्ञानार्थम् । तेन प्रियाऽधिष्ठितं देशं वितर्कयति—**इमामिति** । उग्रातपवेलाम्—उग्रः=प्रचण्डः आतपः=घर्मो यस्यां तथाभूतां वेलाम्, मध्यन्दिनमित्यर्थः । प्रायेणेति सम्भावनार्थकमव्ययम् । लतावलयवत्सु = लता- मण्डपयुक्तेषु । अनेन शैत्यातिशयो द्योत्यते । मालिनीतीरेष्विति बहुवचनं लता- मण्डपबाहुल्याभिप्रायेण । तेन विश्रमस्थानबहुत्वं द्योत्यते । गमयति = कृच्छ्रेणाति- वाहयतीत्यर्थः ।

अथ स्वकर्तव्यं निश्चिन्वन्नाह—**तत्रैवेति** । तावत् = प्रथमम् । **अहो इति** ।

---

१ ऊर्ध्वं । २ स्पर्शसुखम् ।

ऽयमुद्देशः!

'शक्यमरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम्।
अङ्गैरनङ्गतप्तैरविरलमालिङ्गितुं पवनः॥ ४॥

---

अकस्माद्वातस्पर्शसञ्जातसुखेनाश्चर्यं हर्षश्च। प्रवातसुभगः=शैत्यसौगन्ध्यमान्द्यवत्त्वेन प्रकृष्टः प्रभूतश्च वातो यत्र, अत एव सुभगः = सुखकरः। उद्देशः = प्रदेशः।

प्रवातसुभगत्वमुपपादयति—शक्यमिति। अरविन्दसुरभिः मालिनीतरङ्गाणां कणवाही पवनः अनङ्गतप्तैः अङ्गैः अविरलमालिङ्गितुं शक्यम् इत्यन्वयः।

अरविन्दसुरभिः—अरविन्दैः = कमलैः, तत्सम्बन्धेनेत्यर्थः। सुरभिः = सौगन्ध्ययुक्तः। अरविन्दवत् सुरभिरिति वा। मालिनीतरङ्गाणां कणवाही—मालिन्याः=तदभिधानायाः कण्वाश्रमसमीपवर्तिन्या नद्याः सम्बन्धिनां तरङ्गाणां= वीचीनां कणान् = लेशान् वहति धारयति तथाभूतः पवनः=पावित्र्यसम्पादकतया हृदयशान्तिप्रदः समीरः। अरविन्देति विशेषणेन सौगन्ध्य, मालिनीतरङ्गाणामित्यनेन तरङ्गोत्पादनोक्तेर्मन्दत्वं, कणवाहित्वोक्तेः शैत्यं चेति प्रसिद्धं गुणत्रयं द्योत्यते। अनङ्गतप्तैः—अनङ्गेन = कामेन, कामाग्निनेत्यर्थः। तप्तैः=सञ्जातसन्तापैः। अनेन पवनगतशैत्यस्य स्फुटप्रतीतिर्द्योत्यते। अङ्गैः = शरीरावयवैः। बहुवचनेन सर्वाङ्गीणः सन्तापः सूच्यते। अविरलम् = अविच्छिन्नं सर्वाङ्गीणं च, गाढं यथा स्यात्तथेति वा। आलिङ्गितुम्=आश्लेषं कर्तुम्। शक्यम्=योग्य इत्यर्थः। अत्र "शकिसहोश्च" इत्यनेन कर्मणि यकि कृते शक्यमिति रूपम्। भिन्नलिङ्गस्य पवनस्य तेन सह कथं सामानाधिकरण्यमिति न शङ्क्यम्, "शक्यं श्वमांसादिभिरपि क्षुत् प्रति-

---

१ शक्योऽर। २ तप्तैर्निर्दयम्।

हन्तुम्" इति **महाभाष्य**वचनस्यैव तत्र प्रमाणत्वात् । "शक्यमिति रूपं विलिङ्ग-वचनस्यापि, कर्माभिधायां सामान्योपक्रमात्" इति **वामनो**क्तेश्च ।

अत्र सौरभाधारभूतैररविन्दत्र्यणुकैर्मालिनीतरङ्गसूक्ष्मकणैश्च सान्द्रत्वात्पवनस्य मूर्तत्वप्रतीतेरालिङ्गनशक्यतोत्प्रेक्ष्यत इति प्रतीयमानोत्प्रेक्षा, स्वभावोक्तिः, प्रिया-दर्शनेनात्मविनोदनकार्यमारभमाणस्य पवनोऽपि तत्कार्ये सहायत्वेनोपात्त इति "कार्यारम्भे सहायाप्तिः" इति लक्षणानुसारेण समाहितालङ्कारश्च । अरविन्द-वन्मनोज्ञः शीतलः पवनः पवित्रः समालिङ्गनेन सुखमुत्पादयतीति समासोक्ति-रिति **केचित्**। अत्रौत्सुक्यं प्राधान्येन हर्षश्चाभिव्यज्यते । सुरभिशीतमन्दवायो-रुद्दीपकत्वेन विरहिदुःखहेतुत्वेऽपि 'इमामुग्रातपवेलां मालिनीतीरेषु शकुन्तला गमयति' इति पूर्वमुक्तेर्मालिनीतरङ्गकणवाहिनाऽमुना वातेन शकुन्तला पूर्वं स्पृष्टा स्यादिति सम्भावनया तादृशपवनस्पर्शेन नायकस्य हर्षप्रदर्शनं युक्तमेव । उक्त-भावेनैव महाकविना **मेघदूते**—"आलिङ्ग्यन्ते गुणवति ! मया ते तुषाराद्रिवाताः पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति" इति । एतत्पद्यार्थश्च—

मेघोदरविनिर्मुक्ताः कह्लारस्पर्शशीतलाः ।
शक्यमञ्जलिभिः पातुं वाताः केतकिगन्धिनः ॥

इति **रामायणी**यश्लोकच्छायामनुहरति । आर्या जातिः ।

वातस्पर्शमनुभूय तस्य प्रदेशस्य प्रवातसुभगत्वं वर्णयन् राजा प्राह—'प्रफु-ल्लानां पद्मानां सौरभमादाय सुगन्धपूर्णः, मालिन्यां तरङ्गान् जनयन् मन्दसञ्चारी जलकणजडिमानं वहन् असौ पवनः अनङ्गतप्तानि ममाङ्गानि क्षणं सुखयतीति मयाऽविच्छिन्नं सर्वाङ्गीणं चालिङ्गितुं योग्यः । मालिनीतीरवर्तिलतामण्डपावस्थित-प्रियाङ्गसंस्पर्शसौभाग्यसम्पन्नोऽयं स्वस्पर्शेन मां सुखयति' इति भावः ॥ ४ ॥

(परिक्रम्यावलोक्य च) अस्मिन्वेतसपरिक्षिप्ते लतामण्डपे संनिहितया शकुन्तलया भवितव्यम्। तथा (अधो विलोक्य)—

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात्।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥५॥

---

वेतसपरिक्षिप्ते—वेतसैः=वञ्जुलैः परितो वृते। भवितव्यमिति सम्भावनायां तव्यः। अत्र तत्सन्निधानं सम्भावयामीत्यर्थः।

लतामण्डपे शकुन्तलासन्निधानस्य लिङ्गमाह—**अभ्युन्नतेति**। पाण्डुसिकते अस्य द्वारे पुरस्तात् अभ्युन्नता पश्चात् जघनगौरवात् अवगाढा अभिनवा पदपङ्क्तिः दृश्यते इत्यन्वयः।

पाण्डुसिकते—पाण्डुः = धवला सिकता = वालुका यत्र तस्मिन्। एतेन पदपङ्क्तिप्रतिबिम्बयोग्यत्वं ध्वन्यते। अस्य = वेतसलतामण्डपस्य द्वारे = मुखभागे पुरस्तात् = पादाग्रभागे, अङ्गुल्यादावित्यर्थः। अभ्युन्नता = उपर्युद्गता। उन्नतत्वं च सापेक्षमिति पश्चाद्भागापेक्षया तदवसेयम्। पश्चात् = पार्ष्णिदेशे जघनगौरवात् = नितम्बभागस्य पृथुत्वाद्धेतोः अवगाढा = निम्ना। अनेन पूर्वानुभूततदीययौवनदशापरिपोषस्मरणं, तात्कालिकमौत्सुक्यं च प्रतीयते। अभिनवा = नवीना, सद्यः समुत्पन्नेत्यर्थः। अनेन पदपङ्क्तेरविकलत्वं तदानीमेव तस्या लतामण्डपप्रवेश इति च द्योत्यते। पदपङ्क्तिः = पादन्यासप्रतिबिम्बश्रेणिः। "पदं शब्दे च वाक्ये च पादतच्चिह्नयोरपि" इति **विश्वः**। दृश्यते = नेत्रव्यापारविषयीक्रियते, अवलोक्यते इत्यर्थः। अत्रेदमवसेयम्—राजा लतामण्डपद्वारि न गतः, अपि तु तत्पृष्ठभाग एवास्ति। अत एव पदपङ्क्तौ दृष्टिः पतिता। पदपङ्क्तिश्च प्रवे-

यावद्विटपान्तरेणावलोकयामि। (परिक्रम्य तथा कृत्वा सहर्षम्) अये! लब्धं नेत्रनिर्वाणम्। एषा मे मनोरथप्रियतमा सकुसुमास्तरणं

---

शसूचिका अत एव पूर्वं पुरोभागस्य, पश्चात् पार्ष्णिभागस्य च वर्णनं सङ्गच्छते।

अत्र अनेन पथा लतामण्डपं प्रविष्टेति कारणे वक्तव्ये यत् तत्कार्यरूपपदपङ्क्तिवर्णनं तत् पर्यायोक्तम्, "प्रत्यक्षमक्षजं ज्ञानम्",

सदृशात्सदृशज्ञानमुपमानं द्विधेह तत्।
स्यादेकमनुभूतेऽर्थेऽननुभूते द्वितीयकम्॥

इति भोजदेवोक्त्यनुसारेण प्रत्यक्षम्, उपमानम्, विशिष्टपदपङ्क्त्या वेतसगृहे शकुन्तलानुमानसद्भावादनुमानं चालङ्काराः। मत्यौत्सुक्यादयो भावा व्यङ्ग्याः। आर्या जातिः।

वेतसलतामण्डपे शकुन्तलासद्भावं समर्थयन् राजा कथयति—'नूनमस्मिन् लतामण्डपे शकुन्तला सद्य एव प्रविष्टा भवेत्! यतः श्वेतसिकतामयेऽस्य द्वारदेशे अविकला पदपङ्क्तिर्दृश्यते, या चाङ्गुल्यादिभागे समुन्नता पार्ष्णिभागे च निम्नाऽस्ति। तस्मात्तर्क्यते—कस्या अपि परिपूर्णतारुण्याया बृहन्नितम्बाया एवेयम्, न च शकुन्तलां विहाय काचित्तथाविधरूपयौवनशालिन्यत्र विद्यते, अतः शकुन्तलैवात्र सद्यः प्रविष्टा' इति भावः॥ ५॥

विटपान्तरेण = वृक्षशाखावकाशेन। लतामण्डपे शकुन्तलामवलोक्य सहर्षमाह—**अये इति**। 'अये' इति हर्षव्यञ्जकम्। नेत्रनिर्वाणम्—नेत्रयोर्निर्वाणं = निर्वृतिः, नयनानन्द इत्यर्थः। नयनानन्दलाभे हेतुमाह—**एषेति**। मनोरथप्रियतमा = मनोरथेन प्रियतमा, तत्त्वेन सङ्कल्पिता, न तु वस्तुतः परिग्रहेणेत्यर्थः। अद्याऽपि यथाविधि तदलाभादिति भावः। सकुसुमास्तरणम् = कुसुमान्येवास्तर-

शिलापट्टमधिशयाना सखीभ्यामन्वास्यते[1]। भवतु, श्रोष्याम्यासां [2]विस्रम्भकथितानि। (इति विलोकयन् स्थितः।)

(ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला।)

सख्यौ—(उपवीज्य सस्नेहम्) हला सउन्दले! अवि [3]सुहेदि दे णलिणीपत्तवादो?

हला शकुन्तले! अपि सुखयति ते नलिनीपत्रवातः?

शकुन्तला—किं वीअअन्ति मं सहीओ?

णम् = उत्तरच्छदः, कल्पिता पुष्पशय्येत्यर्थः। तेन सहितम् शिलापट्टम् = प्रशस्तां शिलाम्। अन्वास्यते = सेव्यते, परिचर्यत इत्यर्थः। आसाम् = प्रियंवदाऽनसूया-शकुन्तलानाम्। विस्रम्भकथितानि = विश्वासभणितानि, रहस्यवार्ता इत्यर्थः। विलोकयन् स्थित इत्यनेन राज्ञस्तद्विस्रम्भोक्तिश्रवणावहितत्वं सूच्यते।

अथ दुष्यन्तविषयकानुरागेण पीड्यमानायाः निदाघातपव्यपदेशेन मालिनी-तीरलतामण्डपसन्निविष्टायाः ससखीजनायाः शकुन्तलायाः प्रवेशमाह—**तत इति**। यथोक्तव्यापारा—मदनबाधया शीतलशयनतलनिपतनादिव्यापारसहितेत्यर्थः। शकुन्तलाया वीजनाज्ञानशङ्काकातरे सख्यौ पृच्छतः—**हला सउन्दले! इति**। 'हला शकुन्तले! अपि सुखयति ते नलिनीपत्रवातः?' इति संस्कृतम्। अपीति प्रश्ने। सुखयति = सुखं करोति। नलिनीपत्रवात इत्यनेन वातस्य पद्मिनीपत्र-संबन्धात् शैत्यातिशयः सूच्यते। शकुन्तलोत्तरयति—**किं इति**। 'किं वीजयतो मां सख्यौ?' इति संस्कृतम्। अनेन शकुन्तलया सखीकृतं वीजनादिकं किमपि न ज्ञातमिति तस्या मूर्च्छावस्था सूच्यते। तया च मदनसन्तापस्य प्राबल्यं ध्वन्यते।

१ उपास्यते। २ विश्वस्तकथितानि। ३ सुहायदे।

किं वीजयतो मां सख्यौ ?

( सख्यौ विषादं नाटयित्वा परस्परमवलोकयतः । )

**राजा**—बलवदस्वस्थशरीरा शकुन्तला दृश्यते । ( सवितर्कम् ) तत्किमयमातपदोषः स्यात्, [1]उत यथा मे मनसि वर्तते ? ( साभिलाषं

---

अनेन विधूतं नाम अङ्गमुपक्षिप्तम्। तल्लक्षणं यथा **दशरूपके**—"विधूतं स्यादरतिः" इति।

**सख्यौ विषादं नाटयित्वेति।** शकुन्तलायास्तादृगवस्थाज्ञानं सख्योर्विषाद-हेतुः। विषादनाटनं च धुतेन शिरसा, विषण्णया दृष्ट्या च भवति। तल्लक्षणं च—"पर्यायेण शनैस्तिर्यग्गतमुक्तं धुतं शिरः। विषादेऽनीप्सिते ज्ञेयम्" इति,

या दृष्टिः पतितापाङ्गा विस्तारितपुटद्वया।
निमेषिण्यस्ततारा च विषण्णा सा विषादिनी ॥ इति च।

परस्परमवलोकयत इति शङ्कासूचकम्। बलवानस्या मदनसंतापः, किमत्रावां कुर्वः, इति सख्योः परस्परावलोकनाभिप्रायः।

अथ तथाविधां शकुन्तलां दृष्ट्वा सख्योश्च संलापमाकर्ण्य शकुन्तलायाः सन्तापातिशयमवगच्छन् राजा प्राह—**बलवदिति।** बलवत् = अधिकम्। दृश्यते = शयनवीजनादिना ज्ञायत इत्यर्थः। अस्वास्थ्यहेतुं विकल्पयति—**तदिति।** तत् = अस्वास्थ्यम्। आतपदोषः—आतपस्य = निदाघस्य दोषः, आतप एव दोष इति वा। अत्र हेतुहेतुमतोरैक्यारोपः। किं स्यादित्यनेन संभावना द्योत्यते। प्रकारान्तरं विकल्पयन्नाह—**उत इति।** यथा मे मनसि वर्तते—मे मनसि वर्तमानेन एतद्विषयकेण कामेन यथाऽहं पीडितोऽस्मि, तथैवेयं मद्विषयेणा-नुरागेण पीडिताऽस्तीत्यर्थः। वीजनादेरुपचारस्य उभयसाधारण्यादिति भावः।

---

1 उत मदनदोषः! उभयथा मे मनसि वर्तते।

निर्वर्ण्य ) अथवा कृतं संदेहेन ।

स्तनन्यस्तोशीरं [1]शिथिलितमृणालैकवलयं
प्रियायाः साबाधं [2]किमपि कमनीयं वपुरिदम् ।
समस्तापः कामं मनसिजनिदाघप्रसरयो-
र्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥९॥

भूयः सूक्ष्मेक्षिकया कंचन विशेषमालक्ष्य कामबाधामेव निश्चिन्वन्नाह—**अथवेति** । कृतमिति निषेधे । "कृतमिति निवार्यनिषेधयोः" इति **सरस्वतीकण्ठाभरण-वृत्तिकारः** । अत्र सन्देहो नोचित इत्यर्थः ।

कामबाधाया निश्चिततां समर्थयन्नाह—**स्तनन्यस्तोशीरमिति** । स्तनन्यस्तोशीरं शिथिलितमृणालैकवलयं साबाधं प्रियायाः इदं वपुः किमपि कमनीयम् ( अस्ति ) । कामं मनसिजनिदाघप्रसरयोस्तापः समः, ग्रीष्मस्य युवतिषु एवं सुभगमपराद्धं न तु इत्यन्वयः ।

स्तनन्यस्तोशीरम्—स्तनयोः = कुचयोः, न्यस्तं = निहितम् उशीरं = नलदानुलेपो यत्र । अत्र "शीतकाले भवेदुष्णमुष्णकाले च शीतलम्" इत्यादिवरवर्णिनीवपुर्वर्णनपरवचनानुसारेण तरुणीस्तनौ हिमकाले उष्णौ, ग्रीष्मकाले च शीतलाविति कामशास्त्रमर्यादा । ग्रीष्मकाले स्वभावतः शीतलयोरपि तत्स्तनयोस्तापाधिक्यं द्योतयितुं स्तनन्यस्तेत्युक्तिः, न तु हृदि न्यस्तेति । शिथिलितमृणालैकवलयम्—शिथिलितं = सन्तापात् शुष्कत्वेन म्लानत्वात् शिथिलं सञ्जातं मृणालस्य = बिसदण्डस्य, तन्निर्मितमित्यर्थः । एकं = मुख्यं वलयं = कङ्कणं यत्र । एकेत्यनेन आभरणान्तराभावः, शिथिलितेत्यनेन कार्श्यं च सूच्यते, "एके मुख्यान्यकेवलाः"

१ प्रशिथिल । २ तदपि ।

**इत्यमरः** । साबाधम्—आसमन्तात् बाधया = पीडया सह वर्तमानम् । "पीडा बाधा व्यथा" **इत्यमरः** । आङा पीडायाः सर्वाङ्गीणत्वं व्यज्यते । प्रियायाः = शकुन्तलायाः इदं वपुः = लतामण्डपे शिलापट्टे पुष्पशय्यायां वर्तमानं सखीभ्यां परिचर्यमाणं च शरीरम्, किमपि = लोकोत्तरचमत्कारि कमनीयम् = एतादृश-सन्तापेऽपि सति अक्लिष्टलावण्यतया दर्शनीयम् अस्ति । काममित्यनुमतौ । यद्यपीति शेषः । मनसिजनिदाघप्रसरयोः—मनसिजः = मनोभूत्वेन अन्वर्थनामा कामः, निदाघः = ग्रीष्मः, तयोः प्रसरः = प्रकर्षेण मूर्च्छनं तयोः, कामग्रीष्म-वेगयोरित्यर्थः । तद्धेतुक इति यावत् । तापः = पीडा समः = तुल्यः । तथापि ग्रीष्मस्य = निदाघस्य युवतिषु = तरुणीषु एवं = दृश्यमानप्रकारेण सुभगं=सुन्दरम् अपराद्धम् = अपराधः, भावे क्तः । ताप इत्यर्थः । न तु = नैवेत्यर्थः । "तु स्याद्भेदे-ऽवधारणे" **इत्यमरः** । युवतिषु ग्रीष्मस्य अपराद्धम् एवं सुभगं नेति संबन्धः । ग्रीष्मतापतप्तस्य वपुषो नेदृशी कमनीयता भवतीत्यर्थः । तेन कामकृत एवायं परिताप इति भावः ।

अत्र स्तनन्यस्तेत्यादिना स्तनयोः सन्तापातिशयप्रतीत्या सन्तापस्य काम-मूलकत्वमनुमातुं शक्यते इत्यनुमानालङ्कारो गम्यः । न तु-इत्यादिना ग्रीष्मकाम-तापयोर्वैधर्म्यप्रतिपादनात् व्यतिरेकः । 'युवतिषु' इति सामान्यनिर्देशादप्रस्तु-तप्रशंसा च । नायकगते मत्यौत्सुक्ये नायिकागता ग्लानिश्चेति भावा व्यङ्ग्याः । शिखरिणी वृत्तम् ।

मालिनीतीरवर्तिनि लतामण्डपे पुष्पशयने शयानां सखीभ्यां परिचर्यमाणाम-स्वस्थशरीरां शकुन्तलां दृष्ट्वा तस्या अस्वास्थ्यं ग्रीष्ममूलकं काममूलकं वेति विकल्पयन् काममूलकमेव तदिति सिद्धान्तयन् राजा आह—'वरवर्णिनीयं खलु शकुन्तला, कालश्च ग्रीष्मः, सम्प्रति स्वभावशीतलयोरपि तापाधिक्यात्ताम्यतोरस्याः स्तनयो-

**प्रियंवदा**—( जनान्तिकम् ) अणसूए ! तस्स राएसिणो पढमदंसणादो आरहिअ 'पज्जुस्सुआ विअ सउन्दला । किं णु क्खु से तण्णिमित्तो अअं आतङ्को भवे !

अनसूये ! तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्युत्सुकेव शकुन्तला । किं नु खलु तस्यास्तन्निमित्तोऽयमातङ्को भवेत् !

**अनसूया**—सहि ! मम वि ईदिसी आसङ्का हिअअस्स । होदु,

रुपरि उशीरानुलेपनं निहितं दृश्यते । कार्श्यमापन्ने शरीरे भूषणान्तराण्यसहिष्णुरियं मृणालवलयमात्रं बिभर्ति, तदपि सन्तापाच्छुष्कं करस्य कृशतया शिथिलं च सञ्जातम् । ईदृगवस्थाऽपीयं स्वाभाविकं लावण्यं न जहाति । यद्यपि आपाततो निरीक्षणे ग्रीष्मजन्यः कामजन्यश्च सन्तापः सम एव प्रतीयते, तथापि ग्रीष्मजन्ये परितापे ईदृशी लावण्यस्याक्लिष्टता न प्रतीयते इति कामकृत एवास्या अयं परितापः' इति भावः ॥ ९ ॥

अथ शकुन्तलायाः संतापस्य शिशिरोपचारादिना परिशान्तिमपश्यन्ती तस्य राजविषयककाममूलकत्वमेव संभावयन्ती प्रियंवदा अनसूयामाह—**अणसूए !** इति । 'अनसूये ! तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्युत्सुकेव शकुन्तला । किं नु खलु तस्यास्तन्निमित्तोऽयमातङ्को भवेत्' इति संस्कृतम् । पर्युत्सुकेव = उत्कण्ठमानेव । अनेन तस्या जागरावस्था सूच्यते । इवेत्यवधारणे, संभावनायां वा । तन्निमित्तः = राजर्षिनिमित्तकः अयम् = आवाभ्यामनुभूयमानः आतङ्कः = पीडा । प्रियंवदोक्तमनुवदन्ती अनसूया आह—**सहि !** इति । 'सखि ! ममापीदृशी आशङ्का हृदयस्य । भवतु, प्रक्ष्यामि तावदेनाम् । ( प्रकाशम् ) सखि! प्रष्टव्याऽसि

१ पज्जुस्सुअमणा ।

पुच्छिस्सं दाव णं। ( प्रकाशम् ) सहि ! पुच्छिदव्वासि किं पि । बलवं क्खु दे संदावो ।

सखि ! ममापीदृश्याशङ्का हृदयस्य । भवतु, प्रक्ष्यामि तावदेनाम् । सखि ! प्रष्टव्याऽसि किमपि । बलवान्खलु ते संतापः ।

**शकुन्तला**—( पूर्वार्धेन शयनादुत्थाय ) हला! 'किं वत्तुकामासि ?

हला, किं वक्तुकामाऽसि ?

**अनसूया**—हला सउन्दले ! अणब्भन्तरा क्खु अम्हे मदणगदस्स वुत्तन्तस्स; किंदु जादिसी इदिहासणिबन्धेसु कामअमाणाणं अवत्था

किमपि । बलवान् खलु ते संतापः' इति संस्कृतम् । ममापीदृशी आशङ्का हृदयस्य—अहमप्येवमेव संभावयामीत्यर्थः । प्रष्टव्याऽसीत्यादिना प्रश्नस्य आवश्यकत्वं सूच्यते । पूर्वार्धेन = शरीरपुरोभागेनेत्यर्थः । 'हला, किं वक्तुकामाऽसि' इति संस्कृतम् । शयनादुत्थानं प्रश्नश्रवणादरं सूचयति ।

अथानसूया पृच्छति—**हला सउन्दले** इति । 'हला शकुन्तले ! अनभ्यन्तरे खलु आवां मदनगतस्य वृत्तान्तस्य, किन्तु यादृशी इतिहासनिबन्धेषु कामयमानानामवस्था श्रूयते, तादृशीं तव पश्यामि । कथय, किं निमित्तं ते सन्तापः ? विकारं खलु परमार्थतोऽज्ञात्वा अनारम्भः प्रतीकारस्य' इति संस्कृतम् । अनभ्यन्तरे = अज्ञातरहस्ये इत्यर्थः । खलु = निश्चितम् । मुनिकन्यकात्वात् आवां कामवृत्तान्तस्यानभिज्ञे इति यावत् । कथं तर्हि तत्संभावनेत्यत आह—**किं त्विति** । इतिहासनिबन्धेषु = पुराणप्रबन्धेषु कामयमानानां = विरहिणाम् । श्रूयते, पुराणप्रबन्धेषु शिष्यैर्वाचितेषु कुलपतिना तद्व्याख्याने क्रियमाणे श्रवणमात्रेण सा

१ भण, जं ।

सुणीअदि, तादिसीं दे [1]पेक्खामि । कहेहि किंणिमित्तं दे संदावो ? विआरं क्खु परमत्थदो अजाणिअ अणारम्भो पडिआरस्स ।

हला शकुन्तले ! अनभ्यन्तरे खल्वावां मदनगतस्य वृत्तान्तस्य; किंतु यादृशी इतिहासनिबन्धेषु कामयमानानामवस्था श्रूयते, तादृशीं ते पश्यामि । कथय किंनिमित्तं ते संतापः ? विकारं खलु परमार्थतः अज्ञात्वाऽनारम्भः प्रतीकारस्य ।

**राजा**—[2]अनसूयामप्यनुगतो मदीयस्तर्कः । न हि स्वाभिप्रायेण मे दर्शनम् ।

**शकुन्तला**—( आत्मगतम् ) [3]बलवं क्खु मे अहिणिवेसो । दाणिं

---

अवस्था आवाभ्यां ज्ञायते इत्यर्थः । आवयोरीदृगवस्थाया न स्वयमनुभवो नापि कोऽपि ईदृग्विधः प्रत्यक्षतो दृष्टः इति किमिदमिति निश्चेतुमावां न पारयाव इति भावः । विकारं = रोगम् । परमार्थतः = याथार्थ्येन । अनारम्भः = आरम्भो न भवति, प्रतीकारस्य = चिकित्सायाः । उक्तं च—"व्याधेस्तत्त्वपरिज्ञानम्" इति ।

अनसूयोक्तं श्रुत्वा सन्तुष्यन् राजा स्वगतमाह—**अनसूयामिति** । तर्कः = काममूलक एवायं सन्ताप इति विकल्पः । अनसूयामप्यवगतः, अनसूयाऽप्येवमेव तर्कयतीत्यर्थः । स्वाभिप्रायेण = स्वाभिप्रायानुसारि मे = कामिनो मम दर्शनं= ज्ञानम्, तर्क इति यावत् । कामिनामेवंविधतर्कसंभवेऽपि अकामिना जनेनाप्येवमेव सम्भावनादिति भावः । अनेन स्वतर्कस्य प्रामाणिकत्वावगमेन राज्ञो हर्षो द्योत्यते ।

शकुन्तला आत्मगतं चिन्तयति—**बलवं क्खु** इति । 'बलवान् खलु मेऽभिनिवेशः । इदानीमपि सहसा एतयोर्न शक्नोमि निवेदयितुम्' इति संस्कृतम् । बलवान् = अधिकः अभिनिवेशः = आग्रहः, अनुराग इति यावत् ।

---

१ त्ति तक्केमि । २ अनसूययाऽपि । ३ बलीओ आआसो ।

वि सहसा एदाणं ण सक्कणोमि णिवेदिदुं ।

बलवान्खलु मेऽभिनिवेशः । इदानीमपि सहसैतयोर्न शक्नोमि निवेदयितुम् ।

**प्रियंवदा**—सहि सउन्दले ! सुट्ठु एसा भणादि । किं अत्तणो आतङ्कं उवेक्खसि ? अणुदिअहं क्खु परिहीअसि अङ्गेहिं । केवलं लावण्णमई छाआ तुमं ण मुञ्चदि ।

---

अनुरागाग्रहस्य बलवत्त्वकथनेन तद्धेतोरवश्यनिवेद्यत्वं सूच्यते । इदानीमपि = ईदृगवस्थायामपि, एवंविधप्रश्नसद्भावेऽपीति अपिशब्दार्थः । सहसा = अकस्मात् एतयोः = प्रियसख्योः । अनेन स्नेहविश्वासबाहुल्यं व्यज्यते । रहस्याभेदिन्योः प्राणपरित्यागेनापि मत्कार्यं साधयितुं प्रयतमानयोरपीत्यर्थान्तरसंक्रमितध्वनिः । निवेदयितुं न शक्नोमि—नितरां = सामस्त्येन ज्ञापयितुं न समर्थाऽस्मीत्यर्थः । अनेन निवेदनेच्छा वर्तते इति द्योत्यते । अत्र शकुन्तलागता लज्जा चिन्ता चेति भावौ व्यज्येते ।

अथ शकुन्तलां लज्जमानां संभाव्य तस्या लज्जामपनेतुं तन्मुखाच्च कृत्स्नं वृत्तान्तं ज्ञातुं प्रयतमाना प्रियंवदा प्राह—**सहि सउन्दले** ! इति । सखि शकुन्तले ! सुष्ठु एषा भणति । किमात्मन आतङ्कमुपेक्षसे ? अनुदिवसं खलु परिहीयसे अङ्गैः । केवलं लावण्यमयी छाया त्वां न मुञ्चति' इति संस्कृतम् । सुष्ठु= सयुक्तिकम् । एतेन अनसूयावचनस्य ग्राह्यत्वं द्योत्यते । आतङ्कं = पीडाम् । किमुपेक्षसे ? उपेक्षणं न युक्तमित्यर्थः । अद्य यावत् कृताया उपेक्षायाः फलमाह—**अनुदिवसमिति** । अङ्गैः परिहीयसे = क्षीयसे । वर्तमाननिर्देशेन प्रतिक्षणं क्षयो भवतीति ध्वन्यते । आतङ्कस्य काममूलकत्वं सूचयन्ती आह—**केवलमिति** । लावण्यमयी छाया = लावण्यप्रचुरा कान्तिः । लावण्यं नाम "अवयवसंस्थानाभिव्यङ्ग्यं निखिलावयवव्यतिरिक्तं किमपि तत्त्वान्तरम्" इति **ध्वनिकाराः** ।

सखि शकुन्तले ! सुष्ठु एषा भणति। किमात्मन आतङ्कमुपेक्षसे? अनुदिवसं खलु परिहीयसेऽङ्गैः। केवलं लावण्यमयी छाया त्वां न मुञ्चति।

राजा—अवितथमाह प्रियंवदा। तथा हि—

क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं
मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा।
शोच्या च प्रियदर्शना च [1]मदनक्लिष्टेयमालक्ष्यते
पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी॥७॥

---

मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा।
प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥

इत्यन्ये। न मुञ्चति = न परित्यजति। अत्र छायेति स्त्रीलिङ्गेन, न मुञ्चतीत्यनेन च यथा काचित्प्रियसखी केनापि कारणेन स्वजनैः परित्यक्तां स्वकीयां सखीं न मुञ्चति, तथेत्युपमा ध्वन्यते। सख्योः संवादेन आत्मविषयं शकुन्तलायाः कामं ज्ञात्वा प्रहृष्टो दुष्यन्तः प्रियंवदोक्तिमनुमोदते—अवितथमित्यादिना। अवितथं=सत्यम्। अव्ययमेतत्। विगतं तथा अस्मादिति वितथं = मिथ्या, न वितथमवितथम्। नासत्यमिति यावत्।

तदेव समर्थयन्नाह—तथा हि—क्षामक्षाममित्यादिना। आननं क्षामक्षामकपोलम्, उरः काठिन्यमुक्तस्तनम्, मध्यः क्लान्ततरः, अंसौ प्रकामविनतौ, छविः पाण्डुरा, मदनक्लिष्टा इयं पत्राणां शोषणेन मरुता स्पृष्टा माधवी लता इव शोच्या च प्रियदर्शना च आलक्ष्यते इत्यन्वयः।

पूर्वार्द्धे 'अस्याः' इति, उत्तरार्द्धे 'इयम्' इति चाध्याहार्यम्। पूर्वार्द्धीयवाक्य-

---

१ मदनग्लानेयम्।

चतुष्टयेन प्रियंवदोपवर्णितं शकुन्तलाकार्श्यं समर्थ्यते । अस्याः = शकुन्तलायाः आननं = मुखम् क्षामक्षामकपोलम्—क्षामक्षामौ = अतिशयेन क्षीणौ, कृशतरौ कपोलौ = गण्डफलकौ यत्र तत् । उरः = वक्षःस्थलं काठिन्यमुक्तस्तनम्—काठिन्येन = सखीद्वारावल्कलशिथिलीकरणावसरे दृष्टपूर्वेण प्रतिक्षणपरिपोषेण पीवरतासहभुवा कठोरत्वेन मुक्तौ = रहितौ अत एव सुकुमारौ जातौ स्तनौ यत्र तत् । पूर्वं प्रवृद्धस्य पीनस्य कार्श्ये सति सौकुमार्यं सम्पद्यत इति निसर्गः । अत्र उरस्तथाविधं जातमिति कथनेन पूर्वं स्तनमण्डलपरिणाहान्तरितत्वादुरो दुर्दर्शमासीत्, इदानीं स्तनयोः सङ्कुचितत्वादिमौ स्तनौ, इदमुर इति स्पष्टं प्रतीयत इति द्योत्यते । मध्यः = वलग्नम्, कटिभाग इत्यर्थः । क्लान्ततरः, पूर्वं स्तनमण्डलाक्रान्त्या मध्यः क्लान्त आसीत्, इदानीं तु दौर्बल्यातिरेकात् अतिशयेन क्लान्त इत्यर्थः । अंसौ = स्कन्धभागौ प्रकामविनतौ—प्रकामम् = अत्यन्तं विनतौ = नम्रौ । विनतत्वं हि वराङ्गनास्कन्धयोः स्वभाव एव, दौर्बल्यातिरेकद्योतनाय प्रकाममित्युक्तिः । बाहू सातिशयं ग्लानाविति भावः । छविः = देहकान्तिः पाण्डुरा = रक्तराहित्यसूचकश्वैत्यान्विता । अनेन वैवर्ण्यं सूच्यते । मदनक्लिष्टा—मदनेन=कामेन, तज्जन्यपीडयेत्यर्थः । क्लिष्टा=क्लेशं प्राप्ता । इयं = शकुन्तला पत्राणाम् = दलानां शोषणेन = साररूपरसग्रहणात् शोषं कुर्वता मरुता = पश्चिमवायुना स्पृष्टा = ताडिता । अत्र स्पर्शेन तत्कार्यं पत्रश्वेतीकरणं लक्ष्यते । तत्त्वेऽपि लावण्यानपायो व्यङ्ग्यः । माधवीलतेव= तन्नामिका वल्लीव । माधवीति विशेषणाल्लताया नैसर्गिकं हृद्यत्वं द्योत्यते । शोच्या= उक्तकार्श्यवैवर्ण्यादिना दयनीया, प्रियदर्शना = लावण्यानपायात् नयनलोभनीयाकृतिश्च आलक्ष्यते = आभाति ।

अत्रोपमा, काव्यलिङ्गम्, स्वभावोक्तिश्चालङ्काराः । नायकगतमौत्सुक्यं, नायिकागता ग्लानिश्चेति भावौ व्यङ्ग्यौ । शार्दूलविक्रीडितं वृत्तम् ।

**शकुन्तला**—सहि ! कस्स वा अण्णस्स कहइस्सं ? आआसइत्तिआ दाणिं वो भविस्सं ।

सखि ! कस्य वाऽन्यस्य कथयिष्यामि ? आयासयित्रीदानीं वां भविष्यामि ।

---

शकुन्तलायास्तादृशीं दशां दृष्ट्वा 'सखि ! शकुन्तले ! त्वं प्रतिदिनं परिहीयसेऽङ्गैः, केवलं लावण्यमयी छाया त्वां न मुञ्चति' इति प्रियंवदोक्तमाकर्ण्य 'सत्यम्, ईदृश्येव शकुन्तला सञ्जाता, तथा हि' इत्यादिना राजा तदवस्थां वर्णयन्नाह—'अस्या यन्मुखं पूर्वं परिफुल्लगण्डफलकमासीत्, तदेवेदानीमत्यन्तकृशकपोलं सञ्जातम्। यच्च वक्षःस्थलं पूर्वं प्रतिक्षणप्रवर्द्धमानपयोधरविस्तारवशात् स्तनबन्धनवल्कलेन पीड्यते स्म, तदेवेदानीं काठिन्यमुक्तकृशतरस्तनं शिथिलवल्कलं च सञ्जातम् । यश्चास्या मध्यभागः पूर्वं पीनपयोधरभारेण क्लान्त आसीत्, स इदानीं पयोधरयोः कार्श्येऽपि दौर्बल्येन क्लान्ततरः सञ्जातः । स्वभावतो नम्रावप्यस्याः स्कन्धौ बाहोर्ग्लानिवशात् प्रकामविनतौ जातौ । एवमेव शरीरे रुधिराल्पतां सूचयन्ती पाण्डुरा अस्याश्छविः वैवर्ण्यं प्रकटयति । तस्मान्मदनक्लिश्यमानेयं मम प्रिया शकुन्तला रसशोषणेन पत्रेषु पाण्डुतां जनयता पश्चिमवायुना ताडिता पाण्डुपत्रा माधवी लतेव कार्श्यवैवर्ण्यादिनाऽनुकम्पनीयावस्थाऽपि लावण्यानपायान्नयनलोभनीयाकृतिर्दृश्यते' इति भावः ॥ ७ ॥

अथ लज्जमानाऽपि शकुन्तला सख्योरनुरोधेन स्वातङ्कहेतुं कथयितुमुपक्रमते—

**सहि इति** । 'सखि ! कस्य वाऽन्यस्य कथयिष्यामि ? आयासयित्रीदानीं वां भविष्यामि' इति संस्कृतम् । अन्यस्य = युवाभ्यामन्यस्य । स्नेहविश्वासवत्योर्युवयोरवश्यं कथयिष्यामीति भावः । आयासयित्री = दुःखोत्पादिका । समदुःखसुखयोर्युवयोर्मत्पीडाश्रवणेन दुःखमेव भविष्यतीति भावः । इदानीम् = मदातङ्कनिमित्त-

**उभे**—अदो एव्व क्खु णिब्बन्धो । सिणिद्धजणसंविभत्तं हि दुक्खं सज्झवेदणं होदि ।

अत एव खलु निर्बन्धः । स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवति ।

**राजा**—

पृष्टा जनेन समदुःखसुखेन बाला
नेयं न वक्ष्यति मनोगतमाधिहेतुम् ।
दृष्टो विवृत्य बहुशोऽप्यनया सतृष्ण-
मत्रान्तरे श्रवणकातरतां गतोऽस्मि ॥ ८ ॥

---

कथनकाले । पुनः सख्यौ पृच्छतः—**अदो एव्व इति** । 'अत एव खलु निर्बन्धः । स्निग्धजनसंविभक्तं हि दुःखं सह्यवेदनं भवति' इति संस्कृतम् । अत एव = आवयोरायासः स्यादित्यस्माद्धेतोरेव । निर्बन्धः = कारणकथनाग्रहः । तेन किं स्यादित्यत आह—**स्निग्धेति** । स्निग्धजनसंविभक्तम्—स्निग्धजनेषु=स्नेहास्पदेषु सखीप्रभृतिषु संविभक्तं = संविभागेनार्पितम् , समदुःखेषु कथनाद्विभक्तमित्यर्थः । सह्यवेदनम् = मर्षणीयाघातम् , शिथिलमित्यर्थः । यथा कस्यापि भारवाहकस्य भारे तन्मित्रेणांशतोगृहीते तस्य भारोद्वहनदुःखं लघु भवति तथेति भावः ।

अथ मन्निमित्त एवायमस्या आयास इति निश्चिन्वानोऽपि शङ्काकातरो राजा स्वयं विमृशति—**पृष्टेति** । इयं बाला समदुःखसुखेन जनेन पृष्टा ( सती ) मनोगतम् आधिहेतुं न वक्ष्यति न । अनया बहुशो विवृत्य सतृष्णं दृष्टोऽपि अत्रान्तरे श्रवणकातरतां गतोऽस्मीत्यन्वयः ।

इयं = सखीभ्यामातङ्कहेतुं पृच्छ्यमाना बाला = शकुन्तला समदुःखसुखेन—समे = सौहार्दमूलकतादात्म्यारोपेण अनुभवविषये तुल्ये दुःखसुखे=तज्जन्यप्रतिकूला-नुकूलवेदने यस्य तेन । सुखसाम्यापेक्षयाऽपि दुःखसाम्यस्य प्रेमप्रकर्षमूलकत्वा-

त्तद्द्योतनाय दुःखपदस्य पूर्वनिपातः । जनेन = तथाविधेन वयस्यारूपेणेत्यर्थः । पृष्टा सती=सुखदुःखहेतुकथनाय अनुयुक्ता सती मनोगतम् = आन्तरम्, निगूहितमित्यर्थः । अनेन प्रश्नानवकाशो द्योत्यते । आधिहेतुम्—आधेः = व्याधिरूपेण परिणताया मनोव्यथायाः हेतुं = कारणम् । न वक्ष्यति न, अवश्यं वक्ष्यत्येवेत्यर्थः । अनया = शकुन्तलया बहुशः = अनेकवारम्, न त्वेकवारं द्विवारं वा, विवृत्य = स्वेच्छया स्वग्रीवां परावर्त्य, न तु यदृच्छया, सतृष्णं = साभिलाषम्, न तु सविस्मयम्, दृष्टोऽपि = कृतदर्शनोऽपि । एवं वीक्षणेन अहमेवास्याः कामनाविषयोऽस्मीति निश्चिन्वानोऽपीत्यर्थः । अत्रान्तरे = सखीप्रश्नशकुन्तलाप्रतिवचनयोर्मध्ये श्रवणकातरताम्—श्रवणे=शकुन्तलोत्तरश्रवणे कातरताम्=इदानीमन्यं कञ्चन स्वकामनाविषयं ब्रूयादिति भीरुतां गतोऽस्मि = प्राप्तोऽस्मि ।

अत्र शकुन्तलायाः सत्यवचने हेतुगर्भं विशेषणं समदुःखसुखेनेत्युक्तमिति काव्यलिङ्गम्, उत्तरार्धे विभावना च । अत्र नायकगते शङ्काचापल्ये प्राधान्येन सूच्येते । वसन्ततिलका वृत्तम् ।

शकुन्तलाया आतङ्कनिमित्तमुद्दिश्य सख्योः प्रश्नमाकर्ण्य किमुत्तरमियं दास्यतीति शङ्कमानो राजा स्वयं विमृशति—'सौहार्दातिरेकान्मिथस्तादात्म्यमापन्नेन अत एव समानसुखदुःखानुभवेन स्निग्धसखीजनेन स्वमनोगतमाधिहेतुं पृष्टा सती दुःसहसन्तापासहिष्णुः स्वयं प्रतिक्रियायामशक्ता कैतवानभिज्ञा इयं बाला शकुन्तला अवश्यमात्मनः कामनाविषयं कथयेदेव, यतोऽस्याः कामविषय एवायं सन्तापोऽस्ति । यद्यपि अनया बहुवारं स्वेच्छया स्वग्रीवां परावर्त्य साभिलाषमहं दृष्टोऽस्मि, तेन यद्यपि निश्चितम्—इयं मय्यनुरागिणीति, तथापि अत्र सखीप्रश्नशकुन्तलाप्रतिवचनयोर्मध्ये स्वकामनाविषयम् इयम् अन्यं वा कञ्चन कथयेत् इति शङ्कया बाढमहं कातरोऽस्मि सञ्जातः' इति भावः ॥ ८ ॥

**शकुन्तला**—सहि! जदो पहुदि मम दंसणपहं आअदो सो तवोवणरक्खिदा राएसो, तदो आरहिअ तग्गदेण अहिलासेण एतद्दवत्थम्हि संवुत्ता।

सखि! यतः प्रभृति मम दर्शनपथमागतः स तपोवनरक्षिता राजर्षिः, तत आरभ्य तद्गतेनाभिलाषेणैतदवस्थाऽस्मि संवृत्ता।

**राजा**—(सहर्षम्) श्रुतं श्रोतव्यम्।

**स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः।**
**दिवस इवार्धश्यामस्तपात्यये जीवलोकस्य ॥९॥**

---

शकुन्तलोत्तरयति—**सहि इति**। 'सखि! यतः प्रभृति मम दर्शनपथमागतः स तपोवनरक्षिता राजर्षिः, तत आरभ्य तद्गतेनाभिलाषेणैतदवस्थाऽस्मि संवृत्ता' इति संस्कृतम्। यतः प्रभृति= यस्मिन् क्षणे। दर्शनपथमागत इत्यनेन तद्दर्शनस्याकस्मिकत्वं दैवकृतत्वं च ध्वन्यते। अथ शकुन्तलाया उत्तरं श्रुत्वा प्रमुदितः आत्मानं कृतार्थं मन्यमानो राजा आह—**श्रुतमिति**। श्रुतं श्रोतव्यम्—अत्र श्रोतव्यमिति सर्वोत्कृष्टं श्रोतव्यमित्यर्थान्तरे संक्रमितम्। एवंविधं श्रोत्राह्लादकरमन्यच्छ्रोतव्यं नास्तीत्यर्थः। अनेन राज्ञः कृतार्थता द्योत्यते।

अथ राजा हर्षाधिक्येन मदनमभिनन्दन्नाह—**स्मर इति**। तपात्यये जीवलोकस्य अर्धश्यामो दिवस इव मे स्मर एव तापहेतुः, स एव निर्वापयिता जातः इत्यन्वयः।

तपात्यये—तपस्य = ग्रीष्मस्य अत्ययः = अवसानं तस्मिन्, निदाघात्यये; प्रावृडारम्भे इत्यर्थः। "उष्ण ऊष्मागमस्तपः" **इत्यमरः**। जीवलोकस्य = प्राणिवर्गस्य संबन्धे अर्धश्यामः—अर्धे=अपरार्धे श्यामः = सजलजलधराच्छादितत्वेन

कृष्णवर्णः, सच्छाय इत्यर्थः । दिवस इव = दिन इव मे = मम स्मर एव = काम एव तापहेतुः—तापस्य = एतावत्पर्यन्तमनुभूतस्य आतङ्कस्य हेतुः = कारणम् । शकुन्तलायामनुरागोत्पादनेनेति भावः । सः = स्मरः एव । अत्र एवकारद्वयेन ताप-जनकत्व-तापनिर्वापकत्वरूपमिथोविरुद्धकार्यद्वयकरणकौशलेन स्मरस्य माहात्म्याति-शयो द्योत्यते । निर्वापयिता = निर्वृतेः कारयिता जातः=संवृत्तः । शकुन्तलाया अपि मयि अनुरागमुत्पाद्य तन्मुखात्तच्छ्रावणेनेति भावः ।

अत्र यस्तापहेतुः स एव निर्वापयिता इति विरोधाभासः । वस्तुतस्तु नायकगतः स्मरस्तापहेतुः, नायिकागतश्च निर्वापक इति विरोधवारणम् । दिवस इवेत्यंशे उपमा । काव्यलिङ्गं च । नायकगतो हर्षाख्यो भावो व्यङ्ग्यः । स्मर एव तापहेतुः, तापनिर्वापयिता चेत्युक्तेः तस्मिन् राज्ञो बहुमानो द्योत्यते । अत एव ईदृशपरोपकारप्रवणतयैव जनैः स्मर्यते इति स्मर इत्युक्तम्, न तु मदनः, काम इत्यादि । आर्या जातिः ।

शकुन्तलायास्तापहेतुजिज्ञासामूलके सख्योः प्रश्ने राजगताभिलाषमूलक एवायं ममातङ्क इति शकुन्तलाप्रतिवचनमाकर्ण्य आत्मानं कृतार्थं मन्यमानः प्रहर्षस्य परां काष्ठामधिरूढो राजा पूर्वं तापहेतुमपि संप्रति परमाह्लादजनकं स्मरमभिनन्दन्नाह—'यथा ग्रीष्मावसानदिवसेषु आमध्याह्नं प्रचण्डातपकरणेन दुःखजनकोऽपि सायन्तनसजलजलधराच्छादितः प्रवहच्छीतवातो दिवसस्तापनि-र्वापणेन आह्लादजनको भवति, तथैव पूर्वं शकुन्तलाविषये ममानुरागमुत्पाद्य तस्या दुर्लभत्वशङ्कया तदानीं ममात्यन्तमुद्वेगजनकोऽप्यसौ स्मरः सम्प्रति शकुन्त-लामुखादेव तस्या मय्यनुरागं मां श्रावयन् ममात्यन्तमाह्लादजनको जातः। तापजनन-तापनिर्वापणरूपविरुद्धकार्यकरणकौशलात् पर्यवसाने सुखप्रदत्वात् जनैरसौ सादरं स्मर्यते । अत एव स्मर इति लब्धाभिख्योऽयम्' इति भावः ॥ ९ ॥

**शकुन्तला**—तं जइ वो अणुमदं, ता तहवट्टह, जह तस्स राएसिणो अणुकम्पणिज्जा होमि । [1]अण्णहा अवस्सं सिञ्चध मे तिलोदअं ।

तद्यदि वामनुमतम्, तदा तथा वर्तेथाम्, यथा तस्य राजर्षेरनुकम्पनीया भवामि । अन्यथा अवश्यं सिञ्चतं मे तिलोदकम् ।

**राजा**—[2]संशयच्छेदि वचनम् ।

---

अथ शकुन्तला स्वाभिलापस्य दुष्पूरत्वं सम्भावयन्त्यपि सन्तापासहिष्णुस्तत्प्रतीकाराय सखीजनं प्रार्थयते--**तं जइ इति**। 'तद्यदि वामनुमतम्, तदा तथा वर्तेथाम्, यथा तस्य राजर्षेरनुकम्पनीया भवामि । अन्यथा अवश्यं सिञ्चतं मे तिलोदकम्' इति संस्कृतम् । तत् = दुष्यन्तविषयकोऽभिलाषः । वर्तेथाम् = प्रवर्तेथाम् । अनुकम्पनीया = दयनीया, परिग्रहयोग्येत्यर्थः । अन्यथा = मदभिलाषस्य भवदननुमतत्वे, राजर्षिणा दुष्यन्तेन आत्मनः अपरिग्रहे च । तिलोदकम् = तिलमिश्रं निवापाञ्जलिजलम् । तदलाभे अहं मरिष्यामीति भावः ।

शकुन्तलोक्तमाकर्ण्य प्रहृष्टो राजा आह--**संशयच्छेदि इति**। संशयच्छेदि = सन्देहनिवर्तकम् । शकुन्तला सत्यमेव मय्यनुरक्ता न वा, सख्यौ प्रस्तावेऽस्मिन्ननुमते भविष्यतो न वा, इत्यादिसकलसन्देहनिवर्तकं वचनमेतदित्यर्थः । यद्वा सत्यमियं विरहासहिष्णुतया मरिष्यति, न संशयः । गुरुजनपारवश्येन मां वरिष्यति न वा, कमप्यन्यं वा वरिष्यति, इत्यादिसंशयच्छेदि इत्यर्थः ।

अथ शकुन्तलायाः प्रतिवचनेन तां दुष्यन्तविषये प्रगाढानुरागामवधार्य

---

१ अण्णधा सुमरेध मं ।

२ अहो ! विमर्शच्छेदि वचनम् । एतदेव कामफलम्, यत्नफलमन्यत् । एतावदवस्थाऽपि मां सुखयति ।

**प्रियंवदा**—( जनान्तिकम् ) अणसूए ! दूरगअमन्महा अक्खमा इअं कालहरणस्स । जस्सिं बद्धभावा एसा सो ललामभूदो पोरवाणं । ता जुत्तं से अहिलासो अहिणन्दिदुं ।

अनसूये ! दूरगतमन्मथा अक्षमेयं कालहरणस्य । यस्मिन् बद्धभावैषा स ललामभूतः पौरवाणाम् । तद्युक्तमस्या अभिलाषोऽभिनन्दितुम् ।

**अनसूया**—तह, जह भणासि ।

तथा, यथा भणसि ।

---

सविषादं सहर्षं च प्रियंवदा आह--**अणसूए इति**। अनसूये ! दूरगतमन्मथा अक्षमेयं कालहरणस्य । यस्मिन् बद्धभावा एषा स ललामभूतः पौरवाणाम् । तद्युक्तमस्या अभिलाषोऽभिनन्दितुम्' इति संस्कृतम् । दूरगतमन्मथा = दशम॰ दशान्तिकारूढमदनविकारेत्यर्थः । तदुक्तम्--

नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ संकल्पः ।
निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः ॥
उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्युः । इति ।

कालहरणस्य अक्षमा = चित्रविलेखनादिभिरुपायैः सदृशदर्शनेन कालयाप॰ नस्य अयोग्या । अतः परमस्माभिरुपेक्षायां कृतायामियमवश्यं म्रियेतेति भावः । बद्धभावा = प्ररूढानुरागा । पौरवाणां ललामभूतः = पुरुवंशोद्भवराजकुलश्रेष्ठः । अनेन आभिजात्यधार्मिकत्वादिगुणातिशयः, एतदनुरूपत्वं च सूच्यते । तत् = तस्य राजर्षेः पौरवकुलललामभूतत्वादेव । अनेन अस्याः समाश्वासनाय एतदभिलाषस्य पूर्वमभिनन्दनं कार्यमिति सूच्यते । अत्र विषादहर्षौ व्यज्येते । प्रियंवदोक्तिमनु॰ मोदमाना अनसूया आह--**तह इति** । 'तथा, यथा भणसि' इति संस्कृतम् ।

**प्रियंवदा**—( प्रकाशम् ) सहि ! दिट्ठिआ अणुरूवो दे अहिणिवेसो । साअरं उज्झिअ कहिं वा महाणई ओदरइ ! को दाणिं सहआरं अन्तरेण अदिमुत्तलदं पल्लविदं सहेदि !

सखि ! दिष्ट्याऽनुरूपस्तेऽभिनिवेशः । सागरमुज्झित्वा कुत्र वा महानद्यवतरति ! क इदानीं सहकारमन्तरेणातिमुक्तलतां पल्लवितां सहते !

**राजा**—किमत्र चित्रं यदि विशाखे शशाङ्कलेखामनुवर्तेते !

---

इत्थं मिथो निश्चित्य शकुन्तलामाश्वासयितुकामा प्रियंवदा आह--**सहीति** । 'सखि ! दिष्ट्याऽनुरूपस्तेऽभिनिवेशः । सागरमुज्झित्वा कुत्र वा महानद्यवतरति ! क इदानीं सहकारमन्तरेणातिमुक्तलतां पल्लवितां सहते !' इति संस्कृतम् । दिष्ट्येत्यव्ययमानन्दद्योतकम् । 'अनुरूपस्तेऽभिनिवेशः' इत्यनेन युवयोः परस्परानुरूप्यात्तव तस्मिन्ननुरागो योग्य एवेत्यर्थः सूच्यते । उक्तमर्थं दृष्टान्तेन द्रढयति—**सागरमित्यादिना** । सागरम्=सगरेण राज्ञा निर्वृत्तं समुद्रम् । उज्झित्वा=विहाय । महानदी = गङ्गा, यमुना वा । गङ्गायमुनादिसदृशी पुण्यनदी सागरं विहाय नान्येन सम्मिलतीति भावः । दृष्टान्तान्तरमाह—**क इति** । सहकारं = रसालम् । पल्लविताम् = उद्भिन्नाभिनवदलाम् । अनेन उपभोगयोग्यता ध्वन्यते । अतिमुक्तलतां = माधवीलताम् । सहकार एव तादृशीं लतां सोढुं शक्तो नान्य इति भावः । महानद्याः सागरगमनमिव, सहकारस्य पल्लवितातिमुक्तलतासहनमिव च तव दुष्यन्ताभिलाषित्वमनुरूपमिति भावः । अत्र दृष्टान्तालङ्कारः ।

अथ सख्योर्वाक्यचातुरीमनुवदन् प्रशंसामुखेन राजा आह—**किमत्रेति** । अत्र = वक्ष्यमाणेऽर्थे । किं चित्रम् ? न किमपि चित्रमित्यर्थः । यदीति सिद्धानुवादे । विशाखे = तदाख्ये तारके । विशाखानक्षत्रस्य बहुरूपत्वेऽपि तदधिष्ठातृ-

**अनसूया**—को उण उवाओ भवे जेण अविलम्बिअं णिहुअं अ सहीए मनोरहं संपादेह्म ?

कः पुनरुपायो भवेद्येनाविलम्बितं निभृतं च सख्या मनोरथं संपादयावः ?

**प्रियंवदा**—णिहुअं त्ति चिन्तणिज्जं भवे । सिग्घं त्ति [1]सुअरं ।

निभृतमिति चिन्तनीयं भवेत् । शीघ्रमिति सुकरम् ।

**अनसूया**—कहं विअ ?

कथमिव ?

---

देवतागतं द्वित्वमभिप्रेत्य 'विशाखे' इति द्विवचनोपन्यासः । तथा च—"विशाखयोर्मध्यगतः सम्पूर्ण इव चन्द्रमाः" इति **वाल्मीकि**प्रयोगोऽपि संगच्छते । शशाङ्कलेखां = चन्द्ररेखाम् अनुवर्तेते = अनुगच्छतः । सादृश्यनिमित्तेयमप्रस्तुतप्रशंसा । अत्र विशाखे सखी स्थानीये, चन्द्ररेखा च शकुन्तलास्थानीया ।

अथ तयोः सङ्गमोपायं विचिन्तयन्ती अनसूया प्राह—**को उण** इति । 'कः पुनरुपायो भवेत् येन अविलम्बितं निभृतं च सख्या मनोरथं सम्पादयावः' इति संस्कृतम् । अविलम्बितम् = बिलम्बमकृत्वा, शीघ्रमित्यर्थः । निभृतं = गूढम् । अनेन गान्धर्वो विवाहो विवक्षितः, तस्य परस्परानुरागमूलकत्वेन अतिश्लाघ्यत्वात् सद्यःसंपाद्यत्वाच्च । प्रियंवदा आह—**णिहुअं त्ति इति** । 'निभृतमिति चिन्तनीयं भवेत् । शीघ्रमिति सुकरम्' इति संस्कृतम् । चिन्तनीयं = विचारणीयम् , दुष्करत्वान्निभृतं कर्तव्यमित्यत्र उपायश्चिन्तनीय इत्यर्थः । अनसूया आह—**कहं विअ इति** । 'कथमिव' इति संस्कृतम् । सुकरमिति शेषः ।

उपायस्य शीघ्रतरं कर्तुं क्षमत्वे कारणस्वरूपं राज्ञोऽप्यौत्सुक्यं वर्णयन्ती

---

१ ण दुक्करं ।

**प्रियंवदा**—एं सो राएसी इमस्सिं सिणिद्धदिट्ठीए सूइदाहिलासो इमाइं दिअहाइं पजाअरकिसो लक्खीअदि।

ननु स राजर्षिरेतस्यां स्निग्धदृष्ट्या सूचिताभिलाष एतान्दिवसान् प्रजागरकृशो लक्ष्यते।

**राजा**—सत्यमित्थंभूत एवास्मि। तथा हि—

[1]इदमशिशिरैरन्तस्तापाद्विवर्णमणीकृतं
निशि निशि भुजन्यस्तापाङ्गप्रसारिभिरश्रुभिः।
[2]अनभिलुलितज्याघाताङ्कं मुहुर्मणिबन्धना-
त्कनकवलयं स्रस्तं स्रस्तं मया प्रतिसार्यते ॥१०॥

---

प्रियंवदा प्राह—**एं सो इति**। 'ननु स राजर्षिरेतस्यां स्निग्धदृष्ट्या सूचिताभिलाष एतान् दिवसान् प्रजागरकृशो लक्ष्यते' इति संस्कृतम्। एतस्यां = शकुन्तलायां स्निग्धदृष्ट्या = साभिलाषवीक्षणेन। 'एतान् दिवसान्' इति अत्यन्तसंयोगे द्वितीया। प्रजागरकृशः—प्रजागरात् = शकुन्तलागतचिन्तया रात्रिजागरणात् कृशः = क्षीणः लक्ष्यते = दर्शनेन ज्ञायते। यज्ञरक्षणावसरे आश्रमे स्थितः आवाभ्यामित्थंभूतो लक्षित इति भावः। अत्र रात्रिजागरादिकार्यद्वारा प्रबलतरं संगमौत्सुक्यरूपं कारणं गम्यते इति अप्रस्तुतप्रशंसा।

प्रियंवदोक्तां निजावस्थामनुवदन् राजा प्राह—**सत्यमिति**। इत्थंभूतः = निद्रारहितः कृशश्च।

उक्तमेवार्थं समर्थयन्नाह—**तथा हि—इदमिति**। निशि निशि भुजन्यस्तापाङ्गप्रसारिभिः अन्तस्तापात् अशिशिरैः अश्रुभिः विवर्णमणीकृतं मणिबन्धनात्

---

१ अशिशिरतरैरन्तस्तापैर्विवर्णमलीमसम्। २ अनतिलुलितज्याघाताङ्कात्।

स्रस्तं स्रस्तम् इदं कनकवलयं मया अनभिलुलितज्याघाताङ्कं मुहुः प्रतिसार्यते इत्यन्वयः ।

निशि निशि = प्रतिरात्रम् । अनेन शकुन्तलादर्शनात्प्रभृति अद्य यावदनुभूयमान स्वावस्था द्योत्यते । तद्दर्शनात्प्रभृति सर्वासु रात्रिष्वित्यर्थः । दिवा मुनिजनपरिचरणादिना, परिजनसंनिधानेन, सदृशदर्शनादिना च कालयापनं भवतीति निशापदोपादानम् । भुजन्यस्तापाङ्गप्रसारिभिः—भुजे = बाहौ, मृदुशय्यादौ शयने अरत्या भूपृष्ठशयने उपधानीकृते बाहौ इत्यर्थः । न्यस्तात् = निक्षिप्तात् अपाङ्गात् = नेत्रप्रान्तात् प्रसारिभिः = प्रवर्तिभिः, प्रवाहरीत्या निर्गच्छद्भिरित्यर्थः । अन्तस्तापात् = मदनाग्निदाहजन्यात् आन्तरात् ऊष्मण इत्यर्थः । अशिशिरैः = उष्णैः । अयं वैवर्ण्यकरणे हेतुः । अश्रुभिः = बाष्पैः विवर्णमणीकृतम्—विवर्णाः = विच्छायाः मणयः = पद्मरागादयो यत्र तत् । अविवर्णमणि विवर्णमणि संपादितं विवर्णमणीकृतम् । मणीनामुष्णजलसंबन्धेन वैवर्ण्यं प्रसिद्धम् । अहमिव वलयमपि शोच्यां दशां प्रापितमिति द्योत्यते । मणिबन्धनात्—बाहुपाणितलसंधिस्थानात् स्रस्तं स्रस्तम् = करवलनादौ स्वस्थानात् पुनः पुनर्गलितम् इदम् = एकान्ते मदुत्कण्ठानुभवसाक्षिभूतम् । अनेन तस्मिन् आदरबुद्धिर्द्योत्यते । कनकवलयं = सुवर्णकङ्कणं मया अनभिलुलितज्याघाताङ्कम्—अनभिलुलितः = कार्श्यात् अनतिस्पृष्टः ज्याघातस्य = धनुर्गुणाकर्षणस्य अङ्कः = चिह्नं यस्मिन् कर्मणि यथा स्यात्तथेति स्रंसनक्रियाविशेषणम् । मुहुः = वारं वारं प्रतिसार्यते = पश्चान्नीयते । प्रकोष्ठरूपस्वस्थानस्थं क्रियते इत्यर्थः ।

अत्र पूर्वार्धेन रात्रिजागरः, उत्तरार्धेन कार्श्यं च द्योत्यते । स्वभावोक्तिः, काव्यलिङ्गं च । अस्मिन् श्लोके दुष्यन्तालम्बनो निशातदाक्षिप्तचन्द्रोदयाद्युद्दीपितः अश्रुकार्श्याद्यनुभावितश्चिन्ताविषादग्लान्यादिभिः संचारितो विप्रलम्भशृङ्गारः स्फुट-

**प्रियंवदा**—( विचिन्त्य ) हला ! मअणलेहो से करीअदु । इमं [1]देवप्पसादस्सावदेसेण सुमणोगोविदं करिअ से हत्थअं पावइस्सं ।

हला, मदनलेखोऽस्य क्रियताम् । इमं देवप्रसादस्यापदेशेन सुमनोगोपितं कृत्वा तस्य हस्तं प्रापयिष्यामि ।

---

मभिव्यज्यते । नायिकायाः स्वविषये दृढानुरागप्रतिपत्त्या सख्योश्चातुर्येण संगमसम्भावनया च सुखानुभवात् स एव संभोगायमानतां गाहते । हरिणी वृत्तम् ।

प्रियंवदोक्तौ आत्मनः प्रजागरकृशत्वं श्रुत्वा आत्मानं विलोक्य 'सत्यमित्थंभूत एवास्मि, तथा हि' इत्यादिना राजा स्वावस्थां परामृशन्नाह—'शकुन्तलादर्शनक्षणात् प्रभृति तदुत्कण्ठया दूनचेतसो मम दिनानि तु मुनिजनपरिचरण-परिजन-संनिधान-सदृशदर्शनादिना कथमप्यतिक्रामन्ति । रात्रौ रात्रौ तु मृदुतरेष्वपि हंसतूलशयनेषु परिवर्तिताङ्गयष्टेः निद्रा समीपं नोपसर्पति। अथ शरीरतापप्रतीकारबुद्ध्या शीतलेषु भूतलेषु लुठतः उपधानीकृतबाहोर्मम नेत्राभ्यां पूरप्रायं निर्गच्छद्भिरुष्णतरैर्बाष्पासारैर्विच्छायीकृतमणिगणम् आहारादिपरित्यागमूलकात् कार्श्याद्धेतोः सुतरां क्षीणात् प्रकोष्ठात् मुहुर्मुहुर्गलितमिदं मद्दुःखसाक्षि सुवर्णकङ्कणं धनुर्गुणाकर्षणजन्यं किणमस्पृशतैव मया मुहुरूर्ध्वं नीयते। तस्मात् सत्यमेव बाढमहं कृशोऽस्मि' इति भावः ॥ १० ॥

अथ शीघ्रं निभृतं च शकुन्तलामनोरथं साधयितुमुपायं विचिन्त्य प्रियंवदा प्राह—**हला इति** । 'हला, मदनलेखोऽस्य क्रियताम् । इमं देवप्रसादस्य अपदेशेन सुमनोगोपितं कृत्वा तस्य हस्तं प्रापयिष्यामि' इति संस्कृतम् । मदनलेखः—मदनः = कामः, अनुराग इति यावत् । तत्सूचको लेखः = पत्रिका अस्य = राज्ञः ।

---

१ देवदासेवावदेसेण ।

**अनसूया**—रोअइ मे सुउमारो पओओ । किं वा सउन्दला भणादि ?

रोचते मे सुकुमारः प्रयोगः । किं वा शकुन्तला भणति ?

**शकुन्तला**—[1]को णिओओ विकप्पीअदि ?

को नियोगो विकल्प्यते ?

**प्रियंवदा**—तेण हि अत्तणो [2]उवण्णासपुव्वं चिन्तेहि दाव ललिअपदबन्धणं ।

तेन ह्यात्मन उपन्यासपूर्वं चिन्तय तावल्ललितपदबन्धनम् ।

---

इमं = मदनलेखं सुमनोगोपितम्—सुमनोभिः = पुष्पैः गोपितम् = आच्छादितम् । देवप्रसादस्य = देवधारितस्रक्चन्दनादिनिर्माल्यस्य अपदेशेन = व्याजेन । ऋषिभिः प्रेषितं देवनिर्माल्यमिदमिति व्याजेनेत्यर्थः । प्रियंवदोक्तिमनुमोदमानाऽनसूया प्राह—**रोअइ इति** । 'रोचते मे सुकुमारः प्रयोगः । किं वा शकुन्तला भणति' इति संस्कृतम् । रोचते = समीचीन इति प्रतीयते । मे = मह्यम् । सुकुमारः = कोमलः, सुकरः, निरपायश्चेत्यर्थः । 'किं वा शकुन्तला भणति' इत्यनेन तस्य प्रयोगस्य शकुन्तलाकर्तव्यत्वेन तत्प्राधान्यं द्योत्यते ।

सखीवचनं भङ्ग्या अनुमोदमाना शकुन्तला प्राह—**को णिओओ इति** । 'को नियोगो विकल्प्यते ?' इति संस्कृतम् । नियोगः = आज्ञा विकल्प्यते = विचार्यते । सख्योर्युवयोर्यः कोऽपि नियोगो मया विचारमकृत्वैव सम्पाद्यते इत्यर्थः । शकुन्तलोक्तिं श्रुत्वा प्रियंवदा आह—**तेण हि इति** । 'तेन हि आत्मन उपन्यासपूर्वं चिन्तय तावल्ललितपदबन्धनम्' इति संस्कृतम् । तेन हि = मदुक्तस्योपायस्य

---

१ सहीणिओओ वि । २ उवण्णासाणुरूअं ।

**शकुन्तला**—हला ! चिन्तेमि अहं । अवहीरणभीरुअं पुणो वेवइ मे हिअअं ।

हला, चिन्तयाम्यहम् । अवधीरणभीरु पुनर्वेपते मे हृदयम् ।

**राजा**—( सहर्षम् )—

अयं स ते तिष्ठति संगमोत्सुको
विशङ्कसे भीरु ! यतोऽवधीरणाम् ।
लभेत वा प्रार्थयिता न वा श्रियं
श्रिया दुरापः कथमीप्सितो भवेत् ॥ ११ ॥

---

त्वया अभिनन्दितत्वादित्यर्थः । आत्मनः = आत्मविरहावस्थाया इत्यर्थः । उपन्यास-पूर्वं = पर्वमुपन्यासं कृत्वेत्यर्थः । चिन्तय = सावधानं निरूपय । ललितपद-बन्धनम्—ललितं च तत् पदबन्धनं चेति इदमेव विशेष्यम् । ललितं = माधुर्यादिगुणप्रधानं पदबन्धनं = पद्यम् ।

प्रियंवदोक्तिमनुमोदमाना शकुन्तला आह—**हला इति** । 'हला, चिन्तयाम्य-हम्; अवधीरणभीरु पुनर्वेपते मे हृदयम्' इति संस्कृतम् । चिन्तयाम्यहम्—आत्मावस्थोपन्यासपूर्वकं पद्यं चिन्तयामीत्यर्थः । अवधीरणभीरु—अवधीरणेन= तिरस्कारेण, तत्सम्भावनयेत्यर्थः। भीरु = भयशीलम् । पत्रिकाप्रेषणेन मया स्वकीये प्रणये प्रकाशिते कदाचित्स मामवज्ञास्यतीति संभावनया भयशीलं मे हृदयं कम्पते इत्यर्थः । अनेन शकुन्तलाया मानिनीत्वं दर्शितम् ।

अथ शकुन्तलया कृतामात्मनोऽवधीरणाशङ्कामसहमानो राजा तां परिहरन्नाह—**अयमिति** । हे भीरु ! यतः अवधीरणां विशङ्कसे, सः अयं ते संगमोत्सुकस्ति-

ष्ठति। प्रार्थयिता श्रियं लभेत वा न वा! श्रिया ईप्सितो दुरापः कथं भवेत्? इत्यन्वयः।

हे भीरु = भयशीले! शीलं यत्नेनापि निवारयितुं न शक्यमिति भयकारणाभावेऽपि भयमाशङ्कमाना त्वं स्वभावत एव भीरुरसीति भावः। अवधीरणाजन्यस्य भयस्य नायमवसर इति तत्त्वम्। यतः = यस्मात्, मत्सकाशादित्यर्थः। अवधीरणां = तिरस्कारं विशङ्कसे = विविधप्रकारैः शङ्कसे, सः = यस्त्वया निश्चितानुरागोऽपि शङ्कितः अयं = त्वद्विरहाग्निसन्तापशान्तये त्वन्मुखचन्द्रचन्द्रिकामनुभवन् तव निकटवर्ती, ते = त्रिभुवनवर्तिसकलयौवतललामभूतायास्तव संगमोत्सुकः—सङ्गमे = मिलने उत्सुकः = उत्कण्ठितः, क्षणविलम्बमपि असहमान इत्यर्थः। तिष्ठति = योग्यमवसरं प्रतीक्षमाणः व्यवधाय स्थितिं करोतीत्यर्थः। तिष्ठतीति वर्तमाननिर्देशेन संगमपर्यन्तं त्वत्समीपान्नापगमिष्यतीत्यर्थो द्योत्यते। अनेन पूर्वार्धार्थेन त्वया मत्सकाशात् अवधीरणा न शङ्क्या, किन्तु मयैव त्वत्सकाशात्सा—इत्यर्थो दर्शितः। तमेव दृष्टान्तेन समर्थयति—लभेतेत्यादिना। प्रार्थयिता = प्रार्थनापूर्वकं प्रयतमानः। श्रियं = समृद्ध्यात्मिकां संपदं लभेत=प्राप्नुयात्, वा न वा—कदाचिल्लभेत, कदाचिन्नेति विकल्पः। पुरुषप्रयत्नस्य दैवसहकृतत्वाद्विकल्पविषयोऽयमर्थ इति भावः। श्रिया = समृद्ध्यात्मिकया संपदा, तदधिष्ठात्र्या देवतयेत्यर्थः। ईप्सितः = स्वयमाप्तुमिष्टः दुरापः = दुर्लभः कथं भवेत्? न भवेदित्यर्थः। श्रिया ईप्सितः सुलभ एवेति भावः। उक्तं च—"न रत्नमन्विष्यति मृग्यते हि तत्" इति। त्वां प्रार्थयितुस्त्वं दुर्लभा, त्वया प्रार्थ्यमानस्ते सुलभ इत्यर्थः। यस्मादहं ते सुलभः, अतस्त्वया मत्तोऽवधीरणा न शङ्क्या; यतस्त्वं मम दुर्लभा, ततस्त्वत्त एव मया सा शङ्क्येति पूर्वापरसंबन्धः।

इयं सादृश्यनिमित्ता अप्रस्तुतप्रशंसा। किञ्च 'अयं सः' इत्यादिना वाक्य-

**सख्यौ**—अत्तगुणावमाणिणि ! को दाणिं [1]सरीरणिव्वावत्तिअं सारदिअं जोसिणिं [2]पडन्तेण वारेदि !

आत्मगुणावमानिनि ! क इदानीं शरीरनिर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन वारयति !

---

कदम्बेन 'त्वं मम दुर्लभा, अहं तव सुलभः' इत्यर्थो भङ्ग्या दर्शितः । तत्र लभेत वेत्याद्युत्तरार्धार्थो दृष्टान्त इति प्रतिवस्तूपमा । हर्षौत्सुक्यादयो भावा व्यङ्ग्याः । वंशस्थं वृत्तम् ।

शकुन्तलोक्तौ 'राजसकाशात् अवधीरणभीरु वेपते मे हृदयम्' इति वाक्यं श्रुत्वा राजा स्वगतमाह—'हे भीरुस्वभावे शकुन्तले ! त्वं स्वभावत एव भयशीलाऽसि । यतः यस्मात्त्वमनवसरामप्यवज्ञामाशङ्कसे, त्वया निश्चितानुरागोऽपि शङ्कितः स त्रिभुवनीवर्तिसकलयौवतललामभूतायास्ते संगमविषये बाढं सोत्कण्ठः क्षणमपि विलम्बं न सहते । किञ्च अवसरं प्रतिपालयन् संप्रत्यपि व्यवधाय स्थितिं करोति । समृद्धिलाभाय प्रार्थनापूर्वकं प्रयतमानोऽपि पुरुषः सम्पदात्मिकां श्रियं कदाचिल्लभते, कदाचिन्न लभते, पुरुषप्रयत्ने दैवस्यापि सहकारित्वात् । किन्तु संपदधिष्ठात्र्या श्रीदेवतया स्वयमाप्तुमिष्टो दुर्लभः कथं भवेत् ? तस्मात् त्वमेव मे दुर्लभा, नाहं तव दुर्लभः' इति भावः ॥ ११ ॥

अथ सख्यौ शकुन्तलाया राजसकाशादवधीरणाशङ्कां दृष्टान्तद्वारा परिहरन्त्यौ प्राहतुः—**अत्तगुणावमाणिणीति** । 'आत्मगुणावमानिनि ! क इदानीं शरीरनिर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन वारयति !' इति संस्कृतम् । आत्मगुणावमानिनि = अज्ञातस्वगुणगौरवे ! स राजा त्वद्गुणैरेव क्रीतः, तस्मादवधीरणाशङ्का न कार्येति भावः । शरीरनिर्वापयित्रीम् = ऊष्मतापापनोदिकाम्, शरीर-

---

१ संदावणिव्वाणहेतुअं । २ आदवत्तेण ।

**शकुन्तला**—(सस्मितम्) णिओइआ दाणिं म्हि ।

नियोजितेदानीमस्मि । (इत्युपविष्टा चिन्तयति ।)

**राजा**—स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि । यतः—

**उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।**

**[1]कण्टकितेन प्रथयति मय्यनुरागं कपोलेन ॥ १२ ॥**

सुखदायिनीमित्यर्थः । शारदीं = शरत्कालसंबन्धिनीम् । अनेन आह्लादातिशयकारित्वं ध्वन्यते । ज्योत्स्नां = चन्द्रिकां पटान्तेन = अञ्चलेन वारयति = तिरोधत्ते ! न कोऽपीत्यर्थः । यथा शरीरसुखदायिनीं शारदीं ज्योत्स्नां न कोऽपि वारयति, तथा स्वयं प्रणयपत्रप्रेषणेन प्रदर्शितानुरागां त्वां स राजा अवश्यं नावधीरयेदिति भावः । अत्रापि पूर्ववत् अप्रस्तुतप्रशंसा । शकुन्तला सख्योरभिप्रायं जानन्ती आह—**णिओइआ** इति । 'नियोजितेदानीमस्मि' इति संस्कृतम् । इदानीं = दृष्टान्तद्वारा स्वपक्षसमर्थनेन शङ्कापरिहारादित्यर्थः । नियोजिता = प्रणयपत्रिकारचनार्थमाज्ञप्ता । इदानीमवश्यमेव मया प्रणयपत्रिका विचिन्त्येति भावः ।

अथ राजा तथाभूतां प्रियामवलोकयन् किमपि विशेषदृश्यमिदमापतितमिति संभावयन्नाह—**स्थाने** इति । स्थाने = इदानीं विशेषेण दर्शनं युक्तमेवेत्यर्थः । "युक्ते द्वे सांप्रतं स्थाने" इत्यमरः । विस्मृतनिमेषेण = अनाकलितपक्ष्मपातेन । अनेन दर्शने कौतुकाधिक्यं ध्वन्यते । प्रियां = शकुन्तलाम् अवलोकयामि = सुष्ठु पश्यामि, निर्वर्णयामीत्यर्थः ।

विस्मृतनिमेषेण चक्षुषा प्रियावलोकनस्य युक्तत्वं तथाभूतप्रियामुखवर्णनद्वारा समर्थयन्नाह—**उन्नमितैकभ्रूलतमिति** । पदानि रचयन्त्या अस्या उन्नमितैक-

१ पुलकाञ्चितेन कथयति ।

भ्रूलतम् आननं कण्टकितेन कपोलेन मयि अनुरागं प्रथयति इत्यन्वयः ।

पदानि = सुबन्ततिङन्तादीनि सन्देशपद्ययोग्यानि पदानि रचयन्त्याः = ऊहापोहाभ्यां छन्दोऽनुरोधेन पद्ये निवेशयन्त्याः अस्याः = पुरोदृश्यमानायाः प्रियायाः शकुन्तलायाः उन्नमितैकभ्रूलतम्—उन्नमिता = ऊर्ध्वं प्रेरिता, उत्क्षिप्तेत्यर्थः । एका भ्रूलता यस्मिन् तत् । अयं चिन्तानुभावः । तथा चोक्तम्—

स्त्रीणां कोपे वितर्के च दर्शने श्रवणे निजे ।
भ्रूर्लीलाहेलयोश्चैव कार्योत्क्षिप्ता विचक्षणैः ॥ इति ।

अनेन पद्यरचनायां प्रतिपदं सावधानता व्यज्यते । आननं = मुखं कण्टकितेन = रोमाञ्चितेन । सन्देशपद्यरचनायां प्रियतमस्मरणेन तदनुसन्धानजन्यानन्दस्य अयमनुभावः । कपोलेन = गण्डफलकेन । यैवैका भ्रूलता उन्नमिता तद्दिक्स्थकपोलस्यैव रोमाञ्चितत्वमिति कपोलेनेत्येकवचनेन सूच्यते । मयि = मद्विषये । अनेन आत्मनो धन्यता, सुभगंमन्यता च ध्वन्यते । अनुरागं = प्रीतिविशेषं प्रथयति = शंसति । रोमाञ्चस्य अनुरागानुभावत्वात् रोमाञ्चवता कपोलेन अनुरागमनुमापयतीत्यर्थः ।

अत्र रोमाञ्चितकपोलान्यथानुपपत्त्या अनुरागप्रथनादर्थापत्त्यलङ्कारः । अनुमानालङ्कारो वा । विशेषनिर्णायकाभावात्सन्देहसंकरो वा । स्वभावोक्तिः, भ्रूलतमित्युपमा च । ईदृगवस्थां नायिकां विलोकयतो नायकस्य कोऽपि चमत्कारोदयः प्रतीयत इति नायकगतो हर्षाख्यो भावो ध्वन्यते । आर्या जातिः ।

सखीनियोगेन अङ्गीकृतप्रणयपत्रिकाप्रेषणायाः तदर्थं सन्देशपद्ययोग्यानि सुप्तिङन्तादिपदानि ऊहापोहाभ्यां पद्ये निवेशयन्त्या मध्ये मध्ये एकां भ्रूलतामुत्क्षिप्य क्षणं तूष्णीं तिष्ठन्त्याः पुरोदृश्यमानाया अस्याः प्रियायाः शकुन्तलायाः मदभिमुखमापतितः उन्नमितैकभ्रूलतादिग्गतो रोमाञ्चकञ्चुकाच्छन्नोऽयं कपोलो

**शकुन्तला**—हला ! चिन्तिदं मए गीदवत्थु । ण क्खु सण्णिहिदाणि उण लेहणसाहणाणि ।

हला, चिन्तितं मया गीतवस्तु । न खलु संनिहितानि पुनर्लेखनसाधनानि ।

**प्रियंवदा**—इमस्सिं सुओदरसुउमारे णलिणीपत्ते [1]णहेहिं णिक्खित्तवण्णं करेहि ।

एतस्मिञ्छुकोदरसुकुमारे नलिनीपत्रे नखैर्निक्षिप्तवर्णं कुरु ।

**शकुन्तला**—(यथोक्तं रूपयित्वा) हला ! सुणुह दाणिं संगदत्थं ण वेति ।

हला, श्रृणुतमिदानीं संगतार्थं न वेति ।

---

मद्विषये अस्याः प्रगाढं प्रेमाणं सूचयति । प्रणयपद्यचिन्तनावसरे मत्स्मरणेनैवायं रोमाञ्चो जात इति दृढमियं मय्यनुरागिणीति भावः ॥१२॥

अथ शकुन्तला सखीनियोगानुष्ठानं निवेदयति—**हलेति** । 'हला, चिन्तितं मया गीतवस्तु, न खलु सन्निहितानि पुनर्लेखनसाधनानि' इति संस्कृतम् । चिन्तितमिति भूतकालनिर्देशेन रचनायाः संपन्नत्वं सूच्यते । लेखनसाधनानि = लेखनी-पत्रिका-मसीपात्रमित्यादीनि । प्रियंवदोत्तरयति—**इमस्सिं इति** । 'एतस्मिन् शुकोदरसुकुमारे नलिनीपत्रे नखैर्निक्षिप्तवर्णं कुरु' इति संस्कृतम् । एतस्मिन्निति समीपस्थस्य अङ्गुल्या निर्देशः । शुकोदरसुकुमारे = शुकोदरवत् कोमले । अनेन अक्षरविन्याससौकर्यं द्योत्यते । नखैर्निक्षिप्तवर्णं कुरु—नखाग्रैर्लिखेत्यर्थः । **यथोक्तं रूपयित्वेति** । नखैर्लिखित्वेत्यर्थः । **हलेति** । 'हला, श्रृणुतमिदानीं सङ्गतार्थं न वेति' इति संस्कृतम् । श्रृणुतम् = श्रुत्वा विचारयेथाम् ।

---

१ पदच्छेदभत्तीए णहेहिं आलिहीअदु ।

**उभे**—अवहिद म्ह ।

अवहिते स्वः ।

**शकुन्तला**—( वाचयति । )—

**तुज्झ ण आणे हिअअं मम उण कामो दिवावि रत्तिम्मि ।**
**णिग्घिण[1] ! तवइ बलीअं [2]तुइ वुत्तमणोरहाइं अङ्गाइं ॥१३॥**

तव न जाने हृदयं मम पुनः कामो दिवाऽपि रात्रिमपि ।
निर्घृण ! तपति बलीयस्त्वयि वृत्तमनोरथान्यङ्गानि ॥

---

सङ्गतार्थं = समुचितार्थम् । **अवहिद म्ह इति** । 'अवहिते स्वः' इति संस्कृतम् । अवहिते = सावधाने । अनेन तच्छ्रवणादरो द्योत्यते ।

अथ मदनानलज्वालामसहमाना शकुन्तला राज्ञे सोपालम्भं स्वावस्थां निवेदयन्ती आत्मनः स्वीकारं प्रार्थयते—**तुज्झ इति** । 'तव न जाने हृदयं मम पुनः कामो दिवाऽपि रात्रिमपि । निर्घृण ! तपति बलीयस्त्वयि वृत्तमनोरथान्यङ्गानि ॥' इति संस्कृतम् । हे निर्घृण ! तव हृदयं न जाने । त्वयि वृत्तमनोरथानि मम अङ्गानि मदनः पुनः दिवाऽपि रात्रिमपि बलीयस्तपति इत्यन्वयः ।

हे निर्घृण = हे निर्दय ! तव हृदयं न जाने = त्वां मदनस्तपति वा, न तपति वेति न जानामीत्यर्थः । अनेन राजहृदयाज्ञानेऽपि स्वहृदयदुःखनिवेदनेन शकुन्तलाया दुःखातिशयः प्रतीयते । त्वयि = त्वद्विषये वृत्तमनोरथानि—वृत्तः = संजातः मनोरथः=अभिलाषो येषां तानि मम=स्त्रीस्वभावादस्पृष्टधैर्यायाः अङ्गानि= करचरणादीनि मदनः=मदयतीत्यन्वर्थनामा कामः । एवंभूतोऽपि सः कथं तापं

---

१ णिक्किव । २ तुह हत्थ ।

जनयतीत्याश्चर्यं द्योत्यते । पुनःशब्दो विशेषे । दिवाऽपि = दिवसमपि रात्रिमपि= निशामपि । अत्यन्तसंयोगे द्वितीया । अत्र दिवसरात्र्यात्मककालभेदेनापि तापस्य ह्रासो वृद्धिश्च न भवतीति तस्यातिदुःसहत्वं सूच्यते । दिवसे सतापावस्थायामेवं चिन्त्यते, यत्—रात्रौ किञ्चित्स्वास्थ्यं भवेदिति, रात्रावपि तदलाभात्पुनश्चिन्त्यते—प्रभाते किञ्चित् सुखं स्यादित्याकारकस्वमनोवृत्तिनिवेदनाय 'दिवाऽपि रात्रिमपि' इत्युक्तम् । बलीयः = दृढम् । तपति=तापं जनयति । अत्र तपतीति वर्तमाननिर्देशेन तापावसानं न दृश्यते इति बलीय इत्यनेन त्वरितमेव तदप्रतीकारे प्राणापायोऽपि भवेदिति द्योत्यते । एवमनुभूयमानायाः स्वदुरवस्थाया हेतुं राजानमेवावधार्य सोपालम्भं निर्घृणेत्युक्तम् । यस्मात् त्वन्निमित्तमेव मदनेनैवं तप्यमानायां मयि त्वं न दयसे, तस्मान्निर्दयोऽसीत्यर्थः । अनेन इतः परमपि स्वकीयं निर्दयत्वं विहाय त्वदेकशरणां मां झटित्यङ्गीकुरुष्वेति प्रार्थना प्रकाश्यते । तव हृदयमिति विशेषोपादानेन स्वस्योत्कण्ठातिशयः, तस्य तदभावश्च ध्वन्यते ।

अत्र काव्यलिङ्गम् , परिकरश्चालङ्कारौ । मदनस्तपतीत्यत्र विरोधाभासो ध्वन्यते । अत्र बहवो भावा व्यज्यन्ते, तेषु कोपः औत्सुक्यं च प्रधानम् । विप्रलम्भः स्फुट एव । गीतिश्छन्दः ।

मदनानलतापासहिष्णुः सोपालम्भं राज्ञे स्वावस्थां निवेदयन्ती शकुन्तला प्रणयसंदेशगीतिकामुखेनाह—'हे निर्दय ! तव हृदयमहं न जानामि, त्वां मदनस्तपति वा, न तपति वेत्यपि बोद्धुं न शक्यते; किन्तु त्वन्निमित्तमेव मदनेनैवं तप्यमानां मां त्वं समुपेक्षसे, अतः सत्यं निर्दयोऽसि । स्त्रीस्वभावादस्पृष्टधैर्यायाः सर्वात्मना त्वामेवाभिलषन्त्या ममाङ्गानि मदनो दिवाऽपि रात्रिमपि अविरतं दृढं तापयत्येव । एवंभूतामपि मां झटिति नाङ्गीकुरुषे, तर्हि मदनहतकोऽसौ मां दशमदशां प्रापयिष्यति । एतर्हि त्वरितमनुगृहाण' इति भावः ॥ १३ ॥

राजा—[1]( सहसोपसृत्य )—

तपति तनुगात्रि ! मदनस्त्वामनिशं मां पुनर्दहत्येव ।
ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः ॥१४॥

---

अथ ज्ञातरहस्यस्य प्रहृष्टस्य स्वावस्थां निवेदयितुं योग्योऽयमवसर इति मन्यमानस्य राज्ञश्चेष्टामाह—**सहसोपसृत्येति** । सहसा = अतर्कितम् उपसृत्य= समीपमागत्य । अयं निर्घृणेत्यादिशकुन्तलावचनश्रवणजनितावेगस्यानुभावः ।

अथ राजा स्वावस्थां निवेदयन्नाह—**तपतीति** । हे तनुगात्रि ! त्वां मदनोऽनिशं तपति, मां पुनर्दहत्येव । दिवसो यथा शशाङ्कं ग्लपयति, कुमुद्वतीं न हि तथा इत्यन्वयः ।

हे तनुगात्रि—तनूनि = कृशानि गात्राणि = अङ्गानि यस्यास्तत्सम्बुद्धौ । हे कृशाङ्गीत्यर्थः । त्वां = भवतीं मदनः = कामः अनिशं = दिवाऽपि रात्रिमपि तपति = संतापमात्रेण पीडयति । मां पुनः = मां तु । पुनःशब्दो विशेषे । दहत्येव = दह भस्मीकरणे, भस्मीकरोत्येवेत्यर्थः । अनेन अत्युत्कटस्तापो लक्ष्यते । वैवर्ण्यादिकं च व्यज्यते । दहत्येवेति कथनेन समागमविलम्बे देहापायसंभावना सूच्यते । नैतच्चाटुभाषणमपि तु भूतार्थ एवेत्येवकारेण द्योत्यते । एतावता त्वं तापमात्रं जानासि, न तु दाहम्; अतो मम हृदयं न जानासीति 'तव न जाने हृदयम्' इत्युपालम्भस्य प्रत्युपालम्भो ध्वनितः । उक्तार्थे सर्वलोकसिद्धं दृष्टान्तमाह—ग्लपयतीत्यादि । दिवसः = वासरः यथा = येन प्रकारेण शशाङ्कं=चन्द्रम् । अत्र शशाङ्कमित्युक्तेश्चन्द्रस्य रात्रौ ज्योत्स्नाबाहुल्यात् शशरूपोऽङ्कः स्पष्टं प्रतीयते,

---

१ अवसरः खल्वयमात्मानं दर्शयितुम् ।

**सख्यौ**—( सहर्षम् ) साअदं अविलम्बिणो मणोरहस्स ।
स्वागतमविलम्बिनो मनोरथस्य ।

---

दिवसे तस्य कथाऽपि नास्तीति सूच्यते । ग्लपयति = ग्लानं करोति, श्रीविहीनं करोतीत्यर्थः । कुमुद्वतीं = चन्द्रमसः प्रेयसीं कुमुदिनीं न हि तथा—हीत्यवधारणे, प्रसिद्धौ वा । तथा न ग्लपयतीत्यर्थः । दिवसश्चन्द्रमसो वैवर्ण्यादिकं श्रीविहीनत्वं च करोति; तत्प्रियतमायाः कुमुद्वत्यास्तु मुकुलनात्मकं कार्श्यमेव करोतीति भावः ।

अत्र दृष्टान्तः, प्रतिवस्तूपमा वा । शकुन्तलातापापेक्षया राज्ञस्तापस्य उत्कर्षव्यञ्जनात् व्यतिरेकश्च । मदनस्तपतीति पूर्ववत् विरोधाभासो ध्वन्यते । औत्सुक्यं प्रधानम् । आर्या जातिः ।

तव न जाने हृदयमित्यादिना शकुन्तलया स्वान्तिकं प्रेषयितुमुपक्रान्तां गीतिकां श्रुत्वा ज्ञातरहस्यः प्रहर्षस्य परां काष्ठामधिरूढः स्वावस्थां निवेदयितुं योग्योऽयमवसर इति मन्यमानो राजा सहसोपसृत्य शकुन्तलायै स्वावस्थां निदर्शयन्नाह—'हे कृशाङ्गि ! दिवाऽपि रात्रिमपि मदनः केवलं तव संतापमेव जनयति, मां तु भस्मीकरोत्येव । तस्मात् त्वदपेक्षया समधिकं दुखं मया सह्यते । किञ्च नैतदनुचितम्, लोकानुभवसिद्ध एवायमर्थः । दिवसः शशाङ्कं सर्वात्मना ग्लपयति, केवलं नाममात्रेणैवावशेषयति; तत्प्रियां कुमुद्वतीं तु केवलं मुकुलयत्येव । तथैव मदनेन त्वं केवलं तप्यसे; अहं तु भस्मीक्रिये' इति भावः ॥ १४ ॥

**सहर्षमिति** । राज्ञः अतर्कितागमनेन हर्षः । तेन सहितमित्यर्थः । अभीष्टप्राप्तिप्रमुदितः सखीजनः सानन्दमाह—**साअदं इति** । 'स्वागतमविलम्बिनो मनोरथस्य' इति संस्कृतम् । अविलम्बिनः = राजदर्शनोपायचिन्तने प्रस्तुते

( शकुन्तलाऽभ्युत्थातुमिच्छति । )

**राजा**—अलमलमायासेन ।

संदष्टकुसुमशयनान्याशुक्लान्तबिसभङ्गसुरभीणि[1] ।
गुरुपरितापानि न ते गात्राण्युपचारमर्हन्ति ॥ १५ ॥

---

एव स्वयं सत्वरमुपस्थितस्य । अनेन राजवृत्तान्ते प्रस्तुते अतर्कितं राज्ञ आगमनं मङ्गलकरमिति हृदयोल्लासः कार्यसिद्धिसंभावना च प्रतीयते । मनोरथस्येत्यनेन तद्विषयीभूतो नायको लक्ष्यते । तत्प्राप्त्या कृतकृत्यता च व्यज्यते । **अभ्युत्थातुमिच्छतीति** । इच्छति = आरभते । अभ्युत्थानारम्भमभिनयतीत्यर्थः । अनेन तादृगवस्थाया नायिकाया अभ्युत्थाने असामर्थ्यं लज्जा-भय-हर्षाद्याकुलत्वं च प्रतीयते । अथ राजा स्वदर्शनेन शकुन्तलाया अभ्युत्थानारम्भमवलोकयन् अवसरप्राप्तं सदयमाह—**अलमलमिति** । आयासेन = अशक्यकरणेन अभ्युत्थानारम्भप्रयासेनेत्यर्थः । यथेष्टं सुखमुपविशेति भावः ।

उक्तमर्थं समर्थयन्नाह—**संदष्टेति** । आशु संदष्टकुसुमशयनानि क्लान्तबिसभङ्गसुरभीणि गुरुपरितापानि ते गात्राणि उपचारं नार्हन्ति इत्यन्वयः ।

आशु = शीघ्रम्, तापाधिक्यात् स्पर्शकाले एवेत्यर्थः । संदष्टकुसुमशयनानि—संदष्टं = ग्लानतया स्वेदक्लिन्नतया च संश्लिष्टं कुसुमशयनं = पुष्पशय्या, कुसुमशयनगतकुसुमकदम्बकमित्यर्थः । येषु तानि । अत्र संदष्टपदेन संश्लेषो लक्ष्यः । तेन शरीरेण सह कुसुमानामभ्युत्थानम्, तद्धारणे शकुन्तलागात्राणामक्षमता च द्योत्यते । सन्तापातिरेकात्कुसुमशयने गात्रपरिवर्तनादिकं च अनेन ध्वन्यते । क्लान्तबिसभङ्गसुरभीणि—क्लान्ताः = ग्लानाः बिसभङ्गाः = कङ्कणहारादिस्थानीया

---

1. आशु विमर्दितमृणालवलयानि ।

अनसूया—इदो सिलातलेक्कदेसं [1]अलंकरेदु वअस्सो ।

इतः शिलातलैकदेशमलंकरोतु वयस्यः ।

( राजोपविशति । शकुन्तला सलज्जा तिष्ठति । )

---

मृणालखण्डा येषु तानि अत एव सुरभीणि = सौगन्ध्यवन्ति गुरुपरितापानि—गुरुः = महान् परितः = सर्वतः तापः = संतापो येषु तानि ते = तव गात्राणि = अङ्गानि, अवयवा इत्यर्थः । "गात्रमङ्गे कलेवरे" इति **विश्वः** । तत्तदङ्गेन तत्तदुपचारस्य कर्तव्यत्वाद्गात्राणीति बहुवचनमुक्तम् । उपचारम् = अभ्युत्थानचन्दनसत्कारादिकं नार्हन्ति = कर्तुं न क्षमन्ते ।

अत्र काव्यलिङ्गमलङ्कारः । नायिकागताः ग्लान्यालस्यादयो नायकगता आवेगौत्सुक्यादयश्च भावा व्यज्यन्ते । आर्या जातिः ।

आत्मानमतर्कितोपनतं दृष्ट्वा ससम्भ्रममभ्युत्थातुं प्रयतमानां दौर्बल्यातिरेकेण तत्राक्षमां शकुन्तलां दृष्ट्वा सावेगकरुणं तां निवारयन् राजा तद्गात्राणामुपचारकरणासमर्थतां समर्थयन्नाह—'सुन्दरि ! मामतर्कितोपनतं दृष्ट्वा सम्भ्रमेण अलम् । किञ्च अभ्युत्थानादिकमपि कर्तुं न युज्यते । तापातिरेकवशात् कुसुमपरिवर्तनपरिक्षेपादिना स्वेदार्द्रतया च संलग्नकुसुमकदम्बकानि तादृशकुसुमधारणेऽप्यक्षमाणि मदनानलज्वालावलीढगात्रसंसर्गात् क्लान्तमृणालभूषणानि अत एव स्पष्टं प्रतीयमानबहुतरपरितापानि तव गात्राणि अभ्युत्थानवन्दनादिसत्कारं कर्तुं नार्हन्तीति विहाय लज्जाभये सुखमुपविश्यताम्' इति भावः ॥१५॥

समागतस्य राज्ञः सत्कारं कुर्वाणाऽनसूया आह—**इदो इति** । 'इतः शिलातलैकदेशमलंकरोतु वयस्यः' इति संस्कृतम् । वयस्यः = समानसुखदुःखः सुहृत् ।

---

[1] अणुगेण्हदु महाभाओ ।

**प्रियंवदा**—दुवेणं णु वो अण्णोण्णाणुराओ पच्चक्खो। सही-सिणेहो मं पुणरुत्तवादिणिं करेदि।

द्वयोर्नन्नु युवयोरन्योन्यानुरागः प्रत्यक्षः। सखीस्नेहो मां पुनरुक्तवादिनीं करोति।

**राजा**—भद्रे! नैतत्परिहार्यम्। विवक्षितं ह्यनुक्तमनुतापं जनयति।

---

शिलातलैकदेशं = भवत्प्रियतमाधिष्ठितशिलातलैकदेशमित्यर्थः। अलंकरोत्वित्यनेन उपवेशनं लक्ष्यते; शिलातलस्य धन्यत्वादिकं च व्यज्यते। वयस्यशब्देन अनभ्युत्थानानुज्ञया वयस्यत्वं त्वयाऽङ्गीकृतमिति सूच्यते। किञ्च भवान् अस्मद्वयस्यायाः पतित्वेन वृत इत्यपि ध्वन्यते। एवं युवयोः सहोपवेशनदर्शनेन आवयोर्नयन-प्रीतिर्भविष्यतीत्याकूतम्।

अथ अवसरप्राप्तकर्तव्यविषये जागरूकाऽनसूया चिराभिलषितसमागमयोः परस्परानुरूपयोर्दैवादेकान्ते संगतयोर्नायकयोः प्रेमप्रगाढताया इयत्तामवधारयितुं प्रसङ्गमवतारयति—**दुवेणं इति**। 'द्वयोर्नन्नु युवयोरन्योन्यानुरागः प्रत्यक्षः। सखीस्नेहो मां पुनरुक्तवादिनीं करोति' इति संस्कृतम्। पुनरुक्तवादिनीमित्यत्र पुनरुक्तपदेन अवाच्यत्वं लक्ष्यते। परस्परानुरागो हि वैवाहिके विधौ प्रधानतया-ऽनुसन्धेय इति तस्मिन् विदिते सति अन्येन किमपि वक्तव्यं नावशिष्यते; अतो न किञ्चिदपि वदामीत्यर्थः। इत्थमात्मवक्तव्यस्यानवकाशतया तूष्णीमासीनामन-सूयां राजा वक्तुमुद्योजयति—**भद्रे इति**। सम्बोधनेन तद्विवक्षितश्रवणकौतूहलं सूच्यते। एतत् = त्वया विवक्षितं न परिहार्यम्, वक्तव्यमेवेति भावः। तत्र हेतुमाह—**विवक्षितमिति**। वक्तुमिष्टमपि लज्जादिवशादनुक्तं सत् पर्यवसाने पश्चात्तापं जनयतीत्यर्थः।

**प्रियंवदा**—आवण्णस्स [1]विसअणिवासिणो जणस्स अत्तिहरेण रण्णा होदव्वं त्ति एसो वो धम्मो ।

आपन्नस्य विषयनिवासिनो जनस्यार्तिहरेण राज्ञा भवितव्यमित्येष युष्माकं धर्मः ।

**राजा**—नास्मात्परम् ।

**प्रियंवदा**—तेण हि इअं णो पिअसही तुमं उद्दिसिअ इमं अवत्थन्तरं भअवता मअणेण आरोविदा । ता अरुहसि अब्भुववत्तीए जीविदं से अवलम्बिदुं ।

तेन हीयं नौ प्रियसखी त्वामुद्दिश्येदमवस्थान्तरं भगवता मदनेनारोपिता । तदर्हस्यभ्युपपत्त्या जीवितं तस्या अवलम्बितुम् ।

---

अथानसूया विवक्षितमर्थं प्रस्तौति—**आवण्णस्स इति** । 'आपन्नस्य विषयनिवासिनो जनस्य आर्तिहरेण राज्ञा भवितव्यमित्येष युष्माकं धर्मः' इति संस्कृतम् । आपन्नस्य = परचक्रादिना हेत्वन्तरेण वा आपदं प्राप्तस्य विषयनिवासिनः = स्वदेशवासिनः जनस्य = जनसामान्यस्य, स्त्रीजनस्य च आर्तिहरेण = अनर्थनिवारकेण, उत्कण्ठावारकेण च राज्ञा = क्षत्रियेण, धीरललितत्वादनुरागिणा च । युष्माकं= क्षत्रियाणाम्, अनुरागिणां च धर्मः = अवश्यकर्तव्यम्, स्वभावश्च । "आपन्न आपत्प्राप्तः स्यात्", "देशविषयौ तूपवर्तनम्", "आर्तिः पीडाधनुःकोट्योः" इति **चामरः** । राजोत्तरयति—**नास्मादिति** । अस्मात् = आर्तिहरणात् परम् = अन्यत् । न धर्म इति संबन्धः ।

प्रियंवदा वक्ति—**तेण हीति** । 'तेन हीयं नौ प्रियसखी त्वामुद्दिश्य इदमवस्थान्तरं भगवता मदनेन आरोपिता । तदर्हसि अभ्युपपत्त्या जीवितं तस्या

---

१ अस्समवासिणो ।

**राजा**—भद्रे ! साधारणोऽयं प्रणयः । सर्वथाऽनुगृहीतोऽस्मि ।

**शकुन्तला**—(प्रियंवदामवलोक्य) हला ! 'किं अन्तेउरविरहपज्जु-

---

अवलम्बितुम्' इति संस्कृतम् । तेन हि = आर्तिहरणस्य राजधर्मत्वेन । इयमित्युक्त्या सख्याः पारवश्यं सूच्यते । आवयोः प्रियसखीत्युक्त्या वात्सल्यातिशयः सूच्यते । त्वामुद्दिश्येत्यनेन च 'त्वमेव तदार्तेर्हेतुभूतः; अतस्त्वयाऽसौ अवश्यमनुग्राह्या' इति सूच्यते । अवस्थान्तरम् = अवस्थाविशेषम्, दशमदशासमीपमित्यर्थः । भगवतेत्यनेन बहुमानो द्योत्यते । आरोपितेत्यत्र आरोपणेन आनयनं लक्ष्यम्, मूर्च्छनाद्यतिशयश्च व्यङ्ग्यः । अर्हसि=अधिक्रियसे । अनेन प्रार्थना गम्यते । अभ्युपपत्त्या = अनुग्रहेण । "अथाभ्युपपत्तिरनुग्रहः" इति **शाश्वतः** । अवलम्बितुम् = आलस्यं विहाय धारयितुम् । अवलम्बितुमित्युक्त्या शकुन्तलाजीवनस्य संप्रति पतनोन्मुखत्वं द्योत्यते । त्वयि प्रगाढानुरागिणीमेनां झटिति परिगृहाणेति भावः ।

अथ राजा तदुक्तिमनुमोदमान आह—**भद्रे इति** । सम्बोधनेन 'त्वं स्ववैदग्ध्या नागरिका अप्यतिशेषे' इति सूच्यते । साधारणः = आवयोरुभयोः समानः अयम् = अभ्युपपत्त्या जीविताल्म्बनविषयः प्रणयः = प्रार्थना सर्वथा = सर्वप्रकारेण, वयस्येत्युक्त्या तदनुरूपव्यवहारेण अर्धासनदानेन शकुन्तलास्वीकाराभ्यर्थनया चेत्यर्थः । अनुगृहीतः = अभीष्टसिद्ध्यनुकूलाचरणरूपमनुग्रहं प्रापितः । युवाभ्यामिति शेषः ।

**प्रियंवदामवलोक्येति** । त्वया अस्य हृदयमज्ञात्वैव मत्परिग्रहप्रार्थना प्रकाशिता; तुल्यानुरागश्चेदसौ, तदा सर्वं समञ्जसम्; अन्यथा प्रार्थनाभङ्गेन नः परिहास एव स्यादिति अवलोकनेन सूच्यते । **हला इति** । 'हला, किमन्तःपुर-

---

१ अलं ।

स्सुअस्स राएसिणो¹ उवरोहेण ?

हला, किमन्तःपुरविरहपर्युत्सुकस्य राजर्षेरुपरोधेन ?

राजा—

इदमनन्यपरायणमन्यथा
हृदयसंनिहिते ! हृदयं मम ।
यदि समर्थयसे मदिरेक्षणे !
मदनबाणहतोऽस्मि हतः पुनः ॥१६॥

---

विरहपर्युत्सुकस्य राजर्षेरुपरोधेन' इति संस्कृतम् । अन्तःपुरविरहपर्युत्सुकस्य = अन्तःपुरवर्तिस्त्रीजनवियोगोत्कण्ठितस्य । अनेन राज्ञो न मद्विरहदुःखमस्तीति सूच्यते । राजर्षेरित्यनेन तस्य अस्मद्विधाभिरुपरोधानर्हत्वम्, दुर्लभासु तपस्वि-कन्यास्वरुचिः स्यादिति च सूच्यते । एवं विधस्यास्य राज्ञो नः प्रार्थना उपरोध एवेति तं मा कृथा इत्यर्थः ।

अथ ईदृशेन शकुन्तलावचनवज्रेण प्रगाढं प्रहतो राजा तत्प्रणयभङ्गभीरुस्तस्या मनोमालिन्यमपनेतुं प्रयतमान आह—**इदमिति** । हे मदिरेक्षणे ! हृदयसन्निहिते ! इदमनन्यपरायणं मम हृदयं यदि अन्यथा समर्थयसे; मदनबाणहतः पुनः हतोऽस्मि इत्यन्वयः ।

मदिरेक्षणे—मदिरा =मद्यं तत्तुल्ये ईक्षणे = नेत्रे यस्यास्तत्संबुद्धौ । मदिरोप-मया ईदृशसंरम्भेऽपि हृद्यो मादकश्च ते कटाक्षमोक्ष इति प्रशंसा सूच्यते । मदिरा-दृष्टिलक्षणं यथा—

---

१ पज्जुस्सुएण राएसिणा ।

आघूर्णमानमध्या या क्षामा चाञ्चिततारका।
दृष्टिर्विकसितापाङ्गा मदिरा तरुणे मदे॥ इति।

हृदयसन्निहिते=शिलादिप्रतिमासु स्वेष्टदेवतावत् मम मनसि सम्यङ्निहिते! इदं = जन्मप्रभृति येन सह स्थितं तमपि मां परित्यज्य दर्शनात्प्रभृति त्वयि अनुरक्तम्, अनन्यपरायणम्—अन्यत्र = त्वदितरविषये परायणम् = आसङ्गो यस्य तत्, तन्नेत्यनन्यपरायणम्; त्वदेकपरायणमिति भावः। "साकल्यासङ्गवचने पारायणपरायणे" **इत्यमरः**। मम हृदयं = चेतः यदि अन्यथा = अन्यपरायणत्वेन समर्थयसे = युक्त्या साधयसे; मदनबाणहतः—मदनस्य = त्वद्दर्शनेन ममोन्मादसम्पादकस्य कामस्य त्वां निमित्तीकृत्य प्रयुक्तैर्बाणैः हतः = पूर्वमेवात्यन्तं पीडितः। अपीत्यध्याहार्यम्। पुनः = तव ईदृशेन मय्यविश्वासेन हतः = मारितोऽस्मि। त्वद्विरहस्य सर्वथा असह्यतया गत्यन्तराभावादतः परं मरणमेव शरणीकरिष्यामीति भावः। अविलम्बद्योतनाय भूतकालनिर्देशः। तस्मात् मम हृदयम् एवं मा समर्थयस्व, त्वदेकावलम्बे मयि प्रसीदेति भावः।

अत्र उपमा, हृदय हृदयेति हतो हत इति लाटानुप्रासश्च। नायिकागताः प्रणयकोपादयो नायकगताः शङ्कादयो भावाश्च व्यज्यन्ते। द्रुतविलम्बितं वृत्तम्।

अन्तःपुरविरहपर्युत्सुकस्य राजर्षेरुपरोधेन किम्? इति शकुन्तलावचनं निशम्य तद्वाग्वज्राहतस्तत्प्रणयभीरू राजा तन्मनःकालुष्यमपनिनीषुराह—'हे मदिरातुल्यमादकलोहितेक्षणे! स्वेष्टदेवताप्रतिमावत्सर्वदा मदीयहृदयसन्निहिते! प्रिये शकुन्तले! इदं जन्मप्रभृति मया सह स्थितमपि त्वद्दर्शनात्प्रभृति त्वदेकाधीनं मम हृदयं सर्वथा त्वदेकपरायणमेवास्ति। तत् त्वं यदि अन्यपरायणत्वेन समर्थयसे, तर्हि पूर्वमेव त्वामुद्दिश्य मदनबाणैर्हतोऽप्यहं संप्रति त्वद्विरहस्य असह्यतया गत्यन्तराभावादतः परं मरणमेव शरणीकरिष्यामि।

**अनसूया**—वअस्स ! बहुवल्लहा राआणो सुणीअन्ति । जह णो पिअसही बन्धुअणसोअणिज्जा ण होइ तइ णिव्वत्तेहि ।

वयस्य ! बहुवल्लभा राजानः श्रूयन्ते । यथा नौ प्रियसखी बन्धुजनशोचनीया न भवति तथा निर्वर्तय ।

**राजा**—भद्रे ! किं बहुना !

परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे[1] ।
[2]समुद्रवसना चोर्वी सखी च युवयोरियम् ॥१७॥

---

तस्मात् मां मा अन्यथा मन्यस्व, त्वदेकावलम्बने मयि झटिति प्रसीद' इति भावः ॥ १६ ॥

अथ स्वकार्यसाधने चतुरा अनसूया अवसरप्राप्तं वक्तव्यं प्रस्तौति—**वअस्स** इति । 'वयस्य ! बहुवल्लभा राजानः श्रूयन्ते, यथा नौ प्रियसखी बन्धुजनशोचनीया न भवति, तथा निर्वर्तय' इति संस्कृतम् । **बहुवल्लभा इति** । राज्ञां बहुवल्लभत्वं हि प्रभुशक्तेः सर्वविधरत्नोपभोगाधिकारात् बन्दीकृतानां स्त्रीरत्नानां लाभाच्च संभवति । श्रूयन्ते इति कथनेन इतिहासादिद्वारा तत्त्वप्रतिपत्तिः सूचिता । भवतोऽपि राजत्वाद्बहुवल्लभत्वेन भाव्यमिति भावः । नौ प्रियसखीत्युक्तेरिदमावाभ्यामवश्यं वक्तव्यमिति द्योत्यते । **तथा निर्वर्तयेति** । तव बहुवल्लभत्वादस्यां कदाचित्तव अनादरो यथा न भवेत्तथाऽस्यां प्रेम्णा वर्तेथा इत्यर्थः । अन्यास्तव वल्लभा इव एनामपि बहु मन्यस्वेति भावः । योग्यमुत्तरं दित्सू राजा आह—**भद्रे इति** । भद्रे = कल्याणि ! किं बहुना = युष्माभिरेवं बहु न वक्तव्यमित्यर्थः ।

तत्र हेतुमाह—**परीति** । परिग्रहबहुत्वेऽपि मे कुलस्य द्वे प्रतिष्ठे ( स्तः ); समुद्रवसना उर्वी, युवयोरियं सखी च इत्यन्वयः ।

---

१ नः । २ समुद्ररसना ।

परिग्रहाणां = पत्नीनाम्, "परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः" इति विश्वः । बहुत्वे = विपुलत्वेऽपि । अत्र परिग्रहपदेन इयमेव मम प्रिया, इतरास्तु परिग्रहमात्रा इति द्योत्यते । मे = मम कुलस्य = वंशस्य द्वे प्रतिष्ठे = प्रतिष्ठाहेतू । अत्र प्रतिष्ठापदेन तद्धेतुर्लक्ष्यते । अव्यभिचारेण प्रतिष्ठाकारित्वं व्यङ्ग्यम् । सगौरव-स्थितिकारणीभूते इत्यर्थः । "प्रतिष्ठा गौरवे स्थितौ" इति हैमः । के ते द्वे इत्याह—**समुद्रेति** । समुद्रवसना—समुद्र एव = सागर एव वसनं = परिधानीयं यस्याः सा, अखण्डेत्यर्थः । उर्वी = अन्वर्थनामवती पृथ्वी । अत्र उर्व्यां समुद्रव-सनात्वरूपणेन परिगृहीतत्वकथनेन च नायिकात्वं गम्यते । युवयोः = अनसूया-प्रियंवदयोः इयं = पुरोऽवस्थिता मत्प्राणवल्लभा सखी च = वयस्या शकुन्तला च ।

अत्र उर्व्याः दृष्टान्तत्वात्पूर्वं निर्देशः । उर्वीशकुन्तलयोर्द्वयोः कुलप्रतिष्ठात्वरूपैक-धर्मान्वयात् दीपकम्; तेन च इयमेव मे प्रधानमहिषी भविष्यति, अस्याः पुत्र एव मम सिंहासनाधिकारी भविष्यतीति च राज्ञः प्रतिज्ञा प्रकाश्यते । सति सापत्न्ये पृथ्वीभवत्सख्योरेव परस्परं तदिति च व्यज्यते । अनुष्टुप् छन्दः ।

बहुवल्लभा राजानः श्रूयन्ते, यथा नौ प्रियसखी बन्धुजनशोचनीया न भवति, तथा निर्वर्तयेत्यनसूयाकृतमुपालम्भं निशम्य वचनकुशलो राजा तां समाश्वा-सयन्नाह—'भद्रे ! नात्र भवत्याऽधिकं वक्तुमावश्यकम् । राजानो वयं बहुवल्लभा भवामः इति सत्यमेवेदम्, "रत्नहारी तु पार्थिवः" इति न्यायेन बन्दीकृतस्त्रीप्रसङ्गेन च बहूनि स्त्रीरत्नान्यस्माकमवरोधेषु निवसन्ति । इत्थं परिग्रहबहुत्वे सत्यपि मम पौरवकुलस्य द्वे एव प्रतिष्ठास्पदे; सागराम्बरेयमखण्डा धरित्री, यस्याः पतिरित्यहं व्यपदिश्ये; युवयोरियं सखी शकुन्तला च । इयमेव मम प्रधानमहिषी भविष्यति, अस्याः पुत्र एव च मम सिंहासनाधिकारी वंशधरो भवेत् ।

**उभे**—णिव्वुद म्ह ।

निर्वृते स्वः ।

**प्रियंवदा**—(सदृष्टिक्षेपम्) अणसूए ! जह एसो इदो दिण्णदिट्ठी उस्सुओ मिअपोदओ मादरं अण्णेसदि, एहि; संजोएम णं ।

अनसूये ! यथैष इतो दत्तदृष्टिरुत्सुको मृगपोतको मातरमन्विष्यति, एहि; संयोजयाव एनम् ।

( इत्युभे प्रस्थिते । )

---

कदाचित्सति सापत्न्ये पृथ्वीभवत्सख्योरेव परस्परं तद्भवितुमर्हति, नान्यथा' इति भावः ॥ १७ ॥

राज्ञो वचनमाकर्ण्य सानन्दे सख्यौ ब्रूतः—**णिव्वुदं म्ह इति** । 'निर्वृते स्वः' इति संस्कृतम् । निर्वृते स्वः—मनोरथाभ्यधिकाभीष्टलाभेन बाढं मोदावहे इत्यर्थः ।

इत्थं सिद्धमनोरथयोः सख्योर्मध्ये प्रियंवदायाश्चेष्टामाह—**सदृष्टिक्षेपमिति** । अनयोरन्योन्यानुरागज्ञानेन आवां सिद्धमनोरथे स्वः, एतावपि निष्प्रतिबन्धं परस्परसंलापसुखमनुभवेतामिति किञ्चिन्निमित्तमपदिश्य आवयोरितोऽपसरणमेव श्रेयः इति दृष्टिक्षेपेण बोधयित्वेत्यर्थः । अपदेशमाह—**अणसूए इति** । 'अनसूये ! यथैष इतो दत्तदृष्टिरुत्सुको मृगपोतको मातरमन्विष्यति, एहि; संयोजयाव एनम्' इति संस्कृतम् । यथा = यस्माद्धेतोः । एष इति अङ्गुल्या निर्देशः । उत्सुकः = स्वमातृदर्शनतस्तन्यपानादावुत्कण्ठितः । तत्र हेतुः—**इतो दत्तदृष्टिरिति** । मातरं = तृणादिलोभेन दूरं वनान्तरं गताम् । संयोजयावः = जनन्या सह संमेलयावः । **उभे प्रस्थिते इति** । प्रस्थानमभिनीतवत्यौ इत्यर्थः ।

**एवं सख्यौ प्रस्थानोद्यते दृष्ट्वा सोत्कण्ठाऽपि भयलज्जाकातरा शकुन्तला सवै-**

**शकुन्तला**—हला ! असरण म्हि । अण्णदरा वो आअच्छदु ।

हला, अशरणाऽस्मि । अन्यतरा युवयोरागच्छतु ।

**उभे**—पुहवीए जो सरणं सो तुह समीवे वट्टइ ।

पृथिव्या यः शरणं स तव समीपे वर्तते । ( इति निष्क्रान्ते । )

**शकुन्तला**—कहं गदाओ एव्व !

कथं गते एव !

**राजा**—अलमावेगेन । नन्वयमाराधयिता जनस्तव [1]समीपे वर्तते ।

---

क्त्यमाह—**हला इति** । 'हला, अशरणाऽस्मि; अन्यतरा युवयोरागच्छतु' इति संस्कृतम् । एका मत्समीपे तिष्ठतु, अन्या स्वकार्यार्थं गच्छत्वित्यर्थः । अत्र त्रास-लज्जादयो भावा व्यज्यन्ते । नायं भयस्यावसर इति सहासं सख्यावुत्तरयतः—**पुहवीए इति** । 'पृथिव्या यः शरणं स तव समीपे वर्तते' इति संस्कृतम् । य समग्रायाः पृथिव्या रक्षणे समर्थः स महाराजस्तव समीपे वर्तते इति त्वं कथम-शरणाऽसीत्यर्थः । शकुन्तलोक्तौ—**कहं इति** । 'कथं गते एव' इति संस्कृतम् । मद्वाक्यमनादृत्य गते एव प्रियसख्याविति विषादः । गते एव, नतु व्याजेन तिरोभूय स्थिते इत्येवकारार्थः ।

अथ कन्याविस्रम्भणे चतुरो नायको दुष्यन्तो भयलज्जादितरलां नायिकां शकुन्तलां प्रियभाषणादिना अनुकूलयितुमारभते—**अलमिति** । आवेगेन = सखी-जनासान्निध्यमूलकेन सम्भ्रमेण अलं = स माऽस्तु इत्यर्थः । तत्र हेतुमाह—**नन्विति** । नन्वित्यनुनये । आराधयिता = प्रीणयिता । ताच्छील्यप्रत्ययेन आराधनसामर्थ्यं सूच्यते । जनः = भृत्यस्थानीयो मद्रूपो जन इत्यर्थः । समीपे

---

१ सखीभूमौ ।

किं [1]शीतलैः क्लमविनोदिभिरार्द्रवाता-
न्संचारयामि नलिनीदलतालवृन्तैः[2] ।
अङ्के निधाय करभोरु ! यथासुखं ते
संवाहयामि चरणावुत पद्मताम्रौ ॥ १८ ॥

वर्तते = आराधनावसरं प्रतिपालयन् तिष्ठति । एतदवस्थायास्तवाराधनेऽहमेव मुख्योऽधिकारी इति भावः ।

तत्र कीदृशीं तव सेवां करोमीत्याह—**किमिति** । क्लमविनोदिभिः शीतलैर्नलिनीदलतालवृन्तैरार्द्रवातान् संचारयामि किम् ? उत हे करभोरु ! पद्मताम्रौ ते चरणौ अङ्के निधाय यथासुखं संवाहयामीत्यन्वयः ।

क्लमविनोदिभिः—क्लमं = क्लान्तिं विशेषेण नुदन्ति = अपनयन्तीति तैः । अनेन कारणगुणाः कार्यगुणानारभन्ते इति न्यायेन वातानामपि शैत्यं क्लमविनोदनक्षमत्वं च सूच्यते । शीतलैः = स्निग्धत्वान्नवत्वाच्च शीतैरिति तालवृन्तान्तराद् व्यतिरेकः । नलिनीदलतालवृन्तैः—नलिनं = पद्मं विद्यते यस्याः सा नलिनी, तस्या दलानि = कमलिनीपलाशानि तालवृन्तानीव = व्यजनानीव तैः । नलिनीपदेन सौगन्ध्यं सूचितम् । प्रतिक्षणं शरीरोष्मणा ग्लानिसंभवात्तेषां भिन्नानामुपादीयमानता बहुवचनेन सूच्यते । आर्द्रवातान् = शीतलतरवातान् । अत्र आर्द्रपदेन जलशीकरसाहित्यमुच्यते । सञ्चारयामि = सम्यक् सर्वाङ्गीणं चारयामि । किमिति प्रश्ने । उतेति विकल्पे, यद्वेत्यर्थः । हे करभोरु = करभाविव ऊरू यस्यास्तथाभूते ! "मणिबन्धादाकनिष्ठं करस्य करभो बहिः" **इत्यमरः** । अनुवृत्तकोमलत्वादिसामान्यधर्मेण करभसदृशोरु इत्यर्थः । पृथुनितम्बानां वरवर्णिनीनामूरू

[1] शीकरैः क्लमविमर्दिभिरार्द्रवातं । [2] वृन्तम् ।

गमने सातिशयं खिद्येते इति तत्संवाहनं कर्तव्यं किमिति गूढतया संबोधनेन द्योत्यते। पद्मताम्रौ = कुशेशयवत् लोहितौ। अत्र चरणयोर्लौहित्यातिशयवर्णनात्तद्धेतुभूतं सञ्चरणं पीडाहेतुभूतं सौकुमार्यं च द्योत्यते। ते = तव चरणौ = पादौ अङ्के = उत्सङ्गे निधाय = स्थापयित्वा यथासुखं = येन प्रकारेण तव सुखं भवेत्तेन प्रकारेणेत्यर्थः। अनेन आत्मनः संवाहनकौशलम्, सखीजनवत् इच्छानुवृत्तिचातुर्यं च द्योत्यते। संवाहयामि = मर्दनेन खेदमपनयामीत्यर्थः। "संवाहनं मर्दनं स्यात्" **इत्यमरः।**

अत्र सकलश्लोकवाक्यार्थेन आर्द्रवातसञ्चारणचरणसंवाहनादिरूपां सेवां कर्तुं नायकस्यौत्सुक्यं प्रतीयते। तत्र वीजने सामीप्यं संवाहने तु गात्रस्पर्श इति तत्राधिकमौत्सुक्यम्, तत्रापि सम्बोधनेन ऊरुसंवाहने ततोऽप्यौत्सुक्यं तत्स्पर्शकौतुकातिशयश्चेति क्रमोत्कर्षश्च प्रतीयते। अत्र नलिनीदलस्य तालवृन्तत्वारोपे आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम इति परिणामालङ्कारः। पूर्वोत्तरार्धयोर्विकल्पालङ्कारः, "तुल्यबलविरोधे विकल्पः" इति तल्लक्षणात्। काव्यलिङ्गपरिकरोपमाश्च। वसन्ततिलका वृत्तम्। अनेन उपन्यासो नाम अङ्गमुपक्षिप्तम्। तल्लक्षणं च—"प्रसादनमुपन्यासः" इति।

कमप्यपदेशं विरच्य नायकयोः परस्परसंलापावसरं दातुं सख्योर्निर्गतयोः साध्वसलज्जातरलां शकुन्तलां दृष्ट्वा कन्याविस्रम्भणे चतुरो दक्षिणनायको राजा दुष्यन्तो मधुरालापैस्तां प्रसादयितुमुपक्रममाण आह—'सुन्दरि! अलं सखीजनासान्निध्यमूलकेनावेगेन। नन्वहं सखीस्थानीयो भृत्यस्थानीयो वा आज्ञाकारी तव सेवाऽवसरं प्रतीक्षमाणस्तवसमीपे एव तिष्ठामि। कथय, कीदृशीं सेवां करोमि? आतपलङ्घनात् बलवदस्वस्थशरीरा त्वमिति क्लमविनोदिभिः शीतलैः शरीरोष्मग्लानतया प्रतिक्षणं नवनवैर्नलिनीदलतालवृन्तैरार्द्रवातान् सर्वाङ्गीणं सम्यक् शनैः

**शकुन्तला**—ण माणणीएसु अत्ताणं अवराहइस्सं ।

न माननीयेष्वात्मानमपराधयिष्ये । ( इत्युत्थाय गन्तुमिच्छति । )

**राजा**—सुन्दरि ! अनिर्वाणो दिवसः; इयं च ते शरीरावस्था !

उत्सृज्य कुसुमशयनं नलिनीदलकल्पितस्तनावरणम् ।
कथमातपे गमिष्यसि परिबाधापेलवैरङ्गैः ॥१९॥

---

शनैश्चारयामि किम् ? यद्वा हे करभसमानोरु ! स्वभावतस्ताम्रावपि संप्रत्युप-लक्ष्यमाणताम्रत्वातिशयादनुमीयमानसंचरणप्रयासौ ते चरणौ आत्मन उत्सङ्गे निधाय सखीजनवत् यथा ते सुखं भवेत्तथा शनैः शनैः संवाहयामि किम् ? यथा त्वमनुमन्यसे, तथा त्वां सेवितुमुद्यतोऽस्मि' इति भावः ॥१८॥

अथ राज्ञो वचनमाकर्ण्य तदभिप्रायपरिज्ञानात् सलज्जा शकुन्तला तद्वचननिषेधमुखेनाह—**ण** इति । 'न माननीयेष्वात्मानमपराधयिष्ये' इति संस्कृतम् । माननीयेष्विति सामान्यवचनम् । राजत्वान्मनःसङ्कल्पितवरत्वबु-द्धेश्च माननीये भवतीत्यर्थः । न अपराधयिष्ये = आत्मानमपराधिनं न करिष्या-मीत्यर्थः । कृतमनेनोपचारेणेति भावः । **गन्तुमिच्छतीति** । न तु गता । गमनचेष्टया औत्सुक्यलज्जयोः सङ्घर्षो द्योत्यते । अथ चतुरो नायकस्तस्या गमनस्य तदवस्थाप्रतिकूलत्वं प्रतिपादयन् तां निवर्तयितुमुपक्रमते—**सुन्दरीति** । सम्बोधनेन नैसर्गिकमातपासहिष्णुत्वं द्योत्यते । अनिर्वाणः = अशान्तातपः । अपरिणत इति यावत् । इयम् = एतादृशसन्तापातिशयशालितया शोच्या । शरीरावस्था = शरीरस्थितिः ।

**उत्सृज्येति** । नलिनीदलकल्पितस्तनावरणं कुसुमशयनमुत्सृज्य परिबाधा-पेलवैः अङ्गैः आतपे कथं गमिष्यसि इत्यन्वयः ।

नलिनीदलकल्पितस्तनावरणम्—नलिनीदलाभ्यां=कमलिनीपत्राभ्यां कल्पितं= रचितं स्तनावरणं = स्तनाच्छादनम्, वल्कलस्थानीयं यस्मिन् तत् कुसुमशयनम्= सन्तापहरेषु मुख्यं सखीविरचितं पुष्पशयनम् उत्सृज्य = परित्यज्य परिबाधापेलवैः— परिबाधया = सर्वाङ्गीणसन्तापेन पेलवैः = दुर्बलैः अङ्गैः = प्रतीकैः । बहुवचनेन प्रत्यङ्गं पीडागौरवं द्योत्यते । उपलक्षितेति शेषः । आतपे = घर्मे कथं = केन प्रकारेण गमिष्यसि = गन्तुं प्रभविष्यसि । अनेन पतनमोहादिकमपि गमने संभाव्यमिति द्योत्यते । स्वस्थोऽपि वस्त्रावरणादि हित्वा आतपे गन्तुमसमर्थः; त्वं तु स्वभावतः सुकुमाराङ्गी, तत्रापि पीडायुक्ता, ईदृगवस्था कुसुमशयननलिनी- दलादि हित्वा सुतरां गन्तुमशक्तेति कथंशब्दार्थः। ईदृगवस्थायास्तव गमनोप- क्रमः अविमृश्यकारितेति विरम्यतामस्माद्व्यापारादिति भावः ।

काव्यलिङ्गं हेतुर्वाऽलङ्कारः । नायकगता हर्षौत्सुक्यकारुणिकत्वादयः, नायिकागता ग्लान्यादयो भावाश्च व्यज्यन्ते । आर्या जातिः ।

राज्ञश्चाटुवचनं निशम्य तदभिप्रायपरिज्ञानात् सलज्जायाः 'न माननीयेष्वा- त्मानमपराधयिष्ये' इत्युक्त्वा उत्थाय गन्तुमुपक्रममाणायाः शकुन्तलायास्तादृशीं चेष्टां दृष्ट्वा अतिनिपुणो नायको दुष्यन्तः कालदेशावस्थाभिस्तद्गमनस्यानुचितत्वं भङ्ग्या प्रतिपादयन् तां निवर्तयितुमारभमाण आह—'सुन्दरि ! त्वं निसर्गादेव आतपासहिष्णुरसि । अद्यापि अपरिनिर्वाणः ज्वलितातपश्च दिवसः, ईदृशसन्तापा- तिशयशालितया सुतरां शोच्या च ते शरीरावस्था; अस्मिन् समये सन्तापहरेषु प्रमुखं सखीविरचितं पुष्पशयनमुत्सृज्य हृदयोष्मापनोदाय स्तनावरणत्वेन कल्पितं नलिनीदलं चापसार्य सर्वाङ्गीणसन्तापदुर्बलैः पीडितैरेभिरङ्गैरुपलक्षिता त्वमातपे कथं गमिष्यसि ? कदाचिन्मध्येमार्गं पतनमोहादिकमपि संभवेत् ! यदि सखी- जनोऽत्र सन्निहितोऽभविष्यत्, तदा त्वामवश्यमेव न्यवारयिष्यत् । स्वस्थोऽप्यद्य

( इति बलादेनां निवर्तयति )

**शकुन्तला**—पोरव ! 'रक्ख अविणअं । मअणसंतत्तावि ण हु अत्तणो पहवामि ।

पौरव ! रक्षाविनयम् । मदनसंतप्ताऽपि न खल्वात्मनः प्रभवामि ।

---

गन्तुमसमर्थः । त्वं तु स्वतः सुकुमाराङ्गी, तत्रापीदृगवस्था; तथापि गमनायोपक्रमसे इत्यहो ते अविमृश्यकारिता ! तदस्माद्व्यापाराद्विरम्यताम्' इति भावः॥ १९॥

अनेन चोपन्यासो नामाङ्गमुपक्षिप्तम् । तल्लक्षणं यथा—"उपपत्तिकृतो योऽर्थ उपन्यासस्तु स स्मृतः" इति ।

**बलादेनां निवर्तयतीति** । अनेन राज्ञो वचनमुल्लङ्घ्य लज्जया गन्तुं प्रवृत्ता, राज्ञा च बलादानीतेति द्योत्यते । अथ लज्जाकुला शकुन्तला राज्ञो बलात्कारपरिग्रहं निषेधति—**पोरवेति** । 'पौरव ! रक्ष अविनयम् , मदनसन्तप्ताऽपि न खलु आत्मनः प्रभवामि' इति संस्कृतम् । पौरवेति सम्बोधनेन पुरुवंशोत्पन्नस्यायमविनयः अश्रुतपूर्व इति द्योत्यते । रक्ष अविनयम्—अविनयं कृत्वा हठात् मां मा स्पृशेत्यर्थः । मदनसन्तप्ताऽपि न खलु आत्मनः प्रभवामि—स्वेच्छायां सत्यामपि गुरुजनपराधीनत्वादसामर्थ्यमित्यर्थः । मदनसन्तप्ताऽपीत्यनेन स्वेच्छा द्योत्यते । पितृपारतन्त्र्यं हि कन्यकानां धर्मः । यथोक्तं **महाभारते**—

यस्य मां दास्यति पिता स मे भर्ता भवेदिह ।
पिता रक्षति कौमारे भर्ता रक्षति यौवने ॥
पुत्रो रक्षति वार्धक्ये न स्त्री स्वातन्त्र्यमर्हति । इति ।

---

१. मुञ्च मुञ्च मं ।

राजा—भीरु ! अलं गुरुजनभयेन । दृष्ट्वा ते विदितधर्मा तत्रभवान्[1] तत्र दोषं ग्रहीष्यति कुलपतिः । अपि च—

गान्धर्वेण विवाहेन [2]बह्व्यो राजर्षिकन्यकाः ।
श्रूयन्ते परिणीतास्ताः पितृभिश्चाभिनन्दिताः ॥२०॥

अथ राजा भूयोऽपि तामनुकूलयन्नाह—**भीरु इति**। भी =भयशीले ! अलं गुरुजनभयेन = आवयोः समागमस्य अधर्म्यत्वबुध्या गुरोः प्रतिकूलबुध्या वा तस्मात् भयं मा कुथा इत्यर्थः । अधर्म्यत्वशङ्कां परिहरन्नाह—**दृष्ट्वेति** । दृष्ट्वा= दिव्यनेत्रेण विज्ञाय विदितधर्मा = ज्ञातधर्मरहस्यः तत्रभवान्=पूज्यः कुलपतिः = सर्वाश्रमगुरुः ते दोषं न ग्रहीष्यति = त्वां दुष्टां न मंस्यते इत्यर्थः । तत्र भवानित्यनेन कण्वस्य पूज्यत्वात्प्रामाण्यम्, कुलपतिरित्यनेन तदभ्युपगतस्य सर्वाभ्युपगतत्वं च द्योत्यते ।

शिष्टाचारेणापि अधर्म्यत्वशङ्कां परिहरन्नाह—**गान्धर्वेणेति**। बह्व्यो राजर्षिकन्यकाः गान्धर्वेण विवाहेन परिणीताः, ताः पितृभिरभिनन्दिताश्च श्रूयन्ते इत्यन्वयः ।

बह्व्यः = बहुसंख्याः, न त्वेका; राजर्षिकन्यकाः—राजर्षीणां = क्षत्रियश्रेष्ठानां कन्यकाः = कुमार्यः गान्धर्वेण विवाहेन = रहसि परस्परानुमोदनकृतेन विवाहेन । ब्राह्मादिभेदादष्टविधेषु विवाहेष्वेको गान्धर्वः । "सकामायाः सकामेन निर्मन्त्रो रहसि स्मृतः । करस्पर्शस्तु गान्धर्वः" इति, "गान्धर्वः समयान्मिथः" इति च तल्लक्षणम् । परिणीताः = कृतोद्वाहाः । सन्तीत्यध्याहारः । ताः = कन्यकाः पितृभिः = गुरुभिः अभिनन्दिताश्च = अनुमोदिताश्च श्रूयन्ते = पुराणेतिहासादौ कथारूपेण श्रूयन्ते इत्यर्थः । "क्षत्रियस्य तु गान्धर्वो विवाहः श्रेष्ठ उच्यते" इत्युक्तत्वात्

१. न कण्वः खेदमुपयास्यति । २. बह्व्योऽथ मुनिकन्यकाः ।

**शकुन्तला**—मुञ्च दाव मं। भूओ वि सहीजणं अणुमाणइस्सं।

मुञ्च तावन्माम्। भूयोऽपि सखीजनमनुमानयिष्ये।

**राजा**—भवतु, मोक्ष्यामि।

पितृकृतानुमोदनं संगच्छते। एवं च त्वयाऽपीत्थं क्रियमाणे तव पिता त्वामभिनन्दिष्यत्येवेत्यर्थः।

इयं सामान्यनिबन्धना अप्रस्तुतप्रशंसा। अत्र नायकगता मत्यौत्सुक्यादयो भावा व्यङ्ग्याः। अनेन उपदिष्टं नाम भूषणमुक्तम्। तल्लक्षणं तु—

प्रतिगृह्य तु शास्त्रार्थं यद्वाक्यमभिधीयते।
विद्वन्मनोहरं स्वन्तमुपदिष्टं तदुच्यते॥ इति।

मनसाऽनुकूलामपि केवलं गुरुजनभयेन प्रतिकूलमाचरन्तीं शकुन्तलां शिष्टाचारप्रदर्शनेनानुकूलयन् राजा आह—'सुन्दरि! किमेवमाशङ्कसे? क्षत्रिया वयम्; अस्माकं गान्धर्वविवाह एव श्रेष्ठ इति स्मृतिकारैराम्नातम्। पुराणेतिहासादौ च बह्व्यो राजर्षिकन्यकाः पूर्वं स्वेच्छया स्वानुरूपवरैः गान्धर्वेण विवाहेन संगताः, पश्चात् ज्ञातवृत्तान्तैस्तद्गुरुजनैस्तस्य कर्मणो धर्म्यत्वादनुमोदिताश्च श्रूयन्ते। तद्वदेव आवयोर्भविष्यति, अलमाशङ्कया' इति भावः॥ २०॥

इत्थं राज्ञा समागमस्य दोषरहितत्वे साधितेऽपि लज्जापरतन्त्रा शकुन्तला भूयोऽपि गन्तुमुपक्रममाणा आह—**मुञ्च दाव मं** इति। 'मुञ्च तावन्माम्। भूयोऽपि सखीजनमनुमानयिष्ये' इति संस्कृतम्। तावत् = अद्येदानीम्। अनेन कालान्तरेऽनुकूला भविष्यामीति द्योत्यते। अत्रापिर्भिन्नक्रमः। सखीजनमप्यनुमानयिष्ये इति संबन्धः। अनुमानयिष्ये = अनुमतिं कारयिष्ये। पिता तु दूरदेशगतत्वान्नापेक्षितः, सन्निहितः सखीजनस्त्ववश्यमनुमानयितव्य एव; अतस्तत्समीपं गत्वा तदनुमतिं लप्स्ये इति भावः। तां प्रीणयितुकामो राजा अनुमन्यते—**भवतु,**

**शकुन्तला**—कदा ?

कदा ?

**राजा**—

अपरिक्षतकोमलस्य याव-
त्कुसुमस्येव नवस्य षट्पदेन।
अधरस्य पिपासता मया ते
सदयं सुन्दरि! गृह्यते रसोऽस्य ॥ २१ ॥

---

**मोक्ष्यामीति**। शकुन्तला भविष्यदर्थं पृच्छति—**कदेति**। मोक्ष्यसीति शेषः।

राजा मोक्षणकालावधिमाह—**अपरिक्षतेति**। यावत् हे सुन्दरि! षट्पदेन नवस्य कुसुमस्येव पिपासता मया अपरिक्षतकोमलस्य अस्य ते अधरस्य रसः सदयं गृह्यते इत्यन्वयः।

यावदित्यवधौ। यावत्कालपर्यन्तमित्यर्थः। "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" **इत्यमरः**। हे सुन्दरि = मनोहारिणि शकुन्तले! संबोधनेन अधररसास्वादने विरोधिनी मा भूरित्यावर्जनं द्योत्यते। षट्पदेन = भ्रमरेण नवस्य = सद्योविकसितस्य, अधरपक्षे प्रथमास्वाद्यस्य कुसुमस्येव = पुष्पस्येव पिपासता = पातुमिच्छता, अधररसपानार्थमाकुलेनेत्यर्थः। अत्र पिपासतेत्यनेन कालाक्षमत्वलक्षण औत्सुक्यातिशयः सूच्यते। मया = दुष्यन्तेन अपरिक्षतकोमलस्य = न विद्यते परिक्षतं यस्य, स चासौ कोमलश्च तस्य; अनवाप्तदन्तपदस्य, कुसुमपक्षे भ्रमराद्यनुपहतस्य; अत एव कोमलस्य = सुकुमारस्य अत एव स्पर्शवतश्च अस्य = पुरोदृश्यमानस्य सुधासहोदरस्य मदीयबहुकृतसुकृतपरिपाकलभ्यस्य ते = तव अधरस्य = अधरोष्ठस्य रसः = माधुर्यरूपः स्वादः, पुष्पपक्षे मकरन्दः सदयं=कृपा-

( इति मुखमस्याः समुन्नमयितुमिच्छति । शकुन्तला परिहरति नाट्येन । )

मृदु यथा स्यात्तथा गृह्यते = आस्वाद्यते । यावद्रसो गृह्यते तावन्मोक्ष्यामीति संबन्धः । रसे गृहीते सति मोक्ष्यामीति फलितम् ।

अत्र अधररसास्वादनस्य रतिसर्वस्वत्वात्तद्ग्रहणमुक्तम् । षट्पदोपमया राज्ञो रसग्रहणचातुर्यं रसैकायत्तजीवितत्वं च द्योत्यते । अधरस्य रस इत्यनेन अधरस्य मधुतुल्यत्वं च द्योत्यते । सदयमित्यनेन बालालालनकौशलं ध्वन्यते । अत्र श्लेषवाच्योपमा, काव्यलिङ्गम्, परिकरश्चालंकाराः । नायकगता औत्सुक्यादयो भावा व्यज्यन्ते । मालभारिणी वृत्तम् ।

कदा मोक्ष्यसीति पृच्छन्तीं शकुन्तलां भङ्ग्या तन्मोक्षणकालावधिं कथयन् राजा आह—'हे सुन्दरि ! सद्योविकसितस्य पुष्पस्य सविधमुपगतो भ्रमरो यथा तत्पुष्परसमनास्वाद्य तत्पुष्पं न मुञ्चति, तथैव त्वदधररसपानाभिलाषाकुलोऽहमनवाप्तदन्तपदस्य अत एव कोमलस्य अस्य चिरप्रार्थितस्य दैवादुपनतस्य ते अधरस्य यावत् सदयं रसं गृह्णामि, तावत्त्वां न मोक्ष्यामि । गृहीते तु रसे त्वं सुखेन यास्यसि' इति भावः ॥२१॥

**मुखमस्याः समुन्नमयितुमिच्छतीति ।** इच्छतीत्यनेन आरम्भो लक्ष्यते, तत्साफल्याभावश्च व्यज्यते । **शकुन्तला परिहरति नाट्येनेति ।** परिहारनाट्यं च परावृत्तेन शिरसा विनिगूहितेनाधरेण भवति । तल्लक्षणं तु—

पराङ्मुखीकृतं शीर्षं परावृत्तमुदीरितम् ।
तत्कार्यं कोपलज्जादि कृते वक्त्रापसारणे ॥
मुखान्तर्निहितप्राणसाध्येषु विनिगूहितः ।
रोषेर्ष्ययोश्च नारीणां बलाच्चुम्बति वल्लभे ॥ इति ।

( नेपथ्ये )

चक्कवाकवहुए ! आमन्तेहि सहअरं । उवट्ठिआ रअणी ।

चक्रवाकवधु ! आमन्त्रयस्व सहचरम् । उपस्थिता रजनी ।

**शकुन्तला**—( ससंभ्रमम् ) पोरव ! असंसअं मम सरीरवुत्तन्तोवलम्भस्स अज्जा गोदमी इदो एव्व आअच्छदि; जाव विडवन्तरिदो होहि ।

पौरव ! असंशयं मम शरीरवृत्तान्तोपलम्भायार्या गौतमीत एवागच्छति; यावद्विटपान्तरितो भव ।

---

अनेन मुग्धाव्यवहारोऽप्युक्तः । चुम्बनादीनामभिनयस्य नाटके निषिद्धत्वात्तदवधि वर्णनमिदं कृतम् । अत्र वर्णितः संभोगश्रृङ्गाराङ्गभूतोऽपि चुम्बनारम्भः स्वरूपेणानिर्व्यूढत्वात् विप्रलम्भतयैव पर्यवसन्नः ।

अथ गौतमीप्रवेशं वर्णयितुमारभते—**नेपथ्ये** इति । **चक्कवाकवहुए** इति । 'चक्रवाकवधु ! आमन्त्रयस्व सहचरम्, उपस्थिता रजनी' इति संस्कृतम् । सम्भोगलतामण्डपदिशा गौतम्या गमनमवलोक्य शकुन्तलाबोधनाय प्रकृतमर्थं संगोप्य सख्योर्वचनमिदम् । इयमप्रस्तुतप्रशंसा । ततः शकुन्तले ! प्रियमापृच्छस्वेति प्रकृतो गम्योऽर्थः । आमन्त्रणे हेतुः—**उपस्थिता रजनीति** । रात्रिर्हि चक्रमिथुनस्य वियोजनकारिणी । रजन्यपगमे चक्रवाकयोरिव गौतमीगमने पुनरपि युवयोः समागमो भविष्यति, अतोऽत्यन्तं विषादो न विधेय इति च द्योत्यते ।

**ससम्भ्रममिति** । सम्भ्रमो भयाद्यनुभावस्तेन सहितमित्यर्थः । शकुन्तला राजानमाह—**पोरवेति** । 'पौरव ! असंशयं मम शरीरवृत्तान्तोपलम्भाय आर्या गौतमी इत एवागच्छति, यावद्विटपान्तरितो भव' इति संस्कृतम् । शरीरवृत्तान्तोपलम्भाय = शरीरावस्थाज्ञानाय । विटपान्तरितो भव = शाखानिलीनदेहस्तिष्ठे-

**राजा**—तथा । ( इत्यात्मानमावृत्य तिष्ठति ।)

( ततः प्रविशति पात्रहस्ता गौतमी सख्यौ च । )

**सख्यौ**—इदो इदो अज्जा गोदमी ।

इत इत आर्या गौतमी ।

**गौतमी**—( शकुन्तलामुपेत्य ) जादे ! अवि लहुसंदावाइं दे अङ्गाइं ?

जाते ! अपि लघुसंतापानि तेऽङ्गानि ?

**शकुन्तला**—अत्थि मे विसेसो ।

अस्ति मे विशेषः ।

**गौतमी**—इमिणा दब्भोदएण णिराबाधं एव्व दे सरीरं भ-

---

त्यर्थः । अनेन दूरं मा गच्छेत्यौत्सुक्यस्य स्थिरानुवृत्तिश्च सूच्यते । **तिष्ठतीति** । एवं स्थित्या राज्ञोऽपि तदनुष्ठानकौशलम्, औत्सुक्यस्य स्थिरानुवृत्तिश्च सूच्यते ।

**तत इति** । पात्रहस्तेत्यस्य शान्त्युदककुम्भहस्तेत्यर्थः । अनेन 'अहमपि' इत्यादिना शिष्योक्तस्य शान्त्युदकस्य सम्बन्धो घटितः । **इदो इति** । 'इत इत आर्या गौतमी' इति संस्कृतम् । **जादे इति** । 'जाते ! अपि लघुसन्तापानि तेऽङ्गानि ' इति संस्कृतम् । जाते = पुत्रि ! अपीति प्रश्ने । लघुसन्तापानि—लघुः = स्वल्पः सन्तापो येषु तानि तेऽङ्गानि, तवाङ्गानां सन्तापस्य लाघवमस्ति किमित्यर्थः । शकुन्तलोत्तरयति—**अत्थि इति** । 'अस्ति मे विशेषः' इति संस्कृतम् । इदमुभयसाधारणं सत्यस्वरूपमुत्तरम् । शीतोपचारादिना सन्तापः सोढव्योऽस्तीति बाह्योऽर्थः, प्रियतमसम्बन्धप्रसंगेनेत्यान्तरः ।

गौतमी वदति—**इमिणा इति** । 'अनेन दर्भोदकेन निराबाधमेव ते शरीरं भविष्यति । वत्से ! परिणतो दिवसः, एहि, उटजमेव गच्छामः' इति संस्कृतम् ।

विस्सदि । ( शिरसि शकुन्तलामभ्युक्ष्य ) वच्छे ! परिणदो दिअहो । एहि, उडजं एव्व गच्छम्ह ।

अनेन दर्भोदकेन निराबाधमेव ते शरीरं भविष्यति । वत्से ! परिणतो दिवसः । एहि, उटजमेव गच्छामः ।

( इति प्रस्थिताः । )

**शकुन्तला**—( आत्मगतम् ) हिअअ ! पढमं एव्व सुहोवणदे मणोरहे [1]कादरभावं ण मुञ्चसि ! साणुसअविहडिअस्स अहं दे संपदं

दर्भोदकेन = कूर्चादिनिबद्धदर्भसहितेनोदकेन निराबाधम् = अपगतनिःशेषपीडम् । **शिरसि शकुन्तलामभ्युक्ष्येति**। सर्वेषु गात्रेषु शिरः प्रधानमिति शिरसीत्युक्तम् । अभ्युक्ष्य = कूर्चेण जलबिन्दून् संगमय्य । परिणतः—अत्र परिणामेन अवसानं लक्ष्यते । पयसो दध्यादिरूपत्वे इव स्वभावभेदप्रतीतिः फलम् । स्वभावभेदश्च उष्णनिवृत्त्या सौम्यत्वम् । अतो गमनं शक्यमिति भावः ।

अथ गौतम्या सखीभ्यां च सह प्रस्थिता शकुन्तला प्रियविरहातुरा तदारब्धे चिरप्रार्थिते परिचुम्बनादौ आत्मनः प्रतिकूलाचरणं स्मरन्ती सोत्कण्ठा पश्चात्तापपरवशा च सती स्वगतं स्वहृदयमुपालभते—**हिअअ इति** । 'हृदय ! प्रथममेव सुखोपनते मनोरथे कातरभावं न मुञ्चसि ! सानुशयविघटितस्य कथं ते साम्प्रतं सन्तापः ?' इति संस्कृतम् । प्रथमं = गौतम्यागमनात्पूर्वं प्रियतमसन्निधाने । मनोरथे = तद्विषये प्रियतमे, तत्कर्तृकचुम्बनादौ वा विषये कातरभावं = साध्वसं न मुञ्चसि = न मुक्तवत् । वर्तमानसामीप्ये भूते लट् । सानुशयविघटितस्य—सानुशयस्य = पश्चात्तापसहितस्य अत एव विघटितस्य = वियोजितस्य कथं =

१ कालहरणं करेसि ! संपदं अणुभव दाव दुक्खं ।

संदावो ? (पदान्तरे स्थित्वा प्रकाशम्) लदावलअ संदावहारअ ! आमन्तेमि तुमं भूओ वि परिभोअस्स ।

हृदय ! प्रथममेव सुखोपनते मनोरथे कातरभावं न मुञ्चसि ! सानुशयविघटितस्य कथं ते सांप्रतं संतापः ? लतावलय संतापहारक ! आमन्त्रये त्वां भूयोऽपि परिभोगाय । ( इति दुःखेन निष्क्रान्ता शकुन्तला सहेतराभिः । )

---

किमर्थम् । साम्प्रतं = प्रियतमस्यासन्निधाने । पूर्वं मनोरथसिद्ध्यनुकूलतया कातरभावत्याग उचित आसीत् , स तु त्वया न कृतः; इदानीं कातरभावमोक्षेऽपि न किमपि तस्य फलमिति भावः । अनेन हृदयं प्रति निन्दा, संगमौत्सुक्यम् , तद्विघ्नात् विषादश्च व्यज्यते । पदान्तरे स्थित्वेति । द्वित्राणि पदानि गत्वेत्यर्थः ।

अथ विरहविधुरा शकुन्तला भूयोऽपि प्रियमावर्जयन्ती गूढस्थितं प्रियतमं लतागृहापदेशेन आपृच्छते—लदावलअ इति । 'लतावलय सन्तापहारक ! आमन्त्रये त्वां भूयोऽपि परिभोगाय' इति संस्कृतम् । लतावलयेत्यनेन प्रियतमो विवक्षितः । सन्तापहारकेत्युभयत्र समानम् । ग्रीष्मजो विरहजश्च सन्तापः । आमन्त्रये त्वामिति । एकत्र आमन्त्रणं मुख्यम् , अन्यत्र औपचारिकम् । परिभोगाय = शीतोपचाराद्यनुभवाय, सन्दर्शनादिरूपसंभोगाय च । हे सन्तापहारक प्रियतम ! पुनरपि संभोगोऽस्त्विति गूढार्थः । अत्र प्राधान्येन औत्सुक्यं ध्वन्यते । अनेन मनोरथो नाम भूषणमुपक्षिप्तम् । तल्लक्षणं तु—"मनोरथस्तु व्याजेन विवक्षितनिवेदनम्" इति । इति दुखेन निष्क्रान्ता शकुन्तला सहेतराभिरिति । इतराभिः = गौतम्या सखीभ्यां च सह । मनोरथापरिपूतरेव दुःखेन निष्क्रमणे हेतुः ।

राजा—( पूर्वस्थानमुपेत्य सनिःश्वासम् ) अहो विघ्नवत्यः प्रार्थितार्थसिद्धयः ! मया हि—

मुहुरङ्गुलिसंवृताधरोष्ठं
प्रतिषेधाक्षरविक्लवाभिरामम् ।
मुखमंसविवर्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं न चुम्बितं तु ॥ २२ ॥

---

अथ नायकस्य राज्ञो दुष्यन्तस्य पूर्वप्रसक्तं विप्रलम्भमवतारयति—**पूर्वस्थानमुपेत्य सनिःश्वासमिति ।** पूर्वस्थान = प्रियया शकुन्तलया परिभुक्तं लतामण्डपम् । निःश्वासो विषादानुभावः । चिरप्रार्थितस्य अतर्कितोपनतस्य सम्भोगस्य विच्छेदं स्मृत्वा सुतरां खिन्नो राजा स्वगतं परामृशति—**अहो इति ।** अहो इति खेदे । विघ्नवत्यः = विघ्नबहुलाः । अत्र भूमार्थे मतुप् । प्रार्थितार्थसिद्धयः—प्रार्थितार्थानां = मनोरथविषयीभूतानामर्थानां सिद्धयः = लाभाः । चिरान्मनोरथविषयीभूतेऽर्थे प्रयत्नातिरेकेण कथमपि निष्पत्युन्मुखेऽपि तस्य विच्छेदो भवति चेन्महदिदं कष्टमित्यर्थः । तथा च प्रसिद्धा लोकोक्तिः—"श्रेयांसि बहुविघ्नानि" इति ।

उक्तमर्थं स्ववृत्तान्तेन समर्थयति—**मया हि-मुहुरित्यादिना।** पक्ष्मलाक्ष्या अङ्गुलिसंवृताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामं मुहुरंसविवर्ति मुखं मया हि कथमपि उन्नमितम्, न तु चुम्बितमित्यन्वयः ।

पक्ष्मलाक्ष्याः—पक्ष्मले = प्रशस्तरोमवती, प्राशस्त्ये मत्वर्थीयो लच् । अक्षिणी = नेत्रे यस्यास्तथाविधायास्तस्याः शकुन्तलायाः । अत्र पक्ष्मलाक्ष्या इति अक्षिसौन्दर्यकथनेन चक्षुषोस्तत्कालमुल्लासः, तेन च चिरप्रार्थितस्य संभोगस्य अतर्कितो-

पनतत्वेन हर्षः, तत्र विघ्नेन विषादः, समागमस्य तत्पूर्वतया लज्जा त्रासश्चेत्यनेके भावा व्यज्यन्ते; "सर्वे भावाश्चक्षुषि व्यज्यन्ते" इति न्यायात् । अङ्गुलिसंवृताधरोष्ठम्—अङ्गुल्या=तर्जनीस्वरूपया संवृतः=आच्छादितः अधरोष्ठो यत्र तत् । उत्तरोष्ठे चुम्बनस्याप्रसङ्गात् ओष्ठपदेन अधरस्यैव लाभेऽपि पुनः अधरपदोपादानेन रक्तिमसौकुमार्यमाधुर्याद्यतिशयो द्योत्यते । प्रतिषेधाक्षरविक्लवाभिरामम्—प्रतिषेधाक्षराणि=निषेधबोधकानि मा मा अलम् इत्यादीनि तेषां विक्लवः= वैक्लव्यम्, स्फुटमनुच्चारणं तेन अभिरामं=सुन्दरम् । अत्र विक्लवशब्दो जडादिशब्दवद्धर्मवचनोऽपि । मुहुः=शश्वत् अंसविवर्ति—अंसयोः=स्कन्धयोः विवर्तितुं=मां परिहर्तुं विवलितुं शीलमस्य तत् मुखम्=आननं मया= दुष्यन्तेन । हीति निश्चये । कथमपि=अतिकृच्छ्रेण । अनुवृत्तिव्याजबलात्काराद्यात्मना प्रयत्नातिरेकेणेति यावत् । उन्नमितं=चुम्बनार्थमूर्ध्वीकृतम् । अत्र उन्नमितमिति भूतकालप्रत्ययेन राज्ञः कृतकृत्यताबुद्धिर्द्योत्यते । न तु चुम्बितम् =अधररसास्वादो न लब्धः ।

अत्र चुम्बितमित्यनेन रसास्वादो लक्ष्यते । अधरस्य नातिपीडनं व्यङ्ग्यम् । तुशब्देन अङ्गुलिसंवरणनिषेधाद्यनेकप्रयत्नसन्निधापितस्य संभोगसर्वस्वात्मनश्चुम्बनस्यालाभाद्विषादातिशयो ध्वन्यते । किञ्च—

चुम्बने विपरिवर्तिताधरं हस्तरोधि रशनाविघट्टने ।
विघ्नितेच्छमपि तस्य सर्वतो मन्मथेन्धनमभूद्वधूरतम् ॥

इति रघुवंशोक्त्यनुसारेण शकुन्तलायाः प्रतिकूलाचरणमपि दुष्यन्तात्मगताया रतेः परिपोषणे एव सहायतां भजते । तुशब्दसूचितविषादातिशयेन च विप्रलम्भस्य परिपोषः । कथमपीत्यस्यार्थं प्रति विशेषणत्रयार्थस्य हेतुत्वेनोपादानात् काव्यलिङ्गमलङ्कारः । उन्नमितमित्यन्तेन नायिकागते लज्जाभये, नायकगतमौत्सुक्यं च

क्व न खलु संप्रति गच्छामि ? अथवा इहैव प्रियापरिभुक्तमुक्ते

सातिशयं प्रतीयते। अङ्गुलिसंवरणादयो लज्जाभययोः, तन्निवर्तनादयश्च औत्सुक्यस्य अनुभावा बोध्याः। किञ्च चुम्बनावसरे अधरोष्ठस्य पाणितलेनाच्छादनमकृत्वा केवलं तर्जन्यैव संवरणात् नायिकाया अर्धाङ्गीकारो गम्यते। अनुभूतार्थस्य प्रत्यक्षायमाणत्वकथनात् भाविकं च। मालभारिणी वृत्तम्।

गौतम्यागमनेन विघ्नितमनोरथायां शकुन्तलायां सखीभ्यां सह प्रस्थितायां सत्यां पुनरपि तमेव प्रियापरिभुक्तमुक्तं लतामण्डपमुपेत्य दीर्घमुष्णं च निःश्वसन् राजा प्राह—'सर्वथा दुरवापेऽप्यर्थे कथंचित्सौभाग्येन निष्पत्त्युन्मुखे सति विघ्नानि अहमहमिकया प्रादुर्भूय तं विघातयन्ति। सत्यमिदमुच्यते यत् "श्रेयांसि बहुविघ्नानि" इति। मया हि निसर्गभीरुः सा बाला कथमपि सौभाग्येन रहसि समधिगता। प्रयत्नशतैस्तस्या लज्जावरणे किञ्चिदपसारिते अधररसं पातुकामस्य ममाभिप्रायं विज्ञाय झटिति तर्जन्या स्वाधरोष्ठमाच्छादयन्त्याः मा मा अलमित्यादिप्रतिषेधाक्षराण्यस्फुटमुच्चारयन्त्या हर्षप्रकर्षेण प्रफुल्लराजीवोपमलोचनायास्तस्याः प्रियाया मुहुर्मत्प्रतिकूलदिशा स्कन्धयोर्विवर्तनशीलं मुखं प्रयत्नातिरेकेण केवलमहमुन्नमितवानेव, चुम्बितुं तु नापारयम्' इति भावः॥२२॥

इत्थं विरहोत्कण्ठितो राजा स्वमनोविनोदनोपायं विमृशन्नाह—क्वेति। खल्वित्यवधारणे। सम्प्रति खल्विति सम्बन्धः। भूयः स्वकर्तव्यं निश्चिन्वान आह—**अथ वेति**। निश्चितं कर्तव्यमाह—**इहैवेति**। इहेत्यनेन लतावलयस्य आकर्षकत्वं द्योत्यते। तत्र हेतुमाह—**प्रियापरिभुक्तमुक्ते इति**। प्रियया पूर्वं परिभुक्ते पश्चान्मुक्ते इत्यर्थः। मुहूर्तमित्यनेन चिरमवस्थाने कामिजनसहजा

लतावलये मुहूर्त्तं स्थास्यामि । ( सर्वतोऽवलोक्य )--

तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं
क्रान्तो[1] मन्मथलेख एष नलिनीपत्रे नखैरर्पितः ।
हस्ताद्भ्रष्टमिदं बिसाभरणमित्यासज्यमानेक्षणो
निर्गन्तुं सहसा न वेतसगृहाच्छक्नोमि[2] शून्यादपि ॥२३॥

उत्कलिका अत्रापि बाधेतेति द्योत्यते । **सर्वतोऽवलोक्येति** । इदं सर्वतोऽवलोकनं वक्ष्यमाणपद्यार्थसमर्थनार्थम् ।

**तस्या इति** । तस्याः शरीरलुलिता इयं पुष्पमयी शय्या शिलायामस्ति । ( तस्याः ) नखैर्नलिनीपत्रेऽर्पितः एष मन्मथलेखः ( अस्ति ) । ( तस्याः ) हस्तात् भ्रष्टमिदं बिसाभरणम् ( अस्ति ) । इति आसज्यमानेक्षणः ( सन् अहं ) शून्यादपि वेतसगृहात् सहसा निर्गन्तुं न शक्नोमीत्यन्वयः ।

तस्याः = पुर इव परिवर्तमानायाः प्रियायाः शकुन्तलायाः । एतदुत्तरत्रापि सम्बध्यते । शरीरलुलिता = शरीरेण लुलिता, शरीरपरिवर्तनेन मृदितेत्यर्थः । इयं = पुरोदृश्यमाना पुष्पमयी = पुष्परचिता, न पल्लवमयी, तेषां ततोऽपि मृदुत्वात् । अनेन शकुन्तलाशरीरस्य सातिशयकोमलत्वं द्योत्यते । इयं शय्येत्यनेन तस्यां राज्ञो बहुमानश्च । शय्या = तल्पं शिलायां=विस्तीर्णे ग्रावपट्टे । अनेन शैत्यं सूच्यते । शिलायामियं शय्येति यथादृष्टोक्तिः । नखैः=नखरैः नलिनीपत्रे=पद्मिनीदले अर्पितः = लिखितः । नलिनीपत्रे नखैरर्पित इत्यनेन तस्या हस्तकौशलं स्मार्यते । यथायथं पञ्चानामप्युपयोगात् अक्षरबाहुल्याद्वा नखैरिति बहुवचनम् । अर्पण

१ कान्तो । २ ईशोऽस्मि ।

वल्लेखनमिति अक्षराणां स्फुटत्वं चतुरस्रत्वं च व्यङ्ग्यम् । एषः=पुरोवर्ती । अत्र एष-शब्दः समीपतरत्वं वदन् मदनलेखस्य स्वोद्देशेन प्रियालिखितत्वेन च हृद्यतरत्वं ध्वनयति । क्लान्तः=तदीयकरतलस्पृष्टपद्मिनीपत्रक्रान्ततया ग्लानः मन्मथलेखः= स्वप्रणयसूचकः कामलेखः । अत्र मदनलेखे तया लिखित इति, तदनुरागसूचक इति च द्वेधा बहुमानः । तस्याः हस्तात्=कामाग्निसन्तापशोषेण क्षामात् करात् भ्रष्टं=गलितम् इ ं=पुरोदृश्यमानं बिसाभरणं = बिसरूपमाभरणम् । आभरणत्वो-क्त्या न केवलं तत्करसंबन्धेनैव, अपि तु तच्छोभावहत्वेनापि अस्मिन् बहुमानो द्योत्यते । इतीति प्रकारे हेतौ वा । आसज्यमानेक्षणः—आसज्यमाने = आभी-क्ष्ण्येन संबध्यमाने, सङ्गं कुर्वाणे इति यावत् । ईक्षणे = नेत्रे यस्य सः । हेतुगर्भं विशेषणमिदम् । एवंभूतः सन् अहं शून्यात् = प्रियाविरहितात् । अपीति विरोधे । वेतसगृहात् = वेतसलतामण्डपात् सहसा=सद्यः निर्गन्तुं=प्रयातुं न शक्नोमि = न पारयामि । तत्यक्तानि उपभोगचिह्नान्यपि अत्यन्तं मम मनो रमयन्ति, न च मां गन्तुं ददतीति भावः ।

अत्र निर्गमनहेतोः सत्त्वेऽपि तदभावस्य कथनात् विशेषोक्तिः । किञ्च तत्स-द्भावस्य कारणस्याभावेऽपि गमनाभावस्तत्कार्यमुक्तमिति विभावना च । उभयत्र साधकबाधकप्रमाणाभावात् सन्देहसंकरः । लोलन-क्लम-भ्रंशैः क्रमात् शय्या-लेख-बिसानां शोच्यत्वम्, नायिकायाश्च अरति-सन्ताप-कार्श्यानि च द्योत्यन्ते । दैन्याल-स्यचिन्ताग्लानिश्रमादयोऽपि भावाः प्रतीयन्ते । एतैर्विप्रलम्भशृङ्गारः सविशेषं परिपोष्यते । शार्दूलविक्रीडितं वृत्तम् ।

शकुन्तलापरिभुक्तमुक्ते लतामण्डपेऽवस्थितो राजा तत्र सर्वतो दत्तदृष्टिः स्वगतं विमृशति—'सर्वदा मम पुर इव परिवर्तमानायाः प्रियायाः शकुन्तलायाः मदनानलसन्तप्तदेहेनेतस्ततः क्षिप्तेयं पुष्पमयी शय्या शिलायां दृश्यते । इतश्च

( आकाशे )

राजन् !

सायंतने सवनकर्मणि संप्रवृत्ते
वेदीं हुताशनवतीं परितः प्रयस्ताः[1] ।
छायाश्चरन्ति बहुधा भयमादधानाः
[2]संध्यापयोदकपिशाः पिशिताशनानाम् ॥२४॥

तया मामुद्दिश्य स्वप्रणयसूचनाय पद्मिनीपत्रे नखैः शोभनाक्षरं लिखितः करतल-परामर्शात् ग्लानः एष मन्मथलेखश्च नेत्रे समाकर्षति । किञ्च सातिशयमदनबा-धया क्षामक्षामाङ्ग्यास्तस्या हस्तादविदितमेव गलितमिदं बिसाभरणं चास्ति । एतैः सर्वैर्मुहुर्मुहुराकृष्यमाणनेत्रोऽहं संप्रति प्रियाशून्यादप्यस्माद्वेतसलतामण्डपात् सद्यो निर्यातुं न शक्नोमि' इति भावः ॥२३॥

अथाङ्कसमापनोपक्रमे मुख्यनायकस्य राज्ञो दुष्यन्तस्य गमनावसरसम्पादनाय रसान्तरप्रवेशमवतारयितुमुपक्रमते—आकाशे इति । इदं पात्राप्रवेशार्थम् । राजन्नित्यादिर्मुनिशिष्योक्तिः । सम्बोधनेन सम्भ्रमो द्योत्यते ।

सम्भ्रमहेतुमाह--सायन्तने इति । सायन्तने सवनकर्मणि सम्प्रवृत्ते सति हुताशनवतीं वेदीं परितः प्रयस्ताः सन्ध्यापयोदकपिशाः भयमादधानाः पिशिताशनानां छायाः बहुधा चरन्ति इत्यन्वयः ।

सायन्तने = सायं निर्वर्तनीये, सायंकालीने इत्यर्थः । सवनकर्मणि = यजनकर्मणि । "सवनं यजने स्नाने" इति विश्वः । सम्प्रवृत्ते = अस्माकं रक्षको राजा सन्निहितोऽस्तीति बुद्ध्या निर्भयं सम्यक् आरब्धे सति; न त्वादावेव ।

१ प्रकीर्णाः । २ संध्याभ्रकूटकपिशाः ।

अत्र सम्प्रवृत्ते इति भूतकालनिर्देशेन प्रारब्धस्य कर्मणो विघातमाशङ्कमानानां मुनीनां विषादातिशयो द्योत्यते। हुताशनवतीं—हुतं=हव्यमशनं यस्य सोऽग्निस्तद्युक्ताम्। हव्यगन्धेन रक्षसामागमनसम्भवः। वेदीं परितः=वेद्याः समन्तात्। "अभितः परितः" इत्यादिना द्वितीया। वेदीसान्निध्यकथनेन उत्पातस्य त्वरितप्रतिविधेयत्वं, परित इति कथनेन रक्षोबाहुल्यं च सूच्यते। प्रयस्ताः = इतस्ततो विक्षिप्ताः, व्याप्ता इत्यर्थः। सन्ध्यापयोदकपिशाः—संध्यापयोदाः = सायंकालिकमेघाः त इव कपिशाः=कृष्णरक्ताः, पिङ्गटा इत्यर्थः। अत्र सन्ध्यापदेन तत्काले सूर्यरश्मिसम्पर्काद्रक्तत्वं पयोदपदेन कृष्णत्वं च द्योत्यते। रक्षसां स्वतः कृष्णवर्णत्वात् केशश्मश्र्वादौ रक्तत्वाच्च तच्छायानां कृष्णरक्तत्वमुपचरितम्। भयं=भीतिम् आदधानाः=आभीक्ष्ण्येनोत्पादयन्त्यः। अनेन ऋषीणां स्वयं तत्प्रतीकाराक्षमत्वं द्योत्यते। पिशिताशनानाम्=मांसाशिनां रक्षसां छायाः=पङ्क्तयः। "छाया स्यादातपाभावे सच्छोभापङ्क्तिषु स्मृता" इति विश्वः। बहुधा = बहुप्रकाराः, अनेकवारं वा चरन्ति=गतागतं कुर्वन्ति।

उपमाऽलङ्कारः। त्रासावेगाद्युपस्कृतं राक्षसालम्बितं मुनिगतं भयं व्यज्यत इति भयानकोऽत्र रसः। राक्षसगतो रौद्रमिश्रो बीभत्सश्च। वसन्ततिलका वृत्तम्।

मुनीनां यज्ञशालासु सायन्तनहोमावसरे हव्यगन्धमाघ्राय समागतानां रक्षसां पङ्क्तीर्दृष्ट्वा एतेऽस्माकं कर्म विघातयिष्यन्तीति भीतैर्मुनिभिः प्रेरितः शिष्यो व्योमभापितेन रक्षःप्रवृत्तिं राज्ञे निवेदयन्नाह—'राजन्! अस्माकं रक्षको भवान् सन्निहित एवास्तीति निर्भयैरस्माभिः सायन्तने होमे समारब्धे सति साज्यचरुगन्धमाघ्राय समागता भयङ्कराकाराः कृष्णवर्णा रक्तश्मश्रुकेशाः स्वचेष्टितैरस्मान् भीषयन्तो बद्धपङ्क्तयोऽमी राक्षसा यज्ञवेद्याः समन्ताद्गतागतं कुर्वन्ति। तत्त्वरितं प्रतिविधीयताम्' इति भावः॥ २४॥

राजा—अयमयमागच्छामि । ( इति निष्क्रान्तः । )

इति तृतीयोऽङ्कः ।

---

तद्वचनमाकर्ण्य राजा सावेगमाह—अयमिति । आगच्छामीत्यनेन ममागमनमेव प्रतिविधाने विलम्बः, मय्यागते सर्वं क्षणात् सुस्थं भवेदिति द्योत्यते । वर्तमाननिर्देशेनागमनस्याविलम्बः, आवेगद्योतिकया वीप्सया च राज्ञो मुनिजनेष्वादरबहुमानादयो द्योत्यन्ते । अनेन राज्ञो युद्धवीरत्वं दयावीरत्वं च ध्वन्यत इति वीरो रसः । अनेन रसान्तरप्रवेशवर्णनेन राज्ञः प्ररूढाया अपि रतेः किञ्चित्तिरोधानं द्योत्यते ।

इत्थमस्मिन्नङ्के प्रथमप्रविष्टमुनिशिष्यप्रस्तुतराक्षसविघ्नोपशमः फलपर्यन्तां नीतः । 'जाने तपसो वीर्यम्' इत्यादिना प्रस्तुता राज्ञः शकुन्तलापरिजिघृक्षा च गान्धर्वसमागमप्रतिपादनेन निर्व्यूढा । तेनैव शकुन्तलाया मदनतापप्रतिक्रियाऽपीत्यादि सर्वं सहृदयैः स्वयमूहनीयम् ।

इति नारायणोन्नीते लक्ष्मीरित्यभिधाङ्किते ।
शाकुन्तलस्य व्याख्याने तृतीयोऽङ्कः समाप्तिमैत् ॥

---

इति श्रीमन्नारायणशास्त्रिणा प्रणीतायामभिज्ञानशाकुन्तलाभिनवटीकायां लक्ष्मीसमाख्यायां तृतीयोऽङ्कः ।

# चतुर्थोऽङ्कः ।

( ततः प्रविशतः कुसुमावचयं नाटयन्त्यौ सख्यौ । )

---

अथ कथासंघटनाय पूर्ववर्णितयोः शकुन्तलासख्योः प्रवेशमाह—**तत इति** । अस्मिन्नङ्के शकुन्तलायाः पतिगृहे प्रेषणं मुख्यो भागः । तत्पूर्वभागतया पुष्पावचय-दुर्वासःशापमोक्षादेर्वर्णनम् । तत्र शापमोक्षयोरुत्तरत्रोपयोगः । कुसुमावचयस्यो-पयोगस्त्वत्रैव देवतार्चनाङ्गत्वेन दर्शयिष्यते । अत्र कुलपतिः कण्वः प्रधानपात्रम्, इतरे तदङ्गानि । प्रायेण करुण एवात्र रसः, स च शृङ्गारस्याङ्गम् । शापविप्र-लम्भरूप इति नाङ्गिनोऽननुसन्धानम् । दुहितृवात्सल्यादिलोकवृत्तप्रदर्शनमत्र बाढं हृदयङ्गमम् ।

**कुसुमावचयं नाटयन्त्याविति** । वामहस्तेनोत्तानेनारालेन दक्षिणेन पुरः-पार्श्वादिस्थितेनौचित्याच्युतसंयुक्तेन हंसास्येन कुसुमावचयाभिनयः क्रियते । तल्लक्षणं यथा—

तर्जन्यादिष्वङ्गुलीषु प्राच्याः प्राच्याः पराः पराः ।
दूरस्थोर्ध्वा मनाग्वक्रा धनुर्वक्रा तु तर्जनी ॥
अङ्गुष्ठः कुञ्चितो यत्र तमरालं प्रचक्षते । इति,
लग्नाश्चेताग्निसंस्थानास्तर्जन्यङ्गुष्ठमध्यमाः ।
शेषे यत्रोर्ध्वविरले स हंसास्योऽभिधीयते ॥
औचित्याच्युतसंयुक्तं कुसुमावचयादिषु । इति च ।

अथ शकुन्तलायां सातिशयस्नेहवान् सखीजनः परस्परं शकुन्तलायाः सौभाग्य-

**अनसूया**—पिअंवदे ! जइ वि गन्धव्वेण विहिणा णिव्वुत्तकल्लणा सउन्दला अणुरूवभत्तुगामिणी [1]संवुत्तेति णिव्वुदं मे हिअअं, तह वि एत्तिअं चिन्तणिज्जं ।

प्रियंवदे ! यद्यपि गान्धर्वेण विधिना निर्वृत्तकल्याणा शकुन्तलाऽनुरूपभर्तृगामिनी संवृत्तेति निर्वृतं मे हृदयम्, तथाप्येतावच्चिन्तनीयम् ।

**प्रियंवदा**—कहं विअ ?

कथमिव ?

**अनसूया**—अज्ज सो राएसी इट्ठिं परिसमाविअ इसीहिं विस-

विषये संलापं करोति—**पिअंवदे** इति । 'प्रियंवदे ! यद्यपि गान्धर्वेण विधिना निर्वृत्तकल्याणा शकुन्तलाऽनुरूपभर्तृगामिनी संवृत्तेति निर्वृतं मे हृदयम्, तथाऽप्येतावच्चिन्तनीयम्' इति संस्कृतम् । यद्यपि निर्वृतं मे हृदयमिति सम्बन्धः । निर्वृत्तकल्याणा—निर्वृत्तं = सम्पन्नं कल्याणं = विवाहमङ्गलं यस्याः सा । इतीति हेतौ । शकुन्तलायाः सानुरागानुरूपभर्तृगामित्वान्निश्चिन्तं मे हृदयमित्यर्थः । एतावत् = एतन्मात्रम् । चिन्तनीयं = विचारणीयम् । यथावन्मनो न निर्वृतमिति भावः । एतावदित्यनेन वक्ष्यमाणस्य परामर्शः । अत्रानसूयायाः शकुन्तलाकल्याणे प्रमोदो राज्ञः प्रतिप्रयाणे शङ्का च व्यज्यते । प्रियंवदोत्तरयति—**कहं विअ** इति । 'कथमिव' इति संस्कृतम् । चिन्तनीयमिति शेषः । किंप्रकारेयं चिन्तेत्यर्थः ।

अथ चिन्ताप्रकारमनसूया प्रस्तौति—**अज्ज** इति । 'अद्य स राजर्षिरिष्टिं परिसमाप्य ऋषिभिर्विसर्जित आत्मनो नगरं प्रविश्य अन्तःपुरसमागत इतोगतं वृत्तान्तं स्मरति वा न वेति' इति संस्कृतम् । ऋषिभिर्विसर्जित इति कथनेन

१ संवुत्ता, तह वि मे ण णिव्वुदं हिअअं ।

जिओ अत्तणो णअरं पविसिअ अन्तेउरसमागदो 'इदोगदं वुत्तन्तं सुमरदि वा ण वेत्ति।

अद्य स राजर्षिरिष्टिं परिसमाप्य ऋषिभिर्विसर्जित आत्मनो नगरं प्रविश्यान्तःपुरसमागत इतोगतं वृत्तान्तं स्मरति वा न वेति।

**प्रियंवदा**—वीसद्धा होहि। ण तादिसा आकिदिविसेसा गुण-

---

राज्ञः पुनस्तपोवनागमनसम्भवो नास्तीति सूच्यते। राज्ञः स्वप्रतिज्ञातानुष्ठाने हेतुमाह—**आत्मनो नगरं प्रविश्यान्तःपुरसमागत इति**। इतोगतम्—इतः = अत्र तपोवने गतं = जातं शकुन्तलया गान्धर्वविवाहादि। **स्मरति वा न वेति**। 'परिग्रहबहुत्वेऽपि' इत्यादिस्वप्रतिज्ञानुसारेण स्मरति वा, राजकार्यव्यग्रतया अन्तःपुरस्थस्त्रीसमाजसङ्गमेन वा न स्मरति वेत्यर्थः। इदमेव चिन्तनीयमिति सम्बन्धः।

अथ न विस्मरतीति पक्षे कृतविश्वासा प्रियंवदा प्राह—**वीसद्धा इति**। 'विस्रब्धा भव, न तादृशा आकृतिविशेषा गुणविरोधिनो भवन्ति। तात इदानीमिमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यत इति' इति संस्कृतम्। विस्रब्धा भव = विश्वसिहि। राजा सर्वं स्मरत्येव, शकुन्तलां शीघ्रमेव स्वपुरं नेष्यतीत्यर्थः। तत्र हेतुमाह—**नेति**। तादृशाः = तदाकृतिसदृशाः आकृतिविशेषाः = सामुद्रिकोक्तगुणविशिष्टाकृतयः गुणविरोधिनः=गुणासमानाधिकरणाः, गुणरहिता इत्यर्थः। अत्र विरोधशब्दस्यासामानाधिकरण्यमर्थः। उक्तं च—"यत्राकृतिस्तत्र गुणा वसन्ति" इति। इयं सामान्यनिबन्धनाऽप्रस्तुतप्रशंसा। तादृशविशिष्टाकृतिमति तस्मिंस्तदनुरूपाः सत्यप्रतिज्ञत्वदाक्षिण्यादयो गुणा अवश्यं सन्तीत्यर्थः। अतो राजविषये

---

१ इमं जणं।

विरोहिणो होन्ति । [१]तादो दाणिं इमं वुत्तन्तं सुणिअ ण आणे किं पडिवज्जिस्सदि त्ति ।

विस्रब्धा भव । न तादृशा आकृतिविशेषा गुणविरोधिनो भवन्ति । तात इदानीमिमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यत इति ।

**अनसूया**—[२]जह अहं दक्खामि, तह तस्स अणुमदं भवे ।

यथाऽहं पश्यामि, तथा तस्यानुमतं भवेत् ।

**प्रियंवदा**—कहं विअ ?

कथमिव ?

**अनसूया**—[३]गुणवदे कण्णआ पडिबादणिज्जेत्ति अअं दाव

न किमपि चिन्तास्पदम् । इदं तु चिन्त्यमित्याह—**तात इत्यादि** । इमं वृत्तान्तं= आत्मनोऽनुज्ञां विना कृतं गान्धर्वम् । किं प्रतिपत्स्यते = उचितमनुचितं वा किं कल्पयिष्यते । वितर्कोऽत्र भावः ।

तन्न चिन्त्यमित्यनसूयाऽऽह—**जह इति** । 'यथाऽहं पश्यामि तथा तस्यानुमतं भवेत्' इति संस्कृतम् । अत्र दृशिर्ज्ञानार्थः । जानामीत्यर्थः । पूर्वापरभावेन विचारे कृते तातस्येदमनुमतं भवेदिति मे प्रतिभातीत्यर्थः । पुनः प्रियंवदा पृच्छति—**कहं इति** । 'कथमिव' इति संस्कृतम् । तातस्येदमनुमतमिति कथं जानासीत्यर्थः । तदेवानसूया प्राह—**गुणवदे इति** । 'गुणवते कन्यका प्रतिपादनीयेत्ययं तावत्प्रथमः सङ्कल्पः । तं यदि दैवमेव सम्पादयति नन्वप्रयासेन कृतार्थो गुरुजनः' इति संस्कृतम् । गुणवते = श्लाघ्यगुणप्राचुर्यवते पुरुषाय । प्रतिपादनीया = दातव्या । अयं तावत् = अयमेव प्रथमः सङ्कल्पः = पूर्वमेवेदं सङ्कल्पितमित्यर्थः ।

१ एत्तिअं उण चिन्तणीअं । २ जधा मं पुच्छसि । ३ अणुरूवस्स वरस्स हत्थे ।

पढमो संकप्पो; तं जइ देव्वं एव्व संपादेदि, णं अप्पआसेण किदत्थो गुरुअणो ।

गुणवते कन्यका प्रतिपादनीयेत्ययं तावत्प्रथमः संकल्पः; तं यदि दैवमेव संपादयति, नन्वप्रयासेन कृतार्थो गुरुजनः ।

**प्रियंवदा**—( पुष्पभाजनं विलोक्य ) सहि ! अवइदाइं बलिकम्मपज्जत्ताइं कुसुमाइं ।

सखि ! अवचितानि बलिकर्मपर्याप्तानि कुसुमानि ।

**अनसूया**—णं सहीए 'सउन्दलाए सोहग्गदेवआ अच्चणीआ !

ननु सख्याः शकुन्तलायाः सौभाग्यदेवताऽर्चनीया !

**प्रियंवदा**—जुज्जदि ।

युज्यते । ( इति तदेव कर्मारभते । )

---

तम् = सङ्कल्पम् । कृतार्थः = कृतकृत्यः । पुष्पभाजनम् = वेण्वादिनिर्मितपुष्पपात्रम् । प्रियंवदोक्तौ—**सहि इति** । 'सखि ! अवचितानि बलिकर्मपर्याप्तानि कुसुमानि' इति संस्कृतम् । बलिर्नित्यपूजा । अनसूयोक्तौ—**णं इति** । 'ननु सख्याः शकुन्तलायाः सौभाग्यदेवताऽर्चनीया' इति संस्कृतम् । नन्विति प्रश्ने । सौभाग्यदेवता = सौभाग्यपातिव्रत्यप्रदायिनी हरगौरीमूर्तिः, इन्द्राणी देवता वा । प्रियंवदोक्तौ—**जुज्जदि इति** । 'युज्यते' इति संस्कृतम् । तदेव कर्मारभते = पुष्पाण्यवचिनोतीत्यर्थः ।

---

१ सउन्दलाए वि ।

( नेपथ्ये )

अयमहं भोः ।

**अनसूया**—( कर्णं दत्त्वा ) सहि ! अदिधीणं विअ णिवेदिदं ।

सखि ! अतिथीनामिव निवेदितम् ।

**प्रियंवदा**—णं उडजसंणिहिदा सउन्दला । ( आत्मगतम् ) अज्ज उण हिअएण असंणिहिदा !

ननूटजसंनिहिता शकुन्तला । अद्य पुनर्हृदयेनासंनिहिता !

**अनसूया**—होदु, अलं एत्तिएहिं कुसुमेहिं ।

भवतु, अलमेतावद्भिः कुसुमैः ।

( इति प्रस्थिते । )

---

अथ राज्ञः शकुन्तलाविस्मरणकारणसम्पादनायोपक्रमते—**नेपथ्ये** इति । अयमहं भोः—आगतोऽस्मीति शेषः । भो इति सम्बोधने । कण्वाश्रमान्तिकमागतस्य तत्र कमप्यनवलोकयत आतिथ्यं परिग्रहीतुमिच्छोर्दुर्वाससो महर्षेर्वचनमिदम् ।

कर्णं दत्वा = आकर्ण्येत्यर्थः । अयमहमित्यादि वचनं श्रुत्वाऽनसूया वदति—**सहि** इति । 'सखि ! अतिथीनामिव निवेदितम्' इति संस्कृतम् । इवेति प्रतीतौ । निवेदितम् = आत्मनिवेदनम् । प्रियंवदा वदति—**णं** इति । 'ननूटजसन्निहिता शकुन्तला । अद्य पुनर्हृदयेनासन्निहिता' इति संस्कृतम् । शकुन्तला उटजे अस्त्येवेत्यर्थः । शकुन्तलासान्निध्येऽप्येवमतिथेरात्मनिवेदनस्य कथमवसर इत्याह—**अद्येति** । इदानीं भर्तृगतहृदया सा किमपि न जानातीत्यसन्निहितप्रायैवेत्यर्थः । अथानसूया प्राह—**होदु** इति । 'भवतु, अलमेतावद्भिः कुसुमैः' इति संस्कृतम् । एतावन्ति कुसुमानि बलिकर्म-शकुन्तलासौभाग्यदेवतार्चनयोः पर्याप्तानीत्यर्थः ।

( नेपथ्ये )

[1]आः ! अतिथिपरिभाविनि !

विचिन्तयन्ती यमनन्यमानसा
तपोधनं वेत्सि न मामुपस्थितम् ।
स्मरिष्यति त्वां न स बोधितोऽपि स-
न्कथां प्रमत्तः प्रथमं कृतामिव ॥ १ ॥

---

**आः इत्यादि** । आः इति क्रोधानुभावः । क्रोधहेतुरतिथेरनादरणम् । अतिथिपरिभाविनि = अतिथेरनादरकारिणि । "अनादरः परिभवः" **इत्यमरः** । अस्य कर्मणः फलमविलम्बेन प्राप्स्यसीति शेषः ।

आत्मनः परिभवं विवृण्वन् तदनुरूपं फलं प्राप्स्यसीति शापवचनमाह—**विचिन्तयन्तीति** । अनन्यमानसा यं विचिन्तयन्ती तपोधनं मामुपस्थितं न वेत्सि, सः प्रमत्तः प्रथमं कृतां कथामिव बोधितोऽपि सन् त्वां न स्मरिष्यति इत्यन्वयः ।

अनन्यमानसा = एकाग्रचित्ता यं = कंचित् पुरुषविशेषं विचिन्तयन्ती = विशेषेण विविधं वा चिन्तयन्ती तपोधनं = चिरसञ्चितविपुलतपसं माम् = दुर्वाससं महर्षिम् । "अतिथिः किलपूजार्हः प्राकृतोऽपि विजानता" इति वचनेनातिथिमात्रस्य पूज्यत्वे किं पुनस्तपोधनस्य ! अनेन तस्यावश्याभ्यर्हणीयत्वं निग्रहानुग्रहसमर्थत्वं च द्योत्यते । उपस्थितं = स्वयं समीपमागतम्, न तु दूरस्थितम् । अनेनापराधस्य गौरवं द्योतयति । न वेत्सि = न बुध्यसे, मया बोध्यमानाऽपीति शेषः । सः = ते मनोगतो जनः प्रमत्तः = प्रमादवान् प्रथमं = पूर्वं प्रमाददशायाम् । अत्र प्रमत्तो

---

१ आः ! कथमतिथिं मां परिभवसि ।

प्रियंवदा—हद्धी ! [1]अप्पिअं एव्व संवुत्तं । कस्सिं पि

हि मत्तोन्मत्तव्यतिरिक्त एव। तस्य ज्ञानं हि न मत्तस्येव मद्यपानजनितात्यन्त-विस्मरणरूपम्, नाऽपि भ्रान्तस्येवान्यथाज्ञानरूपम्, किन्तु संशयप्रायमित्युपमया विस्मरणस्य संशयप्रायत्वम्, तेनान्तरान्तरा नायकस्य रतेः किञ्चिदुद्बोधश्च द्योत्यते। अत एव च 'इदमुपनतमेवं रूपम्' इत्यादेः, 'कामं प्रत्यादिष्टाम्' इत्यादेश्च वक्ष्य-माणस्य सङ्गतिर्घटते। कृताम् = उक्तां कथामिव = वार्तामिव बोधितोऽपि सन् = तत्तल्लिङ्गेन स्मारितोऽपि सन्। अपीति विरोधे। त्वां न स्मरिष्यति—स्वयं तु नैव स्मरिष्यति, त्वया स्मारितोऽपि न स्मरिष्यतीत्यर्थः।

अत्र काव्यलिङ्गमुपमा च। शकुन्तलाया दुष्यन्तचिन्तनं दुर्वाससः क्रोधे तन्मूलके शापे च हेतुरिति विचिन्तयन्तीत्यादिना प्रतीयमानो विप्रलम्भः प्राधान्येन व्यज्यमानस्य रौद्रस्याङ्गम्। वंशस्थं वृत्तम्।

कण्वाश्रमे आतिथ्यग्रहणार्थमागतो महर्षिर्दुर्वासाः 'अयमहं भोः' इत्यादिना स्वागमनं निवेद्य केनापि तदादरे न कृते तत्र द्वारदेशे निषण्णां शून्यहृदयां शकुन्तलां दृष्ट्वा स्वादराकरणात्क्रुद्धः सन् प्राह—'आः! अतिथितिरस्कारिणि! दुर्वृत्ते! एकाग्रमानसा सती यं पुरुषं विचिन्तयन्ती तव समीपमुपस्थितम् 'अयमहं भोः' इत्यादिना स्वागमनं निवेदयन्तं चिरसञ्चिततपोराशिमत एव निग्रहानुग्रहसमर्थं मां न जानासि! अनेन पाप्मना प्रमादी पुरुषः पूर्वं स्वोक्तमपि पश्चाद्यथा विस्मरति, तथा स पुरुषः स्वयं त्वां नैव स्मरिष्यति, तत्तल्लिङ्गदर्शनादिना स्मारितोऽपि न स्मरिष्यति' इति भावः॥ १॥

प्रियंवदा शापवचनमाकर्ण्य सखेदमाह—हद्धी इति। 'हा धिक्! अप्रियमेव

१ तं ज्जेव संवुत्तं, जं मए चिन्तिदं।

पूआरुहे अवरद्धा सुण्णहिअआ सउन्दला । ( पुरोऽवलोक्य ) ण हु जस्सिं कस्सिं पि; एसो दुव्वासो सुलहकोवो महेसी तह सविअ 'वेअबलुप्फुल्लाए दुव्वाराए गईए पडिणिवुत्तो। को अण्णो हुदवहादो दहिदुं पहवदि !

संवृत्तम् । कस्मिन्नपि पूजार्हे अपराद्धा शून्यहृदया शकुन्तला' इति संस्कृतम् । हेति विषादे । धिगिति निर्वेदे । संवृत्तं = निष्पन्नम् । तत्र हेतुमाह—**कस्मिन्नपीति** । इयं विशेषाज्ञानात् सामान्योक्तिः । **पूजार्हे अपराद्धेति** । अत्र आगन्तुके पुरुषे पूजार्हत्वम् अपराधश्च तदीयशापवचनादूह्यते । अपराद्धत्वे हेतुः—**शून्यहृदयेति । पुरोऽवलोक्येति** । इदं पुरोऽवलोकनं विशेषज्ञानार्थम् । 'न खलु यस्मिन् कस्मिन्नपि, एष दुर्वासाः सुलभकोपो महर्षिः तथा शप्त्वा वेगबलोत्फुल्लया दुर्वारया गत्या प्रतिनिवृत्तः । कोऽन्यो हुतवहाद्दग्धुं प्रभवति' इति संस्कृतम् । **न खलु यस्मिन् कस्मिन्नपीति** । अपराद्धा शकुन्तलेत्यनुषज्यते । शकुन्तलाया अपराधः प्राकृतेऽतिथिमात्रे न खल्वित्यर्थः । तर्हि कस्मिन्नित्यत्राह—**एष इति** । सुलभकोपः—"दुर्वासाः शङ्करस्यांशः" इति वचनादुग्रकोप इत्यर्थः । अनेन अपराधासहनशीलत्वं महर्षिरित्यनेन निग्रहानुग्रहसामर्थ्यं च व्यज्यते । तथा = पूर्वोक्तप्रकारेण । वेगबलोत्फुल्लया—वेगबलेन = गमनक्षिप्रतायां वेगाधिक्येन उत्फुल्लया = विकसितया, सुदूरोत्क्षिप्तपादन्यासयेत्यर्थः । अत एव दुर्वारया= अनुगमनेन निवारयितुमशक्यया ।

ईदृशशापदाने दुर्वासा एव समर्थ इति दृष्टान्तमुखेन द्रढयन्नाह—**कोऽन्य इति** । कोऽन्यः = न कोऽपीत्यर्थः । हुतवहात् = अग्नेः । यथा हुतवह एव झटिति

१ अविरलपादतुवराए ।

हा धिक्! अप्रियमेव संवृत्तम्। कस्मिन्नपि पूजार्हेऽपराद्धा शून्यहृदया शकुन्तला। न खलु यस्मिन्कस्मिन्नपि; एष दुर्वासाः सुलभकोपो महर्षिस्तथा शप्त्वा वेगबलोत्फुल्लया दुर्वारया गत्या प्रतिनिवृत्तः। कोऽन्यो हुतवहाद्दग्धुं प्रभवति!

**अनसूया**—गच्छ, पादेसु पणमिअ णिवत्तेहि णं; जाव अहं अग्घोदअं उवकप्पेमि।

गच्छ, पादयोः प्रणम्य निवर्तयैनम्; यावदहमर्घोदकमुपकल्पयामि।

**प्रियंवदा**—तह।

तथा। (इति निष्क्रान्ता।)

**अनसूया**—(पदान्तरे स्खलितं निरूप्य) अव्वो! आवेअक्खलिदाए

---

दग्धुं प्रभवति, तथा दुर्वासा एव शप्तुमिति भावः। अत्र दृष्टान्तालङ्कारः। अनसूया आह—**गच्छेति**। 'गच्छ, पादयोः प्रणम्य निवर्तयैनम्; यावदहमर्घोदकमुपकल्पयामि' इति संस्कृतम्। पादयोरिति द्वितीयार्थे सप्तमी। यावदित्यवधौ। यावत्स प्रत्यागच्छति, तावदहमर्घोदकमुपकल्पयामीत्यर्थः। अर्घोदकम्—अर्घं=दूर्वाक्षतादियुक्तम्, उदकं= जलं च उपकल्पयामि= सम्पादयामि। प्रियंवदोत्तरयति—**तहेति**। 'तथा' इति संस्कृतम्।

अनसूयोक्तौ—**अव्वो इति**। 'अव्वो! आवेगस्खलितया गत्या प्रभ्रष्टं ममाग्रहस्तात् पुष्पभाजनम्' इति संस्कृतम्। अव्वो इति प्राकृते अव्ययं संभ्रमे विषादे वा। 'अम्मो' इत्यपि पाठान्तरम्। "अव्वो सूचनादुःखसंभाषण—" इत्यादिसूत्रेण निपातः। आवेगस्खलितया—आवेगेन = शापहेतुकेन संभ्रमेण स्खलितया = प्रतिरुद्धया। अग्रहस्तात् = हस्ताग्रभागादित्यर्थः। अग्रः स चासौ हस्तश्चेति समानाधिकरणे विशेषणसमासे अवयवावयविसंबन्धेन लक्षणा। केषांचिन्मते

गईए पब्भट्टं मे अग्गहत्थादो पुप्फभाअणं।

अव्वो ! आवेगस्खलितया गत्या प्रभ्रष्टं ममाग्रहस्तात्पुष्पभाजनम्।

( इति पुष्पोच्चयं रूपयति। )

( प्रविश्य )

**प्रियंवदा**—सहि ! [1]पकिदिवक्को सो कस्स अणुणअं पडिगेण्हदि ! किं वि उण साणुक्कोसो किदो।

सखि ! प्रकृतिवक्रः स कस्यानुनयं प्रतिगृह्णाति ! किमपि पुनः सानुक्रोशः कृतः।

**अनसूया**—( सस्मितम् ) तस्सिं बहु एदं पि; कहेहि।

तस्मिन्बह्वेतदपि; कथय।

---

अग्रहस्त इत्यखण्ड एवायं हस्ताग्रवाचकः शब्दः। पुष्पभाजनं प्रभ्रष्टमिति अनिष्टसूचकेन दुर्निमित्तेन दुर्वाससः अनिवृत्तिः सूच्यते। **इति पुष्पोच्चयं रूपयतीति।** अयं पुष्पोच्चयो भ्रंशजातरिक्तत्वपूरणार्थम्। पुष्पावचयाभिनयनप्रकारस्तु प्राङ्निरूपितः।

प्रविश्येति हर्षेण सम्भ्रमं सूचयति। प्रियंवदा आह—**सहीति।** 'सखि ! प्रकृतिवक्रः स कस्यानुनयं प्रतिगृह्णाति ! किमपि पुनः सानुक्रोशः कृतः' इति संस्कृतम्। प्रकृतिवक्रः = स्वभावेन कुटिलः। कस्यानुनयं प्रतिगृह्णाति—न कस्यापीत्यर्थः। अस्यानुनयनं दुःशकमिति भावः। तथापि मया किञ्चित्साधित इत्याह—**किमपीति।** पुनः = पश्चात् सानुक्रोशः = सदयः। अत्र पूर्वं दुर्वाससोऽनुनयस्य दुःशकत्वप्रतिपादनं स्वनैपुण्यप्रदर्शनार्थम्। अनसूयोक्तौ—**सस्मितमिति।** अत्र स्मितम् प्रियंवदाऽभिप्रायपरिज्ञानात् दुर्वासोमहर्षिप्रसादनजनितहर्षाद्वा। **तस्सिं**

---

१ सरीरी विअ कोवो।

**प्रियंवदा**—जदा णिवत्तिदुं ण इच्छदि तदा विण्णविदो मए—भअवं! पढमं त्ति पेक्खिअ अविण्णादतवप्पहावस्स दुहिदुजणस्स भअवदा एक्को अवराहो मरिसिदव्वो त्ति।

यदा निवर्तितुं नेच्छति तदा विज्ञापितो मया—भगवन्! प्रथम इति प्रेक्ष्य अविज्ञाततपःप्रभावस्य दुहितृजनस्य भगवतैकोऽपराधो मर्षितव्य इति।

**अनसूया**—तदो तदो?

ततस्ततः?

---

इति। 'तस्मिन् बहु एतदपि; कथय' इति संस्कृतम्। एतदपि तस्मिन् बहु इति संबन्धः। तस्मिन् = प्रकृतिवक्रे दुर्वाससि एतदपि = किंचित्सानुक्रोशत्व-करणमपि।

पुनः प्रियंवदा वदति—**जदा इति**। 'यदा निवर्तितुं नेच्छति, तदा विज्ञापितो मया—भगवन्! प्रथम इति प्रेक्ष्य अविज्ञाततपःप्रभावस्य दुहितृजनस्य भगवता एकोऽपराधो मर्षितव्यः इति' इति संस्कृतम्। यदा निवर्तितुं नेच्छतीत्यादिना मया तन्निवर्तने भूयान् यत्नः कृत इति सूचयति। स्वविज्ञापनाप्रकारमाह—**भगवन्निति**। भगवन्निति प्रशंसापरम्। अनेन तस्य सर्वज्ञत्वं द्योत्यते। **प्रथम इति**। प्रथमोऽपराध इत्यर्थः। प्रेक्ष्य = विचार्य, अत्र कोपः कर्तुं युक्तो न वेति विचार्येत्यर्थः। अविज्ञाततपःप्रभावस्य = पितृकल्पो भवान् एवं शापं दास्यतीत्यसंभावयतः दुहितृजनस्य = कन्याकल्पायाः शकुन्तलायाः। दुर्वाससः कण्वमित्रत्वादेवमुक्तिः। एकोऽपराधो मर्षितव्यः = प्रथमोऽपराधः क्षन्तव्य इत्यर्थः।

अनसूयोक्तौ—**तदो इति**। 'ततस्ततः' इति संस्कृतम्। अनेन श्रवणे त्वरा

**प्रियंवदा**—तदो 'मे वअणं अण्णहाभविदुं णारिहदि; किंदु अहिण्णाणाभरणदंसणेण सावो णिवत्तिस्सदि' त्ति मन्तअन्तो सअं अन्तरिहिदो।

ततो 'मे वचनमन्यथाभवितुं नार्हति; किंत्वभिज्ञानाभरणदर्शनेन शापो निवर्तिष्यते' इति मन्त्रयन्स्वयमन्तर्हितः।

**अनसूया**—सक्कं दाणिं अस्ससिदुं। अत्थि तेण राएसिणा

---

सूच्यते। **तदो मे इत्यादि**। 'ततो 'मे वचनमन्यथा भवितुं नार्हति। किन्त्वभिज्ञानाभरणदर्शनेन शापो निवर्तिष्यते' इति मन्त्रयन् स्वयमन्तर्हितः' इति संस्कृतम्। तत इत्यस्य मन्त्रयन्नन्तर्हित इत्यनेन सम्बन्धः। मे वचनमन्यथाभवितुं नार्हति = मया यदुच्यते तत्तथैव भवतीत्यर्थः। तथा चोक्तम्—'ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति" इति। प्रतीकारोपायमाह—**किन्त्विति**। अभिज्ञानाभरणदर्शनेन शापो निवर्तिष्यते--अभिज्ञायते येन तत् अभिज्ञानं = परिचायकं तादृशं यदाभरणं = भूषणं तस्य दर्शनेन = राजकर्तृकेण शापमोक्षो भविष्यतीत्यर्थः। अन्तर्हितः, न तु गतः। अनेन तस्य योगप्रभावः सूच्यते। न मे पुनर्वचनावकाशोऽभूदिति विषादश्च द्योत्यते।

प्रियंवदाया विषादमपनयन्त्यनसूया प्राह—**सक्कं इति**। 'शक्यमिदानीमाश्वसितुम्। अस्ति तेन राजर्षिणा सम्प्रस्थितेन स्वनामधेयाङ्कितमङ्गुलीयकं स्मरणीयमिति स्वयं पिनद्धम्। तस्मिन् स्वाधीनोपाया शकुन्तला भविष्यति' इति संस्कृतम्। शक्यमिदानीमाश्वसितुम् = अधुनाऽनेन वचनेन कथञ्चिदाश्वस्ता भवामीत्यर्थः। आश्वासहेतुमाह—**अस्तीत्यादि**। सम्प्रस्थितेन = प्रस्थातुमारब्धवता। स्मरणीयमिति भावे अनीयर्। अनेन मत्स्मरणं भवत्वितीत्यर्थः। यद्वा

संपत्थिदेण सणामहेअङ्किअं अङ्गुलीअअं सुमरणीअं त्ति सअं पिणद्धं । तस्सिं साहीणोवाआ सउन्दला भविस्सदि ।

शक्यमिदानीमाश्वसितुम् । अस्ति तेन राजर्षिणा संप्रस्थितेन स्वनामधेयाङ्कितमङ्गुलीयकं स्मरणीयमिति स्वयं पिनद्धम् । तस्मिन्स्वाधीनोपाया शकुन्तला भविष्यति ।

**प्रियंवदा**—सहि ! एहि, देवकज्जं दाव णिव्वत्तेम्ह ।

सखि ! एहि, देवकार्यं तावन्निर्वर्तयावः ।

( इति परिक्रामतः । )

**प्रियंवदा**—( विलोक्य ) अणसूए ! पेक्ख दाव । वामहत्थोव-

---

"कृत्यल्युटो बहुलम्" इति बहुलग्रहणात् करणे अनीयर् । तेन स्मरणसाधनमित्यर्थः । स्मरणीय इति पाठे अहमिति शेषः । स्वयमित्यादरं द्योतयति । पिनद्धम् = शकुन्तलाया अङ्गुलौ परिधापितम् । अस्तीति शेषः । तस्मिन्—निमित्ते सप्तमी, तस्य सत्त्वादित्यर्थः । स्वाधीनोपाया—स्वस्य = शकुन्तलाया अधीनः = आयत्तः उपायः = शापनिर्वर्तनोपायो यस्याः सा ।

अथानसूयावचनेन निश्चिन्ता प्रियंवदा अनन्तरकरणीयं निरूपयन्त्याह—**सहि इति** । 'सखि ! एहि, देवकार्यं तावन्निर्वर्तयावः' इति संस्कृतम् । देवकार्यं = देवपूजाप्रभृति । निर्वर्तयावः = अनुतिष्ठावः । प्रियंवदोक्तौ—**अणसूए इति** । 'अनसूये ! पश्य तावद् । वामहस्तोपहितवदना आलिखितेव प्रियसखी । भर्तृगतया चिन्तया आत्मानमपि नैषा विभावयति; किं पुनरागन्तुकम्' इति संस्कृतम् । वामहस्तोपहितवदना—वामहस्ते = वामपाणितले उपहितं = स्थापितं वदनं = मुखं यस्याः सा । अयं चिन्तानुभावः । आलिखितेवेति निश्चेतनत्वसाम्यादुत्प्रेक्षा । आत्मानमपीत्यपिशब्देनात्मनः सर्वदा विभावनीयत्वं द्योत्यते ।

हिदवअणा आलिहिदा विअ पिअसही। भत्तुगदाए चिन्ताए अत्ताणं पि ण एसा विभावेदि; किं उण आअन्तुअं!

अनसूये! पश्य तावत्। वामहस्तोपहितवदनाऽऽलिखितेव प्रियसखी। भर्तृगतया चिन्तयाऽऽत्मानमपि नषा विभावयति; किं पुनरागन्तुकम्!

**अनसूया**—पिअंवदे! दुवेणं एव्व णं णो मुहे एसो वुत्तन्तो चिट्ठदु। रक्खिदव्वा क्खु पकिदिपेलवा पिअसही।

प्रियंवदे! द्वयोरेव ननु नौ मुख एष वृत्तान्तस्तिष्ठतु। रक्षितव्या खलु प्रकृतिपेलवा प्रियसखी।

**प्रियंवदा**—को णाम उण्होदएण णोमालिअं सिञ्चेदि!

---

विभावयति = चिन्तयति। आगन्तुकम् = अतिथिम्। काऽहम्, किं करोमि, कुत्र तिष्ठामि इत्याद्यात्मविषयकमपि ज्ञानमस्या नास्ति। अनया समीपमागतोऽपि दुर्वासा न लक्षित इति न चित्रमिति भावः।

अथ कार्यज्ञाऽनसूया प्राह—**पिअंवदे इति**। 'प्रियंवदे! द्वयोरेव ननु नौ मुखे एष वृत्तान्तस्तिष्ठतु। रक्षितव्या खलु प्रकृतिपेलवा प्रियसखी' इति संस्कृतम्। नन्वित्यनुमतौ। एष वृत्तान्तः = दुर्वासःशापतन्मोक्षोपायादिः। मुखे तिष्ठतु = हृदये निहितोऽस्तु। एष वृत्तान्तो नान्यस्य कस्य चिद्वाच्य इत्यर्थः। कुत इत्याह—**रक्षितव्येति**। प्रकृतिपेलवा—प्रकृत्या = निसर्गेण पेलवा = कोमला। अनेन दुःखसहनाशक्तिर्द्योत्यते। यद्येषा कुतोऽपि वृत्तान्तमिमं श्रोष्यति तदा सद्यो विपद्येतेति भावः। शकुन्तलाया एतन्निवेदनं सर्वथाऽनुचितमिति दृष्टान्तमुखेन प्रियंवदा प्राह—**को णाम इति**। 'को नामोष्णोदकेन नवमालिकां सिञ्चति' इति संस्कृतम्। उष्णोदकेन नवमालिकायाः सेचनमिव शकुन्तलाया एतद्वृत्तान्तनिवेदनमिति को वा सचेतास्तत्कुर्यादित्यर्थः। अतो न भेतव्यमिति भावः।

को नामोष्णोदकेन नवमालिकां सिञ्चति !

( इत्युभे निष्क्रान्ते । )

विष्कम्भकः ।

—:❀:—

( ततः प्रविशति सुप्तोत्थितः शिष्यः । )

शिष्यः—वेलोपलक्षणार्थमादिष्टोऽस्मि तत्रभवता प्रवासादुपावृत्तेन कण्वेन । प्रकाशं निर्गतस्तावदवलोकयामि कियदवशिष्टं रजन्या इति । ( परिक्रम्यावलोक्य च ) हन्त ! [1]प्रभातम् ! तथा हि—

---

अथ कुलपतेः कण्वस्य प्रवासात् प्रत्यागमनं सूचयितुं शिष्यस्य प्रवेशमाह—तत इति । सुप्तोत्थितः—सुप्तं = स्वापः तस्मादुत्थितः । पूर्वं सुप्तः पश्चादुत्थित इति वा । स्वापानन्तरं प्रबुद्धो गुरुशुश्रूषां निर्वर्त्य तदादेशेन नक्षत्रनिरीक्षणाय निर्गत इत्यर्थः । स्वकार्यमाह—वेलेति । वेलोपलक्षणार्थम्—वेलायाः = समयस्य उपलक्षणं=नक्षत्रैरुपलक्ष्य ज्ञानं तदर्थम् । "वेला काले च जलधेस्तीरनीरविकारयोः" इति विश्वः । प्रवासात्—प्रवसत्यस्मिन्निति प्रवासः = विदेशस्तस्मात् । उपावृत्तेनेत्यनेन प्रथमाङ्कवर्णितं सोमतीर्थगमनमनुसन्धीयते । प्रकाशम् = वृक्षादिनाऽनावृतं प्रदेशम् । अवलोकयामि = अवलोक्यावगच्छामीत्यर्थः । कियत् = किम्परिमाणम् । अवशिष्टम् = अवशेषः । हन्तेति सम्भ्रमे । प्रभातम्—प्रकृष्टं भातम् = आलोको यस्मिंस्तत् प्रभातम् । वर्तत इति शेषः ।

---

१. प्रभाता रजनी ।

यात्येकतोऽस्तशिखरं पतिरोषधीना-
मा विष्कृतोऽरुणपुरःसर एकतोऽर्कः।
तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत [1]इवात्मदशान्तरेषु ॥२॥

उक्तमुपपादयति—**यात्येकत इति**। एकतः ओषधीनां पतिः अस्तशिखरं याति, एकतः अरुणपुरःसरः अर्कः आविष्कृतः। लोकः तेजोद्वयस्य युगपद् व्यसनोदयाभ्यामात्मदशान्तरेषु नियम्यत इव इत्यन्वयः।

एकतः = प्रतीच्यां दिशि ओषधीनां = तृणज्योतिषां पतिः = स्वामी, चन्द्रः। चन्द्रः स्वतेजसा ओषधीन् आप्याययतीति तस्य तत्पतित्वं प्रसिद्धम्। अस्तशिखरम् = अस्ताचलाग्रं याति = गच्छति। एकतः = प्राच्यां दिशि अरुणपुरस्सरः —अरुणः = अनूरुर्विनतासुतः सूर्यसारथिः पुरस्सरः = अग्रयायी यस्य तथाविधः अर्कः = सूर्यः आविष्कृतः = आत्मानमाविष्कर्तुमारब्धवान्। प्रकटीभूत इत्यर्थः। अत्र चन्द्रे अस्तं गन्तुमारब्धवत्येव अरुणोदयेन प्रभातप्रकाशातिशयो जायत इति यातीति वर्तमाननिर्देशेन आविष्कृत इति भूतनिर्देशेन च द्योत्यते। लोकः = जगतः स्थैर्यास्थैर्यविचाररहितः सर्वोऽपि प्राकृतो जनः तेजोद्वयस्य = सूर्यचन्द्रात्मकतेजोद्वयस्य, सूर्यचन्द्रयोरित्यर्थः। जगत्प्रकाशकत्वादिरूपमुत्कर्षं द्योतयितुमेवमुक्तिः। युगपत् = समकालं व्यसनोदयाभ्याम् = अस्तसमयोदयाभ्याम्, विपत्सम्पद्भ्यां च हेतुभ्यां पाशस्थानीयाभ्याम्। "व्यसनं विपदि भ्रंशे" **इत्यमरः**। "उदयः संपदुत्पत्त्योः पूर्वशैले समुन्नतौ" **इत्यजयश्च**। आत्मदशान्तरेषु =

१. इवैष।

अपि च—

सुखदुःखात्मकस्वदशाविशेषेषु । अत्रान्तरशब्दो विशेष्यवाची । नियम्यत इव = नियन्त्रितः क्रियत इव । शोकहर्षाभ्यां निवर्त्यत इति यावत् । इत्थं सकलप्रपञ्च-प्रवर्तकयोः भगवतोः सोमसूर्ययोरपि एकस्य आपत्, अन्यस्य संपत्; एकस्य संपत्, अन्यस्य आपत् इति पर्यायेण प्रवर्तमानयोरापत्संपदोः शोकहर्षाभ्यां चैवश्यं मा भूदिति दैवेनोपदिश्यत इवेत्यर्थः । तथा चोक्तम्—"आत्मानं शोक-हर्षाभ्यां शत्रुभ्यामिव नार्पयेत्" इति ।

अत्र पूर्वार्धे यः कश्चित् अतिसमृद्धभृत्योऽपि नाशं याति, अपरः कश्चित् असमर्थ सर्वात्मना सर्वदा स्वाश्रितम् उदयं प्रापयन्नेव स्वयमुदयं गच्छतीति सत्पुरुषद्वयव्यवहारसमारोपात् समासोक्तिः । उत्तरार्धे च निदर्शना व्यङ्ग्या, उत्प्रेक्षाया वाच्यत्वात् । वसन्ततिलका वृत्तम् ।

प्रवासात् प्रतिनिवृत्तेन भगवता कण्वेन वेलोपलक्षणार्थमादिष्टस्तस्य शिष्यो गगनमण्डलं विलोकयन्नाह—'हन्त ! प्रभातमेव ! तथा हि—अतिदुःसहमरणा-दिविपत्तिसहस्रविनाशका ओषधयः, तेषां पतिरप्यसौ चन्द्रः गगनमण्डलस्य पश्चिमात्मके एकस्मिन् भागे अस्तशिखरं गच्छन् लक्ष्यते; गगनमण्डलस्यापर-स्मिन् प्राच्यात्मके भागे ऊरुरहितं विनतासुतं सारथिमरुणं पुरस्कृत्य तं समुन्नय-न्नेव सूर्यः स्वात्मानमाविर्भावयन् लक्ष्यते । अनेन व्यतिकरेण नित्यानित्यवस्तु-विचारविधुरः सर्वोऽपि प्राकृतो लोकः चन्द्रसूर्ययोः समकालमेवास्तमयाविर्भा-वाभ्यां सुखदुःखात्मकेषु स्वदशाविशेषेषु नियन्त्रितः क्रियत इव । तथा च स्वस्वविपत्तिसंपत्तिदशयोः केनापि दुःखहर्षौ न कार्यौ' इति भावः ॥ २ ॥

अथ प्रासङ्गिकचन्द्रवृत्तान्तद्वारा प्रस्तुतमर्थं स्फुटीकुर्वन्नाह—अपि च—

अन्तर्हिते शशिनि सैव कुमुद्वती मे
दृष्टिं न नन्दयति संस्मरणीयशोभा ।
इष्टप्रवासजनितान्यबलाजनस्य[1]
दुःखानि नूनमतिमात्रसुदुःसहानि[2] ॥३॥

**अन्तर्हिते इत्यादि ।** शशिनि अन्तर्हिते ( सति ) सैव कुमुद्वती संस्मरणीय-शोभा ( सती ) मे दृष्टिं न नन्दयति । अबलाजनस्य इष्टप्रवासजनितानि दुःखानि अतिमात्रसुदुःखहानि नूनम् ( भवन्ति ) इत्यन्वयः ।

शशिनि = सम्पूर्णमण्डले राकाशशाङ्के अन्तर्हिते सति = दर्शनपथाद् व्यवहिते सति । शशयुक्तस्य कलङ्किनश्चन्द्रस्यान्तर्धानं समुचितमेवेति भावः । या पूर्वं स्वप्रियस्य सन्निधाने विकसितकुसुमा दर्शनरसिकानां चेतसि निरतिशयमानन्दं समुदपादयत्, सैव कुमुद्वती = कुमुदिनी, कुमुदवत्यपीत्यर्थः । अत्र एवकारेण व्यक्तेर्न भेदः, किन्त्ववस्थाया एवेति द्योत्यते । संस्मरणीयशोभा—संस्मरणीया = स्मरणमात्रेणानुभवितुं योग्या, संप्रत्यदृश्या; भूतपूर्वेत्यर्थः । शोभा = सुषमा यस्यास्तथाभूता सती । पूर्वं सम्पन्नस्य पश्चाद्विपदवस्थाप्राप्तिः सुतरां शोच्या भवतीति भावः । मे = मम दृष्टिं न नन्दयति = नेत्रानन्दं न जनयति । अब-लाजनस्य = स्त्रीजनस्य । अत्र अबलेति पदेन निसर्गतः सौकुमार्यशालिनीनां स्त्रीणां सहनाशक्तिर्द्योत्यते । जनपदेन च स्त्रीजातिमात्रं गृह्यते । इष्टप्रवासजनि-तानि—इष्टस्य = प्रियस्य प्रवासेन = देशान्तरस्थित्या जनितानि = उत्पादितानि दुःखानि = पीडाः । बहुवचनेन दुःखानां बहुविधत्वं गौरवं च द्योत्यते । अति-मात्रसुदुःसहानि—अतिमात्रम् = अत्यर्थं सुदुःसहानि = सुतरां दुःखेन सोढुं

१. जनेन । २. दुरुद्वहानि ।

( प्रविश्यापटीक्षेपेण )

शक्यानि नूनं = निश्चयेन भवन्ति । अत्र अतिमात्रसुशब्दौ दुःसहत्वस्याप्यशक्यानुष्ठानं बोधयतः ।

अत्र पूर्वार्धे नायके अन्तर्हिते नायिका दृष्टिं न नन्दयतीति नायकयोर्व्यवहारसमारोपात् समासोक्तिः । उत्तरार्धेन सामान्येन विशेषस्य समर्थनात् अर्थान्तरन्यासः । कुमुद्वतीविषयकः शोकः, तन्मूलभूतं शिष्यस्य कारुणिकत्वम्, मतिश्च भावाः प्राधान्येन व्यज्यन्ते । वसन्ततिलका वृत्तम् ।

प्रासङ्गिकचन्द्रवृत्तान्तद्वारा प्रस्तुतमर्थं स्फुटीकुर्वन् कण्वशिष्य आह—'या कुमुद्वती पूर्वं स्वप्रियस्य चन्द्रस्य सन्निधाने विकसितकुसुमा कमलोपहारकारिणी दर्शनरसिकानां चेतस्सु परमानन्दं समुदपादयत्, सैवेदानीं शशलाञ्छनयुक्तस्य कलङ्किनः स्वप्रियस्य चन्द्रस्य पलायनेन दुःखिता सती निराभरणा परित्यक्ताङ्गसंस्कारा सुन्दरीव विगतसुषमा सती मम नेत्रानन्दं न तनोति । यतः प्रियप्रवासजनितानि दुःखानि निसर्गतः सुकुमारीणामत एव दुःखभारसहनासमर्थानां स्त्रीणां बाढं निश्चयेन सुदुःसहानि भवन्ति' इति भावः ॥ ३ ॥

प्रविश्यापटीक्षेपेणेति । पूर्वोक्तशिष्यवाक्यश्रवणानन्तरं प्रबुद्धायाः सख्या अनसूयाया अपटीक्षेपेण प्रवेशः । सम्भ्रमात् यवनिकां विनैव प्रविश्येत्यर्थः । अपटी = यवनिका । "अपटी काण्डपटीका प्रतिसीरा जवनिका तिरस्करिणी" इति **हलायुधः** । अथ तथा प्रविष्टा प्रियसख्याः वियोगदुःखं तन्निदानभूतां राजकर्तृकामुपेक्षां च विचिन्तयन्ती दूयमानचेताः चिन्तातिरेकेण जागरेणैव निशां नयन्ती कस्याञ्चिद्रात्रौ कथमपि निद्रामवाप्य प्रभाते प्रबुद्धा तत्क्षणं पूर्वनिर्दिष्टां कण्वशिष्योक्तिमाकर्ण्य भूयः समुद्बुद्धचिन्तासंस्कारदुःखिता सर्वस्यास्य क्लेशस्य

**अनसूया**—जइ[1] वि णाम विसअपरम्मुहस्स वि जणस्स एदं ण [2]विदिअं तह वि तेण रण्णा सउन्दलाए अणज्जं आअरिदं ।

यद्यपि नाम विषयपराङ्मुखस्यापि जनस्यैतन्न विदितं तथापि तेन राज्ञा शकुन्तलायामनार्यमाचरितम् ।

**शिष्यः**—यावदुपस्थितां होमवेलां गुरवे निवेदयामि । ( इति निष्क्रान्तः । )

---

निदानमयमेव राजेति निश्चिन्वाना राजनि सरोषा अनसूया वदति—**जइ इति**। 'यद्यपि नाम विषयपराङ्मुखस्यापि जनस्य एतन्न विदितं तथापि तेन राज्ञा शकुन्तलायामनार्यमाचरितम्' इति संस्कृतम् । नामेति प्रसिद्धौ । विषयपराङ्मुखस्यापि जनस्य = वीतरागाणामपीत्यर्थः । इष्टप्रवासेत्याद्युक्तोऽर्थो वीतरागैर्मुनिभिरपि ज्ञायत एवेत्यर्थः । तथापि तेन राज्ञा एतन्न विदितमिति संबन्धः । तेन राज्ञा = विषयिणा दुष्यन्तेन एतत् = इष्टप्रवासेत्याद्युक्तोऽर्थः न विदितं = न ज्ञातम् । तत्र हेतुमाह—**शकुन्तलायामिति** । तेन राज्ञेत्यनुषज्यते । अनार्यम्= आर्यजनस्यायोग्यम्, निन्द्यमित्यर्थः । आचरितम् = अनुष्ठितम् । स राजा तदा तथा प्रतिज्ञाय स्वपुरं गत्वा एनां न स्मरतीत्येतदेवानार्यमाचरितमिति भावः । अनेन अनसूयाहृद्गतो राजविषयको रोषो व्यज्यते। यद्वा विषयपराङ्मुखस्य मद्विधस्य जनस्य एतत् विषयिजनवृत्तं न विदितमित्यर्थयोजना । विषयपराङ्मुखी अहं सामान्यतो यद्यपि विषयिजनवृत्तान्तं न जानामि, तथापि तेन राज्ञा तथा प्रतिज्ञाय शकुन्तलायाः स्मरणमपि न कृतम्, इदमनार्यमाचरितमिति जानामीति भावो वा ।

अथ स्वकर्तव्यमनुसन्दधानः शिष्य आह—**यावदिति** । होमवेला उपस्थि-

---

१. एव्वं णाम । २. णिपडिदं जधा तेण ।

**अनसूया**—पडिबुद्धा वि किं करिस्सं ! ण मे उइदेसु वि णिअकरणिज्जेसु हत्थपाआ पसरन्ति । कामो दाणिं सकामो होदु; जेण

---

तेति गुरवे निवेदयिष्यामीत्यर्थः । **इति निष्क्रान्त इति** । इदं शिष्यप्रवेशकल्पनं महर्षेः कण्वस्य प्रवासात्प्रत्यागमनसूचनार्थम्, अनसूयावचनावकाशसम्पादनार्थं च।

अथानसूया आत्मानमनुसन्धायाह—**पडिबुद्धा वीति** । 'प्रतिबुद्धाऽपि किं करिष्ये ! न मे उचितेष्वपि निजकार्येषु हस्तपादं प्रसरति । काम इदानीं सकामो भवतु; येनासत्यसन्धे जने अनन्यहृदया सखी पदं कारिता । अथ वा दुर्वाससः कोप एष विकारयति । अन्यथा कथं स राजर्षिस्तादृशानि मन्त्रयित्वा एतावत्कालस्य लेखमात्रमपि न विसृजति ! तदितोऽभिज्ञानमङ्गुलीयकं तस्य विसृजावः । दुःखशीले तपस्विजने कोऽभ्यर्थ्यताम् ! ननु सखीगामी दोष इति व्यवसिताऽपि न पारयामि प्रवासप्रतिनिवृत्तस्य तातकण्वस्य दुष्यन्तपरिणीतामापन्नसत्त्वां शकुन्तलां निवेदयितुम् । इत्थंगते अस्माभिः किं करणीयम्' इति संस्कृतम् । प्रतिबुद्धाऽपि = जागरिताऽपि किं करिष्ये = सुप्तेव किमपि कर्तुं न शक्नोमीत्यर्थः । तत्र हेतुमाह—**उचितेष्वपीति** । उचितेष्वपि = अभ्यस्तेष्वपि निजकार्येषु = स्वशरीरकार्येषु, गृहकार्येषु च न मे हस्तपादं प्रसरति—मम हस्तौ पादौ च स्वोचिते कार्ये व्यापारं कर्तुं न प्रभवत इत्यर्थः । चिन्तानिदानमनुसन्दधाना आह—**काम इति** । कामः = मन्मथः इदानीं = प्रियसख्या विरहदशायां सकामः = पूर्णमनोरथो भवतु । अनुरक्तयोर्दम्पत्योः परस्परं वियोग एव विरहाधिष्ठातृदैवतस्य कामस्याभिमतः, सम्प्रति दुष्यन्तस्योपेक्षया तेन शकुन्तलाया वियोगं सम्पाद्य पूर्णमनोरथो भवत्वित्यर्थः । सकामत्वे हेतुमाह—**येनेति** । येन = कामेन असत्यसन्धे = मिथ्याप्रतिज्ञे । अनन्यहृदयेत्यनेन व्यापारान्तरविनोदनाभावो द्योत्यते । पदं

असच्चसंधे जणे अण्णहिअआ सही पदं कारिदा । अहवा दुव्वाससो कोवो एसो विआरेदि । अण्णहा कहं सो राएसी तारिसाणि मन्तिअ एत्तिअस्स कालस्य [1]लेहमेत्तं पि ण विसज्जेदि ! ता इदो अहिण्णाणं

कारिता = स्थानं लम्भिता, अवतारितेत्यर्थः । तदेकानुरागिणी कृतेति यावत् । अनेन कामं प्रत्यसूया ध्वन्यते । हेत्वन्तरमनुसन्दधाना आह—**अथवेति** । नात्र कामस्य राज्ञो वा दोषः, अपि तु कस्येत्याह—**दुर्वासस इति** । कोपः = तज्जन्यः शाप इत्यर्थः । अत्र कोपपदस्य तज्जन्ये शापे लक्षणा । दुर्निवारत्वं व्यङ्ग्यम् । **एष इति** । दुर्वासःशापज्ञानस्य शल्यवत् सन्ततमरुन्तुदतया सतत-हृदयसन्निधानात् एष इत्युक्तम् । विकारयति = राज्ञः शकुन्तलाविस्मरणरूपं विकार जनयति । राजानं विकृतबुद्धिं करोतीत्यर्थः । उक्तार्थं द्रढयति—**अन्यथेति** । सः = यः पूर्वं प्रेमातिशयवशात् 'परिग्रहबहुत्वेऽपि' इत्यादि प्रति-ज्ञातवान् । राजर्षिरित्यनेन सत्यप्रतिज्ञत्वं द्योत्यते । तादृशानि मन्त्रयित्वा—आत्मनः प्रस्थानकाले शकुन्तलाऽङ्गुलौ स्वमुद्रां परिधाप्य 'एकैकमत्र दिवसे दिवसे मदीयम्' इत्यादिमधुरमधुराणि प्रणयवचनानि मन्त्रयित्वेत्यर्थः । एतावत्कालस्य = एतावन्तं कालमभिव्याप्येत्यर्थः । लेखमात्रमपि—मात्रपदेन अन्तःपुरप्रवेशसम्राज्ञी-पदलाभादिकं व्यवच्छिद्यते । न विसृजति = दूतद्वारा न प्रेषयति । तस्मात् शापहेतुकमेवेदं विस्मरणमिति तर्कयामीत्यर्थः । अत्र मतिर्भावो व्यज्यते । शापपरि-हारोपायं निरूपयन्ती आह—**तदिति** । इतः = अस्मात्प्रदेशात्, धर्मार-ण्यादित्यर्थः । अभिज्ञानमङ्गुलीयकं = परिचायकम् ऋषिकथितशापमोक्षोपाय-भूतमङ्गुलीयकं तस्य = राज्ञः विसृजावः = प्रेषयावः । अभिज्ञानाङ्गुलीयकवि-

१. वात्तामात्तं ।

अङ्गुलीअअं से विसज्जेम । दुक्खसीले तवस्सिजणे को अब्भत्थीअदु ! णं सहीगामी दोसो त्ति [1]व्ववसिदा वि ण पारेमि पवासपडिणिउत्तस्स तादकण्णस्स दुस्सन्तपरिणीदं आवण्णसत्तं सउन्दलं णिवेदिदं । इत्थंगए अम्हेहिं किं करणिज्जं !

प्रतिबुद्धाऽपि किं करिष्ये ! न मे उचितेष्वपि निजकार्येषु हस्तपादं प्रसरति । काम इदानीं सकामो भवतु; येनासत्यसंधे जने अनन्यहृदया सखी पदं कारिता ।

---

सर्जने अत्यन्तावश्यकस्य विश्वस्तप्रेष्यस्याभावं निरूपयन्ती सविषादमाह— **दुःखशीले इति** । दुःखशीले = विषयविरसे, यमनियमादिप्रवणे इत्यर्थः । विषयपराङ्मुखतया विषयिजनचित्तानुसरणाक्षमतया विषयिभ्यो विमुखे इति भावः । तपस्विजने = तन्मध्ये इत्यर्थः । कोऽभ्यर्थ्यताम् = कमभ्यर्थये ! न कोऽप्यभ्यर्थनीय इत्यर्थः । तातकण्वः कथं न निवेद्यते इत्यत आह— **नन्विति** । दोषः = गुरुजनाननुज्ञया स्वातन्त्र्येण राज्ञा सह गान्धर्वकरणलक्षणोऽपराधः । इतिहेतौ । व्यवसिताऽपि = वक्तुमुद्युक्ताऽपि । प्रवासप्रतिनिवृत्तस्येत्यनेन तदनुपस्थितिदशायां वृत्तस्य शकुन्तलागान्धर्वादिवृत्तान्तस्यानवबोधः, तेन तन्निवेदनार्हत्वं च द्योत्यते । आपन्नसत्त्वां = गर्भिणीं न पारयामि = लज्जया शङ्कया च वक्तुं न शक्नोमीत्यर्थः । इदं सर्वं निरूप्य गत्यन्तरमपश्यन्ती सविषादमाह— **इत्थंगते इति** । एवम्प्रकारायामवस्थायां प्राप्तायामित्यर्थः । किं करणीयम्— किं कर्तुमुचितमिति प्रतिपत्तिमूढाऽस्मीति भावः । अस्मिन्ननसूयावाक्ये तत्र तत्र विषादमतिक्रोधासूयानिर्वेददैन्यालस्यचिन्तादयो भावाः स्फुटं व्यज्यमानाश्चमत्कुर्वन्ति ।

---

1. व्ववसाइदुं पि ।

अथवा दुर्वाससः कोप एष विकारयति । अन्यथा कथं स राजर्षिस्तादृशानि मन्त्रयित्वैतावत्कालस्य लेखमात्रमपि न विसृजति ! तदितोऽभिज्ञानमङ्गुलीयकं तस्य विसृजावः । दुःखशीले तपस्विजने कोऽभ्यर्थ्यताम् ! ननु सखीगामी दोष इति व्यवसिताऽपि न पारयामि प्रवासप्रतिनिवृत्तस्य तातकण्वस्य दुष्यन्तपरिणीतामापन्नसत्त्वां शकुन्तलां निवेदयितुम् । इत्थंगतेऽस्माभिः किं करणीयम् !

( प्रविश्य )

**प्रियंवदा**—( सहर्षम् ) सहि ! तुवर सउन्दलाए पत्थाणकोदुअं णिव्वत्तिदुं ।

सखि ! त्वरस्व शकुन्तलायाः प्रस्थानकौतुकं निर्वर्तयितुम् ।

**अनसूया**—सहि ! कहं एदं ?

सखि ! कथमेतत् ?

---

अथ कथासंघटनाय प्रियंवदाप्रवेशः । प्रियंवदोक्तौ—**सहि इति** । 'सखि ! त्वरस्व शकुन्तलायाः प्रस्थानकौतुकं निर्वर्तयितुम्' इति संस्कृतम् । त्वरस्व = त्वरया आगच्छेत्यर्थः । किमर्थमित्यत्राह—**शकुन्तलाया इति** । प्रस्थानकौतुकं = पतिगृहप्रस्थानकाले कर्तुमुचितं पारम्पर्यागतं मङ्गलकर्म । "अथ कौतुकम् । कौतूहले मङ्गले च" इति **भोजः** ।

कौतुकं नर्मणीच्छायामुत्सवे कुतुके मुदि ।
पारम्पर्यागतख्यातमङ्गलोद्वाहसूत्रयोः ॥

इति **हैमश्च** । निर्वर्तयितुं = संपादयितुम् । अनसूया वदति—**सहि इति** । 'सखि ! कथमेतत्' इति संस्कृतम् । कथं = केन प्रकारेण । संवृत्तमिति शेषः । अद्भुतमिवेदं मे भाति, कथं संवृत्तम् , तत्प्रकारं कथयेति भावः ।

**प्रियंवदा**—सुणाहि । दाणिं सुहसइदपुच्छिआ सउन्दलासआसं गदम्हि । तदो जाव एणं लज्जावणदमुहिं परिस्सजिअ तादकण्णेण एव्वं अहिणन्दिदं—दिट्ठिआ धूमाउलिददिट्ठिणो वि जअमाणस्स पाअए एव्व

---

प्रियंवदा कथयति—**सुणाहि इति** । 'शृणु । इदानीं सुखशयनपृच्छिका शकुन्तलासकाशं गताऽस्मि । ततो यावदेनां लज्जाऽवनतमुखीं परिष्वज्य तात-कण्वेन एवमभिनन्दितम्—दिष्ट्या धूमाकुलितदृष्टेरपि यजमानस्य पावके एवाहुतिः पतिता । वत्से ! सुशिष्यपरिदत्ता विद्येव अशोचनीया संवृत्ता । अद्यैव ऋषि-रक्षितां त्वां भर्तुः सकाशं विसर्जयामि इति' इति संस्कृतम् । सुखशयनपृच्छिका—प्रातर्गत्वा रात्रौ तव सुखशयनं जातमिति या पृच्छति सा सुखशयनपृच्छिके-त्युच्यते; तेन प्रातः सुखशयनं प्रष्टुं गताऽस्मीत्यर्थः । अयं स्वागतादिवल्लौकि-काचारः । यथा **रघौ**—"भृग्वादीननुगृह्णन्तं सौखशायनिकानृषीन्" इति । लज्जावनतमुखीम्—अकृत्याद्भयं लज्जा; प्रकृते गुरोरनुमतिं विना वरस्वीकरणमेवा-कृत्यम्; तज्जन्यया लज्जया अधोमुखीमित्यर्थः । परिष्वज्य = आलिङ्ग्य । अयं परिष्वङ्गः अनुरूपभर्तृलाभहेतुकस्य परितोषस्यानुभावः । अभिनन्दनप्रकारमाह—**दिष्ट्येति** । दिष्ट्या = सौभाग्येन । सर्वदा अग्निहोत्रादिकर्मकाण्डप्रवणस्य महर्षेः कण्वस्य समुचितं दृष्टान्तमाह—**धूमाकुलितदृष्टेरपीति** । धूमाकुलितदृष्टेरित्या-दिना आत्मनोऽनुपस्थित्या अज्ञानम् । यजमानपदेन आत्मा, आहुतिपदेन शकुन्तला, पावकपदेन च राजा सादृश्याद्गम्यते इति सादृश्यनिबन्धना अप्रस्तुत-प्रशंसा । वत्से इति संबुद्ध्या शकुन्तलाविषयकः स्नेहप्रकर्षो द्योत्यते । सुशिष्य-परिदत्ता—शमदमादिगुणसम्पन्नः शिष्यः सुशिष्यस्तस्मै परिदत्ता = वितीर्णा । अशोचनीया = शोकानर्हा । यथा **कुमारसंभवे**—"अशोच्या हि पितुः कन्या

आहुदी पडिदा । वच्छे ! सुसिस्सपरिदिण्णा विज्जा विअ असोअणिज्जा संवुत्ता । अज्ज एव्व इसिरक्खिदं तुमं भत्तुणो सआसं विसज्जेमि त्ति ।

शृणु । इदानीं सुखशयनपृच्छिका शकुन्तलासकाशं गताऽस्मि । ततो यावदेनां लज्जावनतमुखीं परिष्वज्य तातकण्वेनैवमभिनन्दितम्—दिष्ट्या धूमाकुलितदृष्टेरपि यजमानस्य पावक एवाहुतिः पतिता । वत्से ! सुशिष्यपरिदत्ता विद्येवाशोचनीया संवृत्ता । अद्यैव ऋषिरक्षितां त्वां भर्तुः सकाशं विसर्जयामीति ।

**अनसूया**—अह केण सूइदो तादकण्णस्स वुत्तन्तो ?

अथ केन सूचितस्तातकण्वस्य वृत्तान्तः ?

**प्रियंवदा**—अग्गिसरणं पविट्ठस्स सरीरं विणा छन्दोमईए वाणिआए । ( संस्कृतमाश्रित्य )—

---

सद्भर्तृप्रतिपादिता" इति । शोच्यता हि अपात्रे प्रतिपादनात् भवति । अनेन तस्याः कृतकृत्यता ध्वनिता, गान्धर्वे स्वानुमतिश्च स्फुटं प्रदर्शिता । कन्यायाः पितृगृहावस्थानस्यानौचित्यमाकलयन्नाह—**अद्य एवेति** । ऋषिरक्षिताम्—ऋषिभिः = शार्ङ्गरवादिभिः रक्षिताम्; तत्सहायामित्यर्थः । विसर्जयामि = प्रेषयामि ।

अनसूया पृच्छति—**अह केण इति** । 'अथ केन सूचितस्तातकण्वस्य वृत्तान्तः' इति संस्कृतम् । अथेति प्रश्ने । सूचितः = आख्यातः । प्रियंवदोत्तरयति—**अग्गिसरणं इति** । 'अग्निशरणं प्रविष्टस्य शरीरं विना छन्दोमय्या वाण्या' इति संस्कृतम् । सूचित इति पूर्वेण संबन्धः । अग्निशरणम् = अग्निहोत्रगृहम् । "शरणं गृहरक्षित्रोः" **इत्यमरः** । शरीरं विना = अशरीरिण्येत्यर्थः । **संस्कृत-**

दुष्यन्तेनाहितं तेजो दधानां भूतये भुवः ।
अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव ॥ ४ ॥

अग्निशरणं प्रविष्टस्य शरीरं विना छन्दोमय्या वाण्या ।

---

माश्रित्येति । तथा चोक्तम्—

योऽयं विदूषकोन्मत्तबालतापसयोषिताम् ।
नीचानां पण्डकानां च नीचग्रहविकारिणाम् ॥
विद्वद्भिः प्राकृतं कार्यं कारणात्संस्कृतं क्वचित् । इति ।

अत्र अशरीरिणीवाण्यनुवाद एव कारणम् । यथास्थितस्यैवानुवादः; स च संस्कृतमन्तरेण न संभवतीति संस्कृताश्रयणम् ।

अशरीरिण्या वाचः स्वरूपमाह—दुष्यन्तेनेति । हे ब्रह्मन् ! दुष्यन्तेन आहितं तेजः भुवो भूतये दधानां तनयामग्निगर्भां शमीमिव अवेहि इत्यन्वयः ।

हे ब्रह्मन् = हे विशिष्टब्राह्मण ! दुष्यन्तेन = तन्नामकेन राज्ञा । नामनिर्देशेन अभिजनादिगुणसम्पत्तिः, प्रसिद्धत्वम्, आनुरूप्यं च द्योत्यते । आहितं = निषिक्त तेजः = रेतः । "शुक्रं तेजोरेतसी च" इत्यमरः । भुवः = भूमण्डलस्य भूतये = सम्पत्तये । भुवो भूतये इत्यादिनोक्तोऽयं भविष्यदर्थसारसंग्रहः बिभर्तीति भरत इति तद्गर्भस्य अन्वर्थतामावेदयति । दधानां = धारयन्तीं तनयां = तनोति कुलमिति स्वभर्तृकुलवृद्धिहेतुभूतां धर्मकन्यां शकुन्तलाम् । अग्निगर्भाम्—अग्निः गर्भे = मध्ये यस्यास्तथाविधां शमीमिव = तदाख्यवृक्षविशेषमिव अवेहि = जानीहि ।

शमीतरोरग्निगर्भत्वं श्रुतिप्रसिद्धम् । रघुवंशेऽपि—"शमीमिवाभ्यन्तरलीनपावकाम्" इति । अनयोपमया गर्भस्य तेजस्वित्वादिकं द्योत्यते । उपमानुप्रासावलङ्कारौ ।

**अनसूया**—( प्रियंवदामाश्लिष्य ) सहि ! पिअं मे, किंदु अज्ज एव्व सउन्दला णीअदि त्ति उक्कण्ठासाधारणं परितोसं अणुहोमि।

सखि ! प्रियं मे, किं त्वद्यैव शकुन्तला नीयत इत्युत्कण्ठासाधारणं परितोषमनुभवामि।

**प्रियंवदा**—सहि ! वअं दाव उक्कण्ठं विणोदइस्सामो। सा तवस्सिणी णिव्वुदा होदु।

---

अग्निशरणं प्रविष्टस्य महर्षेः कण्वस्य अशरीरिण्या छन्दोमय्या वाण्या यत् कथितं तदेव प्रियंवदा संस्कृतमाश्रित्य कथयति—'हे वेदविदांवर ! महाब्राह्मण ! महर्षे कण्व ! अखिलभूमण्डलस्य कल्याणाय राज्ञा दुष्यन्तेन निषिक्तं रेतआत्मकं तेजो दधानामचिरेणैव बिभर्तीति भरत इत्यन्वर्थनामानं सम्राजं तनयमुत्पादयिष्यन्तीमत एव मध्ये निवसता वह्निना द्योतमानां शमीमिव स्वतनयां शकुन्तलां जानीहि। दुष्यन्ताहितगर्भा ते कन्या अचिरादेव जगत्कल्याणकारिणं सम्राजं पुत्रं जनयिष्यति, तज्जानीहि' इति भावः॥ ४॥

प्रियंवदामाश्लिष्येति हर्षप्रकर्षानुभावः। अनसूया वदति—**सहि इति**। 'सखि ! प्रियं मे, किन्तु अद्यैव शकुन्तला नीयते इत्युत्कण्ठासाधारणं परितोषमनुभवामि' इति संस्कृतम्। प्रियं मे—इदं त्वयोक्तं वृत्तमिति शेषः। शकुन्तलाविरहस्य दुःसहत्वं संभावयन्ती आह—**किन्तु इति**। उत्कण्ठासाधारणम्—विरहोत्पन्ना महती वेदना उत्कण्ठा, तया साधारणं = समानम्। उत्कण्ठास्वीकृतैकांशमित्यर्थः। परितोषं = शकुन्तलायाः प्रियसमागमो भविष्यतीत्याकारकमानन्दम्। प्रियंवदोत्तरयति—**सहीति**। 'सखि ! आवां तावदुत्कण्ठां विनोदयिष्यावः। सा

---

१. कधं पि।

सखि ! आवां तावदुत्कण्ठां विनोदयिष्यावः । सा तपस्विनी निर्वृता भवतु ।

**अनसूया**—तेण हि एदस्सिं चूदसाहावलम्बिदे णारिएरसमुग्गए एतण्णिमित्तं एव्व कालन्तरक्खमा णिक्खित्ता मए [1]केसरमालिआ । ता इमं [2]हत्थसंणिहिदं करेहि; जाव अहं पि से मअलोअणं तित्थमित्तिअं दुव्वाकिसलआणि त्ति मङ्गलसमालम्भणाणि विरएमि ।

तेन ह्येतस्मिंश्चूतशाखावलम्बिते नारिकेलसमुद्गके एतन्निमित्तमेव कालान्तरक्षमा निक्षिप्ता मया केसरमालिका । तदिमां हस्तसंनिहितां कुरु; यावदहमपि तस्यै मृगरोचनां तीर्थमृत्तिकां दूर्वाकिसलयानीति मङ्गलसमालम्भनानि विरचयामि ।

---

तपस्विनी निर्वृता भवतु' इति संस्कृतम् । विनोदयिष्यावः = केनाप्युपायेनापनेष्यावः । तपस्विनी = प्रियविरहेण दीना । "मुनिदीनौ तपस्विनौ" इत्यमरः । निर्वृता = निश्चिता, सन्तुष्टेत्यर्थः ।

अथ शकुन्तलायाः प्रस्थानकौतुकनिर्वर्तने त्वरमाणाऽनसूया आह—**तेण हीति** । 'तेन हि एतस्मिन् चूतशाखावलम्बिते नारिकेलसमुद्गके एतन्निमित्तमेव कालान्तरक्षमा निक्षिप्ता मया केसरमालिका । तदिमां हस्तसन्निहितां कुरु; यावदहमपि तस्यै मृगरोचनां तीर्थमृत्तिकां दूर्वाकिसलयानीति मङ्गलसमालम्भनानि विरचयामि' इति संस्कृतम् । एतस्मिन्निति अङ्गुल्या निर्देशः । नारिकेलसमुद्गके = नारिकेलकपालरचिते सम्पुटके । "समुद्गकः सम्पुटकः" इत्यमरः । **कालान्तरक्षमेति** । बहुकालपर्यन्तं स्वसौरभं यथावदेव धारयन्तीत्यर्थः । बकुलमाला पर्युषिताऽपि सौरभं न मुञ्चतीति प्रसिद्धिः । केसरमालिका = बकुलमालिका निक्षिप्ता = निक्षेपवत्स्थापिता । इमां = मालां हस्तसन्निहितां कुरु = आनयेत्यर्थः । **यावदिति** । यावद्विरचयामि, तावदिति पूर्वेण संबन्धः । तस्यै = शकुन्तलार्थम् । मृगरोचनां

---

१ केसरगुण्डा । २ णलिणीवत्तसंगदं ।

**प्रियंवदा**—तह करीअदु ।

तथा क्रियताम् ।

( अनसूया निष्क्रान्ता । प्रियंवदा नाट्येन सुमनसो गृह्णाति । )

( नेपथ्ये )

गौतमि ! आदिश्यन्तां शार्ङ्गरवमिश्राः शकुन्तलानयनाय ।

**प्रियंवदा**—( कर्णं दत्त्वा ) अणसूए ! तुवरसु । एदे क्खु हत्थिणाउरगामिणो इसीओ सद्दावीअन्ति ।

अनसूये ! त्वरस्व । एते खलु हस्तिनापुरगामिन ऋषयः शब्दाप्यन्ते ।

( प्रविश्य समालम्भनहस्ता )

---

=गोरोचनाम् । "मृगः पशौ कुरङ्गे च" इति **विश्वः** । तीर्थमृत्तिकाम् = तीर्थप्रदेशसंभूतां लोहितां मनःशिलादिवत् वर्णकरणोपयुक्तां मृदम् । दूर्वाकिसलयानि = उत्तंसाद्यर्था दूर्वाङ्कुराः । मङ्गलसमालम्भनानि = मङ्गलालङ्करणानि । "समालम्भनमालेपे तिलकेऽलङ्कृतावपि" इति **यादवप्रकाशः** । विरचयामि = एकत्र करोमि । प्रियंवदोत्तरयति—**तहेति** । 'तथा क्रियताम्' इति संस्कृतम् । **सुमनसो गृह्णातीति** । पूर्वोक्तस्थलात्केसरमालामादत्ते इत्यर्थः ।

**नेपथ्ये इति** । इयं कण्वोक्तिः । आदिश्यन्ताम् = नियुज्यन्ताम् । शार्ङ्गरवमिश्राः—शार्ङ्गरवः = कण्वस्य प्रधानशिष्यः तन्मिश्राः = तत्सहिताः । यद्वा मिश्रशब्दो बहुवचनं च पूजायाम् ।

इमां कण्वोक्तिमाकर्ण्य प्रियंवदाऽनसूयां कथयति—**अणसूए इति** । 'अनसूये ! त्वरस्व । एते खलु हस्तिनापुरगामिनः ऋषयः शब्दाप्यन्ते' इति संस्कृतम् ।

**अनसूया**—सहि ! एहि; गच्छम्ह ।

सखि ! एहि; गच्छावः ।

( इति परिक्रामतः । )

**प्रियंवदा**—( विलोक्य ) एसा सुज्जोदए एव्व सिहामज्जिदा पडिच्छिदणीवारहत्थाहिं सोत्थिवाअणकाहिं तावसीहिं अहिणन्दीअमाणा सउन्दला चिट्ठइ । उवसप्पम्ह णं ।

एषा सूर्योदय एव शिखामज्जिता प्रतिष्ठितनीवारहस्ताभिः स्वस्तिवाचनिकाभिस्तापसीभिरभिनन्द्यमाना शकुन्तला तिष्ठति । उपसर्पाव एताम् ।

( इत्युपसर्पतः । )

( ततः प्रविशति यथोद्दिष्टव्यापाराऽऽसनस्था शकुन्तला । )

---

शब्दाप्यन्ते = आहूयन्ते । प्रियंवदोक्तिं श्रुत्वाऽनसूया उत्तरयति—**सहि** ! इति । 'सखि ! एहि, गच्छावः' इति संस्कृतम् ।

शकुन्तलां दृष्ट्वा प्रियंवदा वदति—**एसेति** । 'एषा सूर्योदये एव शिखामज्जिता प्रतिष्ठितनीवारहस्ताभिः स्वस्तिवाचनिकाभिस्तापसीभिरभिनन्द्यमाना शकुन्तला तिष्ठति । उपसर्पाव एताम्' इति संस्कृतम् । सूर्योदय एवेत्यनेन मुहूर्तप्रतीक्षणत्वरा सूच्यते । शिखामज्जिता = शिखामज्जनं स्नानं कारिता, सशिरस्कं स्नातेत्यर्थः । अभ्यङ्गस्नानं कारितेति यावत् । प्रतिष्ठितनीवारहस्ताभिः—प्रतिष्ठिताः = गृहीताः नीवारा यैः एवंभूता हस्ता यासां ताभिः । शून्यहस्तानामागमनमनुचितमिति नीवारेत्याद्युक्तम् । स्वस्तिवाचनिकाभिः—स्वस्तिवाचनम्= आशीर्वादः, पारम्पर्येण तदधिकारिणीभिः तापसीभिः = तपस्विसुवासिनीभिः अभिनन्द्यमाना = आशीर्भिरनुगृह्यमाणा । तापसीभिरिति बहुवचनेन शकुन्तलाप्रयाणप्रसङ्गात् वृन्दबाहुल्यं सूच्यते । तिष्ठति = तदाशिषः सबहुमानमङ्गीकृत्य तिष्ठतीत्यर्थः ।

अथ सूचितशकुन्तलाप्रवेशमाह—**तत इत्यादिना** । अभिनन्दनप्रकारमाह—

**तापसीनामन्यतमा**—( शकुन्तलां प्रति ) जादे ! भत्तुणो बहुमाणसूअअं महादेईसद्दं लहेहि ।

जाते ! भर्तुर्बहुमानसूचकं महादेवीशब्दं लभस्व ।

**द्वितीया**—वच्छे ! वीरप्पसविणी होहि ।

वत्से ! वीरप्रसविनी भव ।

**तृतीया**—वच्छे ! भत्तुणो बहुमदा होहि ।

वत्से ! भर्तुर्बहुमता भव ।

( इत्याशिषो दत्त्वा गौतमीवर्जं निष्क्रान्ताः । )

**सख्यौ**—( उपसृत्य ) सहि ! सुहमज्जणं दे [1]होदु ।

सखि ! सुखमज्जनं ते भवतु ।

**शकुन्तला**—साअअं मे सहीणं । इदो णिसीदह ।

---

**जादे इति** । 'जाते ! भर्तुर्बहुमानसूचकं महादेवीशब्दं लभस्व' इति संस्कृतम् । **भर्तुर्बहुमानसूचकमिति** । भर्तुः = महाराजस्य दुष्यन्तस्य बहुमानस्य = आदरस्य सूचकम् = अभिव्यञ्जकम् महादेवी इति शब्दम् = आख्यां लभस्व = प्राप्नुहि । भर्त्रा आदृता सती तस्य देवीषु श्रेष्ठा भवेत्यर्थः । अथ द्वितीया तापसी आशिषं प्रयुङ्क्ते—**वच्छे इति** । 'वत्से ! वीरप्रसविनी भव' इति संस्कृतम् । वीरप्रसविनी भव = वीरं कुमारं जनयस्वेत्यर्थः । तृतीया तापसी आशिषं प्रयुङ्क्ते—**वच्छे इति** । 'वत्से ! भर्तुर्बहुमता भव' इति संस्कृतम् । बहुमता = प्रिया ।

अथ सख्यौ शकुन्तलां ब्रूतः—**सहीति** । 'सखि ! सुखमज्जनं ते भवतु' इति संस्कृतम् । सुस्नानं ते भवत्वित्यर्थः । अयं स्वागतादिवत् प्रयोगः । पतिगृहप्रस्थानाङ्गमिदं मज्जनमिति पतिगृहप्राप्तिरूपफलेनाप्यस्य शोभनत्वं भवत्वित्यप्यभिप्रायः । सख्योरागमनेन सन्तुष्टा शकुन्तला आह—**साअअं इति** । 'स्वागतं

---

१ भूदं ।

स्वागतं मे सख्योः । इतो निषीदतम् ।

उभे—( मङ्गलपात्राण्यादाय उपविश्य ) हला ! [1]सज्जा होहि; जाव मङ्गलसमालम्भणं विरएम ।

हला, सज्या भव; यावन्मङ्गलसमालम्भनं विरचयावः ।

शकुन्तला—इदं पि बहु मन्तव्वं दुल्लहं दाणिं मे सहीमण्डणं भविस्सदि त्ति ।

इदमपि बहु मन्तव्यं दुर्लभमिदानीं मे सखीमण्डनं भविष्यतीति । ( इति बाष्पं विसृजति । )

उभे—सहि ! उइअं ण दे मङ्गलकाले रोइदुं ।

सखि ! उचितं न ते मङ्गलकाले रोदितुम् । ( इत्यश्रूणि प्रमृज्य नाट्येन प्रसाधयतः । )

---

मे सख्योः । इतो निषीदतम्' इति संस्कृतम् । निषीदतम् = उपविशतम् । मङ्गलपात्राणि = मङ्गलसमालम्भनपात्राणि । सख्यौ ब्रूतः—**हला** इति । 'हला, सज्या भव, यावन्मङ्गलसमालम्भनं विरचयावः' इति संस्कृतम् । सज्या भव = प्रसाधनार्थमङ्गप्रत्यङ्गानां प्रसारणाकुञ्चनादिनाऽभिमुखी भवेत्यर्थः । शकुन्तलोत्तरयति—**इदं पि** इति । 'इदमपि बहु मन्तव्यं दुर्लभमिदानीं मे सखीमण्डनं भविष्यतीति' इति संस्कृतम् । बहुमन्तव्यत्वे हेतुमाह—**दुर्लभमिति** । युवयोः अस्मत्पतिगृहवासासम्भवादितः परं सखीकर्तृकं मण्डनं मे दुर्लभं भविष्यतीत्यर्थः । **इति बाष्पं विसृजतीति** । विरहचिन्तया दुःखेनेति भावः । अथ सख्यौ ब्रूतः—**सहीति** । 'सखि ! उचितं न ते मङ्गलकाले रोदितुम्' इति संस्कृतम् । मङ्गलकाले रोदनानौचित्यमागमसिद्धम् । अनेन भविष्यद्वियोगः सूचितः । प्रसाधयतः = अलंकुरुतः ।

---

१ उज्जुआ ।

**प्रियंवदा**—आहरणोइदं रूवं अस्समसुलहेहिं पसाहणेहिं विप्पआरीअदि ।

आभरणोचितं रूपमाश्रमसुलभैः प्रसाधनैर्विप्रकार्यते ।

( प्रविश्योपायनहस्तौ )

**ऋषिकुमारकौ**—इदमलंकरणम् । अलंक्रियतामत्रभवती ।

( सर्वा विलोक्य विस्मिताः । )

**गौतमी**—वच्छ ! [1]णारअ ! कुदो एदं ?

वत्स ! नारद ! कुत एतत् ?

**प्रथमः**—तातकण्वप्रभावात् ।

---

अथ शकुन्तलां प्रसाधयन्ती प्रियंवदा तत्साधनानां तद्रूपाननुगुणत्वं पश्यन्ती सविषादमाह—**आहरणोइदं इति** । 'आभरणोचितं रूपमाश्रमसुलभैः प्रसाधनैर्विप्रकार्यते' इति संस्कृतम् । आभरणोचितम् = अनर्घहारकेयूरादियोग्यम् । विप्रकार्यते = विकृतं क्रियते । आश्रमसुलभैरित्यनेन आश्रमे नगरोचितानां प्रसाधनानामभावः सूच्यते । आश्रमवासिनां दारिद्र्यं पौरा लक्षयिष्यन्तीति खेदश्चाभिव्यज्यते ।

अथ प्रियंवदोक्तौ आभरणोचितं रूपमिति कथनेन आभरणसूचनात्तदानेत्रोराभरणहस्तयोः ऋषिकुमारयोः प्रवेशमाह—**प्रविश्योपायनहस्ताविति** । उपायनं = वृक्षादेरुपायनभूतं क्षौमादि । अत्रभवतीति प्रशंसासूचकम् । **सर्वा विलोक्य विस्मिता इति** । तपोवनेऽलङ्काराणामसंभावनया विस्मयः ।

गौतमी ऋषिकुमारकं पृच्छति—**वच्छेति** । 'वत्स ! नारद ! कुत एतत्'

---

[1] हारीद ।

**गौतमी**—किं माणसी सिद्धी ?

किं मानसी सिद्धिः ?

**द्वितीयः**—न खलु । श्रूयताम् । तत्रभवता वयमाज्ञप्ताः शकुन्तलाहेतोर्वनस्पतिभ्यः कुसुमान्याहरतेति । तत इदानीं—

**क्षौमं केनचिदिन्दुपाण्डु तरुणा [1]मङ्गल्यमाविष्कृतं**
**निष्ठ्यूतश्चरणोपभोगसुलभो लाक्षारसः केनचित् ।**
**अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै-**
**र्दत्तान्याभरणानि [2]तत्किसलयोद्भेदप्रतिद्वन्द्विभिः ॥ ५ ॥**

---

इति संस्कृतम् । उत्पन्नमिति शेषः । पुनर्गौतमी पृच्छति—**किं इति** । 'किं मानसी सिद्धिः' इति संस्कृतम् । मानसी = मनःसंकल्पजनिता । तथाविधा सिद्धिर्योगिनां प्रसिद्धा । **न खल्विति** । मानसी सिद्धिरित्यनुषज्यते । आभरणोत्पत्तिप्रकारमाह—**श्रूयतामिति** । तत्रभवता = पूज्येन कण्वेन । शकुन्तलाहेतोः = शकुन्तलायाः प्रसाधनार्थम् । वनस्पतिभ्यः = वृक्षेभ्यः आहरत = आनयत, आदत्तेत्यर्थः । **तत इदानीमिति** । अस्मासु कुसुमादानोद्युक्तेषु सत्स्वित्यर्थः ।

**क्षौममिति** । केनचित्तरुणा इन्दुपाण्डु मङ्गल्यं क्षौममाविष्कृतम् । केनचित् चरणोपभोगसुलभो लाक्षारसो निष्ठ्यूतः । अन्येभ्य आपर्वभागोत्थितैः किसलयोद्भेदप्रतिद्वन्द्विभिर्वनदेवताकरतलैराभरणानि दत्तानि इत्यन्वयः ।

अत्र वृक्षाणां मूलमध्याग्रदर्शनक्रमेणेयमुक्तिः । केनचित्तरुणा = धर्मारण्यस्थेन केनचिद् वृक्षेण इन्दुपाण्डु = चन्द्रवद्धवलम् । अनेन नैर्मल्यातिशयो मनोहरत्वं

---

१ माङ्गल्यम् । २ नः किसलयच्छायापरिस्पर्धिभिः ।

च ध्वन्यते। मङ्गल्यं = मङ्गलप्रयोजनकम्। अत्र मङ्गल्यशब्दो मङ्गलपर्यायः। अनुपहतदशं गोरोचनाचित्रितपर्यन्तमित्यर्थः। क्षौमं = पट्टांशुकविशेषः, तद्युगलमित्यर्थः। मङ्गले हि कर्मणि शुक्लं वस्त्रकुसुमादि ध्रियत इत्याचारः। आविष्कृतं = प्रकटीकृतम्, दत्तमित्यर्थः। केनचित्—तरुणेत्यनुषज्यते। धर्मारण्यस्थेन पूर्वोक्तादपरेण केनचिद्वृक्षेणेत्यर्थः। चरणोपभोगसुलभः—चरणयोः = पादयोरुपभोगः = रञ्जनादिनोपयोगः। तत्र तस्मै वा सुलभः = उचितः, पर्याप्तो वा। लाक्षारसेन चरणरञ्जनं स्त्रीणामाचारः। लाक्षारसः = अलक्तकद्रवः निष्ठ्यूतः = उद्गीर्णः, दत्त इत्यर्थः। अन्येभ्यः = वनदेवताऽधिष्ठितेभ्यो वृक्षान्तरेभ्यः सकाशात् आपर्वभागोत्थितैः—पर्वणः = सन्धेः भागः = प्रदेशः, मणिबन्ध इत्यर्थः। तस्मात् आ = तत्पर्यन्तम् उत्थितैः = उद्गतैः किसलयोद्भेदप्रतिद्वन्द्विभिः—किसलयोद्भेदाः = उद्भिद्यमानानि किसलयानि। अत्र उद्भेदपदस्य उद्भिद्यमानद्रव्ये लक्षणा, "कृदभिहितो भावो द्रव्यवत्प्रकाशते" इति न्यायात्। रक्तत्वकोमलत्वाद्यतिशयश्च व्यज्यते। तेषां प्रतिद्वन्द्विभिः = तुल्यैः। किसलयत्वेनैव प्रथमं प्रतीतिरासीदित्यनेन द्योत्यते। वनदेवताकरतलैः—वनदेवतानां = वनाधिष्ठात्रीणां देवतानां करतलैः = उत्तानैरालोहितैर्हस्तैः करणैः आभरणानि = मुक्तारत्नाद्यलंकृतानि भूषणानि दत्तानि = आवयोर्हस्ते समर्पितानि; न तु भूमौ पतितानि, भूपतितानां परिधानायोग्यत्वात्।

अत्र वनदेवताकरतलदत्ताभरणेन शकुन्तलाया आजन्म अवैधव्यं सौभाग्यमनर्घाभरणार्हत्वं च व्यज्यते। वृक्षाणां स्थावरत्वेऽपि चेतनवत् क्षौमाद्याविष्करणसामर्थ्यं कण्वतपःप्रभावानुमापकमेव। आविष्कृतं निष्ठ्यूतमिति शब्दद्वयेन एकस्यैवार्थस्याभिधानादर्थावृत्तिदीपकम्। अर्थापत्तिर्हेतुश्चालंकाराः। अद्भुतो रसः, तेन प्राधान्येन ध्वन्यमाना गुरुविषया रतिरुपस्क्रियते। शार्दूलविक्रीडितं वृत्तम्।

**प्रियंवदा**—( शकुन्तलां विलोक्य ) हला ! इमाए अब्भुववत्तीए सूइआ दे भत्तुणो गेहे अणुहोदव्वा राअलच्छि त्ति ।

हला, अनयाऽभ्युपपत्त्या सूचिता ते भर्तुर्गेहेऽनुभवितव्या राजलक्ष्मीरिति ।

( शकुन्तला व्रीडां रूपयति । )

**प्रथमः**—गौतम ! एह्येहि; [१]अभिषेकोत्तीर्णाय कण्वाय वनस्पतिसेवां निवेदयावः ।

---

ऋषिकुमारकोपनीतमाभरणसमुद्गकं दृष्ट्वा कुत एतदिति गौतम्या पृष्टे सति ऋषिकुमारकावुत्तरयतः—'तातकण्वाज्ञया शकुन्तलाहेतोर्वनस्पतिभ्यः कुसुमान्याहर्तुं प्रवृत्तयोरावयोः सतोस्तदानीं महर्षेः कण्वस्य निदेशवर्तिना तत्प्रियं चिकीर्षुणा केनचिद्धर्मारण्यस्थेन वृक्षेण इन्दुकुन्दधवलं मङ्गल्यं पट्टांशुकयुगलं स्वयमावयोर्हस्ते निहितम् । ततः परेण तादृशेन वृक्षेण स्त्रीसमयाचारसिद्धचरणरञ्जनोपयुक्तोऽलक्तकद्रवस्तत्कालमुद्गीर्णः । अथान्येभ्यस्तादृशेभ्यो वृक्षेभ्यः सद्यःसमुद्गतैः पूर्वं तत्किसलयतया प्रतीयमानैर्वस्तुतस्त्वदृश्यवनदेवतानामापर्वभागोत्थितैः करतलैरेव बहुविधान्यनर्घाण्याभरणानि आवयोर्हस्ते सन्निहितानि । तस्मादचिन्त्यः किल गुरोर्महर्षेः कण्वस्य तपःप्रभावः' इति भावः ॥ ५ ॥

अथ प्रियंवदा शकुन्तलां विलोक्य पूर्वम् आभरणोचितमित्यादिना प्रकाशितं खेदं परिहरन्ती सहर्षमाह—**हला इति** । 'हला, अनयाऽभ्युपपत्त्या सूचिता ते भर्तुर्गेहेऽनुभवितव्या राजलक्ष्मीरिति' इति संस्कृतम् । अनयाऽभ्युपपत्त्या = आभरणप्रदानरूपेणानेन वनदेवतानुग्रहेण । **सूचितेति** । देवताप्रसादस्य भविष्यच्छ्रेयःसूचकत्वादिति भावः । राजलक्ष्मीः = महादेवीपदप्राप्तिरूपा ।

शिष्ययोः प्रथमः स्वकृत्यमनुसन्धायाह—**गौतमेति** । अभिषेकोत्तीर्णाय—

---

१ अभिषेकार्थं मालिनीमवतीर्णाय ।

**द्वितीयः**—तथा।

( इति निष्क्रान्तौ। )

**सख्यौ**—अए! [1]अणुवजुत्तभूसणो अअं जणो। चित्तकम्मपरिअएण अङ्गेसु दे आहरणविणिओअं करेम्ह।

अये! अनुपयुक्तभूषणोऽयं जनः। चित्रकर्मपरिचयेनाङ्गेषु ते आभरणविनियोगं कुर्वः।

**शकुन्तला**—जाणे वो णेउणं।

जाने वां नैपुणम्।

---

अभिषेकात् = अवगाहनस्नानात् उत्तीर्णाय = जलाशयात्तीरं प्राप्ताय वनस्पतिसेवां = वनस्पतिकृतां क्षौमादिप्रदानरूपां सेवाम्। अत्र वनस्पतिपदं देवतानामप्युपलक्षणम्। तरुतद्देवतयोरभेदारोपेणेयमुक्तिः। अनेन महर्षेः कण्वस्य तपःप्रभावमाहात्म्यं ध्वन्यते।

अथ सख्यौ अलङ्करणे असामञ्जस्यं विचार्य तत्र स्वदोषं परिहरन्त्यौ आहतुः—**अए इति**। 'अये! अनुपयुक्तभूषणोऽयं जनः। चित्रकर्मपरिचयेन अङ्गेषु ते आभरणविनियोगं कुर्वः' इति संस्कृतम्। अनुपयुक्तभूषणः = अधृतालङ्कारः। चित्रकर्मपरिचयेन = आश्रमस्थदेवालयेषु चित्रस्थदेवतानां तेषु तेष्वङ्गेषु तेषां तेषामाभरणानां प्रत्यहं दर्शनपरिचयेनेत्यर्थः। आश्रमेषु तु देवतायतनानि भवन्त्येव। तथा चोक्तमाश्रमवर्णने—

देवतायतनानां च पूजाः प्रेक्ष्य कृता द्विजैः।
ब्रह्मलोकस्थमात्मानं मेने स नृपसत्तमः॥ इति।

शकुन्तलोत्तरयति—**जाणे इति**। 'जाने वां नैपुणम्' इति संस्कृतम्।

---

१ अणणुभूत।

(उभे नाट्येनालंकुरुतः।)

(ततः प्रविशति स्नानोत्तीर्णः कण्वः।)

कण्वः—

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम्।

---

नैपुणं = चातुर्यम्। कदाऽप्यधृताभरणयोरपि केवलं चित्रकर्मपरिचयेनैव समुचिताभरणविन्यासरूपं कौशलमित्यर्थः। अतो नैवं वक्तव्यमिति भावः। **नाट्येनालंकुरुत इति**। तत्र पादरञ्जननाटनं तु कर्तरीमुखेनालक्तकेन भवति। हंसास्येन च्यूतसन्दंशेन ऊर्मिकापरिधापनम्। एवमन्यदप्यनुसन्धेयम्। कर्तरीमुखलक्षणं यथा—

अश्लिष्टा मध्यमापृष्ठे संस्थिता तर्जनी यदा।
त्रिपताकस्य हस्तस्य तदा स्यात्कर्तरीमुखः॥
अलक्तकादिना पादरञ्जने। इति।

हंसास्यलक्षणं प्रागुक्तम्।

**तत इति**। स्नानोत्तीर्णः = पूर्वं स्नातः पश्चाज्जलाशयात् बहिरागतः, निर्वर्तिताभिषेकविधिरित्यर्थः। इदं सन्ध्यावन्दनादेरप्युपलक्षणम्।

अथ प्रवासात् प्रतिनिवृत्तो वैतानिकाग्निमुखादवगतशकुन्तलाविवाहवृत्तान्तः शकुन्तलाया अनुरूपवरप्राप्त्या प्रहृष्टो महर्षिः कण्वस्तदैव तां पतिकुलं प्रापयितुं शार्ङ्गरवादीन् शिष्यानादिश्य परिसमापितप्राभातिककृत्यः शकुन्तलाप्रेषणायोद्युक्तः स्नेहातिशयात्तद्विषयकं दुःसहं विरहदुःखमनुसन्दधान आह—**यास्यत्यद्येति**। अद्य शकुन्तला यास्यति इति हृदयमुत्कण्ठया संस्पृष्टम्। कण्ठः स्तम्भितबाष्प-

वैक्लव्यं मम तावदीदृशमिदं[1] स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं [2]नु तनयाविश्लेषदुःखैर्नवैः ॥ ६ ॥

वृत्तिकलुषः । दर्शनं चिन्ताजडम् । अरण्यौकसो मम तावत् स्नेहादीदृशमिदं वैक्लव्यम्, गृहिणो नवैस्तनयाविश्लेषदुःखैः कथं नु पीड्यन्ते इत्यन्वयः ।

अद्य = अस्मिन्नहनि, न त्विदानीम्; यदि इदानीमेव तदा का गतिर्भविष्यतीत्यर्थः । शकुन्तला = मम धर्मकन्या, शकुन्तैर्लालिता, तत्सकाशात् लब्धा, न तु आत्मजेति भावः । यास्यति = पतिगृहं गमिष्यति । न तु याता, नापि याति, अपि तु यास्यतीति मनसि कृतमात्रे एव ईदृगुत्कण्ठादिकम्, अन्यदा कीदृग्भविष्यतीति भावः । इतीति हेतौ । भविष्यच्छकुन्तलाप्रस्थानेनेत्यर्थः । हृदयं=शकुन्तलानुध्यानेन तन्मयीभूतं मे चेतः उत्कण्ठया = विरहवेदनया संस्पृष्टं = सम्यक् स्पृष्टम्, आक्रान्तम्, न त्ववगाढम्; तदप्युत्तरक्षणे भविष्यतीति भावः । उत्कण्ठया संस्पृष्टमित्युक्तेरुत्कण्ठायाः कर्तृत्वोक्त्या हठात्कारो व्यज्यते । कण्ठः = स्वरः, "कण्ठः शब्देऽन्तिके गले" इति **भोजः** । स्तम्भितबाष्पवृत्तिकलुषः—स्तम्भितया = वैक्लव्याप्रकाशनार्थममङ्गलपरिहारार्थं च कथञ्चिदन्तर्निरुद्धया बाष्पाणां = स्वरसतः प्रवृत्तानामश्रूणां वृत्त्या = उद्गमेन कलुषः = अस्पष्टः, गद्गद इति यावत् । बाष्पाणां स्तम्भितत्वे कारणं स्वगतधैर्यम् । दर्शनं = चक्षुः चिन्ताजडम्— चिन्तया = शकुन्तलानुध्यानेन जडं = पुरोगतविषयग्रहणासमर्थम् । अत्र प्राधान्यान्मनश्चक्षुषोः पारवश्यमुक्तमिन्द्रियान्तरपारवश्यस्याप्युपलक्षकम् । तथा चोक्तं **मालतीमाधवे**—"परिच्छेदव्यक्तिर्न भवति पुरःस्थेऽपि विषये" इति । अरण्यौकसः = वनवासिनः, जन्मनः प्रभृति तपस्तप्त्वा तपोवने वर्तमानस्येत्यर्थः ।

१ ईदृशमपि । २ न ।

मम = कण्वस्य, नित्यतपस्विनः शमदमादिगुणसम्पन्नस्य निरीहस्येत्यर्थान्तरसंक्रमितम्। तावत् = अपि, ममापीत्यर्थः। स्नेहात् = प्रीतिभावात् ईदृशम् = अनिर्वचनीयम् इदम् = अनुभूयमानं वैक्लव्यं = विह्वलता। गृहिणः = गृहस्थाः। इदमरण्यौकस इत्यस्य प्रतियोगि। नवैः = प्रथमोत्पन्नैः, द्वितीयवारादौ पूर्वानुभूतत्वान्न तथा दुःखमिति भावः। तनयाविश्लेषदुःखैः—तनयायाः = औरस्याः कन्यायाः। इदं शकुन्तलेत्यस्य प्रतियोगि। विश्लेषदुःखैः = विरहदुःखैः कथं = केन प्रकारेण। नुशब्दो वितर्के प्रश्ने वा। पीड्यन्ते = पीडाभाजः क्रियन्ते। दुःखस्य प्रतिव्यक्ति भिन्नत्वात् दुःखैरिति बहुवचनम्। निर्ममस्य ममापि यत् असह्यप्रायम्, मन्ये वराका विषयिणः तेन निर्जीवा एव भवन्तीत्यभिप्रायः।

अत्र प्राकरणिकान्मुनिवृत्तान्तादप्राकरणिको गृहस्थवृत्तान्तः कैमुतिकन्यायेनोक्त इति काव्यार्थापत्तिः, काव्यलिङ्गं च। किञ्च महर्षेः कण्वस्य शोको वर्णित इति-शकुन्तलाप्रस्थानालम्बनः, तद्गुणस्मरणाद्युद्दीपितः, बाष्पस्वरभङ्गाद्यनुभावितः, मतिचिन्ताविषादादिव्यभिचारिभिः पोषितः करुणो रसः प्राधान्येन व्यज्यते। 'ममाप्येवं वैक्लव्यं जातम्! इत्येतदद्भुतम्' इत्यर्थप्रतीत्या करुणोपस्कृतोऽद्भुतः प्रधानमित्यन्ये। शार्दूलविक्रीडितं वृत्तम्।

अथ शकुन्तलां पतिगृहं प्रेषयिष्यन् तद्विषयकस्नेहातिशयात् विक्लवो महर्षिः कण्वः शकुन्तलाप्रस्थानमनुसन्दधान आह—'अस्मिन् दिने शकुन्तला पतिगृहं यास्यति, न तु याता, न त्विदानीं याति; किन्तु अद्य यास्यतीत्यनुसन्धानमात्रेणैव तदनुध्यानेन तन्मयीभूतं मे हृदयं तदीयविरहवेदनया बाढं संस्पृष्टम्। मम स्वरश्च आत्मनो वैक्लव्याप्रकाशनार्थममङ्गलपरिहारार्थं च कथञ्चिदन्तर्निरुद्धया स्वरसतः प्रवृत्तानां बाष्पाणां प्रवृत्त्या गद्गदो जातः। समीहितशकुन्तलापुनर्दर्शनाभिध्यानेन मम चक्षुश्च पुरोगतविषयग्रहणासमर्थं जातम्। जन्मनः

( इति परिक्रामति । )

**सख्यौ**—हला सउन्दले ! अवसिदमण्डणासि । परिधेहि संपदं खोमजुअलं ।

हला शकुन्तले ! अवसितमण्डनाऽसि । परिधत्स्व सांप्रतं क्षौमयुगलम् ।

( शकुन्तलोत्थाय परिधत्ते । )

**गौतमी**—जादे ! एसो दे आणन्दपरिवाहिणा चक्खुणा परिस्सजन्तो विअ गुरू उवट्ठिदो । आआरं दाव पडिवज्जस्स ।

जाते ! एष ते आनन्दपरिवाहिणा चक्षुषा परिष्वजमान इव गुरुरुपस्थितः । आचारं तावत्प्रतिपद्यस्व ।

---

प्रभृति तपस्तप्त्वा तपोवने वर्तमानस्य निर्ममस्य निरीहस्य वनवासिनो मम यदि ईदृक् अनिर्वचनीयं वैक्लव्यं भवति, तर्हि गृहस्थाः प्रथमाविर्भूतैः स्वात्मजावियोगदुःखैः केन प्रकारेण पीड्यन्ते ! स प्रकारो दुर्ज्ञेयः' इति भावः ॥ ६ ॥

**इति परिक्रामतीति** । शकुन्तलासमीपमिति शेषः ।

सख्यावाहतुः—**हलेति** । हला शकुन्तले ! अवसितमण्डनाऽसि । परिधत्स्व सांप्रतं क्षौमयुगलम्' इति संस्कृतम् । अवसितमण्डना = परिसमाप्तालङ्कारप्रसाधना । अनयोक्त्या क्षौमयुगलपरिधानस्य प्राप्तकालत्वं सूचितम् । अत आह—**परिधत्स्वेति** । **उत्थायेति** । अन्यथा वस्त्रधारणस्याशक्यत्वात् । गौतमी वदति—**जादे इति** । 'जाते ! एष ते आनन्दपरिवाहिणा चक्षुषा परिष्वजमान इव गुरुरुपस्थितः । आचारं तावत्प्रतिपद्यस्व' इति संस्कृतम् । जाते = पुत्रि । ते इत्यस्य गुरुरित्यनेन संबन्धः । आनन्दपरिवाहिणा—आनन्दं=हर्षं परितो वाहयति=

शकुन्तला—( सव्रीडम् ) ताद ! वन्दामि ।

तात ! वन्दे ।

कण्वः—वत्से !

यथातेरिव शर्मिष्ठा भर्तुर्बहुमता भव ।
सुतं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥ ७ ॥

प्रेरयति, आनन्दातिशयं प्रकाशयतेत्यर्थः। सर्वे भावाश्चक्षुषि व्यज्यन्ते इति न्यायात्। आनन्दाश्रुपरिवाहिणेत्यर्थो वा। परिष्वजमानः=आलिङ्गन्। तथाविधेन चक्षुषा परिष्वजमान इवेत्युत्प्रेक्षया तदानीं गुरोर्विशेषतः सस्नेहनिरीक्षणं गम्यते। गुरुः=महर्षिः कण्वः। आचारम्=अभ्युत्थानवन्दनादिकं प्रतिपद्यस्व=विधेहि। अनेन कर्तव्यमूढा सा भूरिति तत्कालोचितः शिक्षाविशेषः कृतः। सव्रीडमिति। सलज्जमित्यर्थः। शकुन्तलायास्तदानीन्तनस्वावस्थानुसन्धानाल्लज्जा। 'तात ! वन्दे' इति संस्कृतम्।

अथ महर्षिः कण्वः 'वत्से' इति स्नेहातिशयव्यञ्जकं सम्बोधनं प्रयुज्य तदनुरूपामाशिषं प्रयुङ्क्ते—यथातेरिति। हे वत्से ! ययातेः शर्मिष्ठेव भर्तुर्बहुमता भव। सा पूरुमिव त्वमपि सम्राजं सुतमवाप्नुहि इत्यन्वयः।

हे वत्से=धर्मकन्ये शकुन्तले ! ययातेः=तन्नाम्नः सोमवंशीयस्य कस्यचिद्राज्ञः शर्मिष्ठेव=तदभिधाना तन्महिषीव। एतच्चरितं महाभारते प्रसिद्धम्। भर्तुः=पत्युर्दुष्यन्तस्य बहुमता=प्रिया भव। वर्तमाने क्तः। बहुमानो महादेवीपदप्राप्त्यादिना संमानः; न तु स्नेहमात्रम्। सा=शर्मिष्ठा पूरुमिव=चन्द्रवंशस्य कर्तारं पूरुनामकं राजानं पुत्रमिव त्वमपि सम्राजं=चक्रवर्तिनं सुतं= पुत्रम् अवाप्नुहि=लभस्व।

**गौतमी**—भअवं ! वरो क्खु एसो, ण आसिसा।

भगवन् ! वरः खल्वेषः, नाशीः।

---

अत्रोपमया बह्वीष्वपि राजपत्नीषु त्वमेव प्रधानमहिषी भूयाः, तथा तव पुत्र एव यौवराज्येऽभिषिक्तो भवत्विति च दर्शितम्। अनुष्टुप् वृत्तम्।

सलज्जं वन्दमानां शकुन्तलां वीक्ष्य सस्नेहमाशिषं प्रयुञ्जानो महर्षिः कण्व आह—'वत्से शकुन्तले ! महाराजस्य ययातेः शर्मिष्ठानाम्नी राज्ञी यथा सर्वेष्वन्तःपुरेषु प्रधानभूता प्रिया महादेव्यासीत्, तथैव त्वमपि स्वभर्तुर्महाराजदुष्यन्तस्य प्रियतमा भूत्वा तन्महादेवीपदं लभस्व। किञ्च शर्मिष्ठासुत· पूरुर्यथा चन्द्रवंशस्य कर्ता ययातिसिंहासनस्योत्तराधिकार्यभूत्, तथैव तव पुत्रोऽपि महाराजदुष्यन्तसिंहासनस्योत्तराधिकारी भूत्वा चक्रवर्ती भरतवंशस्य कर्ता सम्पद्यताम्' इति भावः॥ ७॥

अनेन क्रमलक्षणमङ्गमुपक्षिप्तम्; "तत्त्वोपलब्धिरिष्टस्य क्रम इत्यभिधीयते" इति। आशीर्वादव्याजेन तस्य वरत्वेन च कथनात् आशीर्लक्षणो नाट्यालङ्कारोऽपि, "आशीरिष्टजनाशंसा" इति तल्लक्षणात्।

गौतमी वदति—**भअवं इति**। 'भगवन् ! वरः खल्वेषः, न आशीः' इति संस्कृतम्। वरः खल्वेषः नाशीः—देवाद् वृते वरः, हितैषणामात्रम् आशीः। यद्वा अभीष्टस्य प्रार्थनमाशीः; वरस्तु तस्य विधिरभीष्टसाधनसमर्थः। प्रस्थानकाले शकुन्तलाकृतवन्दनानन्तरं समुदाचारप्रयुक्ताऽप्येषा आशीस्त्वन्मुखप्रवृत्तत्वात् वर एवेत्यर्थः। उक्तं च—"ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति" इति।

---

१ जादे।

कण्वः—वत्से ! इतः सद्योहुताग्नीन्प्रदक्षिणीकुरुष्व ।

( सर्वे परिक्रामन्ति । )

कण्वः—( ऋक्छन्दसाऽऽशास्ते । )—

अमी वेदिं परितः क्लृप्तधिष्ण्याः
समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः ।
अपघ्नन्तो दुरितं हव्यगन्धै-
र्वैतानास्त्वां वह्नयः पावयन्तु ॥ ८ ॥

अथ महर्षिः कण्वः शकुन्तलायै प्रयाणाङ्गं कर्तव्यमुपदिशति —वत्से इति । इतः = अत्र देशे सद्योहुतान् = अस्मिन्नेव क्षणे तर्पितान्, कृताग्निकार्यानित्यर्थः । अग्नीन् = त्रेताग्नीन् । प्रदक्षिणीकुरुष्वेत्याचारः । यथोक्तमनेनैव महाकविना— "प्रदक्षिणीकृत्य हुतं हुताशम्" इति । ऋक्छन्दसा = ऋक्छन्दोग्रथितेन वाक्येनेत्यर्थः ।

श्लोकात्मकं तद्वाक्यमाह—अमी इति । अमी समिद्वन्तो वेदिं परितः क्लृप्तधिष्ण्याः प्रान्तसंस्तीर्णदर्भा हव्यगन्धैर्दुरितमपघ्नन्तो वैताना वह्नयस्त्वां पावयन्तु इत्यन्वयः ।

अमी = पुरोदृश्यमानाः समिद्वन्तः—समिधः = यज्ञकाष्ठानि सन्ति येषां तादृशाः, ज्वलितसमिध इत्यर्थः । वेदिं परितः = यज्ञवेद्याः समन्तात् क्लृप्तधिष्ण्याः—क्लृप्तानि = विहितानि धिष्ण्यानि = स्थानानि, "धिष्ण्यं स्थानं गृहे भेऽग्नौ" इत्यमरः । येषां तथाविधाः, प्रथमाधानसमये एव त्रिधाकल्पितस्थाना इत्यर्थः । यद्वा होमानन्तरं प्रतिदिनमेकीभूताः, पुनर्होमकाले पृथक्कल्पितस्थानाः । प्रान्तसंस्तीर्णदर्भाः—प्रान्तेषु = पार्श्वेषु संस्तीर्णाः=आस्तृताः दर्भाः =

प्रतिष्ठस्वेदानीम् । ( सदृष्टिक्षेपम् ) क ते शार्ङ्गरवमिश्राः ?

( प्रविश्य )

---

कुशा येषाम् । हव्यगन्धैः = दह्यमानसमिदाज्यचर्वादिसुरभिगन्धैः दुरितं = पापम् अपघ्नन्तः = नाशयन्तः । यथोक्तमनेनैव महाकविना वसिष्ठाश्रमवर्णनप्रसङ्गे **रघुवंशे—**

अभ्युद्धृताग्निपिशुनैरतिथीनाश्रमोन्मुखान् ।

पुनानं पवनोद्धूतैर्धूमैराहुतिगन्धिभिः ॥ इति ।

वैतानाः = यज्ञसंबन्धिनो वह्नयः=गार्हपत्यादयः त्वां पावयन्तु = मनोवृत्तिशोधनेन पवित्राशयां कुर्वन्तु ।

पावनसामर्थ्यं वह्नीनां विशेषणैः सूच्यते । सप्तभिरग्निसंबन्धिभिर्विशेष्यविशेषणवाचकैः शब्दैरग्नेः सप्तजिह्वत्वं सूच्यते । स्वभावोक्तिः परिकरश्चालङ्कारौ । मुनेरग्निषु भक्तिः प्राधान्येन व्यज्यते । वैदिकं छन्दः ।

पतिगृहं प्रयान्तीं शकुन्तलां सद्योहुताग्निप्रदक्षिणीकरणे नियुज्य तानग्नीन् तदभीष्टसिद्धये प्रार्थयमानो महर्षिः कण्व आह—'एते पुरोदृश्यमानाः प्रज्वलत्समिधः प्रकाशमाना यज्ञवेद्याः समन्तात् स्वस्वस्थानेषु कृताधिष्ठानाः कुण्डप्रान्तेषु प्रतिदिशं दर्भैर्विराजमाना दह्यमानसमिदाज्यचर्वादिहव्यसुरभिगन्धैस्तान् जिघ्रतां पापानि दूरीकुर्वन्तो यज्ञसंवन्धिनो दक्षिणाग्निगार्हपत्याहवनीयाख्यास्त्रेताग्नयस्त्वन्मनोवृत्तिशोधनद्वारा त्वां पूताशयां कुर्वन्तः पालयन्तु' इति भावः ॥ ८ ॥

**प्रतिष्ठस्वेदानीमिति** । मुहूर्तोऽतिक्रामति, विलम्बो न कार्य इति भावः । इदानीमित्यनेन स्वरविज्ञानाभिज्ञतया अनुगुणभूतोदयं लक्षयित्वा तत्कालस्य शोभनत्वं द्योत्यते । सदृष्टिक्षेपम्—तस्मिन् देशे शिष्योपस्थितिसम्भावनया तान्

**शिष्यः**—भगवन् ! इमे स्मः ।

**कण्वः**—भगिन्यास्ते मार्गमादेशय ।

**शार्ङ्गरवः**—इत इतो भवती ।

( सर्वे परिक्रामन्ति । )

**कण्वः**—भो भोः [1]संनिहितदेवतास्तपोवनतरवः !

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु[2] या
नादत्ते प्रियमण्डनाऽपि भवतां स्नेहेन या पल्लवम् ।
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥ ९ ॥

---

विलोकयितुं परितो दृष्टिक्षेपं कृत्वेत्यर्थः । क ते—पूर्वमादिष्टाः । इमे स्मः—उपस्थिता इति शेषः । **भगिन्या इति** । धर्मभगिन्या इत्यर्थः । शिष्यस्यापि धर्मतः पुत्रत्वात् । **इत इतो भवती** = अनेन पथा भवती आगच्छत्वित्यर्थः ।

कण्वोक्तौ भो भो इति सम्बोधने । सन्निहितदेवताः = वनदेवतानामाश्रयभूताः तपोवनतरवः = तपोवनस्था वृक्षाः । अत्र तपोवनस्थानां तरूणां फलपुष्पपल्लवच्छायानां तपस्विभिरुपभुज्यमानत्वात् तत्तपःसंबन्धः । तेन च चैतन्यान्वितत्वम्, ततश्चानुज्ञाप्रार्थनोपपत्तिः ।

**पातुमित्यादि** । या युष्मासु अपीतेषु प्रथमं जलं पातुं न व्यवस्यति । प्रियमण्डनाऽपि या भवतां स्नेहेन पल्लवं न आदत्ते । वः आद्ये कुसुमप्रसूतिसमये यस्या उत्सवो भवति । सेयं शकुन्तला पतिगृहं याति, सर्वैरनुज्ञायताम् इत्यन्वयः ।

---

१ संनिहिताः । २ असिक्तेषु ।

या = शकुन्तला युष्मासु = भवत्सु वृक्षेषु अपीतेषु—न विद्यते पीतं = पानं येषां तेषु। पीतमिति अर्शआद्यजन्तं वा। पादपाः पादैः पिबन्तीति प्रसिद्ध्या एवमुक्तम्। पानेनात्र सेचनं विवक्षितम्। भवत्सु अकृतसेकेषु सत्स्वित्यर्थः। प्रथमं = पूर्वं जलं = पानीयम्। अपीत्यस्याध्याहारः; फलमूलादेः का कथेत्यर्थः। पातुं न व्यवस्यति = न व्यवसायं करोति। प्रथमं जलं न पिबतीत्येव न; प्राथमिकेऽपि जलपाने मनोऽपि न करोतीत्यर्थः। व्यवस्यतीति वर्तमानप्रत्ययेन अधुनाऽपि एतदवस्थाया अप्यस्या अयमेव क्रम इति ध्वन्यते। प्रियमण्डनाऽपि = अलङ्कारप्रियाऽपि। अयं मुग्धास्वभावः। अयं पल्लवादाने हेतुरुक्तः। या = शकुन्तला भवतां स्नेहेन = भवद्विषयकेणानुरागानुबन्धेन पल्लवं = नवदलम्। भवतामिति शेषः। न आदत्ते = न गृह्णाति। न लुनातीत्यर्थः। वः = युष्माकम् आद्ये = प्रथमे कुसुमप्रसूतिसमये—कुसुमप्रसूतिः = कोरकोद्गमः तस्य समये, प्रथमकलिकास्फुटने इत्यर्थः। अत्र समयशब्देन तन्मात्रापेक्षित्वं सूचयता शकुन्तलायास्तद्विषये औत्सुक्यातिशयः सूच्यते। यस्याः = एवंविधाया अस्याः शकुन्तलायाः उत्सवः = देवोत्सवपुत्रोत्सवादिवत् परमानन्दो भवति। भवदाद्यकुसुमदर्शनसमयजो हर्षातिशयो वक्तुमेव न सुशक इति भावः। सा = युष्मास्वेवंविधवात्सल्यातिशयशालिनी इयं = पतिगृहप्रस्थानवेषेण युष्मानामन्त्रयितुं समुपागता युष्मत्पुरःस्था, शकुन्तला—नामग्रहणेन लालनीयत्वातिशयः सूच्यते। पतिगृहं याति = पतिगृहं गन्तुमुपक्रमते। सर्वैः = युष्माभिः सम्भूय। प्रत्येकमनुज्ञाकरणे कालविलम्बः स्यादिति भावः। अनुज्ञायताम् = पतिगृहप्रमाणानुरूपशुभाशीर्वचनवर्धितं स्वस्नेहानुरूपं चानुमोदनं क्रियतामित्यर्थः। पतिगृहमित्यनेन अनुज्ञानस्य औचित्यं ध्वनितम्।

अत्र वाक्यत्रयार्थस्य चतुर्थवाक्यार्थोपपादकत्वात् काव्यलिङ्गम्, द्वितीयपादे

विशेषोक्तिः, तरुषु चेतनव्यवहारससारोपात् समासोक्तिश्चेत्यलंकाराः। अत्र पादत्रये शकुन्तलायास्तरुषु स्नेहातिशयो ध्वन्यते। तस्य द्वितीयपादे 'स्नेहेन या पल्लवम्' इत्यादिना पुनः स्नेहपदेनानुवादस्तदतिशयप्रकाशनार्थः; मुनेराज्ञया गौतम्या नियोगादित्यादिहेत्वन्तरनिरासार्थश्च। वृक्षाननुज्ञाप्य शकुन्तलां प्रस्थापयितुं स्वारसिकी मुनेः प्रवृत्तिः शकुन्तलायामिव तत्संबन्धितया वृक्षेषु मुनेर्वात्सल्यातिशयं बोधयतीति भावोपस्कृतो भावोऽत्र प्राधान्येन ध्वन्यते। धर्मारण्ये शकुन्तलादुष्यन्तयोः प्रथमदर्शनात्प्रभृति क्रमशः सबीजस्य, उद्भिन्नाङ्कुरस्य, पल्लवितस्य, पुष्पितस्य च सर्वस्यानुरागवृत्तान्तस्य साक्षिणो वयस्यास्थानीया इमे वृक्षा इति विशेषगुणोऽपि अनुज्ञाप्रार्थनमुखेन कविना प्रकाशितः। शार्दूलविक्रीडितं वृत्तम्।

अथ आत्मानं वन्दित्वा अग्नीन् प्रदक्षिणीकृत्य पतिगृहं प्रस्थातुमुद्यतां दुहितरं शकुन्तलां दृष्ट्वा महर्षिः कण्वः पुत्रप्रायान् तपोवनतरून् आमन्त्रयन्नाह—'भो भो तपोवनदेवताऽधिष्ठितास्तरवः! येयं भवतां भगिनी शकुन्तला भवत्सु स्नेहातिरेकेण भवद्भ्यो जलदानात्पूर्वं जलपाने मनोऽपि न करोति, भवतः पाययित्वैव या प्रत्यहं पयः पिबति। मुग्धास्वभावानुसारेण पुष्पपल्लवालङ्कारनिर्माणे सकौतुकस्पृहाऽपि भवत्सु स्नेहातिशयवशात् पल्लवच्छेदेन भवतां पीडा भवेदिति बुद्ध्यैव अलङ्कारस्पृहां बलात् दमयन्ती भवतामेकमपि पल्लवं न लुनाति। प्रतिदिनं पयोदानावसरे भवतां विकासोन्मुखतां निरीक्षमाणाया अत एव आद्यकुसुमप्रसूतिसमयं प्रतीक्षमाणायाः तस्मिन् सम्पन्ने यस्या देवोत्सवपुत्रोत्सवादिवत् महानुत्सवो भवति। भवत्स्वेवंविधस्नेहातिशयशालिनी पतिगृहप्रस्थानवेषेण भवत आमन्त्रयितुं भवतां पुरः समुपस्थिता इयं भवतां मम च सुतरां लालनीया शकुन्तला पतिगृहं याति। अयमेव क्षणो मुहूर्तः। तत् सर्वैर्भवद्भिः सम्भूय, न तु प्रत्येकम्, कालः सूक्ष्मः। अतोऽस्याः पतिगृहप्रयाणानुगुणं शुभाशीर्वचनवर्धितमनुमननं क्रियताम्' इति भावः ॥ ९ ॥

( कोकिलरवं सूचयित्वा )

अनुमतगमना शकुन्तला
तरुभिरियं वनवासबन्धुभिः।
परभृतविरुतं कलं [1]यथा
प्रतिवचनीकृतमेभिरीदृशम् [2] ॥१०॥

---

**कोकिलरवं सूचयित्वेति।** इदं कोकिलरवसूचनं नेपथ्यगतनटकर्तृकम्। ते हि सुशिक्षिताः शकुन्तशब्दं कुर्वन्ति।

अथ महर्षिः कण्वः स्वप्रार्थनानुरूपां शकुन्तलागमने तपोवनवृक्षानुमतिमाह—

**अनुमतगमनेति।** इयं शकुन्तला वनवासबन्धुभिस्तरुभिरनुमतगमना। यथा एभिरीदृशं कलं परभृतविरुतं प्रतिवचनीकृतम् इत्यन्वयः।

इयम् = एषा प्रस्थानोन्मुखी शकुन्तला वनवासबन्धुभिः—वनवासस्य = आश्रमावस्थानस्य बन्धुभिः = भ्रातृभूतैः, स्निग्धजनैरित्यर्थः। तरुभिः = तपोवनवृक्षैः अनुमतगमना—अनुमतम् = अनुज्ञातं गमनं = पतिगृहयात्रा यस्यास्तथाविधा जाता। यथा = यस्मात् एभिः = तपोवनवृक्षैः ईदृशम् = एवंविधम्, उक्तप्रकारमित्यर्थः। अस्या वचसा समानस्वरमिति यावत्। कलं = मधुरम्। इदं स्त्रीनादविवक्षया। परभृतविरुतम्—अत्र परभृतपदेन कोकिलस्त्रियो विवक्षिताः, तासां विरुतं = मञ्जु कूजितं प्रतिवचनीकृतं = प्रत्युत्तरवत् उपन्यस्तम्। यस्मादेभिरेवंविधं विरुतं प्रतिवचनीकृतं तस्मादनुमतगमनेति ज्ञायत इति संबन्धः।

अत्र तपोवनवृक्षाः विरुतेन शकुन्तलां प्रत्येवानुमन्यन्ते स्म, न तु कण्वमित्यपि विरुतस्य परभृतसंबन्धकथनेन ईदृशमिति विशेषणस्वारस्येन च प्रकाश्यते।

---

१ यतः। २ एभिरात्मनः।

( आकाशे )

रम्यान्तरः कमलिनीहरितैः सरोभि-
श्छायाद्रुमैर्नियमितार्कमयूखतापः ।
भूयात्कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्च शिवश्च पन्थाः ॥११॥

अन्यथा यस्य कस्यापि पक्षिणो रुतेन प्रतिवचनमभविष्यत् । यात्राकाले कोकिल-रुतं सुनिमित्तं मन्यन्ते शकुनज्ञाः । अत्रानुमानं काव्यलिङ्गं वा । तरुषु बन्धुत्वं विरुते प्रतिवचनत्वं चारोप्यते इति रूपकं च । विरुतस्य प्रतिवचनेन रूपेण प्रतिरूपयोगात् परिणामो वा । मुनेरचेतनान् वृक्षान्प्रति अनुज्ञाप्रार्थनेन तस्य तेषु वात्सल्यातिशयः प्रकाश्यते । अपरवक्त्रं वृत्तम् ।

तपोवनतरून् शकुन्तलागमनानुमतिप्रदानाय प्रार्थ्य तत्कालं कोकिलरुतं श्रुत्वा महर्षिः कण्व आह—'आशैशवादस्याः शकुन्तलाया वनवाससाहचर्येण भ्रातृभूतैरेतैस्तपोवनतरुभिर्मत्प्रार्थनानुरूपमेषा शकुन्तला पतिगृहगमनाय अनु-मतेति मन्ये । यत एतैरस्याः समानस्वरं मधुरं कोकिलाङ्गनानां मञ्जु कूजितं प्रत्युत्तरवदुपन्यस्तम् । तस्मात् एभिः शकुन्तला अनुमतगमनैव । अन्यथा यस्य कस्यापि पक्षिणो रुतस्य प्रतिवचनीकर्तव्यता अभविष्यत् । कोकिलरुतं च यात्राकाले सुनिमित्तमिति शकुनज्ञा मन्यन्ते' इति भावः ॥ १० ॥

अथ वनदेवतानामनुज्ञाप्रकारं दर्शयति—**आकाशे—रम्यान्तर इत्या-दिना** । कमलिनीहरितैः सरोभिः रम्यान्तरः छायाद्रुमैर्नियमितार्कमयूखतापः अस्याः पन्थाः कुशेशयरजोमृदुरेणुः शान्तानुकूलपवनश्च शिवश्च भूयात् इत्यन्वयः ।

अस्याः पन्थाः—एवं भूयादिति संबन्धः । कमलिनीहरितैः–कमलिनीभिः =

पद्मिनीभिः, पद्मपङ्क्तिभिर्वा निरन्तरव्याप्ताभिः हरितैः = श्यामैः, तत्त्वेन दूरादेव दृश्यमानैरित्यर्थः। एतादृशैः सरोभिः = तडागैः। मार्गे तत्र तत्रास्याः श्रमविनोदनार्थं तादृशानि सरांसि सन्त्वित्यर्थः। रम्यान्तरः—रम्याणि = श्यामत्वसंबन्धान्मनोहराणि अन्तराणि = मध्यानि यस्य। अत्र अन्तरपदेन इतस्तपोवनादारभ्य भर्तृगृहं यावत् मध्यगामी मार्गो विवक्षितः। सरोभिरिति बहुवचनेन प्रतिपदं सरसः सत्त्वं सूचितम्। छायाद्रुमैः—छायाप्रधाना द्रुमाः छायाद्रुमाः, शाकपार्थिवादित्वात्समासः। छायाबहुला वृक्षाः, तैः नियमितार्कमयूखतापः—नियमितः = शमितः अर्कस्य = सूर्यस्य मयूखानां = दीप्तीनां तापो यत्र। तत्र तत्र तापशमनाय छायावृक्षाश्च भूयासुरित्यर्थः। अर्कस्य दीप्त्यविनाभावेऽपि पुनर्मयूखपदोपादानेन मध्याह्नस्था दीप्तिर्लक्ष्यते। तापाधिक्यं फलम्। अस्याः = शकुन्तलायाः पन्थाः = मार्गः कुशेशयरजोमृदुरेणुः—कुशेशयस्य = अम्बुजस्य रजोभिः, रजांसीव वा मृदुः = कोमलः रेणुः = धूलिर्यत्र सः। अनेन चरणानुपघातो व्यज्यते। यत्र पादोपघाताभावाय मार्गरेणवः पद्मपरागमृदवो भवन्त्वित्यर्थः। शान्तानुकूलपवनश्च—शान्तः = अरूक्षः, मन्द इति यावत्। अनुकूलः = सुखकरः, गत्यनुकूलो वा पवनः = वातो यत्र। अत्र अनुकूल इति पवनविशेषणेन शुभनिमित्तत्वं दर्शितम्। उक्तं च—"पवनस्यानुकूलत्वात्प्रार्थनासिद्धिशंसिनः" इति। शिवश्च—शिवः = मङ्गलः, पङ्कपाषाणकण्टकव्याघ्रचौरादिरहित इति यावत्। चकारौ समुच्चये। अनेन वयमनुमन्यामहे इति वनदेवताभिर्गमनानुज्ञा कृतेति प्रकाश्यते। तेन शकुन्तलाविषयको वनदेवतास्नेहातिशयश्च ध्वन्यते।

अत्र कमलिनीहरितैरित्यत्र तद्गुणः; रजोमृदुरित्यत्र उपमा, परिकरश्चेत्यलंकाराः। योग्येन वायुना योग्यस्य पथः संबन्धद्योतनात् समालंकारो व्यङ्ग्यः। परस्परोपकरणादन्योन्यालङ्कारोऽपि। वसन्ततिलका वृत्तम्।

( सर्वे सविस्मयमाकर्णयन्ति । )

**गौतमी**—जादे ! णादिजणसिणिद्धाहिं अणुण्णादगमणासि तवोवणदेवदाहिं । पणम भअवदीणं ।

जाते ! ज्ञातिजनस्निग्धाभिरनुज्ञातगमनाऽसि तपोवनदेवताभिः । प्रणम भगवतीः ।

**शकुन्तला**—( सप्रणामं परिक्रम्य जनान्तिकम् ) हला पिअंवदे !

---

अथ वनदेवताभिः शकुन्तला यथा गमनायानुज्ञाता तं प्रकारं वर्णयन् कविराह—'इयं सुकुमाराङ्गी बाला शकुन्तला पतिगृहं प्रयान्ती मध्येमार्गं न कामपि पीडां लभतामिति हेतोरितस्तपोवनादारभ्य अस्या भर्तृगृहं यावत् मध्यगतो मार्गस्तत्र तत्रास्याः श्रमविनोदनार्थं निरन्तरव्याप्ताभिः कमलिनीभिः श्यामलैः सरोभिः पूर्णः छायाबहुलवृक्षराजितिरोहितमध्याह्नार्कमरीचितापश्च भवतु, किञ्च सुकुमाराङ्ग्या अस्याश्चरणोपघातपरिहारार्थं कमलधूलिमृदुरेणुयुक्तो मन्दगमनानुकूलपवनयुक्तः पङ्कपाषाणकण्टकव्यालचौरादिरहितश्चास्या मार्गो भवतु । सुखमसौ गच्छतु; मध्ये न किञ्चित्प्रतिबन्धकं भूयात्' इति भावः ॥ ११ ॥

**सविस्मयमिति** । अत्र असम्भावनया विस्मयः । अथ गौतमी वनदेवतानामेव तद्वचनमिति निश्चिन्वाना शकुन्तलां तत्कर्तव्यमुपदिशति—**जादे इति** । 'जाते ! ज्ञातिजनस्निग्धाभिरनुज्ञातगमनाऽसि तपोवनदेवताभिः । प्रणम भगवतीः' इति संस्कृतम् । जाते = पुत्रि ! ज्ञातिजनस्निग्धाभिः = संबन्धिजनवत् स्नेहशीलाभिः । अयमनुज्ञाने हेतुः ।

अथ शकुन्तला चिरपरिचिततपोवनविरहवैक्लव्यं सखीं प्रत्याह—**हलेति** । 'हला प्रियंवदे ! नन्वार्यपुत्रदर्शनोत्सुकाया अप्याश्रमपदं परित्यजन्त्याः दुखेन मे चरणौ पुरतः प्रवर्तेते' इति संस्कृतम् । आश्रमपदं परित्यजन्त्याः = आश्रमात्प्रति-

णं अज्जउत्तदंसणुस्सुआए वि अस्समपदं परिच्चअन्तीए दुक्खेण मे चलणा [1]पुरदो पवट्टन्ति ।

हला प्रियंवदे ! नन्वार्यपुत्रदर्शनोत्सुकाया अप्याश्रमपदं परित्यजन्त्या दुःखेन मे चरणौ पुरतः प्रवर्तेते ।

**प्रियंवदा**—ण केवलं तवोवणविरहकादरा सही एव्व, तुए उवट्ठिदविओअस्स तवोवणस्स वि [2]दाव समवत्था दीसइ ।

[3]उग्गलिअदब्भकवला मिआ परिच्चत्तणच्चणा [4]मोरा ।
ओसरिअपण्डुपत्ता मुअन्ति अस्सू विअ लदाओ ॥१२॥

---

छमानायाः दुःखेन=अतिकृच्छ्रेण । चरणौ दुःखेन पुरतः प्रवर्तेते—अयमात्मगतस्य दुःखस्य चरणयोरुपचारः । आश्रमे स्नेहातिशयवशात् आश्रमं परित्यक्तुं न प्रभवामीति भावः । प्रियंवदोत्तरयति—ण केवल इति । 'न केवलं तपोवनविरहकातरा सख्येव, त्वयोपस्थितवियोगस्य तपोवनस्यापि तावत् समवस्था दृश्यते' इति संस्कृतम् । न केवलं तपोवनविरहकातरा सख्येव—सखी=भवती शकुन्तलैव तपोवनस्य भाविना विरहेण कातरा=दुःखितेति न । त्वयोपस्थितवियोगस्य तपोवनस्यापि—त्वया=शकुन्तलया उपस्थितवियोगस्य=संप्राप्तविरहस्य, न तु भूतवियोगस्य, न च भवद्वियोगस्येत्यपेरर्थः । तपोवनस्य—तपोवनशब्देन तद्वासिनः स्थावरजङ्गमा लक्ष्यन्ते । विरहकातरत्वस्य सार्वत्रिकत्वं व्यङ्ग्यम् । समवस्था= अवस्था दृश्यते=दर्शनेन ज्ञायते ।

तमेव प्रकारं गाथिकया कथयति—**उग्गलिअेति** । 'उद्गलितदर्भकवला मृग्यः

---

१ पुरमुहा ण णिवडन्ति । २ अवत्थं पेक्ख दाव । ३ उग्गिणदब्भ । ४ मोरी ।

परित्यक्तनर्तना मयूराः । अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः' इति संस्कृतम् । मृग्यः उद्गलितदर्भकवलाः, मयूराः परित्यक्तनर्तनाः, लताः अपसृतपाण्डुपत्राः अश्रूणि मुञ्चन्तीव इत्यन्वयः ।

मृग्यः = हरिण्यः उद्गलितदर्भकवलाः—उद्गलिताः = चर्विता अपि मुखाद्बहिर्निःसृताः । अनेन दुःखातिशयः प्रकाश्यते । दर्भकवलाः = कोमलदर्भाङ्कुरग्रासा याभिस्तथाविधाः । मयूराः = बर्हिणः परित्यक्तनर्तनाः—परित्यक्तं=परिहृतं नर्तनं= नृत्यं यैस्तथाविधाः । लताः = वल्ल्यः अपसृतपाण्डुपत्राः—अपसृतानि=असकृत् गलितानि पाण्डुपत्राणि = जीर्णपर्णानि ( अश्रुस्थानीयानि ) याभ्यस्तथाविधा भूत्वा अश्रूणि = बाष्पाणि मुञ्चन्तीव । वनलतारूपा बन्धुस्त्रियो गलत्पाण्डुपत्रापदेशेन अश्रूणि मुञ्चन्तीवेत्यर्थः । अनेन वध्वाः पतिगृहगमने पितृकुलजनस्य दुःखातिशयो व्यज्यते ।

बन्धुव्यवहारसमारोपात् समासोक्तिः, तन्मूला उत्प्रेक्षा च । एतत्पद्यसमानच्छायं पद्यं यथा **रघुवंशे**—"नृत्तं मयूराः कुसुमानि वृक्षा दर्भानुपात्तान्विजहुर्हरिण्यः" इति । गाथा छन्दः ।

तपोवनवासिनां स्थावरजङ्गमानामपि शकुन्तलाविरहकातरत्वं प्रकाशयन्ती प्रियंवदा प्राह—'हे शकुन्तले ! पतिगृहं प्रयान्ती त्वमेव केवलं न तपोवनविरहकातराऽसि, किन्तु भाविना त्वद्विरहेण एते तपोवनवासिनः स्थावरजङ्गमा अपि कातरा लक्ष्यन्ते । पश्य; एतास्त्वया स्वहस्तदत्तैर्नीवारमुष्टिभिर्वर्धिताः सर्वदा त्वामनुसरन्त्यो मृगाङ्गनाः अचिराद्भाविनं तव विरहं लक्षयित्वा चर्वितमपि दर्भाङ्कुरग्रासं मुखाद्बहिर्निःसारयन्त्यस्तूष्णीमासते । पिच्छभारं प्रसार्य नर्तनैस्त्वां सर्वदा विनोदयन्तोऽमी मयूराः संप्रति भावित्वद्विरहशङ्कया विस्मृतनर्तनाः स्तब्धा इव तिष्ठन्ति । किं बहुना ! एता लता अपि असकृद्गलज्जीर्णपर्णापदेशेन भावित्व-

न केवलं तपोवनविरहकातरा सख्येव, त्वयोपस्थितवियोगस्य तपोवनस्यापि तावत्समवस्था दृश्यते।

उद्गलितदर्भकवला मृग्यः परित्यक्तनर्तना मयूराः।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः॥

**शकुन्तला**—(स्मृत्वा) ताद! लताबहिणिअं वणजोसिणिं दाव आमन्तइस्सं।

तात! लताभगिनीं वनज्योत्स्नां तावदामन्त्रयिष्ये।

**कण्वः**—अवैमि ते तस्यां सोदर्यस्नेहम्। इयं तावद्दक्षिणेन।

**शकुन्तला**—(लतामुपेत्य) वणजोसिणि! [1]चूदसंगता वि मं

---

द्विरहदुःखजन्यं बाष्पं मुञ्चन्त्य इव लक्ष्यन्ते। तस्मात् सर्वमेव तपोवनं त्वद्विरहकातरमस्ति' इति भावः॥ १२॥

**स्मृत्वेति**। वनज्योत्स्नामिति शेषः। प्रियंवदोक्तौ 'लदाओ' इति शब्दश्रवणेन वनलताया वनज्योत्स्नायाः स्मरणमिति भावः। **ताद इति**। 'तात! लताभगिनीं वनज्योत्स्नां तावदामन्त्रयिष्ये' इति संस्कृतम्। लताभगिनीमिति लताया भगिनीत्वारोपेण आमन्त्रणस्यावश्यकत्वं द्योत्यते। अत एव पृथगित्यर्थकं तावदित्युक्तम्। वनज्योत्स्नां = प्रथमाङ्कप्रस्तुतां नवमालिकां लताम्, आमन्त्रयिष्ये= आप्रक्ष्यामि। लताभगिनीमिति परिणामालङ्कारः। महर्षिः कण्वः शकुन्तलोक्तमनुवदन्नाह—**अवैमीति**। अवैमि=जानामि तस्यां=वनज्योत्स्नायां सोदर्यस्नेहं= समानोदरबन्धुवात्सल्यम्। इयं तावद्दक्षिणेन=इयमदूरे दक्षिणभागे वर्तते इत्यर्थः। तदुपसर्प्यतां त्वयेति भावः।

**वणजोसिणि इति**। 'वनज्योत्स्ने! चूतसङ्गताऽपि मां प्रत्यालिङ्ग इतो-

---

१ पच्चालिङ्गस मं साहामएहिं वाहुहिं।

पच्चालिङ्ग इतोगदाहिं साहावाहाहिं । अज्जप्पहुदि दूरपरिवत्तिणी भविस्सं।

वनज्योत्स्ने ! चूतसंगताऽपि मां प्रत्यालिङ्ग इतोगताभिः शाखाबाहाभिः । अद्यप्रभृति दूरपरिवर्तिनी भविष्यामि ।

कण्वः—

संकल्पितं प्रथममेव मया तवार्थे

भर्तारमात्मसदृशं [1]सुकृतैर्गता त्वम् ।

---

गताभिः शाखाबाहाभिः । अद्यप्रभृति दूरपरिवर्तिनी भविष्यामि' इति संस्कृतम् । चूतसङ्गताऽपि—चूतेन=समीपस्थसहकारेण संगता = आश्लिष्टाऽपि । इदमपि प्रथमाङ्कप्रस्तुतम् । चूताश्लेषेण मदाश्लेषणमशक्यमिति अपिशब्देन द्योत्यते । तदशक्यत्वं परिहरति—**इतोगताभिरिति** । मदभिमुखमागताभिरित्यर्थः । न चूतालिङ्गनप्रसृताभिरिति भावः। मत्कृतेऽपि क्षणमपि ते चूतवियोगो मा भूदिति शकुन्तलायास्तस्यां स्नेहदयातिशयः सूच्यते । प्रत्यालिङ्गेति कथनेन पूर्वं शकुन्तलया वनज्योत्स्ना आलिङ्गितेति द्योत्यते । शाखाबाहाभिः = शाखारूपैर्बाहुभिरित्यर्थः । अत्र शाखायां बाहात्वारोपेण वनज्योत्स्नायां स्वसृत्वं गम्यत इति एकदेशविवर्तिरूपकम् । प्रत्यालिङ्गने हेतुमाह—**अद्यप्रभृतीति** । दूरपरिवर्तिनी = दूरस्था । अनेन पुनः वार्तामात्रमपि लब्धुं न शक्यमिति, तेन वियोगदुःखस्य प्राबल्यं च सूच्यते ।

अथ महर्षिः कण्वः शकुन्तलाया भविष्यत्तपोवनविरहकातरतामनुरूपचक्रवर्तिपतिप्राप्तिस्मारणेनापाकरिष्यन् स्वस्य कृतकृत्यतां प्रतिपादयन्नाह—**सङ्कल्पितमिति** । मया तवार्थे प्रथममेव सङ्कल्पितमात्मसदृशं भर्तारं त्वं सुकृतैर्गता ।

---

1 स्वगुणैः ।

[1]चूतेन संश्रितवती नवमालिकेय-
मस्यामहं त्वयि च संप्रति वीतचिन्तः ॥१३॥

इयं नवमालिका चूतेन संश्रितवती। सम्प्रति अहमस्यां त्वयि च वीतचिन्तः इत्यन्वयः।

मया = त्वदभ्युदयैकतानेन तपोनिधिना कण्वेन तवार्थे=त्वत्पाणिग्रहणलक्षणे निमित्ते प्रथममेव=तव यौवनात् प्रागेव, दुष्यन्तस्य तपोवनागमनात् प्रागेव वा सङ्कल्पितम्=मनसा निरूपितम्, अपि नाम लोकोत्तरगुणविशिष्टो दुष्यन्तो मम धर्मसुतामुद्वहेदिति। आत्मसदृशम् = रूपादिगुणैरभिजनेन सौन्दर्येण वयसा च तवानुरूपं भर्तारं = पतिम्। भरणसामर्थ्यमप्यनेन प्रदर्श्यते। न केवलं त्वद्भरणादपि तु त्रिभुवनभरणात्सर्वजगत्पालकमित्यर्थः। सुकृतैः = निजपुण्यैः, मत्प्रयासं विनैवेति भावः। गता=प्राप्ता। योग्यसमागमश्चिन्तितोऽपि पुण्यातिशयादेव भवतीति भावः। इयं=पुरोदृश्यमाना सुष्ठु कृतैः करणैर्निकटरोपणैरालवालादिपूरणैः नवमालिका = वनज्योत्स्ना चूतेन = सहकारेण। सङ्कल्पितेनात्मसदृशेनेति विपरिणामे नानुपद्यते। संश्रितवती—संश्रितं = संश्रयः, भावे क्तः। तदस्ति यस्यास्तादृशी जाता। सम्प्रति = अधुना अहम् अस्याम् = नवमालिकायाम्, त्वयि = शकुन्तलायां च वीतचिन्तः = विशेषेणापगतचिन्तोऽस्मि। युवां ममाशोच्ये जाते इत्यर्थः। यथा **कुमारसम्भवे**—"अशोच्या हि पितुः कन्या सद्भर्तृप्रतिपादिता" इति। एवं त्वमप्यद्य तपोवनविरहदुःखं कथंचित् सोढ्वा अनुरूपभर्तृलाभं विचिन्त्य सहर्षा भवेति भावः।

अत्र अस्यामहं त्वयि चेत्युद्देशक्रमातिलङ्घनं नायिकायाः प्राकरणिकत्वानुस-

१ अस्यास्तु संप्रति वरं त्वयि वीतचिन्तः कान्तं समीपसहकारमिमं करिष्ये।

इतः पन्थानं प्रतिपद्यस्व ।

शकुन्तला—( सख्यौ प्रति ) हला ! एसा दुवेणं वो हत्थे णिक्खेवो ।

---

न्धानाय कृतम् । अत्र यत्नं विना उत्कण्ठितार्थसिद्धेः कथनात् प्रहर्षणम्, द्वयोरनुरूपयोः समागमवर्णनात् समम्, चूतनवमालिकयोर्नायकव्यवहारसमारोपात् समासोक्तिः, प्रकृतयोर्नायिकानवमालिकयोः सङ्गमनरूपैकधर्मस्य पदभेदेन निर्देशादर्थावृत्तिदीपकम्, पूर्ववाक्यार्थस्य चरमवाक्यार्थोपपादकत्वात् काव्यलिङ्गं चेत्यलङ्काराः । वसन्ततिलका वृत्तम् ।

पतिगृहप्रस्थानावसरे शकुन्तलां भविष्यत्तपोवनविरहकातरां दृष्ट्वा अनुरूपलोकोत्तरभर्तृलाभस्मारणेन तां हर्षयन् आत्मनश्च कृतार्थतां प्रतिपादयन् महर्षिः कण्व आह—'वत्से ! शकुन्तले ! किमेवं कातराऽसि ? सर्वदा त्वदभ्युदयैकतानचेतसा मया तव बाल्यकाल एव त्वत्पाणिग्रहणोपयुक्तत्वेन मनसा निरूपितं रूपाभिजनसौन्दर्यवयोभिस्त्वदनुरूपं त्रिभुवनीभरणसमर्थं पतिं मम प्रयत्नैर्विनैव केवलं स्वपुण्यैरेव गताऽसि । इयं पुरोदृश्यमाना नवमालिका वनज्योत्स्ना सुष्ठु कृतैः निकटरोपणैरालवालादिपूरणैश्च सङ्कल्पितेनात्मसदृशेन सहकारेण सङ्गताऽस्ति । इत्थमहमस्यां त्वयि च सम्प्रति निश्चिन्तो जातोऽस्मि । यतः सद्भर्तृप्रतिपादिता कन्या पितुरशोच्या भवति । एवं त्वमप्यद्य तपोवनविरहदुःखं कथंचित् सोढ्वा अनुरूपभर्तृलाभं विचिन्त्य सहर्षा भव' इति भावः ॥ १३ ॥

अथ गमनाय प्रेरयति—इत इति । अनया दिशा गन्तव्यमार्गमनुसरेत्यर्थः । अनेन शकुन्तलया वनज्योत्स्नामन्त्रणार्थं वं मार्गपरित्यागः कृत इति द्योत्यते ।

शकुन्तला सख्यौ प्रतिवदति—हला इति । 'हला, एषा द्वयोर्युवयोर्हस्ते

हला, एषा द्वयोर्युवयोर्हस्ते निक्षेपः ।

**सख्यौ**—अअं जणो कस्स हत्थे समप्पिदो ?

अयं जनः कस्य हस्ते समर्पितः ? ( इति बाष्पं विसृजतः । )

**कण्वः**—अनसूये ! अलं रुदित्वा । ननु भवतीभ्यामेव स्थिरीकर्तव्या शकुन्तला ।

( सर्वे परिक्रामन्ति । )

**शकुन्तला**—ताद ! एसा उडजपज्जन्तचारिणी गब्भमन्थरा मअवहू जदा अणघप्पसवा होइ तदा मे कंपि पिअणिवेदइत्तअं विसज्जइस्सह ।

तात ! एषोटजपर्यन्तचारिणी गर्भमन्थरा मृगवधूर्यदाऽनघप्रसवा भवति तदा मह्यं कमपि प्रियनिवेदयितृकं विसर्जयिष्यथ ।

---

निक्षेपः' इति संस्कृतम् । एषा = वनज्योत्स्ना । हस्ते निक्षेपः = हस्ते निक्षेपवत् समर्पितेत्यर्थः । सावधानं रक्षणीयेति भावः । अथ सख्यौ स्वीयां दुःसहां तद्विरहोत्कण्ठां भङ्ग्या निवेदयतः—**अअं इति** । 'अयं जनः कस्य हस्ते समर्पितः' इति संस्कृतम् । अयं जनः = आवाम् । त्वया आवयोर्हस्ते निक्षिप्तां वनज्योत्स्नां तु आवां पालयाव एव, आवयोस्त्वद्विरहे का गतिरिति भावः । बाष्पविसर्जनमुत्कण्ठाऽनुभावः । कण्वोक्तौ—**अलं रुदित्वेति** । "अलंखल्वोः" इति क्त्वा । मा रोदीरित्यर्थः । कुत इत्यत्राह—**नन्विति** । विस्रम्भातिशयास्पदाभ्यां भवतीभ्यामेव दुःखापनोदनेन शकुन्तलाचेतसः स्थिरीकरणं कार्यमित्यर्थः । अन्यथा भवतीभ्यां रुदिते सा सातिशयं रोदिष्यतीति भावः ।

अथ शकुन्तला कण्वं प्रत्याह—**ताद इति** । 'तात ! एषा उटजपर्यन्तचारिणी गर्भमन्थरा मृगवधूर्यदाऽनघप्रसवा भवति तदा मह्यं कमपि प्रियनिवेदयितृकं

कण्वः—नेदं विस्मरिष्यामः।

शकुन्तला—( गतिभङ्गं रूपयित्वा ) को णु क्खु एसो णिवसणे मे सज्जइ ?

को नु खल्वेष निवसने मे सज्जते ? ( इति परावर्तते। )

---

विसर्जयिष्यथ' इति संस्कृतम्। एषा = मद्वियोगकातरतया मत्पुरःस्थिता उटजपर्यन्तचारिणी = कुटीप्रान्तभागे एव सञ्चरणशीलेत्यर्थः। गर्भखेदादिति भावः। गर्भमन्थरा = गर्भभारेण सालसगतिरित्यर्थः। अनेन विशेषतस्तस्याः प्रवासासहत्वं प्रसवकाले स्वासान्निध्यसंभावनया स्वस्य विषादश्च द्योत्यते। मृग-वधूरिति यौवनारम्भं द्योतयता वधूपदेन तत्प्रसवस्य प्राथमिकत्वं द्योत्यते। अनघ-प्रसवा = अक्लेशप्रसूतिः। अनेन शकुन्तलायाश्चेतसि सार्वदिकी तथाविधा चिन्ता द्योत्यते। समानः प्रयोगो यथा रघुवंशे—"कच्चिन्मृगीणामनघा प्रसूतिः" इति। प्रियनिवेदयितृकम् = अक्लेशप्रसवात्मककुशलवृत्ताख्यायकं पुरुषं विसर्जयिष्यथ = प्रेषयिष्यथ। कण्वोक्तौ 'नेदं विस्मरिष्यामः' इत्यनेन शकुन्तलेच्छानुसारिस्वरूपः कण्वस्य महर्षेर्वात्सल्यातिशयः प्रतीयते।

गतिभङ्गं रूपयित्वेति। मृगसङ्गेन गतिस्खलनमभिनीयेत्यर्थः। तदभिन-यनप्रकारस्तु ऊरुद्वृत्तया चार्या भवति। तदुक्तम्—

पार्ष्णिः पादस्य चेदग्रतलसञ्चरसंज्ञितः।
अन्याङ्घ्रिपृष्ठाभिमुखो विपर्यासोऽथवा भवेत्॥
नाभ्यन्यजङ्घनमिता जङ्घा चेन्नतजानुका।
तज्ज्ञेर्यानतिभङ्गेषु चार्यूरुद्वृत्तसंज्ञिता॥ इति।

को णु इति। 'को नु खल्वेष निवसने मे सज्जते' इति संस्कृतम्। निव-सने = वस्त्रे सजते = संसक्तो भवति। निवसनमाकर्षतीत्यर्थः। परावर्तते

कण्वः—वत्से !

यस्य त्वया व्रणविरोपणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।
श्यामाकमुष्टिपरिवर्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥ १४ ॥

---

इति । इदं परावर्तनं निवसनाकर्षकज्ञानार्थम् ।

अथ महर्षिः कण्वः शकुन्तलामनुसरन्तं मृगपोतकं विलोक्य तत्प्रवृत्तिं सकरुणं वर्णयन्नाह--**यस्येति** । यस्य कुशसूचिविद्धे मुखे त्वया व्रणविरोपणमिङ्गुदीनां तैलं न्यषिच्यत, सः अयं श्यामाकमुष्टिपरिवर्धितकः पुत्रकृतको मृगस्ते पदवीं न जहाति इत्यन्वयः ।

यस्य = मृगस्य कुशसूचिविद्धे--कुशानां=दर्भाणां सूचिभिः = सूचिवत्तीक्ष्णैरग्रैः विद्धे=क्षते । अत्र सूचिपदेन सूचिवत् सूक्ष्मतीक्ष्णाग्रस्तदङ्कुरो लक्ष्यते । वेधनयोग्यत्वं व्यङ्ग्यम् । कुश एव सूचिरिति केचित् । मुग्धस्वभावतया तीक्ष्णं दर्भाग्रं भक्षयितुं प्रवृत्ते सति क्षते इत्यर्थः। मुखे=वदनाभ्यन्तरे व्रणविरोपणम्--व्रणस्य= क्षतस्य विरोपणं=शोषकम् इङ्गुदीनां=तापसतरूणां तैलं=तत्फलस्नेहः । इङ्गुदीतैलस्य व्रणविरोपणे प्राशस्त्यं प्रसिद्धम् । न्यषिच्यत=नितरां सिक्तम् । इङ्गुदीतैलनिषेकेण व्रणो विरोपित इत्यर्थः । सः = तथाविधत्वद्वात्सल्यविषयः अयं=त्वद्विरहदुःखेन त्वामनुसरन् 'पुरोदृश्यमानः श्यामाकमुष्टिपरिवर्धितकः—श्यामाकः = मुन्यन्नरूपस्तृणधान्यविशेषः तस्य मुष्टिः = परिमाणविशेषः, मुष्टिपरिमितैः श्यामाकैरित्यर्थः । परिवर्धितकः--अनुकम्पायां कः । सादरं पुत्रवत् परिपोषित इति अतिलालनीयत्वं सूच्यते । स्वयमत्तुमसमर्थस्य श्यामाकान् मुष्टौ गृहीत्वा मुखे अर्पितवती

**शकुन्तला**—वच्छ ! किं सहवासपरिच्चाइणिं मं अणुसरसि ? अचिरप्पसूदाए जणणीए विणा वड्डिदो एव्व ! दाणिं पि मए विरहिदं तुमं तादो चिन्तइस्सदि । णिवत्तेहि दाव ।

---

इत्यादिपोषणप्रकारं सूचयितुं मुष्टिपदोपादानम् । पुत्रकृतकः—कृतकः = कृत्रिमः पुत्रः पुत्रकृतकः, आहिताग्न्यादित्वात् परनिपातः । मृगः = हरिणः ते = तव पदवीं = मार्गं न जहाति = न मुञ्चति । त्वदनुगामी भवतीत्यर्थः । न जहातीति निषेधमुखेनोक्तिः अनुगमननिर्बन्धातिशयं द्योतयति ।

अत्र मृगस्वभावोक्तिः काव्यलिङ्गं चालङ्कारौ । पूर्वपादत्रयेण शकुन्तलाया मृगे, चरमपादेन मृगस्य शकुन्तलायां च स्नेहातिशयः सूच्यते । वसन्ततिलका वृत्तम् ।

पतिगृहं प्रतिष्ठमानायाः शकुन्तलाया वसनाञ्चले मृगशावकेन गृहीते सति गतिभङ्गमनुभवन्तीं तत्कारणं जिज्ञासमानां शकुन्तलां महर्षिः कण्व आह—'वत्से ! शकुन्तले ! अत्यन्तदयार्द्रहृदयया मातृभूतया त्वया बालस्वभावमौग्ध्यात् तीक्ष्णाग्रदर्भकवलभक्षणात् सक्षतस्य यस्य मृगशावकस्य क्षतवति वदनान्तर्भागे तत्रत्यव्रणविरोपणाय प्रत्यहं स्वाङ्गुल्या इङ्गुदीतैलं न्यषिच्यत, किञ्च अत्यन्तशावकस्य स्वयमत्तुमसमर्थस्य यस्य मुखे मुष्टौ गृहीत्वा श्यामाकाः स्वयमर्पिताः, त्वया अतिलालितस्तव कृत्रिमः पुत्रः सम्प्रति तव विरहदुःखेन दुःखितस्त्वामनुसरन् सोऽयं मृगशावकः पतिगृहं प्रतिष्ठमानायास्ते निवार्यमाणोऽपि मार्गं न जहाति । क्षणं लालयित्वा आमन्त्रयैनम्' इति भावः ॥१४॥

अथ शकुन्तला तथाविधमृगस्नेहपरवशा औरसपुत्रवत् तं कृत्रिमपुत्रकं मृगशावकमामन्त्रयन्ती सविषादमाह—**वच्छेति** । 'वत्स ! किं सहवासपरित्यागिनीं मामनुसरसि ? अचिरप्रसूतया जनन्या विना वर्धित एव ! इदानीमपि मया

वत्स ! किं सहवासपरित्यागिनीं मामनुसरसि ? अचिरप्रसूतया जनन्या विना वर्धित एव ! इदानीमपि मया विरहितं त्वां तातश्चिन्तयिष्यति। निवर्तस्व तावत्। ( इति रुदती प्रस्थिता। )

**कण्वः—**

**उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं**
**बाष्पं कुरु स्थिरतया [1]विहतानुबन्धम्।**

---

विरहितं त्वां तातश्चिन्तयिष्यति। निवर्तस्व तावत्' इति संस्कृतम्। किं=किमर्थम्। अनुसरसि = अनुगच्छसि। इदानीं तव मया न प्रयोजनमिति भावः। तत्र हेतुमाह—**सहवासपरित्यागिनीमिति**। पतिगृहप्रस्थानोद्यमेन त्वया सहवासं परित्यजन्तीमित्यर्थः। अचिरप्रसूतया = त्वां प्रसूय पुनरप्यचिरात्प्रसूतया जनन्या विना = जननीस्तन्यपानादिकं विनैवेत्यर्थः। यद्वा त्वां प्रसूय अचिरादेव जनन्याः मृतेस्तया विनेत्यर्थः। वर्धितः = यथावत् परिपोषितः। एवकारेण यौवनोदयेऽपि पोषणाभावो व्यवच्छिद्यते। स्वयमत्तुं समर्थोऽपि अद्य यावत् मया स्वहस्तेनैव श्यामाकमुष्टिभिर्भरितोदरोऽसीत्यर्थः। इदानीं = मद्वियोगकाले। अपिशब्दः पूर्वमपि तातचिन्तां प्रकाशयति। चिन्तयिष्यति = विशेषदृष्ट्या पालयिष्यतीत्यर्थः। जननीवियोगे तवाहं रक्षिका अभवम्, इदानीं मद्वियोगे तातस्तव सविशेषं रक्षको भवेदिति यावत्। निवर्तस्व तावत्--अतस्तव निवर्तनमेव प्राप्तकालम्; नातः परमागन्तव्यमिति भावः। **रुदतीति**। रोदनं मृगशावकस्नेहानुबन्धादिना।

शकुन्तलारोदनं न केवलममङ्गलमेव, अपि तु गमनविरोधीत्युत्प्रेक्ष्य महर्षिः कण्व आह--**उत्पक्ष्मणोरिति**। उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं बाष्पं स्थिरतया

---

[1] शिथिलानुबन्धम्।

अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति ॥१५॥

विहतानुबन्धं कुरु । अलक्षितनतोन्नतभूमिभागे अस्मिन्मार्गे ते पदानि विषमीभवन्ति खलु इत्यन्वयः ।

उत्पक्ष्मणोः—उत् = उर्ध्वं पक्ष्मणी ययोः, उद्गतनेत्ररोमयोरित्यर्थः । अनेन बाष्पस्य गलनाभावो व्यज्यते । अयमुपरोधे हेतुः । नयनयोः = नेत्रयोः उपरुद्धवृत्तिम्—उपरुद्धा = व्याहता वृत्तिः = दर्शनव्यापारो येन तं बाष्पम् = अश्रु । "बाष्पोऽश्रूणि" इति वैजयन्ती । स्थिरतया = धैर्यावलम्बनेन विहतानुबन्धम्—विहतः = दूरीकृतः अनुबन्धः = पुनः पुनरुत्पत्तिर्यस्य तं तथाविधम्, निरुद्धाविच्छिन्नप्रसरणमित्यर्थः । कुरु । धैर्यमवलम्ब्य नेत्रजलं निवर्तयेत्यर्थः । उक्तार्थे हेतुमाह—**अस्मिन्निति** । अलक्षितनतोन्नतभूमिभागे—अलक्षित = अनाकलितः नतः = निम्नः उन्नतः = उच्चश्च भूमिभागः = भूप्रदेशो यस्मिंस्तादृशे अस्मिन्मार्गे = गन्तव्ये पथि ते = तव पदानि = चरणन्यासाः विषमीभवन्ति = स्खलन्ति, उच्चावचेषु निपतन्तीत्यर्थः । खलु = निश्चयेन । विषमीभवन्तीति वर्तमाननिर्देशेन पादस्खलनं दृश्यत इति प्रकाश्यते ।

अत्र काव्यलिङ्गं परिकरश्चालङ्कारौ । वसन्ततिलका वृत्तम् ।

यात्रासमये मृगपोतस्य सातिशयं स्नेहानुबन्धं दृष्ट्वा प्रबलोत्कण्ठां रुदतीं शकुन्तलां विभाव्य इदमस्या रोदनं न केवलममङ्गलमपि तु गमनविरोधीत्याशङ्क्य तां रोदनव्यापारान्निवर्तयितुकामो महर्षिः कण्व आह—'वत्से ! शकुन्तले ! धैर्यमवलम्ब्य उद्गतपक्ष्मणोस्तव नेत्रयोर्निरुद्धाविच्छिन्नप्रसारं बाष्पं मध्ये मध्ये विच्छिन्नं कुरु । अन्यथा बाष्पपूरितनयनायास्ते गन्तव्यमार्गीयनिम्नोन्नतभागाना-

**शार्ङ्गरवः**—भगवन् ! ओदकान्तं स्निग्धो जनोऽनुगन्तव्य इति श्रूयते । तदिदं सरस्तीरम् । अत्र संदिश्य प्रतिगन्तुमर्हसि ।

**कण्वः**—तेन हीमां क्षीरवृक्षच्छायामाश्रयामः ।

(सर्वे परिक्रम्य स्थिताः ।)

---

मनाकलनात् पदानि स्खलन्ति । अतः बाष्पप्रसरं समूलं छिन्धि; येन गन्तव्यमार्गस्ते स्पष्टं प्रकाशयेत' इति भावः ॥ १५ ॥

अथ शकुन्तलास्नेहविवशतया तन्मार्गानुसारिणं महर्षिं कण्वं तच्छिष्यः शार्ङ्गरवः कर्तव्यं स्मारयति—**भगवन्निति** । भगवन् आ उदकान्तमिति च्छेदः । भगवन् = षडैश्वर्यसंपन्न ! संबोधनेन कर्तव्यं जानतोऽपि कन्यास्नेहवशतया सम्प्रति तद्विस्मरतः शिष्येण मया कृतं स्मारणं क्षन्तव्यमिति द्योत्यते । ओदकान्तम्—आङ् मर्यादायाम् । अन्तशब्दः समीपवाची, स्वरूपवाची वा । उदकान्तपर्यन्तमित्यर्थः । स्निग्धः = स्नेहपात्रम् । अनुगन्तव्यः = अनुसरणीयः । पुत्रादिभिर्बन्धुभिरिति शेषः । इति श्रूयते—वृद्धजनादिति शेषः । श्रूयते इति कथनेन अस्याचारस्य श्रुतिः प्रमाणमिति द्योतयति । तत् = तस्मात् । इदम् इति अङ्गुल्या निर्देशः । अत्र = सरस्तीरे सन्दिश्य = वाचिकमाज्ञाप्य प्रतिगन्तुमर्हसि = भवानाश्रमं प्रति निवर्ततामित्यर्थः । अथ तदुक्तमनुमोदमानः कण्व आह—**तेन हीति** । तेन हि = श्रुतिप्रमाणकस्य भवदुक्तस्य सर्वथा स्वीकरणीयत्वात् । क्षीरवृक्षच्छायाम् —क्षीरप्रधानो वृक्षः क्षीरवृक्षः = सप्तपर्णः; अश्वत्थो वटो वेति केचित् । क्षीरवृक्षग्रहणं तस्य छायाधिक्यान्मङ्गलत्वाच्च । क्षीरवृक्षच्छायाश्रयणकथनं सन्देशस्य बहुप्रकारत्वं सूचयति ।

अथ जामात्रे महाराजदुष्यन्ताय सन्देष्टव्यमर्थं महर्षिः कण्वः स्वगत विमृश-

**कण्वः**— (आत्मगतम्) किं नु खलु तत्रभवतो दुष्यन्तस्य युक्तरूपमस्माभिः संदेष्टव्यम् ! (इति चिन्तयति ।)

**शकुन्तला**—(जनान्तिकम्) हला ! पेक्ख; णलिणीपत्तन्तरिदं वि सहअरं अदेक्खन्ती आदुरा चक्कवाई आरडदि दुक्करं अहं करेमि त्ति तक्केमि ।

हला, पश्य; नलिनीपत्रान्तरितमपि सहचरमपश्यन्त्यातुरा चक्रवाक्यारटति दुष्करमहं करोमीति तर्कयामि ।

---

आह—**किं न्विति** । किं नु खल्विति विमर्शे । तत्रभवतः = वर्णाश्रमगुरुत्वेन विद्याविनयाभिजात्यादिभिः सम्माननीयस्य । दुष्यन्तस्येति नामग्रहणं स्नेहास्पदत्वं द्योतयति । युक्तरूपम्=अतिशयेन युक्तम्, योग्यतममित्यर्थः । अस्माभिरिति आत्मनोऽपि महर्षिमुख्यत्वेन कुलपतित्वेन च गौरवं द्योतयति । **चिन्तयतीति** । यो राजा ममानुपस्थितौ धर्मारण्यं प्रविश्य मुग्धां मम धर्मकन्यां प्रलोभ्य गान्धर्वेण परिणीतवान्, स आपन्नसत्त्वामपि स्वधर्मपत्नीमद्यापि नेतुं स्वयं नायाति, न च कञ्चिद् भृत्यमपि प्रेषयति । राजकार्यपारतन्त्र्यम्, अन्तःपुरसमागमप्रभवं प्रेममान्द्यम्, वनवासिष्वस्मासु लाघवमूलकमौदासीन्यं वा तत्र निदानं भवेत् ! अतो मयाऽपि तत्र मुनिजनोचितं भेददण्डगर्भं सामैव प्रयोक्तुमुचितमिति विमृशतीत्यर्थः ।

अथ मध्ये रसस्याविच्छेदाय कविः प्रसङ्गमवतारयति—**शकुन्तलेति** । मध्येमार्गं सरस्तीरमुपस्थिता तत्र सहचरविरहखिन्नां कामपि चक्रवाकीमवलोकमाना स्वभर्तृविरहदुःखं गुरुतरमाकलयन्ती शकुन्तला सखीमाह—**हला इति** । 'हला, पश्य; नलिनीपत्रान्तरितमपि सहचरमपश्यन्त्यातुरा चक्रवाकी आरटति दुष्करमहं करोमीति तर्कयामि' इति संस्कृतम् । नलिनीपत्रान्तरितमपि = पद्मपत्रमात्रेण

**अनसूया**—सहि ! मा एव्वं मन्तेहि ।

**एसा वि पिएण विणा गमेइ रअणिं विसाअदीहअरं ।**
**गरुअं पि विरहदुक्खं आसाबन्धो सहावेदि ॥ १६ ॥**

---

व्यवहितम्, न तु दूरदेशगतम् । सहचरं = चक्रवाकम् । आरटति = आक्रन्दति । अयं भावः—केवलं पद्मपत्रमात्रव्यवहितं प्रियं क्षणमनालोक्यैव तद्विरहदुःखितेयं चक्रवाकी तारमाक्रन्दति, अहं पुनर्दूरदेशान्तरितप्रियाऽपि तद्विरहदुःखं यत्सहे, तद् दुष्करं कर्म करोमीति तर्कयामि । चक्रवाक्यवस्थासन्दर्शनसन्धुक्षितं शकुन्तलाया विरहदुःखमुपपत्त्या लघूकुर्वाणा सखी प्राह—**सहि इति** । 'सखि ! मैवं मन्त्रय । एषाऽपि प्रियेण विना गमयति रजनीं विषाददीर्घतराम् । गुर्वपि विरहदुःखमाशाबन्धः साहयति' इति संस्कृतम् । सखीति सम्बोधनेनानुनयो द्योत्यते । मैवं मन्त्रय—एवं न वक्तव्यमित्यर्थः । सुकरमेव त्वया क्रियत इति भावः ।

अत्रार्थे चक्रवाक्येव निदर्शनमित्याह—**एसेति** । एषाऽपि प्रियेण विना विषाददीर्घतरां रजनीं गमयति । आशाबन्धो गुर्वपि विरहदुःखं साहयति इत्यन्वयः ।

एषाऽपि = चक्रवाक्यपि क्षणमात्रमपि प्रियेण विना न तिष्ठन्ती—तद्विरहमसहमानेत्यपिशब्दार्थः । प्रियेण = सहचरेण चक्रवाकेण विना = रहिता विषाददीर्घतराम्—विषादेन = प्रियविरहजदुःखेन दीर्घतरां = पूर्वापेक्षयाऽपि दीर्घत्वेनानुमितां रजनीं = रात्रिम् । रजनीमिति पदेन रज्यन्ति रागिणोऽस्यामित्यन्वर्थेन उद्दीपकत्वातिशयात्तद्यापनस्याशक्यत्वं द्योत्यते । गमयति = यापयति । कथं यापयतीत्यत्राह—**गुर्विति** । आशाबन्धः—आशा = कदाऽपि संबन्धो भवेदिति

सखि! मैवं मन्त्रय।

एषाऽपि प्रियेण विना गमयति रजनीं विषाददीर्घतराम्।
गुर्वपि विरहदुःखमाशाबन्धः साहयति॥

कण्वः—शार्ङ्गरव! इति त्वया मद्वचनात्स राजा शकुन्तलां पुरस्कृत्य वक्तव्यः।

---

सम्भावना स एव बन्धः = बन्धनं गुर्वपि = दुर्वहमपि विरहदुःखं = वियोगपीडां साहयति = सहनयोग्यं करोति। त्वयाऽपि भर्तृप्राप्तिपर्यन्तमेवमेव दुःखं सोढव्यमिति भावः।

अर्थान्तरन्यासोऽलङ्कारः। गाथा छन्दः।

नलिनीपत्रमात्रान्तरितमपि प्रियं क्षणमपश्यन्त्याश्चक्रवाक्या विरहरोदनं श्रुत्वा दूरदेशान्तरितप्रियाऽहं प्रियवियोगदुःखं यत्सहे तद्दुष्करं करोमीति भाषमाणां शकुन्तलां सोपपत्तिवचनैस्तद्दुःखभारं लघूकुर्वाणा सखी प्राह—'प्रियसखि! शकुन्तले! मैवं वक्तुमुचितम्; एषाऽपि वराकी चक्रवाकी नित्यं प्रियेण विरहिता सती तद्विरहदुःखदीर्घतरां रजनीं यापयत्येव। तादृशदुःखभारसहनस्य कदाऽपि प्रियसंगमो भवेदित्याकारकाशानुबन्ध एव हेतुः। यदि ईदृश आशानुबन्धो नाभविष्यत्, प्रथमविरहे एव सा वराकी मृताऽभविष्यत्। यथा दुर्वहं किञ्चिद्वस्तु नागदन्तादिषु बद्धं सुवहं भवति, एवं भाविसङ्गमाशया बद्धो विरहदुःखभारोऽपि सुवहो भवति। यथेयं प्रातः पुनर्मिलनाशया जीवितं धारयति, तथैव त्वयाऽपि अचिरभाविसङ्गमाशया विरहदुःखं सोढव्यमेव' इति भावः॥१६॥

अथ महर्षिः कण्वः शकुन्तलाविषये राज्ञा क्रियमाणामुपेक्षां वस्तुवृत्तविचाराभावसम्भवां सम्भावयन् तन्निवृत्त्यर्थं स्वीकारयोग्यताहेतुविचारपुरःसरं तस्याः स्वीकारं सन्दिशन्नाह—शार्ङ्गरवेति। नामग्रहणपूर्वकं सम्बोधनेन त्वया मद्वचनं

शार्ङ्गरवः—आज्ञापयतु भवान् ।

कण्वः—

अस्मान्साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम् ।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतः परं न खलु [1]तद्वाच्यं वधूबन्धुभिः ॥१७॥

सावधानतया श्रोतव्यमिति सूच्यते । इति = वक्ष्यमाणम् । त्वया, न त्वन्येन; यतो मम शिष्येषु त्वमेव भाषणकुशलः । मद्वचनात् = कुलपतेर्महर्षेर्मम वचनात् । अनेनात्मनो गौरवं प्रतिपाद्यते । सः = प्रक्रान्तः । राजेत्यनेन तस्य राजकार्यपारतन्त्र्यम्, ऐश्वर्यमदान्धतया कर्तव्यमूढत्वं वा द्योत्यते । पुरस्कृत्य = अग्रतः कृत्वा । वक्तव्यः = सन्देष्टव्यः । समानः प्रयोगो यथा रघुवंशे—"वाच्यस्त्वया मद्वचनात् स राजा" इति । शार्ङ्गरवोक्तौ आज्ञापयतु भवानित्यनेन शार्ङ्गरवस्य गुरुवचनश्रवणे सावधानत्वं द्योत्यते ।

'इति त्वया मद्वचनात्' इत्यादिनोक्तं विवृण्वन् महर्षिः कण्व आह—**अस्मानिति** । संयमधनान् अस्मान्, आत्मनः उच्चैः कुलं च, त्वयि अस्याः कथमपि अबान्धवकृतां तां स्नेहप्रवृत्तिं च साधु विचिन्त्य त्वया इयं दारेषु सामान्यप्रतिपत्तिपूर्वकं दृश्या । अतः परं भाग्यायत्तम् । तत् वधूबन्धुभिर्न वाच्यं खलु इत्यन्वयः ।

संयमधनान्—संयमः = आत्मदमनात्मकं तपः तदेव धनं = द्रव्यं येषां तान् ।

१ तत् स्त्रीबन्धुभिर्याच्यते ।

अत्र संयमे धनत्वारोपेण तदर्जनरक्षणादौ तात्पर्यं तत्प्राचुर्यं च द्योत्यते। मुन्यादिपदत्यागपूर्वकं संयमधनपदोपादानं शकुन्तलाङ्गीकारानङ्गीकारयोरनुग्रहभयसम्भावनां दर्शयति। अस्मान् = अस्याः पितृत्वेन सम्बन्धिनं माम्। बहुवचनेनात्मनो गौरवं द्योत्यते। साधु विचिन्त्येत्यस्य प्रत्येकं सम्बन्धः। साधु=सम्यक् विचिन्त्य= विचार्य। अत्र विचिन्तनस्य साधुत्वं वस्तुवृत्तपरामर्शित्वम्। आत्मनः = स्वस्य उच्चैः = आभिजात्यविभूत्यादिभिः उन्नतं सततोदितं कुलं = पौरवान्वयं च साधु विचिन्त्य = तादृशकुलोत्पन्नस्य तव अलीकप्रतारणं न योग्यमिति विचार्येत्यर्थः। त्वयि = सर्वदा सर्वप्रकारेण कमनीये राज्ञि दुष्यन्ते अस्याः = त्वदेकशरणायास्तपस्विन्याः शकुन्तलायाः कथमपि = आदौ त्वत्प्रार्थिते गान्धर्वविवाहे धर्मलोपशङ्कास्फुरणात् कृच्छ्रेण अबान्धवकृताम् —बान्धवैः = कन्यादानाधिकारिभिरस्माभिर्विना कृतां तां = प्रक्रान्ताम्, अतिशयितां च स्नेहप्रवृत्तिं = भावानुबन्धम्, गान्धर्वं च। यद्वा कथमपि = केनापि प्रकारेण, अनिर्देश्येन केनापि हेतुनेत्यर्थः। यथा उत्तररामचरिते—"व्यतिषजति पदार्थानान्तरः कोऽपि हेतुः" इति। अबान्धवकृताम्=अकृत्रिमां तां = लोकोत्तरत्वेन त्वयैवानुभूतां स्नेहप्रवृत्तिम्—स्नेहस्य प्रवृत्तिम् = आधिक्यम्, रागाधिक्यमित्यर्थः। चकारो समुच्चये। साधु विचिन्त्येति पूर्ववत्। त्वया = सर्वमपि जानता भवता। त्वं स्वकर्तव्यं स्वयमेव जानासि, तथाऽपि मदुपदेशोऽयं दुहितृवात्सल्यादिति भावः। इयम् = अस्मद्दुहिता तव धर्मदाराः शकुन्तला दारेषु = पूर्वपरिगृहीतपुरन्ध्रीषु सामान्यप्रतिपत्तिपूर्वकम्—सामान्या = इतरदारसाधारणी या प्रतिपत्तिः = बहुमानस्तत्पूर्वकं = तत्पुरस्कारेण दृश्या = अन्यतमत्वेनावेक्षणीया। ताः राजकन्यकाः, इयं मुनिकन्यकेति भेदबुद्धिं विना परिपालनीयेत्यर्थः। त्वं वधूबन्धूनामस्माकं महत्त्वम्, आत्मनः सत्कुलसम्भूतत्वम्, अस्याः स्नेहप्रवाहस्या-

कृत्रिमत्वं च सम्यग्विचार्य बहुमानपूर्वकमिमामपि स्वदारसामान्यपदे स्थापयित्वा परिपालयेत्यर्थः । ननु विशेषः कुतो नाभ्यर्थ्यते इत्यत आह—**भाग्यायत्तमिति** । अतः परम् = उक्ताद् व्यतिरिक्तं महादेवीपदस्थापनादिकं भाग्यायत्तं = वध्वाः सौभाग्याधीनम् । अतः तत् = विशेषप्रतिपत्त्या दर्शनं वधूबन्धुभिः = पितृभ्रात्रादिभिः न वाच्यम् = नैव वक्तुं योग्यम्, वात्सल्यात् ईप्सितमपि प्रार्थनामात्रेणालभ्यत्वान्नैव प्रार्थनीयमित्यर्थः । अतो नोच्यत इति भावः ।

अत्र विवक्षितस्य शकुन्तलाया महादेवीपदप्राप्तिरूपविशेषप्रतिपत्तिपूर्वकावेक्षणस्योक्तेर्निषेधेन तस्यावश्यवक्तव्यत्वलक्षणो विशेषो व्यज्यते । ततश्च "निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया" इति लक्षित आक्षेपः, सामान्यनिबन्धना अप्रस्तुतप्रशंसा, काव्यलिङ्गं च । वात्सल्यं मतिश्च भावौ । शार्दूलविक्रीडितं वृत्तम् । अयं सामरूपोऽर्थः ।

भेदरूपोऽर्थोऽप्यत्र सूच्यः । तथा हि—अस्मानित्यनेन आत्मनो बहुमतत्वं द्योत्यते, तत्र हेतुः संयमधनानिति; अनेन क्रुद्धा वयं प्रतिकूलानां निग्रहमपि कर्तुं शक्ताः स्मः इति द्योत्यते । उच्चैः कुलमित्यनेन धर्मदारोपेक्षणेन समुन्नतस्य तव कुलस्य महानपकर्षः स्यादिति द्योत्यते । त्वयि = अदृष्टपूर्वत्वादपरिचिते । तां स्नेहप्रवृत्तिमित्यनेन तथाविधनिरर्गलस्नेहशालिन्यां तव प्रेममान्द्यमहेतुकमसम्भवि, अनुरक्तायाः परित्यागो महापातकहेतुरिति च द्योत्यते । साधु विचिन्त्य—एतत्सर्वं साधु = शोभनं यथा स्यात्तथा विचिन्त्य = विशेषेण आलोच्य । अत्रानुवादो विधिगर्भः; तेन विचिन्तयेरित्यर्थः । एवं न विचिन्तयसि चेत्तर्हि न शोभनं भवेदिति भावः । तस्मादस्या दारसामान्यप्रतिपत्त्या परिपालनं कार्यमिति ।

दण्डरूपोऽर्थोऽप्यत्र गम्यः । तथा हि—अस्मान् = शापास्त्रान् । अत्र हेतुः—**संयमधनानिति** । अस्माकं प्रतिकूलेषु शाप एवास्त्रम्, तत्र तव शक्तित्रयम-

किञ्चित्करमिति भावः । उच्चैः कुलमिति । अस्माकं शापास्त्रं न केवलं त्वामेव दण्डयेदपि तु सर्वमेव तव कुलं नाशयेदिति भावः । त्वयि = धूर्ताचारे । अस्याः = मुग्धस्वभावायाः वनवासिन्याः कुमार्याः कथमपि = तव अनृतवादैः प्रलोभनैश्च कृच्छ्रेण अबान्धवकृतां = त्वत्प्रेरणया बान्धवानस्मान् वञ्चयित्वा कृतां तां = दिव्य-चक्षुषा मया परिज्ञाताम् । अनेन कन्यादूषकत्वरूपोऽपराध उद्घाट्यते । साधु विचिन्त्य--अत्राप्यनुवादो विधिगर्भः; सम्यग्विचिन्तयेत्यर्थः । यदि न चिन्तयसि तर्हि मम दण्ड्यो भविष्यसीति भावः । अन्यत् पूर्ववत् ।

महर्षिः कण्वो राज्ञे सन्देष्टव्यमर्थं सामभेददण्डगर्भं विवृण्वन् पूर्वं सामपक्षे आह—'वत्स ! शार्ङ्गरव ! त्वया मद्वचनात्स राजा इत्थं वक्तव्यः-वयं संयममात्रधना वनवासिनो दरिद्रा ऋषयो राजयोग्यं प्रभूतं यौतुकं दातुं न प्रभवामः, उच्चैःकुल-सम्भूतेन च त्वया नैतदपेक्ष्यम्, अस्याः शकुन्तलायास्त्वयि प्रीतिश्च अबान्धवकृतैव, एतत्सर्वं सम्यग्विचार्य त्वया स्वदारसामान्यप्रतिपत्त्या इयं द्रष्टव्या । इतः परं महादेवीपदलाभादिकं तु तस्या भाग्याधीनमेव । तत्सर्वं वधूबन्धुभिरस्माभिर्वक्तुं न शक्यते ।' अथ भेदपक्षे—'सर्वेषां बहुमतान् प्रतिकूलेषु निग्रहं कर्तुं शक्तान् अस्मान् सम्यग्विचिन्त्य उच्चैःकुलसंभवस्य तव धर्मदारोपेक्षणमपकर्षहेतुः स्यादित्यप्यवधार्य अदृष्टपूर्वत्वादपरिचिते त्वयि तस्यास्तां स्नेहप्रवृत्तिं च विचार्य यथाऽनुकूलमाचर । अहेतुकं तव प्रेममान्द्यम् , अनुरक्तायाः परित्यागश्च महापातकहेतुः इत्यपि विशेषेण विचारय । एवं न चिन्तयसि चेत्तदा सर्वमशोभनं भवेत् । तस्मा-दस्याः दारसामान्यप्रतिपत्त्या पालनं कार्यम् ।' अथ दण्डपक्षे—'संयमैक-धनान् अत एव शापास्त्रान् अस्मानवेहि । वयं स्वप्रतिकूलान् शापास्त्रेणैव दण्डयामः । तत्र भवादृशां शक्तित्रयमकिञ्चित्करं भवति । किंच दुर्वृत्तं त्वामेव दण्डयित्वा नास्माकं शापो विरमेत्, किन्तु उच्चैरपि तव कुलं नाशयेत् । विट-

**शाङ्गरवः**—गृहीतः संदेशः ।

**कण्वः**—वत्से ! त्वमिदानीमनुशासनीयाऽसि । वनौकसौऽपि सन्तो लौकिकज्ञा वयम् ।

**शार्ङ्गरवः**—न खलु धीमतां कश्चिदविषयो नाम ।

---

प्रक्रियावलम्बिनि त्वयि कथमपि तवानृतवादैः प्रलोभनात् कृच्छ्रेण त्वत्प्रेरणया अस्मान् बान्धवान् वञ्चयित्वा कृताम् अस्या मुग्धायाः शकुन्तलायाः मया दिव्यचक्षुषा ज्ञातां तां स्नेहप्रवृत्तिमपि विचिन्तय । तव कन्यादूषणापराधो मया ज्ञातः, इत्थमपि स्वधर्मपत्नीमेनां सन्मानपूर्वकं स्वगृहिणीपदे यदि न स्थापयिष्यसि तर्हि दण्ड्यो भविष्यसि' इति भावः ॥ १७ ॥

**गृहीत इति** । गृहीतः=अवधृतः सन्देशः = वक्तव्योऽर्थः । इत्थं भवदुक्तमर्थं राज्ञे बोधयिष्याम इति भावः । अथ महर्षिः कण्वः राज्ञे संदेष्टव्यमर्थं शार्ङ्गरवाय निदिश्य शकुन्तलायै अपि पतिगृहे वर्तनप्रकारमुपदेष्टुमारभते—**वत्से इति** । संबोधनेन तस्या मौग्ध्यं लालनीयत्वं च सूच्यते । इदानीमित्यनेन इतः पूर्वमन्यत्र कुत्रापि गमनाभावात् शकुन्तलाया अलोकज्ञता गम्यते । अनुशासनीयाऽसि—अनुशासनं = हिते प्रेरणम्, उपदेष्टव्याऽसीत्यर्थः । त्वां लोकवृत्तं शिक्षयामीति भावः । आरण्यकस्याप्यात्मनो लोकवृत्तशिक्षायामधिकारं व्यञ्जयन्नाह—**वनौकसोऽपीति** । वनौकसोऽपि = अरण्यवासिनोऽपि, अपरिचितनागरिकलोका अपीत्यर्थः । लौकिकज्ञाः = गृहिणीगृहस्थादिलोकवृत्तज्ञा इत्यर्थः । अथ शार्ङ्गरवः सबहुमानं गुरूक्तं सामान्यमुखेन अनुवदन्नाह—**न खल्विति** । धीमतां = प्रशस्तबुद्धिशालिनां न खलु कश्चिदविषयो नाम—न किञ्चिदप्यज्ञातमस्तीत्यर्थः । धीमन्तो हि सर्वमेव विषयं करतलामलकवत् पश्यन्तीति भावः । उच्यते च—

कण्वः—सा त्वमितः पतिकुलं प्राप्य—

शुश्रूषस्व गुरून्कुरु प्रियसखीवृत्तिं सपत्नीजने
[1]पत्युर्विप्रकृताऽपि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने [2]भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥१८॥

"सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते" इति । अथ महर्षिः कण्वः शकुन्तलामनुशास्ति—सा त्वमिति । इतः = मत्सकाशात्, धर्मारण्याच्च । पतिकुलं = पतिगृहम् ।

पतिकुलेऽनुष्ठेयान्याह—शुश्रूषस्वेति । गुरून् शुश्रूषस्व । सपत्नीजने प्रियसखीवृत्तिं कुरु । विप्रकृताऽपि रोषणतया भर्तुः प्रतीपं मा स्म गमः । परिजने भूयिष्ठं दक्षिणा भव । भाग्येषु अनुत्सेकिनी ( भव ) । एवं युवतयो गृहिणीपदं यान्ति; वामाः कुलस्य आधयः ( भवन्ति ) इत्यन्वयः ।

गुरून् = पत्युर्गुरुभूतान् श्वश्रूश्वशुरादीन् शुश्रूषस्व = स्वयमतन्द्रिता सती तेषां पादसंवाहनादिरूपां परिचर्यां सादरं कुर्वित्यर्थः । सर्वत्र विधौ लोट् । गुरुशुश्रूषणस्य लोकद्वयकल्याणसाधकतया तस्य प्रधानकर्तव्यताप्रतिपादनाय आद्यस्येनोक्तिः । उक्तं च—

भर्तृशुश्रूषणं स्त्रीणां परो धर्मो ह्यमायया ।
तद्बन्धूनां च कल्याणि ! प्रजानां चानुपोषणम् ॥ इति ।

सपत्नीजने = पत्या परिणीताः परिणेष्यमाणाश्च स्त्रियः सपत्न्यः, तत्समूहे प्रियसखीवृत्तिम्—प्रियसखी = स्नेहबहुमानविश्वासपात्रभूता वयस्या, तद्वृत्तिं =

१ भर्तुः । २ भोगेषु ।

तत्तुल्यां वृत्तिं कुरु। सपत्नीषु प्रियसखीव वाङ्मनःकायैर्निर्व्याजं प्रवृत्तिं विधेहीत्यर्थः । सपत्नीनां मनसि इयमस्मत्प्रियसख्येव, न तु सपत्नी इति भावो यथा स्फुरेत्तथा तासामनुसरणं कुर्विति यावत् । केचित् प्रियसखीवृत्तिमित्यत्र वृत्तिपदेन मनसि मात्सर्येऽपि बहिःप्रवृत्त्या प्रियसखीत्वमेव प्रकाशनीयमिति द्योत्यत इत्याहुः; तन्न, तथात्वे महर्षेः कण्वस्य कपटकरणोपदेशकारित्वप्रसङ्गात् । तस्य चानिष्टत्वात् । विप्रकृताऽपि = अपमानिताऽपि । अपिर्विरोधं प्रतीपगमने हेतुं च दर्शयति । भर्तरि परनारीरमणादिना स्वापमानं कुर्वत्यपीत्यर्थः । रोषणतया = क्रोधोद्भवया ईर्ष्यया पत्युः = भर्तुः । पत्युरिति पतिशब्दः "दुःशीलो दुर्भगो वृद्धो जडो रोग्य-धनोऽपि वा । पतिः स्त्रीभिर्न हातव्यः", "पतिरेव बुधैः स्त्रीणां देवतेति निगद्यते" इत्याद्यर्थं सूचयति । प्रतीपं = प्रातिकूल्यं मा स्म गमः, किन्तु अनुकूलैव भवेत्यर्थः । उक्तं च—"आनुकूलिकतयैव हि यूनामाक्षिपन्ति हृदयानि रमण्यः" इति । परिजने = सेवकवर्गे भूयिष्ठम् = अतिशयेन दक्षिणा भव = अभीष्टसम्पादनादिना अनुकूला भवेत्यर्थः । यथा परिजनास्त्वयि अनुरागिणः सन्तस्त्वदाज्ञावशवर्तिनो भवेयुस्तथा दाक्षिण्यं प्रकाशयेति यावत् । भाग्येषु = भाग्योपनतेषु महादेवीपद-लाभादिषु सत्सु अनुत्सेकिनी = अनभिमाना, अगर्वितेत्यर्थः । उक्तं च—"कं श्रीर्न दर्पयति" इति । यद्वा भाग्येषु = सपत्नीदैवेषु अनुत्सेकिनी = अस्खलिता । भवेत्यनुषज्यते । सौभाग्यात् सपत्नीं महादेवीपदारूढां पत्युर्वल्लभां च दृष्ट्वा 'अस्या एव, न मे भाग्यम्' इति दुःखं न कुर्वित्यर्थः । स्वसौभाग्येषु गर्वं परसौभाग्येषु दुःखं च न कुर्विति यावत् । एवं पतिकुले वर्तनप्रकारमुपदिश्य तस्य अवश्य-कर्तव्यतां बोधयन् करणे उत्कर्षम्, अकरणे अपकर्षं च बोधयन् आह—

यान्तीति । एवम् = उक्तप्रकारेण वर्तमानाः, गुरुशुश्रूषणादिकं कुर्वाणा इत्यर्थः । युवतयः = स्त्रीमात्रम्, त्वं तु किं पुनरिति भावः । गृहिणीपदम्—गृहिण्याः

पदं = स्थानम्, गृहिणीति व्यपदेशं गृहिणीपदाधिकारं वा यान्ति = प्राप्नुवन्ति । उक्तं च—"जनानुरागप्रभवा हि सम्पदः" इति । वामाः = प्रतीपवर्तिन्यः । पत्युर्विरुद्धाचरणाः, पूर्वोक्तशुश्रूषणादिव्यापारमकुर्वाणा इति वा । स्त्रिय इत्यनुषज्यते । कुलस्य = पत्युः पित्रोश्च वंशस्य आधयः = व्याधिवत् पीडाकारिण्यो भवन्ति । यद्वा कुलस्य आधयः = कुलाधिष्ठानानि वामाः = वक्राणीत्यर्थः । "आधिर्मानसपीडायां प्रत्याशायां च बन्धने। व्यसने चाप्यधिष्ठाने" इति विश्वः ।

अत्र सामान्यनिबन्धना अप्रस्तुतप्रशंसा, काव्यलिङ्गम्, 'आधयः' इत्यत्र हेतुः रूपकं वा, पूर्वार्धे कारकदीपकं चालङ्काराः । शार्दूलविक्रीडितं वृत्तम् ।

शकुन्तलां पतिकुले वर्तनप्रकारमुपदिशन् महर्षिः कण्व आह—'वत्से ! शकुन्तले ! सा त्वम् इतो मत्सकाशात् धर्मारण्याच्च प्रतिष्ठमाना कतिपयैरहोभिः पतिगृहं गता तत्र वधूभावेन चरन्ती इत्थं वर्तेथाः—श्वश्रूं श्वशुरं च प्रत्यहं पादसंवाहनव्यजनोद्धूननादिना परिचरन्ती सर्वदा तेषामाश्रवा भव । तस्मिन् महति राजकुले बह्व्यः सपत्न्योऽपि भवेयुः, तासु सर्वासु प्रियसखीभावेनैव वर्तेथाः । मात्सर्यं कदाऽपि मनसि मा कुरु । सपत्नीरमणादिना पत्या अपमानिताऽपि ईर्ष्यावशा सती जातुचिदपि पत्युर्विरुद्धाचरणं मा कुरु । विविधाधिकाराधिकृतेषु गूढचरभावेन परप्रेरितेष्वपि सर्वविधेष्वन्तःपुरसेवकेषु अभीष्टसम्पादनादिना उपकारभारं जनयन्ती तान् स्वात्मनि सश्रद्धान् स्वानुरागिणः स्ववशवर्तिनश्च कुरु; परप्रेरितेषु अप्रमादिनी च भव । स्वसौभाग्यात् महादेवीपदलाभे पत्युर्वल्लभत्वे वा गर्वोत्सिक्ता भूत्वा परान् नावमन्येथाः । कदाचित् सपत्नीनां सौभाग्ये समुन्नते सति आत्मनस्तदभावेन दुःखं न कुरु । हर्षविषादयोश्चित्तवृत्तेः समत्वं यथा न स्खलेत् तथा यतेथाः । इत्थंकुर्वाणाः स्त्रियोऽस्मिन् संसारे गृहिणीपदयोग्याः गृहिणीति व्यपदेशयोग्याश्च भवन्ति । ता एव

कथं वा गौतमी मन्यते ?

**गौतमी**—एत्तिओ वहूजणस्स उवदेसो । जादे ! एदं क्खु सव्वं ओधारेहि ।

एतावान्वधूजनस्योपदेशः । जाते ! एतत्खलु सर्वमवधारय ।

**कण्वः**—वत्से ! परिष्वजस्व मां सखीजनं च ।

**शकुन्तला**—ताद ! इदो एव्व किं पिअंवदामिस्साओ सहीओ णिवत्तिस्सन्ति ?

तात ! इत एव किं प्रियंवदामिश्राः सख्यो निवर्तिष्यन्ते ?

**कण्वः**—वत्से ! इमे अपि प्रदेये । न युक्तमनयोस्तत्र गन्तुम् ।

---

गृहिण्यः । एतत्प्रतीपं कुर्वाणा इतराः पुनः पितृवंशस्य भर्तृवंशस्य च दुर्यशोजनकत्वात् पीडाकारिण्यो भवन्ति । त्वं च गुरुशुश्रूषणादि कुर्वाणा अचिरादेव पत्युर्महादेवीपदं प्राप्स्यसि' इति भावः ॥ १८ ॥

स्वोक्तेऽर्थे कुलपुरन्ध्रया गौतम्याः संवादमिच्छन्नाह—**कथं वेति** । मदुक्तं गौतमी सम्मन्यते न वेत्यर्थः । कण्वोक्तार्थं संमन्यमाना गौतम्याह—**एत्तिओ इति** । 'एतावान् वधूजनस्योपदेशः । जाते ! एतत्खलु सर्वमवधारय' इति संस्कृतम् । एतावान् = उक्तप्रकारः । वधूजनस्येति कर्मणि षष्ठी । जाते = पुत्रि ! अवधारय = उपदेशममुं सावधानतया सर्वदा स्मरेत्यर्थः । कण्वोक्तौ-परिष्वजस्व= आलिङ्ग-इत्युक्तेर्गमनाभ्यनुज्ञा सूच्यते । अथ 'सखीजनं परिष्वजस्व' इति नियुक्ता शकुन्तला मुनिं पृच्छति—**ताद इति** । 'तात ! इत एव किं प्रियंवदामिश्राः सख्यो निवर्तिष्यन्ते' इति संस्कृतम् । इत एव = अस्मात्प्रदेशादेव । काक्वा प्रश्नः । मुनिराह—**वत्से इति** । इमे अपि = प्रियंवदानसूये अपि । यथा त्वमित्यपि-

त्वया सह गौतमी यास्यति ।

**शकुन्तला**—(पितरमाश्लिष्य) कहं दाणिं तादस्स अङ्कादो परिब्भट्टा मलअतरून्मूलिआ चन्दणलदा विअ देसन्तरे जीविअं धारइस्सं ?

कथमिदानीं तातस्याङ्कात्परिभ्रष्टा मलयतरून्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्ये ?

**कण्वः**—वत्से ! किमेवं कातराऽसि ?

अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला ।
तनयमचिरात्प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से ! शुचं गणयिष्यसि ॥१६॥

---

शब्दार्थः । प्रदेये = विवाहकाले योग्यवराय दातव्ये । सख्योरननुगमनजन्यं खेदं परिहरन्नाह—त्वयेति ।

अथासन्नपितृवियोगेन खिन्ना शकुन्तला वदति—कहं इति । 'कथमिदानीं तातस्याङ्कात् परिभ्रष्टा मलयतरून्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्ये' इति संस्कृतम् । अङ्कात् = क्रोडात् । अत्राङ्कशब्दो लालनद्योतकः, समीपादिति भावः । मलयतरून्मूलिता = मलयाचलवर्तिनो वृक्षादुत्पाटिता । उन्मूलनं परिभ्रंशप्रतियोगि । कथमिदानीं जीवितं धारयिष्ये इति सम्बन्धः । उपमया तत्रत्यैर्बहुमानितायाः अपि पितृवियोगाविस्मरणं ध्वन्यते । अथैवं कातरीभूतां दुहितरं मुनिराश्वासयति—वत्से इति । किमेवं कातराऽसि ? वैक्लव्यं नोचितमित्यर्थः ।

तव वियोगखेदः क्रमेणापयास्यतीत्याह—**अभिजनवतो भर्तुरिति** । वत्से ! त्वम् अभिजनवतो भर्तुः श्लाघ्ये गृहिणीपदे स्थिता ( सती ) तस्य विभवगुरुभिः

कृत्यैः प्रतिक्षणम् आकुला ( सती ) अचिरात् प्राची अर्कमिव पावनं तनयं प्रसूय च मम विरहजां शुचं न गणयिष्यसि इत्यन्वयः ।

वत्से = पुत्रि शकुन्तले ! त्वम् अभिजनवतः = महाकुलीनस्य । प्राशस्त्ये मतुप् । "कुलान्यभिजनान्वयौ" इत्यमरः । अथवा अभिजनपदेन तदुत्पन्ना जना लक्ष्यन्ते । तद्वतः = तद्बहुजनवतः । अभितः = समन्ततो जनवतः = स्वजनवत इति वा । अनेन विशेषणेन सकलबन्धुजनकृत्यचिन्तया गृहिणीगतोऽतिशयो व्यज्यते । भर्तुः = पत्युर्दुष्यन्तस्य । भर्तुरित्यनेन तस्य निखिलजगद्भरणसामर्थ्यमपि प्रतिपाद्यते । श्लाघ्ये = सर्वोत्कृष्टे, प्रधाने इत्यर्थः । गृहिणीपदे = गृहिणीस्थाने, अथवा गृहिणीलक्षणेऽधिकारे; महादेवीपदे इत्यर्थः । श्लाघ्ये इति विशेषणेन गृहिणीपदस्य स्पृहणीयत्वं द्योत्यते । स्थिता = चापल्यनिवृत्त्या स्थिरीभूता, लब्धप्रतिष्ठेत्यर्थः । अनेन कृतकृत्यताभिमानः प्रकाश्यते । तस्य = भर्तुः विभवगुरुभिः—विभवैः = सकलापेक्षितद्रव्यसमृद्धिभिः गुरूणि = महान्ति गरिष्ठानि वा, तैः कृत्यैः = नित्यैः, नैमित्तिकैः, सह क्रियमाणैश्च गृहस्थाश्रमकर्मभिः । अनेन कृत्यानामनन्यनिर्वाह्यत्वं सूच्यते । प्रतिक्षणं = प्रतिपलम्, गृहकर्मणां पुङ्खानुपुङ्खत्वादिति भावः । आकुला = व्यग्रा, स्वगृहकार्यसहस्रनिमग्ना तदेकरसतया विगलितवेद्यान्तरा भविष्यसीति भावः । अचिरात् = अविलम्बेन, इदानीं सगर्भत्वादिति भावः । प्राची = पूर्वदिक् अर्कमिव = सूर्यमिव पावनम्—पावयतीति पावनस्तं = पवित्रताऽऽपादकम् । स तु स्वयं पूत एव, तन्नामग्रहणेन अन्येऽपि पावना भवन्तीति भावः । तनयं = पुत्रम् । पावनमिति साधारणम् । प्रसूय = जनयित्वा, प्रकाश्य च । अर्कोपमया तनयस्य जगद्विलक्षणतेजस्वित्वम्, लोकत्रयातिक्रान्तपौरुषत्वम्, चतुर्दशभुवने गीयमानकीर्तिमत्त्वम्, चक्रवर्तित्वमित्यादयो गुणा व्यज्यन्ते । मम = पितुः विरहजां = वियोगजां शुचं = शोकं न गणयिष्यसि = न ज्ञास्यसि ।

( शकुन्तला पितुः पादयोः पतति । )

कण्वः—यदिच्छामि ते तदस्तु ।

---

मद्वियोगजः शोकस्तव न भविष्यतीति न, अपि तु सर्वदा गृहकार्यव्यग्रतया त्वया स न गणनीय इत्यर्थः। अनेन पितृवियोगदुःखस्य प्रकृत्या अविस्मरणीयत्वं द्योत्यते ।

अत्र उपमा, समुच्चयः, काव्यलिङ्गं चालङ्काराः । हरिणी वृत्तम् ।

पतिगृहं प्रतिष्ठमानां तपोवनविरहदुःखेन दूयमानामात्मनोऽङ्कात् परिभ्रश्य स्वजीवितधारणे सन्दिहानां सुतरां कातरां दुहितरं शकुन्तलामाश्वासयन् पतिगृहवैभवप्रदर्शनप्रलोभनैस्तदेकचित्तां करिष्यन् महर्षिः कण्व आह—'वत्से ! शकुन्तले ! मदङ्कात् परिभ्रष्टा देशान्तरे कथं जीवितं धारयिष्यसीति विकल्पेन अलम् । यद्यपि सत्यमिदं यत् सन्तापकारिणो भवन्ति बन्धुजनवियोगास्तथापि गृहस्थाश्रमे वर्तमानस्य नित्यनैमित्तिकावश्यककार्यव्यग्रतया तथाविधशोकचिन्ताया अवसर एव न भवति। त्वमपि बृहत्कुटुम्बस्य महाकुलीनस्य राजराजेश्वरस्य भर्तुर्महाराजदुष्यन्तस्य महादेवीपदे स्थिता सती प्रत्यहं प्रतिक्षणं स्वप्रासादे प्रवर्तमानैर्महावैभवशालिभिर्महोत्सवैः पिबतखादताखादतमोदतादिभिश्च तत्प्रबन्धपर्यवेक्षणादिप्रवणतया सर्वदा व्यग्रा तपोवनं तातं सख्यौ च स्मर्तुं कदाऽवकाशं लप्स्यसे ? एवमेव यथेयं प्राची जगत्पावनं सूर्यं प्रकाशयति तथैवाविलम्बेन पुण्यश्लोकं चक्रवर्तिनं पुत्रं प्रसूय तल्लालनैकाग्रा दरिद्रस्य वृद्धस्य पितुर्मम विरहशोकं नैव गणयिष्यसि । अतो विमुच्यतां वैक्लव्यम्' इति भावः ॥ १९ ॥

भविष्यच्छ्रेयःप्रलोभनेन शकुन्तलाया विरहखेदं शिथिलीकृत्य पतिगृहगमनमनुजानन्महर्षिराह—**यदिच्छामीति** । ते यदिति संबन्धः । ते = त्वत्संबन्धि

**शकुन्तला**—(सख्यावुपेत्य) हला ! दुवे वि मं समं एव्व परिस्सजह ।

हला, द्वे अपि मां सममेव परिष्वजेथाम् ।

**सख्यौ**—(तथा कृत्वा) सहि ! जइ णाम सो राआ पच्चहिण्णाणमन्थरो भवे तदो से इमं अत्तणामहेअअङ्किअं अङ्गुलीअअं दंसेहि ।

सखि ! यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत्ततस्तस्येदमात्मनामधेयाङ्कितमङ्गुलीयकं दर्शय ।

**शकुन्तला**—इमिणा संदेहेण वो आकम्पिदम्हि ।

अनेन संदेहेन वामाकम्पितास्मि ।

---

यत् = पुनर्दर्शनम्, अभिमतफललाभादिकं वा । तत्सर्वं फलत्वित्यर्थः । शकुन्तला सख्यावाह—**हला इति** । 'हला, द्वे अपि मां सममेव परिष्वजेथाम्' इति संस्कृतम् । सममेव = युगपदेव । अनेन परिष्वङ्गस्योभयपार्श्वनिर्वर्तनीयत्वं प्रकाश्यते । परिष्वजेथाम् = आलिङ्गतम् । तथाकृत्वा = परिष्वज्य ।

अथ सख्यौ महर्षेर्दुर्वाससः शापमाशङ्क्य तन्मोक्षोपायमुपदिशतः—**सहि इति** । 'सखि ! यदि नाम स राजा प्रत्यभिज्ञानमन्थरो भवेत्ततस्तस्येदमात्मनामधेयाङ्कितमङ्गुलीयकं दर्शय' इति संस्कृतम् । प्रत्यभिज्ञानमन्थरः—प्रत्यभिज्ञाने = त्वद्दर्शने 'सेयं शकुन्तला' इति ज्ञाने मन्थरः = मन्दः, झटिति एतादृग्ज्ञानरहित इत्यर्थः । "मन्थरं मन्दसुन्दरम्" इति **वैजयन्ती** । सखीभ्यामनेन वाक्येन गूढः शापरूपोऽर्थस्तत्परिणामात्मना बोधितः । तन्नामधेयाङ्कितेऽङ्गुलीयके दर्शिते प्रत्यभिज्ञा भवेदिति गूढप्रकाशोभयार्थसाधारणम् । शकुन्तलोत्तरयति—**इमिणा इति** । 'अनेन सन्देहेन वामाकम्पिताऽस्मि' इति संस्कृतम् ।

**सख्यौ**—मा भाआहि; सिणेहो पावसङ्की ।

मा भैषीः; स्नेहः पापशङ्की ।

**शार्ङ्गरवः**—[1]युगान्तरमारूढः सविता । त्वरतामत्रभवती ।

**शकुन्तला**—(आश्रमाभिमुखी स्थित्वा) ताद ! कदा णु भूओ तवोवणं पेक्खिस्सं ?

तात ! कदा नु भूयस्तपोवनं प्रेक्षिष्ये ?

**कण्वः**—श्रूयताम्—

भूत्वा चिराय [2]चतुरन्तमहीसपत्नी
दौष्यन्तिमप्रतिरथं तनयं [3]निवेश्य ।

---

आकम्पिताऽस्मि—भयं मे जातमित्यर्थः । अथ सख्यौ समाश्वासयतः-**मा भाआहि** इति । 'मा भैषीः; स्नेहः पापशङ्की' इति संस्कृतम् । मा भैषीः = भयं मा कुरु । आवां स्नेहादपायमाशङ्क्य एवमुक्तवत्यौ इत्यर्थः । अनेन शापस्य निगूहनं कृतम् ।

अथ शार्ङ्गरवः कालातिक्रमं संभाव्य प्रस्थानाय प्रेरयन्नाह—**युगान्तरमिति** । युगान्तरं = युगपरिमाणम् अन्तरम् = अवकाशम् । "युगं हस्तचतुष्केऽपि" इति विश्वः । सूर्यः उदयाद्रेर्हस्तचतुष्कप्रमाणं यावत् उन्नतमण्डलो जात इत्यर्थः । इतः परं धर्मबाधा भवेत्; अत इदानीमेव प्रस्थातव्यमिति भावः । अथ शकुन्तला तपोवनस्नेहपरवशा सती तातं पृच्छति—**ताद इति** । 'तात ! कदा नु भूयस्तपोवनं प्रेक्षिष्ये' इति संस्कृतम् । कदा पुनरत्र प्रत्यागमनं मे भवेदित्यर्थः ।

अथ महर्षिः कण्वो वार्धके पत्या सह त्वमत्र भूयः समेष्यसीत्याह—**श्रूयताम्—भूत्वेति** । चिराय चतुरन्तमहीसपत्नी भूत्वा अप्रतिरथं तनयं

---

१ दूरमधिरूढः । २ सदिगन्तमही । ३ प्रसूय ।

[2]भर्त्रा तदर्पितकुटुम्बभरेण सार्धं
शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन्॥२०॥

दौष्यन्तिं निवेश्य तदर्पितकुटुम्बभरेण भर्त्रा सार्धं शान्तेऽस्मिन्नाश्रमे पुनः पदं करिष्यसि इत्यन्वयः ।

चिराय = चिरकालम् । अनेन दीर्घायुष्यं प्रतिपाद्यते । चतुरन्तमहीसपत्नी— चत्वारः अन्ताः = अवधयो यस्याः सा, चत्वारः = समुद्राः । विशेषणेनैव विशेष्य-प्रतिपत्तिः । चतुःसमुद्रपर्यन्तेत्यर्थः । तथाविधाया मह्याः = पृथ्व्याः सपत्नी = 'परिग्रहबहुत्वेऽपि' इत्यादिपूर्वोक्त्यनुसारेण महादेवीत्यर्थः । भूत्वा = चतुरुदधिमेखलितभूवलयोपभोगमुपभुज्येति भावः । अप्रतिरथम् —न विद्यते प्रति = सम्मुखो रथो यस्य स तम्, प्रतिपक्षाभावात् । अप्रतियोगिनमित्यर्थः । "मात्रार्थे चाभिमुख्ये च प्रतिदानादिषु प्रति" इति **विश्वः** । तनयं = तनोति कुलमित्यन्वर्थं कुलविस्तारकं पुत्रं दौष्यन्तिं = 'दुष्यन्तेनाहितं तेजः' इत्याद्यग्न्युक्त्यनुसन्धानात् दुष्यन्ततनयं निवेश्य = महीभाररक्षणे नियुज्य, यद्वा विवाहं कारयित्वा । "निवेशः शिबिरोद्वाहविन्यासेषु प्रकीर्तितः" इति **विश्वः** । तथा च **महाभारते**— "निवेशार्थ्यखिलां भूमिं कन्याभैक्ष्यं चराम्यहम्" इति । तदर्पितकुटुम्बभरेण— तस्मिन् = पुत्रे अर्पितः = विन्यस्तः कुटुम्बस्य = पोष्यवर्गस्य, राज्यस्य वा भरः = भारो येन तथाविधेन भर्त्रा = पत्या दुष्यन्तेन सार्धं = सह । अत्र शकुन्तलायाः प्रकृतत्वात् भर्तुरप्राधान्येनोक्तिः । शान्ते = प्रकरणानुरोधात् चरमे वयसि । यद्वा शान्ते इति आश्रमविशेषणम्; शान्ते = मनसः शान्त्यापादके । वार्धके शान्तीच्छया पुनराश्रमागमनेऽयं हेतुः । आश्रमे = धर्मारण्ये पुनः = भूयः । इदं पूर्वस्थितिस्मारणार्थम् । पदं = स्थानं करिष्यसि, पुनराश्रमे आगत्य निवासं करिष्यसीत्यर्थः ।

२ तत्सन्निवेशितधुरेण सहैव भर्त्रा ।

**गौतमी**—जादे ! परिहीअदि गमणवेला। णिवत्तेहि पिदरं। अहवा चिरेण वि पुणो पुणो एसा 'एव्वं मन्तइस्सदि; णिवत्तदु भवं।

जाते ! परिहीयते गमनवेला। निवर्तय पितरम्। अथवा चिरेणापि पुनः पुनरेषैवं मन्त्रयिष्यते; निवर्ततां भवान्।

**कण्वः**—वत्से ! उपरुध्यते तपोऽनुष्ठानम्।

---

अत्र काव्यलिङ्गम्। वसन्ततिलका वृत्तम्।

'कदा नु भूयस्तपोवनं प्रेक्षिष्ये' इति वदन्तीं तपोवनविरहकातरां धर्मसुतां शकुन्तलां भूयस्तपोवनागमनावसरं कथयन्मुनिराह—'वत्से ! शकुन्तले ! किमिति तपोवनविरहकातराऽसि ? आबाल्यादद्य यावत् तपोवने एव वर्धिताऽसि, अथ इतः परं पतिगृहं गत्वा तत्र चिरकालपर्यन्तं चक्रवर्तिनो महाराजदुष्यन्तस्य महादेवीपदे स्थित्वा दुर्लभान् राजभोगानुपभुज्य असपत्नमेकच्छत्रं पुत्रं स्वसाम्राज्यसिंहासनेऽभिषिच्य तस्मिन्नेव स्वपोष्यवर्गस्य राज्यस्य च भारं विन्यस्य निश्चिन्तेन भर्त्रा सह चरमे वयसि विषयवासनासु विरतासु शान्त्येकनिकेतनेऽस्मिन् धर्मारण्ये आगत्य वानप्रस्थव्रतं पालयन्ती निवसिष्यसि। तत्कृतमुत्कण्ठया' इति भावः ॥२०॥

अनयोस्ताततनययोः पुनः पुनः संलापेन गमनवेलातिक्रममाशङ्कमाना गौतमी शकुन्तलां कण्वं चाह—जादे इति। 'जाते ! परिहीयते गमनवेला। निवर्तय पितरम्। अथवा चिरेणापि पुनः पुनरेषा एवं मन्त्रयिष्यते; निवर्ततां भवान्' इति संस्कृतम्। परिहीयते = अतिक्रामति। अथवा = पक्षान्तरे चिरेणापि = चिरकालमपि एवं = तपोवनविरहस्य भवद्विरहस्य चासह्यत्वम्। निवर्ततां भवान्—भवानेव संलापमोहं परित्यज्य इतः परावर्ततामिति भावः। गौतमीवचनमनुमन्यमानः कण्व आह—**वत्से इति**। उपरुध्यते तपोऽनुष्ठानम्—एवं पुनः पुनः

---

१ ण णिउत्तिस्सदि।

**शकुन्तला**—(भूयः पितरमाश्लिष्य) तवच्चरणपीडिदं तादसरीरं; ता मा अदिमेत्तं मम किदे उक्कण्ठिदुम्।

तपश्चरणपीडितं तातशरीरम्; तन्माऽतिमात्रं मम कृत उत्कण्ठितुम्।

**कण्वः**—(सनिःश्वासम्)—

'शममेष्यति मम शोकः कथं नु वत्से! त्वया रचितपूर्वम्।
उटजद्वारविरूढं नीवारबलिं विलोकयतः॥ २१॥

---

संलापप्रवर्तनेन मम तपोऽनुष्ठानस्य कालातिपातो भवेदित्यर्थः। अतो गच्छामीति भावः।

तपोऽनुष्ठानशब्दमाकर्ण्य तपःकृशं पितुः शरीरं सस्नेहं पश्यन्ती शकुन्तला पितरमाश्लिष्याह—**तवच्चरण पीडिदं इति**। 'तपश्चरणपीडितं तातशरीरम्; तन्मा अतिमात्रं मम कृते उत्कण्ठितुम्' इति संस्कृतम्। तपश्चरणपीडितम्—तपश्चरणेन = नित्यानुष्ठानेन, मम कृते सोमतीर्थे विहितेन विशेषेण तपसा वा पीडितं = कृशम्, दुर्बलमित्यर्थः। तत् = दुर्बलशरीरे उत्कण्ठाविशेषो दुःसहो भवेदिति हेतोः। अतिमात्रम् = अत्यन्तं मम कृते=मन्निमित्तम् उत्कण्ठितुम्, उत्कण्ठितुं न योग्यमित्यर्थः। दुर्बलशरीरस्य पुनर्मन्निमित्तपीडान्तरप्रसङ्गो दुःसहो भवेदिति भावः। कण्वोक्तौ—**सनिःश्वासमिति**। निश्वासः शोकानुभावः।

शकुन्तलाविरहदुःखस्य सर्वदा अविस्मरणीयत्वं वर्णयन् महर्षिराह—**शममेष्यतीति**। हे वत्से! त्वया रचितपूर्वमुटजद्वारविरूढं नीवारबलिं विलोकयतो मम शोकः कथं नु शममेष्यति इत्यन्वयः।

---

१ अपयास्यति मे शोकः।

हे वत्से=धर्मपुत्रि शकुन्तले! संबोधनेन शोकहेतुभूतो वात्सल्यातिशयः सूच्यते। त्वया=भवत्या शकुन्तलया। अत्र त्वयेत्यनेन निपुणया गुणवत्या इत्यादिगुणोत्कर्षो द्योत्यते। रचितपूर्वम्—पूर्वं रचितो रचितपूर्वः, त्वया इतः प्राग्विप्रकीर्णमित्यर्थः। उटजद्वारविरूढम्—उटजद्वारे=पर्णशालायाः प्रवेशमुखे। अयं नित्यविलोकने हेतुः। विरूढं=संजातम्, तोयसम्पर्केणाङ्कुरितमित्यर्थः। "विरूढस्तु सञ्जाताङ्कुरितेऽन्यवत्" इति **विश्वः**। नीवारबलिम्—नीवारैः=तृणधान्यैः बलिं=भूतोपहारम्। पर्णशालायाः प्रवेशद्वारे त्वया भूतबलिरूपेण विप्रकीर्णानां तृणधान्यानां जलसम्पर्केण उद्भूतानङ्कुरानित्यर्थः। विलोकयतः=गमनागमनावसरे वारं वारं पश्यतो मम=कण्वस्य। बाल्यादारभ्याद्य यावत् कृतत्वत्परिपालनस्येत्यर्थान्तरसंक्रमितम्। शोकः=त्वद्विरहपीडा कथं नु=केन प्रकारेण। नु इति वितर्के। शममेष्यति=गमिष्यति। यद्वा कथं नु! कथमपि नेति काकुः।

अत्र परिकरः काव्यलिङ्गं च अलङ्कारौ। आर्या जातिः।

शकुन्तलया आत्मविरहे अतिमात्रम् उत्कण्ठितुं न योग्यमिति अनुनीतस्तद्विरहस्यात्मनः सर्वदा अविस्मरणीयत्वं वर्णयन् महर्षिराह—'वत्से शकुन्तले! किमिदं कथयसि, यत् त्वद्विरहे मया नातिमात्रमुत्कण्ठितव्यमिति! अयि मुग्धे! किमिदमुत्कण्ठितव्यमनुत्कण्ठितव्यं वा स्वेच्छया भवति? पश्य; त्वया प्रत्यहं पर्णशालाप्रवेशद्वारोपान्ते भूतोपहाररूपेण विप्रकीर्णानां नीवाराणां जलसम्पर्केण समुद्भूतानङ्कुरान् वारं वारं गमनागमनावसरे विलोक्य इमे मम पितृवत्सलया कन्यया विप्रकीर्णानां नीवाराणामङ्कुरा इति संजातत्वत्स्मरणस्य आबाल्यादद्य यावत् कृतत्वत्परिपालनस्य मम तव विरहजन्यः शोकः केनोपायेन शान्तिमेष्यति? तद् वृथैव कथयसि—नातिमात्रमुत्कण्ठितुं योग्यं मयेति' इति भावः॥ २१॥

गच्छ। शिवास्ते पन्थानः सन्तु।

( निष्क्रान्ता शकुन्तला सहयायिनश्च। )

**सख्यौ**—(शकुन्तलां विलोक्य) हद्धी ! हद्धी ! अन्तलिहिदा सउन्दला वणराईए !

हा धिक् ! हा धिक् ! अन्तर्हिता शकुन्तला वनराज्या !

**कण्वः**—(सनिःश्वासम्) अनसूये ! गतवती वां सहधर्मचारिणी। निगृह्य शोकमनुगच्छतं मां प्रस्थितम्।

**उभे**—ताद ! सउन्दलाविरहिदं सुण्णं विअ तवोवणं कहं पविसावो ?

---

अथ शकुन्तलाया गमनमनुमन्यमान आशिषं प्रयुङ्क्ते—**गच्छेति**। ते पन्थानः शिवाः सन्तु, तत्र गन्तव्यमार्गो निर्विघ्नो भवत्वित्यर्थः।

अथ शकुन्तलायामदर्शनं गतायां दुःसहविरहवेदनापीडिते सख्यौ सनिर्वेदमाहतुः—**हद्धि ! हद्धीति**। 'हा धिक् ! हा धिक् ! अन्तर्हिता शकुन्तला वनराज्या' इति संस्कृतम्। अन्तर्हिता = व्यवहिता। वनराज्या = वनपङ्क्त्या, चक्षुर्गोचरमतिक्रान्तेत्यर्थः। अथ शकुन्तलास्नेहपरवशतया कण्वोऽपि सखीनिर्विशेषावस्थः सन् सखेदं तदेवानुवदति—**अनसूये इति**। गतवतीति भूतप्रत्ययेन 'यास्यत्यद्य शकुन्तला' इति पूर्वपद्ये यास्यतिपदेन सूचितमुत्कण्ठाऽवगाहनमपि जातमिति सूच्यते। वां सहधर्मचारिणी = मदनुशासनेन युवाभ्यां सह चरितधर्मा। निगृह्य उपरुध्य अनुगच्छतम् = अनुसरतम्।

अथ सख्यौ शकुन्तलाविरहितयोरात्मनोस्तपोवनप्रवेशस्याशक्यतां दर्शयन्त्यावाहतुः—**ताद इति**। 'तात ! शकुन्तलाविरहितं शून्यमिव तपोवनं कथं प्रविशावः' इति संस्कृतम्। शून्यमिव = प्रियसख्याः शकुन्तलाया अभावेन

तात ! शकुन्तलाविरहितं शून्यमिव तपोवनं कथं प्रविशावः ?

**कण्वः**—स्नेहप्रवृत्तिरेवंदर्शिनी । (सविमर्शं परिक्रम्य) हन्त भोः ! शकुन्तलां पतिकुलं विसृज्य लब्धमिदानीं स्वास्थ्यम् । कुतः !

अर्थो हि कन्या परकीय एव तामद्य संप्रेष्य परिग्रहीतुः ।
[1]जातो ममायं विशदः प्रकामं प्रत्यर्पितन्यास इवान्तरात्मा ॥२२॥

---

शोभारहितमिवेत्यर्थः । इवेति प्रतीतौ । अयं तपोवनप्रवेशस्याशक्यत्वे हेतुः । सख्योरुक्तौ शून्यत्वप्रतिपत्तेर्हेतुं दर्शयन् महर्षिराह—**स्नेहप्रवृत्तिरिति** । स्नेह-प्रवृत्तिः—स्नेहस्य = प्रेम्णः प्रवृत्तिः = व्यापारः, आधिक्यमित्यर्थः । एवंदर्शिनी = तपोवनस्य शून्यत्वाभासिका । शकुन्तलायां युवयोः स्नेहातिशयात्तद्विरहे तपोवनं शून्यमिव भासते इत्यर्थः । अनेन मुनेर्मनसि सत्याख्यभावस्योदयो द्योत्यते । सविमर्शं परिक्रम्य—जगद्व्यवहारस्य एवंप्रायत्वमवधार्य उटजाङ्गणे चरित्वेत्यर्थः ।

अथ आबाल्यात् शकुन्तलाया वर्धनपोषणलालनविनयाधानादिकर्मणा अद्य यावत् गले पतितं गृहस्थधर्ममाचर्य सौभाग्योपनतस्यानुरूपवरस्य समीपं तस्याः प्रेषणेनात्मनः कृतकृत्यतामनुभवन्महर्षिः ससन्तोषमाह—**हन्तेति** । हन्तेति हर्षे । भो इति दैवमुद्दिश्य संबोधनम् । शकुन्तलां = स्वधर्मपुत्रीम् । शकुन्तलामिति नामग्रहणेन शकुन्तेभ्यस्तल्लाभरूपपूर्ववृत्तान्तस्मरणं द्योत्यते । पतिकुलं विसृज्य = पतिकुलं प्रेष्येत्यर्थः । इदानीम् = अधुना । अनेन अद्य यावत् शकुन्तलारक्षणादि-भिरस्वास्थ्यमासीदिति द्योत्यते । स्वास्थ्यं=निश्चिन्तत्वेन प्रकृतिस्थत्वम् । स्वास्थ्यं लब्धमित्यनेन आत्मनः कृतकृत्यता ध्वन्यते ।

तदेव विवृण्वन्नाह—**अर्थो हीति** । हि कन्या परकीय एवार्थः; तामद्य परि-

---

1 जातोऽस्मि सद्यो विशदान्तरात्मा चिरस्य निक्षेपमिवार्पयित्वा ।

( इति निष्क्रान्ताः सर्वे। )

इति चतुर्थोऽङ्कः।

---

ग्रहीतुः संप्रेष्य अयं मम अन्तरात्मा प्रत्यर्पितन्यास इव प्रकामं विशदो जातः इत्यन्वयः।

हीति निश्चये। कन्या = स्वीयाऽपि दुहिता परकीय एव = परसंबन्धी एव अर्थः = धनम्। उत्पत्त्यनन्तरमेव कन्यारूपोऽर्थः परकीयत्वेनैव ज्ञात इत्यर्थः। तां = कन्याम् अद्य = इदानीं परिग्रहीतुः = परिणेतुर्वरस्य समीपे संप्रेष्य = विसृज्य अयम् = एषः मम = मुनेः अन्तरात्मा = आभ्यन्तरं स्वरूपं (मनः) प्रत्यर्पितन्यास इव—प्रत्यर्पितः = स्थापकाय प्रतिदत्तः न्यासः = पूर्वं विश्वासेन स्थापितः पश्चा-दिद्रव्यरूपो निक्षेपो येन स इव, तदन्तरात्मेवेत्यर्थः। प्रकामम् = अत्यर्थं विशदः = चिन्ताद्यपगमेन निर्मलः जातः = भूतः।

केनापि विश्वासेन स्वान्तिकं न्यासीकृते पश्चादिद्रव्ये चिरकालसंसर्गात् स्नेहोदयेऽपि पुनः स्थापकाय प्रत्यर्पणे मनसि किमपि वैशद्यमनुभवपथमायाति, तथैव कन्यारूपं स्वीयमपि वस्तुतः परकीयमर्थमद्य परिग्रहीतुर्निकटे संप्रेषितवतो ममायमन्तरात्मा प्रकामं वैशद्यमनुभवतीति भावः।

अत्र काव्यलिङ्गमुपमा च। स्वान्तरात्मनि प्रत्यर्पितन्यासत्वमुत्प्रेक्ष्यते इति केचित्। मतिहर्षौ भावौ प्राधान्येन गम्येते। इन्द्रवज्रा वृत्तम्। 'तामद्य संप्रेष्य परिग्रहीतुः' इत्यनेन वक्ष्यमाणपञ्चमाङ्कार्थबिन्दुरुपन्यस्तः॥ २२॥

इति नारायणोक्तीते लक्ष्मीरित्यभिधाऽङ्किते।
शाकुन्तलस्य व्याख्याने चतुर्थोऽङ्कः समाप्तिमैत्॥

---

इति श्रीमन्नारायणशास्त्रिणा प्रणीतायामभिज्ञानशाकुन्तलस्याभिनवटीकायां लक्ष्मीसमाख्यायां चतुर्थोऽङ्कः।

## पञ्चमोऽङ्कः ।

(ततः प्रविशत्यासनस्थो राजा विदूषकश्च ।)

**विदूषकः**—(कर्णं दत्त्वा) भो वअस्स ! संगीतसालन्तरे अवधाणं

---

पूर्वस्मिन्नङ्के शकुन्तलायाः पतिकुलप्रस्थानमुपवर्णितम् । अस्मिन्नङ्के शकुन्तलायाः पतिकुलप्राप्तिशेषभूतमितिवृत्तं वर्णयिष्यते । अस्मिन्नङ्के कण्वप्रेषितैर्मुनिभिः शकुन्तलापरिग्रहविषये सविशेषं निर्बन्धे कृतेऽपि राज्ञस्तदपरिग्रहवर्णनात् प्रधाननायकस्य राज्ञो दुष्यन्तस्य स्थैर्यगुणः प्राधान्येन प्रतिपादयिष्यते । सात्वती वृत्तिः । धर्मवीरो रसः । यूनोः परस्परं दर्शनसंलापादेः सत्त्वेऽपि दुष्यन्तस्य दुर्वासःशापवशात् स्मृतितिरोधानेन, शकुन्तलायाश्च तथाविधदुष्यन्तभावावलोकनेन रोषदैन्यशोकावेगव्यग्रतया न सम्भोगश्रृङ्गाररसप्रसङ्गः । अन्योन्यनिबन्धनस्वभावा हि रतिरेकत्रानुदिता चेत् परत्रापि नोदेतीति सिद्धान्तः । शकुन्तलायामस्ति रत्युद्बोध इति वदतामनुरोधेनास्फुटः शापविप्रलम्भः । स च मध्ये मध्ये रोषशोकप्रसङ्गात् ईर्ष्यासंमिश्रः करुणात्मना परिणमतीत्यादि तत्तदवसरे स्फुटीकरिष्यते ।

चतुर्थाङ्कसमाप्तौ 'तामद्य सम्प्रेष्य परिग्रहीतुः' इत्यादिना परिग्रहीतृपदेन सूचितस्य नायकस्य राज्ञो दुष्यन्तस्य तन्नर्मसचिवस्य चावसरोचितं प्रवेशमाह—**तत इति** । कर्णं दत्वा = आकर्णनमभिनीय ।

अथ दुर्वासःशापव्यवहितशकुन्तलास्मृतिः स्वराजधान्यां स्थितो यथापूर्वं राज्यकार्याणि कुर्वाणः कदाचित् विश्रान्त्यवसरे विविक्ते स्वैरमासीनो राजा सङ्गीतशालायां प्रवृत्तं गानमाकर्णयता सहोपविष्टेन विदूषकेण तथाविधगीताकर्णनायानुरुध्यते—**भो वअस्स इति** । 'भो वयस्य ! सङ्गीतशालान्तरे अवधानं देहि ।

देहि । [1]'कलविसुद्धाए गीदीए सरसंजोओ सुणीअदि । जाणे तत्तहोदी हंसवदिआ वण्णपरिअअं करेदि त्ति ।

भो वयस्य ! संगीतशालान्तरेऽवधानं देहि । कलविशुद्धाया गीतेः स्वरसंयोगः श्रूयते । जाने तत्रभवती हंसपदिका वर्णपरिचयं करोतीति ।

---

कलविशुद्धाया गीतेः स्वरसंयोगः श्रूयते । जाने तत्रभवती हंसपदिका वर्णपरिचयं करोतीति' इति संस्कृतम् । सङ्गीतशालान्तरे—'नृत्यं गीतं च वाद्यं च त्रयं सङ्गीतमुच्यते', तदर्था शाला सङ्गीतशाला; तस्या अन्तरे = मध्ये अवधानं देहि = मनोयोगपूर्वं सावधानमाकर्णयेत्यर्थः । कलविशुद्धायाः—कला=मधुरास्फुटध्वनियुक्ता । इदं स्त्रीनादविवक्षया । विशुद्धा=शङ्कितभीतादिदोषरहिता सलक्षणा च । अथवा ग्रामरागजनिका । तस्याः गीतेः = गानस्य स्वरसंयोगः—स्वराणां=षड्जादीनां संयोगः = यथालक्षणं सम्बन्धः, गीतिसम्बन्धिस्वरालापो वा । तथा चोक्तम्—

गीतयः पञ्च शुद्धाख्या भिन्ना गौडा निवेसरा ।
साधारणी विशुद्धा स्यादवक्रैर्ललितैः स्वरैः ॥ इति ।

हंसपदिका = काचित् प्रधाननर्तकी । राज्ञो देवीष्वेकेति केचित् । वर्णपरिचयं करोति = स्थाय्यारोह्यवरोह्यात्मकगानक्रियाभ्यासं करोति । "वर्णो गीतिक्रमः" इति वैजयन्ती ।

या देवविषया गीतिर्देववाणिस्तु सा भवेत् ।
मनुष्यविषया सैव वर्णनाम्ना प्रकाशते ॥

इति भरतः ।

---

१ तालअसुद्धाए वीणाए ।

राजा—तूष्णीं भव; यावदाकर्णयामि ।

(आकाशे गीयते ।)

'अहिणवमहुलोलुवो भवं
तह परिचुम्बिअ चूअमञ्जरिं ।
कमलवसइमेत्तणिव्वुदो
महुअर ! विह्मरिओ सि णं कहं ॥ १ ॥

अभिनवमधुलोलुपो भवांस्तथा परिचुम्ब्य चूतमञ्जरीम् ।
कमलवसतिमात्रनिर्वृतो मधुकर ! विस्मृतोऽस्येनां कथम् ॥

---

गानक्रियोच्यते वर्णः स चतुर्द्धा निरूपितः ।
स्थाय्यारोह्यवरोही च सञ्चारी............॥ इति च ।

अथ राजा गीताकर्णनेऽहमवहितोऽस्मीत्याह—**तूष्णीं भवेति** । तावदिति शेषः ।

अथ हंसपदिका राज्ञो महादेव्याम् उपेक्षां मधुकरोपालम्भापदेशेन व्यञ्जयन्ती गीतिकामाह—**अहिणव इत्यादि** । 'अभिनवमधुलोलुपो भवान् तथा परिचुम्ब्य चूतमञ्जरीम् । कमलवसतिमात्रनिर्वृतो मधुकर ! विस्मृतोऽस्येनां कथम्' इति संस्कृतम् । हे मधुकर ! अभिनवमधुलोलुपो भवान् तथा चूतमञ्जरीं परिचुम्ब्य कमलवसतिमात्रनिर्वृतः (सन्) एनां कथं विस्मृतोऽसि इत्यन्वयः ।

हे मधुकर = मधुरसास्वादलम्पटतयाऽन्वर्थनामधेय भ्रमर ! पक्षान्तरे नित्य॰ नवाङ्गनोपभोगकामुक धीरललितराजन् ! अभिनवमधुलोलुपो भवान्—अभिनवे = प्रत्यग्रत्वेन समयविशेषजातत्वेन च नूतने मधुनि = पुष्परसविशेषे लोलुपः =

---

१ अहिणवमहुलोहभाविदो ।

सतृष्णः, त्वमपरिचिते मकरन्दे सतृष्णोऽसीत्यर्थः । भवानित्यनेन उपहासगर्भा प्रशंसा सूच्यते । एतादृक्स्वभावोऽपि कथं तां विस्मृतोऽसीति सम्बन्धः । तथा= तेन प्रकारेण । अनेन पूर्वानुभूतः परिचुम्बनप्रकारः स्मार्यते । तस्य वर्णयितुमशक्यत्वं च द्योत्यते । चूतमञ्जरीम् = आम्रमञ्जरीम्, अभिनवरसामित्यर्थादायाति । परिचुम्ब्य—परितः = समन्ततः चुम्बित्वा, सर्वाङ्गीणं रसमास्वाद्येत्यर्थः । कमलवसतिमात्रनिर्वृतः—कमलं = सर्वदा निवासेनानुभूतं पद्मम्, न त्वपूर्वं चूतमञ्जर्यादि; तत्रापि वसतिमात्रम्, न तु मध्वास्वादः; तेन निर्वृतः = सुखाभिमानी । पक्षान्तरे कमलवसतिः = पद्मिनी ( कामशास्त्रोक्तगुणविशिष्टा वराङ्गना ) तन्मात्रेण = तदास्वादमात्रेण । निर्वृत इति पूर्ववत् । तथाभूतः सन् एनां = चूतमञ्जरीं कथं विस्मृतोऽसि ? विस्मर्तुं न योग्यम् । विस्मरणे न किञ्चित्कारणं पश्यामीत्युपालम्भः प्रकाश्यते । एवं स्मारितोऽप्यतः परमेनां सम्भावयेत्यनुनयश्च ।

अत्र मधुनः अभिनवत्वं परिचुम्बनस्य हेतुः । अनेन राज्ञश्चापल्यं सूच्यते । चूतमञ्जरीमित्यनेन मकरन्दमाधुर्यसौरभातिशयशालिन्यास्तस्याः पुष्पान्तरेभ्यो व्यतिरेकः, अविस्मरणीयत्वं च द्योत्यते । अत्र महादेवीवसुमत्युपेक्षणरूपः प्रस्तुतो राजवृत्तान्तः सारूप्येण प्रतीयत इति सारूप्यनिबन्धना अप्रस्तुतप्रशंसा, हेतुश्च । अनेन प्रस्तुतं शकुन्तलाविस्मरणं गम्यते इति आक्षेपनामाङ्गमिदम् । तदुक्तं **दशरूपके**—"गर्भबीजसमुद्भेदादाक्षेपः परिकीर्तितः" इति । पताकास्थानकमिदम् । "मधुव्रते मधुकरः कामुकेऽपि प्रकीर्तितः" इति **विश्वः** । अपरवक्त्रं छन्दः ।

सङ्गीतशालान्तरे हंसपदिकया राज्ञो महादेव्यामुपेक्षां निमित्तीकृत्य मधुकरोपालम्भापदेशेन गीयमानां गीतिकां शृणोति राजा; तथा हि—'हे नित्यनवमधुरसास्वादचपल मधुकर ! नित्यनवीनवराङ्गनोपभोगकामुक धीरललितमहाराज ! तथा लोभातिशयवशादभिनवमकरन्दमाधुर्यसौरभातिशयशालि-

**राजा**—अहो रागपरिवाहिनी गीतिः !

**विदूषकः**—किं दाव गीदीए अवगओ अक्खरत्थो ?

किं तावद्गीत्या अवगतोऽक्षरार्थः ?

**राजा**—( स्मितं कृत्वा ) सकृत्कृतप्रणयोऽयं [1]जनः । तदस्या

---

न्याश्चूतमञ्जर्याः सर्वाङ्गीणं रसं समास्वाद्य महाकुलीनां पूर्णलावण्यतारुण्यतरङ्गितकलेवरां महादेवीं वसुमतीं तथाविधस्नेहातिशयवशात् तथा गाढं परिचुम्ब्य सम्प्रति सर्वदाऽनुभूतकमलनिवासमात्रेण सुखाभिमानी पद्मिन्येकवारसमागमसंजाततृप्तिः, वराङ्गनासहवासैकमात्रनिर्वृतः सन् पुनरेनां चूतमञ्जरीं कथं विस्मृतवानसि ? मधुलोलुपस्य ते अभिनवामन्दमरन्दतुन्दिला चूतमञ्जरी विस्मर्तुं न युज्यते । कमलवासमात्रेण न मध्वास्वादो भवतीति मधुलिप्सया सद्य एनां सम्भावय' इति भावः ॥१॥

गानप्रशंसां कुर्वन् राजा प्राह—**अहो इति** । अहो इत्याश्चर्ये । रागपरिवाहिनी—रञ्जनं रागस्तस्य परिवाहः = निष्यन्दः सोऽस्ति यस्यां सा, अत्यन्तरञ्जिका, अतिहृद्येत्यर्थः । विदूषकः पृच्छति—**किं दाव इति** । किं तावद्गीत्या अवगतोऽक्षरार्थः' इति संस्कृतम् । तावत् = साकल्येन । अवगतः = ज्ञातः । अक्षरार्थः—अक्षराणां = स्वरावष्टम्भभूतानामर्थः = गूढोऽभिसन्धिः । बाह्यार्थस्तु मादृशेनाप्यवगन्तुं सुशकः, गूढोऽभिसन्धिर्भवता ज्ञातः किमिति प्रश्नः । **स्मितं कृत्वेति** । मया ज्ञातं रहस्यार्थं त्वन्निर्बन्धेन कथयामीति स्मितं = मन्दहास्यं कृत्वेत्यर्थः । रहस्यार्थं प्रकटयति—**सकृदिति** । सकृत् = एकवारम् । कृतः प्रणयः = रतिक्रीडापरिचयो यस्मिन् सः । अयं जनः = इयं हंसपदिकेत्यर्थः ।

---

१. जन इत्यक्षरार्थः ।

[1]देवीवसुमतीमन्तरेण मदुपालम्भमवगतोऽस्मि । सखे माधव्य ! मद्व-चनादुच्यतां हंसपदिका—निपुणमुपालब्धोऽस्मीति ।

**विदूषकः**—जं भवं आणवेदि । ( उत्थाय ) भो वअस्स ! [2]गहीदस्स ताए परकीएहिं हत्थेहिं [3]सिहण्डए ताडीअमाणस्स अच्छराए वीदराअस्स विअ णत्थि दाणिं मे मोक्खो ।

यद्भवानाज्ञापयति । भो वयस्य ! गृहीतस्य तया परकीयैर्हस्तैः शिखण्डके ताड्यमानस्याप्सरसा वीतरागस्येव नास्तीदानीं मे मोक्षः ।

---

अस्याः = हंसपदिकायाः, कर्तरि षष्ठी । अन्तरेण = उद्दिश्य मदुपालम्भम् = मत्सम्बन्धमुपालम्भम् । 'अभिनवमधुलोलुप' इत्यादेर्व्याख्यारूपेयं राजोक्तिः ।

दाक्षिण्यभीरू राजा हंसपदिकां प्रीणयिष्यन् विदूषकमाह—**सखे माधव्येति** । निपुणम् = अन्यापदेशेन कृतत्वात् सचातुर्यम् । इत्युच्यतामिति सम्बन्धः । अनेन 'न विस्मृतवानहं देवीं वसुमतीम्, यथाऽवसरं सम्भावयिष्ये ताम्' इति प्रतिपाद्यते। विदूषक उत्तरयति—**जं भवं इति**। 'यद्भवानाज्ञापयति । भो वयस्य ! गृहीतस्य तया परकीयैर्हस्तैः शिखण्डके ताड्यमानस्याप्सरसा वीत-रागस्येव नास्तीदानीं मे मोक्षः' इति संस्कृतम् । भवदाज्ञया तथाकरणे औचि-त्यानौचित्यचिन्ता मम नास्ति, यथाऽऽज्ञसमहमनुतिष्ठामीति भावः । उत्थायेत्यनेन गमनारम्भः सूच्यते । गमने किमपि शङ्कमान इवाह—**गृहीतस्येति** । तया = हंसपदिकया । परकीयैर्हस्तैः = भृत्यहस्तैः । यद्वा हस्तशब्दः प्रयोजनोपलक्षकः, परार्थमित्यर्थः । भवद्दर्शनं सम्पादयितुम्, पक्षान्तरे देवकार्यं सम्पादयितुमिति

---

१. देवीं हंसवतीम् । २. गहीदो तुए । ३. सिहण्डए अच्छभल्लो; ता वीदराअस्स असरणस्स णत्थि मे मोक्खो ।

राजा—गच्छ; नागरिकवृत्त्या संज्ञापयैनाम् ।

विदूषकः—का गई !

का गतिः ! ( इति निष्क्रान्तः । )

---

यावत् । शिखण्डके = शिखायाम् । गृहीतस्येति सम्बन्धः । स्वाधीनीकृतस्येत्यर्थः । अप्सरसा = देवाङ्गनया । वीतरागस्य = निःस्पृहपुरुषस्य । मोक्षः = मोचनमपवर्गश्च । यथा देवकार्यं सम्पादयितुमिन्द्रनिर्देशेन कया चिदप्सरसा हावभावैः स्ववशीकृतस्य कस्य चित्पूर्वं निःस्पृहस्य तपस्विनः स्वस्थानच्युतेः पुनरपवर्गो न भवति, तथा भवद्दर्शनं सम्पादयितुं हंसपदिकया शिखायां गृहीत्वा भृत्यद्वारा ताड्यमानस्य मम तत्सकाशात् मोचनं न भवेत् । अतस्तत्र भवदागमनमावश्यकम् । यदि भवान् नागच्छेत्, तदा मदुपरि महत्सङ्कटं समापतेत् इति भावः । वीतरागस्येवेत्युपमया प्रकृतेऽर्थे आत्मनस्तटस्थत्वं द्योत्यते । श्लेषोपमेयम् ।

राजा तत्रोपायमुपदिशति—गच्छेति । नागरिकवृत्त्या—नागरिकः = विदग्धस्तद्वृत्त्या, वैदग्ध्येन । यद्वा नागरिकवृत्त्या = त्रिपताकस्य मध्यमातर्जनीभ्यां वक्राभ्यामधोमुखं कम्पिताभ्यामित्यर्थः । संज्ञापय = सूचय । यथा सा निपुणमन्यापदेशेन मामुपालभते स्म तथा त्वमपि सहजां ग्रामीणवृत्तिं परित्यज्य मत्साचिव्यसमुचितां नागरिकवैदग्धीमाश्रित्य सापदेशं भङ्ग्या तामुपालभस्व । एवंकृते त्वं तया परिभूतो न भविष्यसीत्यर्थः । विदूषको वदति—का गई इति । 'का गतिः' इति संस्कृतम् । गतिः = आश्रयः । अन्यथेति शेषः । त्वदादेशोल्लङ्घने त्वदेकावलम्बनस्य मम न कोऽप्यवलम्बः स्यात्; अतो गमिष्यामीति भावः । यद्वा गतिः = उपायः, नागरिकवैदग्धीमजानतो बुद्धिहीनस्य मम अस्मिन् कर्मणि न कोऽप्युपायः प्रतिभाति, तथापि केवलं भवदादेश इति गच्छामीत्यर्थः ।

**राजा**—( आत्मगतम् ) किं नु खलु गीतार्थमाकर्ण्येष्टजनविरहादृतेऽपि बलवदुत्कण्ठितोऽस्मि ? अथवा—

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दा-
न्पर्युत्सुकीभवति यत्सुखितोऽपि जन्तुः।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥२॥

अथ राजा दुर्वासःशापतिरोहितशकुन्तलास्मृतिः गीतिश्रवणेन समुद्बुद्धरत्याख्यसंस्काररञ्जितचेताः जन्मान्तरानुभूतमिवात्यन्तमस्फुटं शकुन्तलानुरागं भावयन् सोत्कण्ठः सन् उत्कण्ठाहेतुं विमृशति—**किं नु खल्विति**। किं न्वित्यनेन हेतोर्विमर्शः सूच्यते। खल्विति जिज्ञासायाम्। गीतार्थं = गीतमाकर्ण्य तदर्थं भावयित्वेत्यर्थः। इष्टजनविरहादृतेऽपि = प्रियजनवियोगरूपस्योत्कण्ठाकारणस्याभावेऽपि। अत्र वस्तुतः प्रियजनवियोगरूपमुत्कण्ठाकारणं तु वर्तते एव, शापेन तथाविधस्मृतेरपगमादेवमुक्तिः। बलवत् = अत्यर्थम्। अथवा = अत्र हेतुजिज्ञासया अलमित्यर्थः।

अयमेव वा हेतुरूहितुं शक्य इत्याह—**रम्याणीति**। जन्तुः सुखितोऽपि रम्याणि वीक्ष्य मधुरान् शब्दान् निशम्य च पर्युत्सुकीभवति (इति) यत्, तत् भावस्थिराणि जननान्तरसौहृदानि चेतसा अबोधपूर्वं नूनं स्मरति इत्यन्वयः।

जन्तुः = सर्वोऽपि प्राणी सुखितोऽपि = प्रियजनसान्निध्येन सन्तोषमनुभवन्नपि। अत्र अपिशब्देन प्रियजनसाहचर्यजन्यसुखसहकृतत्वे उत्कण्ठाया असंभावना द्योत्यते। रम्याणि = मनोहराणि, चन्द्रचन्दनप्रमदादीनि वस्तूनि वीक्ष्य = प्रसंगात् विलोक्य मधुरान् = श्रवणसुभगान् शब्दान् = भ्रमरझङ्कारकोकिलालापकलगीतादिशब्दान् निशम्य च = श्रवणविषयीकृत्य च। अत्र माधुर्य

शब्दनिष्ठमर्थनिष्ठं चेत्युभयविधं विवक्षितम्, गीतार्थमाकर्ण्येत्यनुपदमुक्तेः। पर्युत्सुकीभवति = उत्कण्ठते। अत्र ण्व्यर्थः अविवक्षितः। इति यत् = सुखितस्यापि जन्तोः सुन्दररूपमधुरशब्ददर्शनश्रवणमात्रेण पर्युत्सुकीभवनम्, तत् = तस्मात् पर्युत्सुकीभवनात् भावस्थिराणि = वासनात्मतया मनसि निलीनानि, जन्मसहस्रै-रपि दूरीकर्तुमशक्यानीति भावः। जननान्तरसौहृदानि = पूर्वजन्मसु अनुभूतान् प्रियजनसंबन्धविशेषान् चेतसा = चित्तेन अबोधपूर्वम्—बोधः = सम्यग्ज्ञानम्, तत्तद्व्यक्तिविषयकविशेषज्ञानमित्यर्थः। तत्पूर्वं न, अनाकलितव्यक्तिविशेषसंबन्ध-सामान्यज्ञानेनेत्यर्थः। यद्वा ईषदर्थे नञ्, अबोधो नाम ईषद्बोधः, तत्पूर्वकम्। नूनं = निश्चयेन स्मरति = मनसि भावयति।

अत्र पर्युत्सुकीभवति यत् तत्स्मरतीति पूर्वोत्तरवाक्यार्थयोर्मिथः कार्यकारण-भावसंबन्धेन ऐक्यारोपात् हेत्वलंकारो रूपकं वा। प्रियजनसंगमेन सुखितोऽपि जन्तुः रम्याणि वस्तूनि वीक्ष्य मधुरशब्दानि वा श्रुत्वा यत् समुत्कण्ठितो भवति, तस्य हेतुर्जन्मान्तरीयसौहार्दस्मरणमेवेति जानामीत्यर्थः। संप्रति सर्वात्मना सुखितस्यापि हंसपदिकागानाकर्णनात्संपन्नमिदमौत्सुक्यं जन्मान्तरीयसौहृदस्मरण-मूलकमेवेत्यर्थे पर्यवसानात् सामान्यनिबन्धना अप्रस्तुतप्रशंसा। 'नूनं स्मरति' इत्यनेन तादृशस्मरणं निश्चिनोमीत्यर्थ इति अनुमानमिति केचित्। उक्तं चानेनैव महाकविना रघुवंशे—"मनो हि जन्मान्तरसङ्गतिज्ञम्" इति। कादम्बर्यां च—"जननान्तरजातसौहार्दाया महाश्वेतायाः" इति। अबोधपूर्वं स्मरतीत्यंशे शब्दशक्तिमूलो विरोधाभासो व्यङ्ग्यः। औत्सुक्यलक्षणं यथा—"कालाक्षमत्व-मौत्सुक्यमिष्टवस्तुवियोगतः। तद्दर्शनप्राप्त्यवस्तुदिदृक्षादेश्च" इति। अत्र वितर्को मतिर्वा भावः। दुर्वासःशापप्रभावोपनतताया राज्ञ ईदृगवस्थाया वर्णनात् वक्ष्य-माणप्रकरणोपपत्तिः साधिता। वसन्ततिलका वृत्तम्।

( इति पर्याकुलस्तिष्ठति । )

( ततः प्रविशति कञ्चुकी । )

हंसपदिकाया गीतं श्रुत्वा गीतश्रवणतदर्थभावनाभिः स्वचित्ते अकारणमेवाविर्भवन्तीमुत्कण्ठां विभाव्य राजा दुष्यन्तो विचारयति—'एतादृशहंसपदिकागीतार्थाकर्णनभावनाभ्यामुत्कण्ठाकारणे अविद्यमानेऽपि किमित्यहं बलवदुत्कण्ठितो भवामि ? अथवा ज्ञातम्, अयमस्ति ममोत्कण्ठाहेतुः, यत् प्रियजनसन्निधाने सुखेन निवसन्नपि प्राणी बाह्यदृष्ट्या उत्कण्ठाकारणाभावेऽपि चन्द्रचन्दनोद्यानप्रमदादीनि नयनाकर्षकरम्यवस्तूनि प्रसंगात् वीक्ष्य श्रवणसुभगान् गीतध्वनींश्च समाकर्ण्य यत्सद्यः समुत्कण्ठित इव भवति, तत्रायमेव हेतुः, यत् सः तदानीं मनसि वासनारूपेण स्थिराणि जन्मान्तरानुभूतवस्तुविषयसौहार्दानि तत्तद्व्यक्तिविशेषसंबन्धेन न, अपि तु सामान्याकारेण अस्फुटं स्मरति । चेतसि रतिस्त्वास्वाद्यते, किमालम्बना सेति न स्मर्यते । इत्थमालम्बनजिज्ञासायां चित्तमुत्कण्ठितं भवति' इति भावः ॥ २ ॥

पर्याकुलस्तिष्ठतीत्यनेन राज्ञश्चित्तस्य स्वयमुद्भाविते अथवेत्युक्तपक्षेऽप्यविश्रान्तिः सूच्यते; यतो महान्तो हि वस्तुतत्त्वं याथातथ्येन विदित्वैव निराकुला भवन्ति ।

अथ आगमिष्यत्पात्रप्रवेशसूचनावसरं सम्पादयितुं कञ्चुकिप्रवेशमाह—तत इति । स्वकार्यवशात् सूचनामकृत्वैव कञ्चुकिनः प्रवेशः । कञ्चुकिलक्षणं च—

अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः ।
सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते ॥ इति ।
ये नित्यं सत्यसंपन्नाः कामदोषविवर्जिताः ।
ज्ञानविज्ञानकुशलाः कञ्चुकीयास्तु ते स्मृताः ॥ इति च ।

कञ्चुकी—अहो नु खल्वीदृशीमवस्थां प्रतिपन्नोऽस्मि !

आचार इत्यवहितेन मया गृहीता
या वेत्रयष्टिरवरोधगृहेषु राज्ञः ।
काले गते बहुतिथे मम सैव जाता
प्रस्थानविक्लवगतेरवलम्बनार्था ॥३॥

---

अथ गुरोरादेशेन शकुन्तलामादाय हस्तिनापुरं प्राप्तानां राजमन्दिरं प्रविश्य तद्दर्शनमिच्छतां शार्ङ्गरवादीनां कण्वशिष्याणामात्मनिवेदनं राज्ञः समीपं प्रापयिष्यन् तदर्थमुद्युक्तः कञ्चुकी वार्धक्यपीडितमात्मानमनुशोचति—अहो इति । अहो नु खल्विति खेदातिशयसूचकम् । ईदृशीमवस्थां = वार्धक्यातिशयेन निजानामपि हस्तपादादीनामात्मानधीनत्वप्रापिकां जरावस्थामित्यर्थः । अनेन निर्वेदो व्यज्यते ।

ईदृशीमित्यनेनोक्तामवस्थां विवृणोति—आचार इति । राज्ञः अवरोधगृहेषु अवहितेन मया आचार इति या वेत्रयष्टिर्गृहीता, सैव बहुतिथे काले गते प्रस्थान-विक्लवगतेर्मम अवलम्बनार्था जाता इत्यन्वयः ।

राज्ञः = महाराजस्य अवरोधगृहेषु = अन्तःपुरेषु अवहितेन = अप्रमत्तेन सता मया = कञ्चुकिना आचार इति = नियमरूपः सत्संप्रदाय इति । इतिर्हेतौ । अन्तःपुराधिकृतेन रक्षाधिकारिणा साधारणपुरुषोत्सारणार्थं हस्ते सर्वदा वेत्र-यष्टिर्गृहीतव्येत्याचारत्वादित्यर्थः । अवहितेनेत्यनेन अनवधाने तथाविधवेत्रग्रहणस्य विस्मृतिः स्यादिति, वेत्रग्रहणस्यानुपयोगित्वं चेति च सूच्यते । या वेत्रयष्टिः = वेतसदण्डः गृहीता = हस्ते सर्वदा धारिता, सैव = तदानीं केवलमाचार इत्येव, न तु तस्याः कश्चिदुपयोग इति गृहीता वेत्रयष्टिरेव । सैवेत्येवकारेण तदानीं

**भोः ! कामं धर्मकार्यमनतिपात्यं देवस्य; तथापीदानीमेव धर्मासनादु-**

वक्ष्यमाणस्य स्वप्नेऽप्यचिन्तितपूर्वत्वादद्भुतत्वं द्योत्यते। बहुतिथे = बहुसंख्यापूरके आयुर्लक्षणे काले = समये गते = अतीते सति प्रस्थानविक्लवगतेः—प्रस्थाने = गमनारम्भे विक्लवा = विवशा गतिः = पादविन्यासो यस्य तथाविधस्य मम अवलम्बनार्था—अवलम्बनम् = अवष्टम्भ एव अर्थः = प्रयोजनं यस्याः, शरीराव· लम्बनप्रयोजनेत्यर्थः। जाता = संपन्ना। संप्रति वेत्रयष्टिसाहाय्यमन्तरा नाहं पदात्पदमपि चलितुं शक्नोमीति भावः।

अत्र गतिवैक्लव्यरूपकार्यद्वारा तत्कारणभूतं वार्धक्यं वर्ण्यत इति अप्रस्तुत-प्रशंसा। गतिवैक्लव्यवार्धक्ययोरुभयोरपि प्रस्तुतत्वे प्रस्तुताङ्कुरो वा। वार्धक· गमनलक्षणकार्यस्यारम्भे वेत्रयष्टेः सहायतोपादानात् समाहितम्, "कार्यारम्भे सहायाप्तिः" इति तल्लक्षणात्। वसन्ततिलका वृत्तम्।

वार्धक्यातिरेकेण अविरतं कम्पमानाङ्गः कञ्चुकी स्वावस्थां परामृशन् स्वकरगतां वेत्रयष्टिमवलोक्याह—'अहो! संप्रति कीदृशीयं मे दुरवस्था! येयं मम करगता वेत्रयष्टिः मया पूर्वं तारुण्ये महाराजस्यान्तःपुरे कञ्चुकिपदाधिकृतेन कञ्चुकिनोऽय-माचार एवेति सर्वदा अप्रमत्तेन करे स्वीकृता, न च कश्चित्तदानीमस्या उपयोग आसीत्, एवमेव समतीतो भूयान् कालः, परंतु संप्रति वार्धकातिरेकेण सर्वदा कम्पमानवपुषः गमनोद्यमे विवशचरणविन्यासस्य मम शरीरावष्टम्भप्रयोजना जाता। इदानीं यष्टिमगृहीत्वा पदात्पदमपि चलितुं न शक्नोमि। पूर्वम् आचार इत्येव गृहीता, सम्प्रति तु आचारः शरीरावष्टम्भप्रयोजनं चेत्युभयथा मया यष्टि· र्गृह्यते' इति भावः॥ ३॥

इत्थं स्वावस्थां परामृशन् कञ्चुकी तथावस्थागतस्याप्यात्मनः प्रकृतकर्तव्यमनु-संदधान आह—**भोः! काममिति।** भो इति आत्मन एव संबोधनम्। काम-

त्थिताय पुनरुपरोधकारि कण्वशिष्यागमनमस्मै नोत्सहे निवेदितुम्। अथवाऽविश्रमोऽयं लोकतन्त्राधिकारः। कुतः!

---

मित्यनुमतौ। धर्मकार्यं = धर्मारण्यात्समागतानां कण्वशिष्याणां मुनीनामभ्यर्थनादिकम् अनतिपात्यम् = अनतिक्रमणीयम्, कालक्षेपानर्हमित्यर्थः। सद्यो निवेदितुं योग्यमिति यावत्। मयेति शेषः। तर्हि कुतो न निवेद्यत इत्यत आह—तथापीति। इदानीमेवेत्यनेन इतः पूर्वं विश्रमावकाशो न लब्ध इति द्योत्यते। धर्मासनात् = व्यवहारासनात् उत्थिताय = उत्थाय विश्रान्त्यर्थमेकान्ते वर्तमानायेत्यर्थः। पुनः = भूयः। अनेन पूर्वं स्वनिवेदनेनैव आवश्यकनिर्णयाय राज्ञो धर्मासनस्थितिरासीदिति सूच्यते। उपरोधकारि—उपरोधः = विघ्नः, प्रकृते विश्रान्तिविघ्न इत्यर्थः, तत्कारि = तज्जनकम्। अस्मै = राज्ञे दुष्यन्ताय निवेदितुं नोत्सहे = विश्रमविच्छेदप्रसक्तेरिदानीमेव निवेदयितुं नेच्छामीत्यर्थः। वर्तमाननिर्देशेन राज्ञः स्वल्पविश्रान्त्यनन्तरमनुपदमेव वक्ष्यामीति सूच्यते।

पुनर्विमृश्याह—**अथवेति**। अथवा—कण्वशिष्यागमनमिदानीमेव निवेदयामीत्यर्थः। कुत इत्याह—**अविश्रम इति**। अविश्रमः—न विद्यते विश्रमो यस्मिन्, विश्रान्तिरहित इत्यर्थः। लोकतन्त्राधिकारः—लोकस्य = वर्णाश्रमलक्षितस्य प्रजाजनस्य तन्त्रं = योगक्षेमम्, तस्य अधिकारः = अनुष्ठानम्। यद्वा लोके = भुवने तन्त्राधिकारः = प्रधानाधिकारः। "लोकस्तु भुवने जने", "तन्त्रं प्रधाने सिद्धान्ते" इति **चामरः**। यद्वा लोकतन्त्रः = लोकाधीनः (परतन्त्रः पराधीन इतिवत्) तथाविधः अधिकारः, प्रजापालनाधिकारः प्रजानुरोधेनैव सम्पादयितुं शक्यत इत्यर्थः। प्रजापालनाधिकृतेन राज्ञा कदाचिदपि विश्रान्तिरनपेक्ष्यैवेति भावः।

भानुः सकृद्युक्ततुरङ्ग एव रात्रिंदिवं गन्धवहः प्रयाति ।
शेषः सदैवाहितभूमिभारः षष्ठांशवृत्तेरपि धर्म एषः ॥४॥

उक्तमर्थं साधयति—**भानुरिति**। भानुः सकृद्युक्ततुरङ्ग एव । गन्धवहः रात्रिंदिवं प्रयाति । शेषः सदैवाहितभूमिभारः । षष्ठांशवृत्तेरपि एषः धर्मः इत्यन्वयः ।

अत्र आद्ये तृतीये च वाक्ये 'भवति' इति शेषः । भानुः = सूर्यः सकृद्युक्ततुरङ्ग एव—सकृत् = एकवारमेव युक्ताः = योजिताः, बद्धा इत्यर्थः । तुरङ्गाः = वाजिनो येन । अत्र एवकारस्य सकृदित्यनेनान्वयः । एकवारमेव स्वरथे तुरङ्गमयोजनां कृत्वा भानुः सर्वदा पर्यटत्येव, तस्य पुनस्तुरङ्गयोजनायापि अवकाशो न भवतीत्यर्थः । गन्धवहः = आवहप्रवहात्मको वायुः रात्रिंदिवम् = अहोरात्रं प्रयाति = वाति । शेषः = अनन्तः सदैवाहितभूमिभारः—सदैव = सर्वदा आहितः = धृतः भूमिभारः = वसुन्धराभारो येन तादृशोऽस्ति । एतेन ऊर्ध्वलोकस्थौ सूर्यवायू अधोलोकस्थः शेषश्च सर्वदा आत्मनो विश्रान्तिमनपेक्ष्य परार्थं एव प्रवर्तन्त इति सूच्यते । मध्यलोकाधिपतेरपि तदेव योग्यमित्याह—**षष्ठांशवृत्तेरिति** । षष्ठांशवृत्तेः—षष्ठांशः = न्यायेन परिपालयता नृपेण प्रजाभ्यो ग्राह्यः षष्ठभागः । एष एव राज्ञामाजीवनं वृत्तिः = वर्तनं यस्य तस्य । अपिशब्दः समुच्चये । एषः = पूर्ववाक्यत्रयोपात्तः अविश्रान्तिलक्षणः धर्मः = प्रजापरिपालनात्मकः अस्ति ।

अत्र विश्रमानपेक्षं सार्वकालिकप्रवृत्त्यात्मकस्य धर्मस्य वाक्यचतुष्टये सकृद्युक्तपदेन, रात्रिंदिवपदेन, सदैवपदेन उक्तिरिति मालाप्रतिवस्तूपमा । दुष्यन्त इति विशेषे वक्तव्ये सामान्यवचना अप्रस्तुतप्रशंसा । अविश्रम इत्यादिना दुष्यन्तसम्बन्धित्वेन विशेषात्मनः पूर्ववाक्यार्थस्य सदृष्टान्तं षष्ठांशेत्यादिना सामान्येन समर्थनादर्थान्तरन्यासश्च । यतः भानुगन्धवहशेषवत् राज्ञो दुष्यन्तस्यापि सार्व-

यावन्नियोगमनुतिष्ठामि । ( परिक्रम्यावलोक्य च ) एष देवः—

प्रजाः प्रजाः स्वा इव तन्त्रयित्वा निषेवते शान्तमना विविक्तम् ।
यूथानि संचार्य रविप्रतप्तः शीतं दिवा स्थानमिव द्विपेन्द्रः ॥५॥

कालिकप्रवृत्त्यात्मको धर्मः, अतो वक्तुमुत्सहे इति संबन्धः । राज्ञो दुष्यन्तस्य सूर्योपमया तेजोविशेषशालित्वम्, गन्धवहोपमया लोकोपजीव्यत्वम्, शेषोपमया स्थैर्यातिशयश्च द्योत्यते । इन्द्रवज्रा वृत्तम् ।

प्रजापालनाधिकृतानां प्रजारञ्जकानां राज्ञां प्रजापालनात्मकं स्वधर्ममनुतिष्ठतां शान्तमनसां क्षणं विश्रान्त्यवकाशोऽपि न भवतीति वस्तुस्थितिं दृष्टान्तद्वारा समर्थयन् कञ्चुकी आह—'भगवान् लोकचक्षुर्भास्करः सकृदेव स्वरथे तुरङ्गमान् योजयामास, ततः परमविरतं पर्यटत्येव । क्षणं विश्रमितुमप्यवकाशं न लभते, पुनस्तुरङ्गमयोजना तु दूरमेव । यतः कालात्माऽसौ भगवान् यदि क्षणमपि विश्रान्त्यपेक्षया विलम्ब्येत, तर्हि कालगतिः कुण्ठिता स्यात्; अव्यवस्था च प्रसज्येत । आवहप्रवहात्मको जगत्प्राणो मारुतः अहोरात्रमविरतं प्रवात्येव । यदि क्षणमपि विहाय गतिं स तिष्ठेत्, विनश्येयुरिमाः प्रजाः । एवमेव भगवान् शेषोऽपि पृथुपर्वतराजिगरिमगुर्वीं पृथ्वीमकम्पेन स्थिरेण शिरसा सर्वदा धारयत्येव । इत्थमूर्ध्वलोकस्थौ सूर्यवायू अधोलोकस्थो भगवान् अनन्तश्च समुज्झितनिजसुखाः सर्वदा परार्थमेव प्रयतन्ते । न्यायेन प्रजापरिपालकानां मध्यमलोकाधीश्वराणां प्रजाषष्ठांशभुजां राज्ञामपि अनपेक्ष्य स्वसुखं सर्वदा प्रजापरिपालनं धर्म एवास्ति । तथाविध एवास्माकं महाराजो दुष्यन्तः, संप्रत्येव धर्मासनादुत्थिताय अनधिगतविश्रमायापि तस्मै संप्रत्येव कण्वशिष्यागमनं निवेदयितुमुत्सहे' इति भावः ॥४॥

नियोगं = कण्वशिष्यनियोगमित्यर्थः, स्वाधिकारं वा ।

अथ राजानमवलोक्य तस्य तात्कालिकीमवस्थां वर्णयन् कञ्चुकी प्राह—

**एष देवः—प्रजाः प्रजाः स्वा इति ।** एष देवः स्वाः प्रजा इव प्रजाः तन्त्रयित्वा

शान्तमनाः, द्विपेन्द्रः दिवा यूथानि सञ्चार्य रविप्रतप्तः सन् शीतं स्थानमिव विविक्तं निषेवते इत्यन्वयः ।

एष देवः = अयमस्माकं महाराजो दुष्यन्तः स्वाः प्रजा इव = स्वापत्यानीव प्रजाः = स्वीयलोकान्, "प्रजा स्यात्सन्ततौ जने" इति विश्वः । तन्त्रयित्वा = संव्यवहार्य, स्वं स्वं कृत्यं कारयित्वेत्यर्थः । यद्वा तन्त्रयित्वा = धारयित्वा, विवाद शमनादिभिः संरक्ष्येत्यर्थः । एवंविधेन तन्त्रणेन किञ्चिद् दुःखमनुभूयेति यावत् । अनेन कृतराजकार्यस्य संप्रति विश्रान्तिरुचितेति ध्वन्यते । अत एव शान्तमनाः = धर्मेण प्रजापालनरूपकर्तव्यसम्पादनादव्यग्रचित्त इत्यर्थः । अनहङ्कृतचित्तो वा । द्विपेन्द्रः = गजयूथाधिनाथः दिवा = दिवसे, मध्याह्ने इत्यर्थः । यूथानि = गजसमूहान्, "सजातीयैः कुलं यूथम्" **इत्यमरः ।** सञ्चार्य = चारयित्वा, आहारविहारादिषु व्यापार्येत्यर्थः । प्रयोजकत्वोक्तिरियम् । अत एव रविप्रतप्तः सन्—रविणा = सूर्येण हेतुभूतेन प्रतप्तः = अतिपीडितः सन् । अयं शीतस्थान- निषेवणे हेतुः । शीतं = प्रच्छायशीतलं स्थानमिव = विजनं देशमिव विविक्तं = विजनं स्थानम् । "विविक्तौ पूतविजनौ" **इत्यमरः ।** निषेवते = भजते । विजने विश्रामयोग्ये स्वैरमुपविशतीत्यर्थः । नीत्युपसर्गेण तस्मिन् स्थाने राज्ञो विशेषादरो द्योत्यते ।

अत्र अपत्योपमया राज्ञः प्रजासु प्रेमातिशयः, तासां च राजाधीनता च द्योत्यते । राज्ञो द्विपेन्द्रोपमया सर्वास्ववस्थासु अधृष्यत्वं दर्शनीयत्वं च द्योत्यते । तदवस्थस्य राज्ञो दर्शनेन कञ्चुकिनो हर्षो गम्यते । तदुपस्कृता कञ्चुकिनो राज- विषयिका रतिः प्राधान्येन ध्वन्यते । उपमयोः संसृष्टिः । उपेन्द्रवज्रा वृत्तम् ।

कण्वशिष्यागमनं निवेदयितुमुपस्थितः कञ्चुकी न्यायासनादुत्थाय तत्रत्य- कार्यनिर्वाहेण श्रान्तं संप्रति एकान्ते सुखमासीनं राजानं विलोक्य तदवस्थां

राजा—अपि निर्विघ्नतपसो मुनयः ?

ऋषयः—

कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि।
तमस्तपति घर्मांशौ कथमाविर्भविष्यति ॥ १४ ॥

---

आशीर्वादोऽयम्। अपीति प्रश्ने। निर्विघ्नतपसः = तपश्चरणेषु विघ्नरहिताः। अनेन विघ्नानामात्मना प्रतिविधेयत्वं द्योतयति।

ऋषयस्तपसो निर्विघ्नतां वर्णयन्ति—**कुत इति**। त्वयि रक्षितरि (सति) सतां धर्मक्रियाविघ्नः कुतः ? घर्मांशौ तपति (सति) तमः कथमाविर्भविष्यति इत्यन्वयः।

त्वयि = राजराजे दुष्यन्ते रक्षितरि = प्रजापालके रक्षाकर्म कुर्वति सति सतां = धार्मिकाणां सज्जनानां धर्मक्रियाविघ्नः—धर्मक्रियासु = धर्माचरणेषु विघ्नः = अन्तरायः कुतः = कस्माद्वा स्यात् ? त्वयि रक्षितरि सतां क्रियामात्र-विघ्नोऽपि न संभाव्यते, सुतरां धर्मक्रियाविघ्नः। दृष्टान्तमाह—**तम इति**। घर्मांशौ = सूर्ये। अत्र घर्मांशावित्यन्वर्थं तमसोऽनाविर्भावे हेतुः। तपति सति = पूर्णबलेन प्रकाशमाने सति तमः = अन्धकारः कथं = केन प्रकारेण आविर्भवि-ष्यति = प्रकाशमागमिष्यति।

अत्र संभावनाप्रायो लडर्थः। दृष्टान्तप्रतिवस्तूपमा वा। समानः प्रयोगो यथा **रघुवंशे**—"नाथे कुतस्त्वय्यशुभं प्रजानाम्। सूर्ये तपत्यावरणाय दृष्टेः कल्पेत लोकस्य कथं तमिस्रा" इति। सूर्योपमया राज्ञः प्रतापातिशयः, वर्णाश्रम-क्रियाप्रवर्तकत्वं च सूच्यते। राजविषयिका रतिर्भावः। अनुष्टुप् वृत्तम्।

**राजा**—अर्थवान्खलु मे राजशब्दः । अथ भगवांल्लोकानुग्रहाय कुशली कण्वः ?

**ऋषयः**—स्वाधीनकुशलाः सिद्धिमन्तः । स भवन्तमनामयप्रश्नपूर्वकमिदमाह ।

---

दुष्यन्तराज्ये स्वतपसां निर्विघ्नतां वर्णयन्तः ऋषयः प्राहुः—'हे महाराज ! सावधानतया रक्षाकर्म कुर्वति जागरूके त्वयि सति स्वस्ववर्णाश्रमोचितकर्माण्यनुतिष्ठतां सज्जनानां सामान्यक्रियामात्रेऽप्यन्तरायं न कोऽपि कर्तुं प्रभवति, धर्मानुष्ठानविघ्नकरणस्य तु कथैव का ! तस्मात् निश्चिन्ता वयं स्वस्वकर्माणि यथासमयं कुर्महे । सूर्ये उदयाचलमारूढे एव तमः पलायते; तस्मिन् पुनर्मध्यन्दिनवर्तिनि सकलकलैर्विभ्राजमाने सति कलुषात्मनस्तमसः का शक्तिः पुरोभवितुम् ? तथैव सूर्योपमस्य राजर्षेर्भवतः पुरो विघ्नरूपं तमः कथमप्यागन्तुं न पारयति' इति भावः ॥ १४ ॥

अर्थवान् = सप्रयोजनः । सुष्ठु प्रजापरिपालनेन जनानुरञ्जनादन्वर्थः । राजति = दीप्यत इति, रञ्जयतीति च राजशब्दव्युत्पत्तिः । खल्वित्यवधारणे । "ब्राह्मणं कुशलं पृच्छेत्" इति वचनानुसारेण महर्षेः कुशलं पृच्छति—**अथेति** । लोकानुग्रहाय = जनानुग्रहाय, भुवनानुग्रहाय चेत्यर्थः । "लोकस्तु भुवने जने" **इत्यमरः** । त्रिभुवनानुग्राहकत्वेन महर्षेर्लोकोत्तरा तपःसिद्धिः परोपकारपरत्वं च ध्वन्यते । तदभिप्रायेणैव मुनय उत्तरयन्ति—**स्वाधीनकुशला इति** । सामान्यमुखेनेदमुत्तरम् । महर्षिः कण्वः सिद्धिमान्, अतः स्वाधीनकुशल इत्यर्थः । सः = महर्षिः कण्वः । अनामयप्रश्नपूर्वकम् = अनामयप्रश्नं पूर्वं कृत्वेत्यर्थः । तथा चोक्तम्—

राजा—किमाज्ञापयति भगवान् ?

शार्ङ्गरवः—यन्मिथःसमयादिमां मदीयां दुहितरं भवानुपायंस्त, तन्मया प्रीतिमता युवयोरनुज्ञातम् । कुतः !

त्वमर्हतां प्राग्रसरः स्मृतोऽसि [1]नः
शकुन्तला मूर्तिमती च सत्क्रिया ।
समानयंस्तुल्यगुणं वधूवरं
चिरस्य वाच्यं न गतः प्रजापतिः ॥ १५ ॥

---

ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम् ।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ॥ इति ।

राज्ञः क्षत्रियत्वादनामयप्रश्नस्य युक्तत्वम् । इदंपदार्थं विवृणोति—यदिति । मिथःसमयात् = अन्योन्यं शपथाचारात् । गान्धर्वेण विवाहेनेत्यर्थः । "गान्धर्वः समयान्मिथः" इति याज्ञवल्क्यः । अनेनान्योन्यानुरागसम्पत्तिर्दर्शिता । उपायंस्त = परिणीतवान् । "उपाद्यमः स्वकरणे" इत्यात्मनेपदम् । तत् = उपयमनम् । अनुज्ञातम् = अनुमतम् ।

तत्र हेतुमाह—कुतः ! त्वमर्हतामिति । त्वं नः अर्हतां प्राग्रसरः स्मृतोऽसि; शकुन्तला च मूर्तिमती सत्क्रिया । तुल्यगुणं वधूवरं समानयन् प्रजापतिः चिरस्य वाच्यं न गतः इत्यन्वयः ।

यस्मात् त्वं नः = अस्माकम् अर्हताम् = सत्क्रियार्हाणां पूज्यानाम् प्राग्रसरः—प्रकर्षेण अग्रसरः = मुख्यः, पुरोगामी । स्मृतोऽसि; वयं त्वां सत्क्रियार्हाणामग्रणीं मन्यामहे इत्यर्थः । शकुन्तला च मूर्तिमती = धृतदेहा सत्क्रिया—

---

1 यत् ।

सती = पूज्या चासौ क्रिया च सत्क्रिया = सत्कारः, स इवेति गम्योत्प्रेक्षा। अनया चास्याः सकलजनपूज्यत्वं ध्वनितम्। अत एव तुल्यगुणम् = समानगुणं वधूवरम् = वरवध्वौ। सर्वोऽपि द्वन्द्वो विभाषयैकवद्भवतीत्येकवद्भावः। इमां त्वां चेत्यर्थः। समानयन् = संयोजयन् प्रजापतिः = विधाता चिरस्य = बहोः कालात्, चिरादारभ्य प्रवृत्तमित्यर्थः। विभक्तिप्रतिरूपकमव्ययमिदम्। "चिराय चिररात्राय चिरस्येति चिरार्थकाः" इति अव्ययगणे **अमरः**। वाच्यम् = असमानवधूवरसंयोजनरूपमपवादम्। "गर्ह्यहीनौ च वक्तव्यौ" **इत्यमरः**।

वाच्यं वक्तव्यमित्येतौ प्रवर्तेते प्रपादने।
वचोर्हे कुत्सिते हीने दूषणेऽभिधयोदिते॥

इति **धरणिश्च**। न गतः = न प्राप्तः। लोके चिरकालप्रवृत्तमसमानवधूवरसंयोजनात्मकमपवादमसहमान इव प्रजापतिरिमां त्वां च मिथस्तुल्यगुणौ वधूवरौ निर्माय संयोजयामास, ततश्च अपवादपरिमार्जनं कृतवानिति भावः। इतः पूर्वमेवंविधगुणोपेतं वधूवरं नाभूदिति द्योत्यते। जगति असमानगुणयोरेव वधूवरयोः समागमः सर्वत्र दृश्यते। अत एव चिरस्येत्युक्तम्। प्रजापतिरिति साभिप्रायम्। प्रजापतित्वादेव प्रजापवादमार्जनं तस्य कर्तव्यमित्यायाति।

अत्र पूर्वार्धवाक्यार्थस्य तुल्यगुणत्वोपपादकत्वात् काव्यलिङ्गम्। अनुरूपयोर्वधूवरयोः संयोगवर्णनात् समं च। वंशस्थं वृत्तम्।

महाराजदुष्यन्तं प्रति महर्षेः कण्वस्य संदेशं निवेदयन् तच्छिष्यः शार्ङ्गरवः आह—'हे महाराज! अस्मदुपाध्यायो महर्षिः कण्वस्त्वामनामयप्रश्नपूर्वकमिदमाह—यत् अन्योन्यानुरागेण गान्धर्वेण विधिना भवता मम सुता परिणीता; तत्र नाहं विप्रतिपन्नः, किन्तु सानन्दमनुमन्ये युवयोः संगमम्। यतस्त्वं योग्यानां कुलीना-

तदिदानीमापन्नसत्त्वा प्रतिगृह्यतां सहधर्मचरणायेति ।

**गौतमी**—अज्ज ! किपि वत्तुकामह्मि, ण मे वअणावसरो अत्थि । कहं त्ति !

---

नामग्रणीरित्यस्माभिर्भाव्यसे । इयं शकुन्तला च धृतदेहा सक्रियेवास्ति । त्वमस्या अनुरूपः, इयं च तव योग्या; युवयोर्मिथश्च पुष्कला प्रीतिः; सौभाग्येनैव वां संयोगः संपन्नः । जगति प्रायोऽननुरूपयोरेव दम्पत्योः संयोजनं दृश्यते, अत एव निन्दन्ति धातारं जनाः । स च प्रकृते सविशेषं परस्परानुरूपौ युवां मिथः संयोज्य बहोः कालात् प्रवृत्तमसमानवधूवरसंयोजनात्मकमपवादं परिमार्जितवानिति मन्ये' इति भावः ॥ १५ ॥

तत् = त्वया शकुन्तलापरिणयनस्य कृतत्वात् मया च तस्यानुमतत्वात् । आपन्नसत्त्वा = गर्भिणी । अनेन शकुन्तलाप्रतिग्रहे अचिरादेव सन्तानलाभरूपश्रेयःप्राप्तिरपीति द्योत्यते । प्रतिगृह्यताम् = स्वीक्रियताम् । "आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी" इत्यमरः । सहधर्मचरणाय—धर्मः = यज्ञादिः, दम्पत्योः सहाधिकारादिति नियमानुसारेण सपत्नीकस्यैव धर्माचरणेऽधिकारस्य शास्त्रबोधितत्वात् ।

गौतमी वदति—अज्जेति । 'आर्य ! किमपि वक्तुकामाऽस्मि, न मे वचनावसरोऽस्ति । कथमिति ! नापेक्षितो गुरुजनोऽनया न खलु पृष्टश्च बन्धुजनः । एकैकमेव चरिते भणामि किम् एकमेकस्य ॥' इति संस्कृतम् । किमपि = त्वयाऽनुचितमाचरितमिति विवक्षितमित्यर्थः । वचनावसरः = वचनावकाशः । कथमिति = कुतो वचनावकाशाभाव इति चेद् ? उच्यत इत्यर्थः ।

णावेक्खिओ गुरुअणो इमाइ ण [1]हु पुच्छिदो अ [2]बन्धुअणो ।
[3]एक्कक्कमेव्व चरिए भणामि किं [3]एक्कमेक्कस्स ॥ १६ ॥

आर्य ! किमपि वक्तुकामाऽस्मि । न मे वचनावसरोऽस्ति । कथमिति !

नापेक्षितो गुरुजनोऽनया न खलु पृष्टश्च बन्धुजनः ।
एकैकमेव चरिते भणामि किमेकमेकस्य ॥

**शकुन्तला**—( आत्मगतम् ) किं णु क्खु अज्जउत्तो भणादि ?
किं नु खल्वार्यपुत्रो भणति ?

---

तदेवाह—**नापेक्षित इति** । अनया गुरुजनः नापेक्षितः, ( त्वयाऽपि ) बन्धुजनः न पृष्टः खलु; एकैकमेव चरिते एकस्य एकं किं भणामि इत्यन्वयः ।

अनया = शकुन्तलया गुरुजनः = महर्षिः कण्वः, अहं चेत्यर्थः । नापेक्षितः—गुरुजनापेक्षा न कृता, स्वयमेव कर्तव्यं निर्णीतमित्यर्थः । (त्वयाऽपि) बन्धुजनः = कन्याबन्धुः महर्षिरहं च न पृष्टः = शकुन्तलार्थे न याचित इत्यर्थः । इत्थमितर-निरपेक्षम् एकैकमेव चरिते = एकेन एकेनैव परस्परविचारेणानुष्ठिते गान्धर्वलक्षणे कर्मणि एकस्य = युवयोरेकस्य, तवेत्यर्थः । एकं = किमपि किं भणामि ? न भणामीत्यर्थः । शकुन्तलायास्तव च तुल्यदोषत्वात् त्वयाऽनुचितं कृतमिति शकुन्तलापक्षपातेन त्वामहं न वच्मीत्यर्थः ।

तदा युवां द्वावपि रागान्धतया समुदाचारं न स्मृतवन्तौ, इदानीमपि अस्याः प्रतिग्रहविषये नास्माभिः किञ्चिद्वक्तुमुचितम्, तथाविधं परस्परानुरागं विचिन्त्य त्वमिमां प्रतिगृहाणेति भावः । गाथा छन्दः ॥ १६ ॥

शकुन्तला आत्मगतं वदति—**किं णु क्खु इति** । 'किं नु खलु आर्यपुत्रो

---

१ तुए वि पुच्छिदो बन्धू । २ एक्कक्कस्स अ । ३ एक्क एक्कस्सिं ।

**राजा**—किमिदमुपन्यस्तम् ?

**शकुन्तला**—( आत्मगतम् ) [1]पावओ क्खु वअणोवण्णासो ।

पावकः खलु वचनोपन्यासः ।

**शार्ङ्गरवः**—कथमिदं नाम ? भवन्त एव सुतरां लोकवृत्तान्तनिष्णाताः ।

---

भणति' इति संस्कृतम् । आर्यपुत्रः = भर्ता राजा दुष्यन्तः । किं नु खलु भणति = किमुत्तरं दद्यात् ! अत्र वितर्को विषादश्च ।

दुर्वासःशापबलेन विस्मृतविवाहवृत्तान्तो राजा पृच्छति—**किमिति** । किमिदमारब्धमित्यर्थः । अस्योपन्यासस्यासंबद्धत्वात् तदर्थो मया नावबुध्यते इति भावः ।

शापवृत्तान्तमजानती शकुन्तला राज्ञो वचनमाकर्ण्याह—**पावओ इति** । 'पावकः खलु वचनोपन्यासः' इति संस्कृतम् । पावकः = अग्निः । राज्ञो वचनोपन्यासस्य सन्तापातिशयसम्पादकत्वात्तस्मिन् पावकत्वारोपः । अत्र त्रासाख्यो भावो ध्वन्यते ।

अथ राज्ञः शापहेतुकं शकुन्तलाविस्मरणमजानन् कण्वशिष्यः 'अयमेनां प्रत्याख्यातुमारभते' इति मन्वानः राजोक्तेरनौचित्यं शकुन्तलायाः प्रतिग्राह्यत्वं च बोधयितुमुपक्रमते—**कथमिदं नामेति** । किमिदमुपन्यस्तमिति राजोक्तौ इदंपदं कुतः प्रयुज्यते इत्यर्थः । अस्मदुदीरितं वृत्तान्तमजानन्निव किमिति पृच्छसीति भावः । **भवन्त एवेति** । वर्णाश्रमपालकत्वाद्भवन्त एवास्मदपेक्षया सुतरां लोकवृत्तज्ञाः, वयं तु तपोवनवासित्वान्न तथेत्यर्थः । तथापि यावदवगतं लोकवृत्तं वदाम इति तात्पर्यम् ।

---

१ सावलेवो से वअणावक्खेवो ।

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्तृमतीं विशङ्कते ।
अतः समीपे परिणेतुरिष्यते
प्रियाप्रिया वा प्रमदा स्वबन्धुभिः ॥ १७ ॥

---

तदेवाह—**सतीमपीति** । ज्ञातिकुलैकसंश्रयां भर्तृमतीं सतीमपि जनः अन्यथा विशङ्कते । अतः स्वबन्धुभिः प्रिया अप्रिया वा प्रमदा परिणेतुः समीपे इष्यते इत्यन्वयः ।

ज्ञातिकुलैकसंश्रयाम्—ज्ञातिकुलं = पितृगृहम्, ज्ञातीनां = बान्धवानां कुलं= गृहं वा । "ज्ञातिः सगोत्रे पितरि कुलं जनपदे गृहे । सजातीयगणो गोत्रः" इति विश्वः । पितृगृहैकवासिनीं बान्धवगृहैकवासिनीं वेत्यर्थः । भर्तृमतीं = विद्यमान-धवाम्, सधवां सुवासिनीमित्यर्थः । सतीमपि = साध्वीमपि जनः = लोकः अन्यथा = अन्यप्रकारेण, असतीमित्यर्थः । विशङ्कते = सम्भावयति । इयमसतीति मन्यते इत्यर्थः । अतः = अतः कारणात्, लोकवादभयात् स्वबन्धुभिः = वधूबन्धुभिः प्रिया = भर्तुरभिमता अप्रिया = भर्तुरनभिमता वा प्रमदा = स्त्रीमात्रम्, अथ च प्रकृष्टो मदः =तारुण्यमदो यस्याः एतादृशी, परिणेतुः = वोढुः, पत्युरित्यर्थः । समीपे = निकटे इष्यते = प्रार्थ्यते, यत एवम्, अतो लोकापवादभीरुणा गुरुणा, त्वया उपेक्षिता साध्वी तव धर्मपत्नीयं शकुन्तला त्वत्समीपं प्रापिता; तदिदानीं प्रतिगृह्यतां सहधर्मचरणायेति भावः ।

अत्र शकुन्तलायास्त्वत्समीपे स्थितिर्योग्येति विशेषे प्रस्तुते यत्सामान्यवचनं तेन सामान्यनिबन्धना अप्रस्तुतप्रशंसा, हेतुश्च । अनेन अर्थविशेषणनामा नाट्या-लङ्कार उपक्षिप्तः । तल्लक्षणं तु—

राजा—किं चात्रभवती मया परिणीतपूर्वा ?

उक्तस्यार्थस्य यत्तु स्यादुत्कीर्तनमनेकधा ।

उपालम्भस्वरूपेण तत्स्यादर्थविशेषणम् ॥ इति ।

वंशस्थं वृत्तम् ।

किमिदमुपन्यस्तमिति राजोक्तिमाकर्ण्य राज्ञा क्रियमाणां शकुन्तलाया अवधीरणां सम्भावयन् सुतरां क्रुद्धः कण्वशिष्यः शकुन्तलाप्रेषणे प्रमाणभूतं लोकवृत्तं राजानमुद्दिश्य वर्णयति—'हे राजन् ! किमुच्यते भवता किमिदमुपन्यस्तमिति ? वर्णाश्रमपालकत्वाद्भवन्तस्तु सुतरां लोकवृत्तान्तनिष्णाताः, परन्तु तपोवनवासिनोऽपि वयं यत्किञ्चिल्लोकवृत्तं जानीमः, तच्च यथा—स्त्रीणां चारित्र्यं हि सर्वदा संशयास्पदमेव भवति । यदि काचित् पतिव्रताऽपि सधवा स्त्री पितृगृहमवलम्ब्य सगोत्रगणबन्धुगृहं वा समाश्रित्य चिरं निवसेत्, तस्या भर्त्रा वियुज्य निवासे सन्दिहानो जनस्तामसतीमेव सम्भावयति । अतः लोकापवादं परिजिहीर्षवो वधूबान्धवा भर्तुरभिमतामनभिमतां वा तारुण्यसुलभप्रकृष्टमदां तरुणीं तत्पत्नीं भर्तुः समीपे एव स्थितां बहु मन्यन्ते; तथैवेच्छन्ति च । इयं च भवतो धर्मदाराः शकुन्तला भवतोपेक्षिता अद्य यावत् पित्रा प्रतिपालिता; अतः परं लोकापवादभयमिति भवन्निकटे प्रेषिता । तदियं प्रिया चेद् गृहिणीपदे निवेश्यताम्; अप्रिया चेद्दासीवत्परिपाल्यताम् । सर्वथा भवन्तमन्तरा नान्या गतिरस्याः' इति भावः ॥ १७ ॥

पुनः कण्वशिष्योक्त्या तदर्थमवगच्छन् राजा वदति—किं चेति । किं चेति प्रश्ने । अत्रभवती = शकुन्तला, कण्वशिष्यैः सह समागता वनिता । इयं स्त्री मया पूर्वं परिणीता किमिति प्रश्नः ।

**शकुन्तला**—( सविषादम् आत्मगतम् ) हिअअ ! संपदं दे आसङ्का ।

हृदय ! सांप्रतं ते आशङ्का ।

**शार्ङ्गरवः**—

**किं कृतकार्यद्वेषो धर्मं प्रति विमुखता कृशावज्ञा**[1] ।

**राजा**—कुतोऽयमसत्कल्पनाप्रश्नः ?

---

शकुन्तला सविषादमात्मगतं वदति—**हिअअ इति** । 'हृदय ! साम्प्रतं ते आशङ्का' इति संस्कृतम् । साम्प्रतम् = आर्यपुत्रे एवं वदति सतीत्यर्थः ।

किं चेत्यादिराजवचनेन राज्ञः शकुन्तलाविषये वैमुख्यं निश्चित्य शार्ङ्गरवः सामर्षं वदति—**किमिति** । कृतकार्यद्वेषः किम् ? धर्मं प्रति विमुखता किम् ? कृशावज्ञा किम् ? इति पूर्वार्द्धान्वयः ।

तवेति शेषः । तव = राज्ञः कृतकार्यद्वेषः = कृतं यत्कार्यं = शकुन्तलाया गान्धर्वपरिणयनात्मकं तत्र, परिणीतायामस्यामिति यावत् । द्वेषः = अप्रीतिः किम् ? तव धर्मं प्रति विमुखता किम्—धर्माचरणेऽपि = स्वकर्तव्यपालनेऽपि लोकशिक्षकस्य तव राज्ञो वैमुख्यं सञ्जातं किम् ? तव कृशावज्ञा—कृशेषु = दरिद्रेषु वनवासिषु सम्बन्धिष्वस्मासु अवज्ञा = एते आरण्यका दरिद्रा मुनयः, न तु राज्ञा मया सह सम्बन्धयोग्या इत्यनादरः किम् ? उक्तेषु निमित्तेष्वन्यतममेव तवास्यां वैमुख्यस्य निमित्तं भवेदित्यर्थः ।

शार्ङ्गरवोक्तिमसहमानो राजा मध्य एव पृच्छति—**कुतोऽयमिति** । असत्कल्पनाप्रश्नः—असताम् = अविद्यमानानां कृतकार्यद्वेषादीनां कल्पनया प्रश्नः,

---

१ उचिता राज्ञः ।

शार्ङ्गरवः—

मूर्च्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु ॥ १८ ॥

राजा—विशेषेणाधिक्षिप्तोऽस्मि ।

गौतमी—जादे ! मुहुत्तअं मा लज्ज । अवणइस्सं दाव दे ओउण्ठणं । तदो तुमं भट्टा अहिजाणिस्सदि ।

---

कृतकार्यद्वेषादीन् मय्यारोप्य कुत एवं पृच्छयते इत्यर्थः । भवादृशानामिदमनुचितमिति भावः ।

अथ राजोक्तामसत्कल्पनामुत्तरार्धेन शार्ङ्गरवो निरस्यति—**मूर्च्छन्तीति** । ऐश्वर्यमत्तेषु प्रायेण अमी विकारा मूर्च्छन्ति इति उत्तरार्धान्वयः ।

ऐश्वर्यमत्तेषु—ऐश्वर्येण = प्रभुत्वेन मत्तेषु = सदसद्विवेकहीनेषु, सम्पदुद्धतेष्वित्यर्थः । प्रायेण = बाहुल्येन, सामान्यतो वा अमी विकाराः = उक्ता विकृतयः, अनार्यकार्येष्वपि आर्यचरिताभिमानरूपाः मूर्च्छन्ति = वर्धन्ते, प्रसरन्तीत्यर्थः । त्वमैश्वर्यमत्तः, तस्मात्त्वय्यपि अमी संभवन्तीति भावः ।

अत्र अर्थान्तरन्यासः । अनेन तोटकनामाङ्गमुपक्षिप्तम् । तल्लक्षणं तु—"संरम्भवचनप्रायं तोटकं त्विह संज्ञितम्" इति ॥ १८ ॥

शार्ङ्गरवोक्तिमाकर्ण्य राजा वदति—**विशेषेणेति** । विशेषेण = सुतराम् अधिक्षिप्तः = भर्त्सितः । ऐश्वर्यमत्तत्ववचनादिति भावः । अनेन दैन्यं ध्वन्यते ।

अथ राजानं प्रत्याययितुमारभमाणा गौतमी शकुन्तलामाह—**जादे इति** । 'जाते मुहूर्तं मा लज्जस्व । अपनेष्यामि तावत्तेऽवगुण्ठनम्; ततस्त्वां भर्ता अभिज्ञास्यति' इति संस्कृतम् । जाते = पुत्रि ! मा लज्जस्व = लज्जां न कुरु । अपनेष्यामि

जाते ! मुहूर्तं मा लज्जस्व । अपनेष्यामि तावत्तेऽवगुण्ठनम् । ततस्त्वां भर्ताऽभिज्ञास्यति । ( इति यथोक्तं करोति । )

**राजा**—( शकुन्तलां निर्वर्ण्य आत्मगतम् )

इदमुपनतमेवं रूपमक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्न [1]वेत्यव्यवस्यन् ।
भ्रमर इव विभाते कुन्दमन्तस्तुषारं
न च खलु परिभोक्तुं नैव शक्नोमि [2]हातुम् ॥ १९ ॥

दूरीकरिष्यामि । अवगुण्ठनं = मुखावरणम् । अभिज्ञास्यति = परिचेष्यति । अतीत॰वृत्तान्तं स्मरिष्यतीति यावत् ।

यथोक्तम् = अवगुण्ठनापनयनम् । निर्वर्ण्य = निपुणं विलोक्य, सावधानमङ्ग॰प्रत्यङ्गान्यवलोक्येत्यर्थः ।

अथ शकुन्तलाया एवंविधावलोकनेन झटिति संजातमनोविक्रियो राजा विमृशति—**इदमिति** । एवमुपनतम् अक्लिष्टकान्ति इदं रूपं प्रथमपरिगृहीतं स्यान्न वा इति अव्यवस्यन् ( अहम् ) विभाते भ्रमरः अन्तस्तुषारं कुन्दमिव सपदि नैव हातुं न च परिभोक्तुं शक्नोमि खलु इत्यन्वयः ।

एवम्=इत्थम्, सगर्भप्रारम्भमित्यर्थः । उपनतम्=अयत्नप्राप्तम् अक्लिष्टकान्ति—न क्लिष्टा = म्लाना कान्तिः = लावण्यं यस्य तत्, परिपूर्णलावण्यमित्यर्थः । इदं = पुरोवर्ति रूपम् = इमामित्यर्थः । नामकुलयोरज्ञानादेवमुक्तिः । प्रथमपरिगृहीतम्—प्रथमं = पूर्वं परिगृहीतं = पत्नीत्वेन स्वीकृतम् । "पत्नीपरिजनादानमूलशापाः परिग्रहाः" **इत्यमरः** । स्यान्न वा=स्यात्, न वा स्यात्, इति = एतत् अव्यवस्यन्=

१ वेत्यध्यवस्यन् । २ मोक्तुम् ।

स्वव्यवसायं न जानन्, अन्यतरपक्षत्वेन निश्चयमभजमान इत्यर्थः। अहं विभाते = प्रभाते भ्रमरः = षट्पदः अन्तस्तुषारम्—अन्तः = अभ्यन्तरे तुषारः = हिमं यस्य, नीहारगर्भमित्यर्थः । कुन्दमिव = निशि विकासि कुन्दाख्यपुष्पमिव सपदि = तत्क्षणं नैव हातुं = नैव परित्यक्तुं न च परिभोक्तुं = न च स्वीकारपूर्वकमुपभोगं कर्तुं शक्नोमि खलु = समर्थोऽस्मि खलु ।

अत्र इदं रूपमिति कथनेन यौवनादिशालित्वेन हाराद्यलंकाररमणीयत्वेन च रूपस्य हृदयंगमत्वं द्योत्यते । अयमेव हानाशक्तौ हेतुः । भ्रमर इति कथनेन तस्य रसास्वादैकतत्परता द्योत्यते । कुन्दमिति विशिष्टमकरन्दादिशालीत्यर्थान्तरसंक्रमितम् । अन्तस्तुषारमिति कथनेन भ्रमरस्य तुषारस्पर्शासहत्वात्तत्परिभोगयोग्यत्वाभावः सूच्यते । विभात इति कथनेन कुन्दस्य अन्तस्तुषारत्वमुपपद्यते । तुषारोऽत्र गर्भस्थानीयः । मकरन्दपूर्णमपि कुन्दं तुषारस्पर्शासहो भ्रमरो यथा भोक्तुं न शक्नोति, तथैव परिपूर्णलावण्यामपि सगर्भामिमां स्वीकर्तुं राजा न शशाकेत्यर्थः । नञ्समीपवर्ती चकारोऽवधारणे । खल्विति जिज्ञासायाम्। उपमा काव्यलिङ्गं चालङ्कारौ । विभाते इत्युक्तेस्तदनन्तरं रविकिरणैर्हिमेऽपनीते भ्रमरेण कुन्दमकरन्दोपभोगो यथा करिष्यते, तथैव इहाप्यभिज्ञानदर्शनेन शापे गते राज्ञा शकुन्तलास्वीकारोऽवश्यमेव करिष्यत इति द्योतयन्त्योपमया रतेः स्थायित्वदार्ढ्यं ध्वनितम् । औत्सुक्यं शङ्का च भावौ । मालिनी वृत्तम् ।

महर्षिणा कण्वेन प्रेषिताम् ऋषिकुमारकाभ्यां सह समागतां शकुन्तलां दृष्ट्वाऽपि दुर्वासःशापतिरोहितस्मृतिस्तामप्रत्यभिजानन् राजा अपनीतावगुण्ठनां निपुणं निर्वर्ण्य स्वगतं विमृशन्नाह—'सर्वावयवानवद्याङ्गी परमसुन्दरीयं लक्ष्यते, अम्लान लावण्यं च वपुरस्याः; किन्तु गर्भिणीव प्रतिभाति; इयं मया पूर्वं दारत्वेन परिगृहीतेत्यपि न स्मरामि, न परिगृहीतेत्यपि न निश्चिनोमि; किं करोमि ? त्यजामि

( इति विचारयन्स्थितः। )

**प्रतीहारी**—अहो धम्मावेक्खिआ भट्टिणो ! ईदिस णाम सुहोवणदं 'रूवं देक्खिअ को अण्णो विआरेदि !

अहो धर्मावेक्षिता भर्तुः। ईदृशं नाम सुखोपनतं रूपं दृष्ट्वा कोऽन्यो विचारयति !

**शार्ङ्गरवः**—भो राजन् ! किमिति जोषमास्यते ?

---

परिगृह्णामि वा ? यथा प्रभातसमये हेमन्तनिशानिपतिततुषारपुञ्जसमाच्छादितमुखं कुन्दं तन्मध्यकोशभरितमकरन्दलिप्सया तत्र निपतितुं प्रवृत्तोऽपि भ्रमरस्तुषारासहशीलतया तन्निकटमुपगन्तुमपि न प्रभवति, अन्तर्निलीनमकरन्दराशिलोभसमाकृष्टचेतास्ततो दूरमपसरितुमपि न प्रभवति; तथैवाहमपि स्वयमुपनतामेतां वनितां परिभोक्तुं मोक्तुं च न प्रभवामि' इति भावः ॥ १९ ॥

इत्थं वर्णितस्य राज्ञोऽनध्यवसायस्य फलमाह—**विचारयन्स्थित इति**। उत्क्षिप्तभ्रूभावादिनेत्यभिनयप्रकारः।

तथाऽवस्थितं राजानमवलोक्य प्रतीहारी साश्चर्यं श्लाघते—**अहो इति**। 'अहो धर्मावेक्षिता भर्तुः ! ईदृशं नाम सुखोपनतं रूपं दृष्ट्वा कोऽन्यो विचारयति !' इति संस्कृतम्। अहो इत्याश्चर्ये। धर्मावेक्षिता—धर्ममवेक्षते = पालनीयत्वेनानुसरति इति धर्मावेक्षी तस्य भावः; धर्मपरत्वमित्यर्थः। तत्र हेतुमाह—**ईदृशमिति**। ईदृशं = लोकोत्तरम्। नाम प्राकाश्ये। सुखोपनतं = प्राप्तिप्रयत्नं विनैवोपगतम्। अन्यः = राज्ञोऽपेक्षयाऽन्यः। अन्यश्चेन्नैव विचारयेत्; अयमेव राजा विचारयति; इदमेवास्य धर्मावेक्षित्वमिति भावः।

अथ शार्ङ्गरवः राज्ञस्तथाऽवस्थितिं तूष्णीभावं चासहमानः पृच्छति—भो

---

१ इत्थीरअणं।

**राजा**—भोस्तपोधनाः! चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः स्मरामि। तत्कथमिमामभिव्यक्तसत्त्वलक्षणां प्रत्यात्मानं क्षेत्रिणमाशङ्कमानः प्रतिपत्स्ये?

**शकुन्तला**—(अपवार्य) अज्जस्स परिणए एव्व संदेहो; कुदो दाणिं मे दूराहिरोहिणी आसा!

आर्यस्य परिणय एव संदेहः; कुत इदानीं मे दूराधिरोहिण्याशा!

---

राजन्निति। जोषं = तूष्णीम्। राजा उत्तरयति—**भोस्तपोधना** इति। स्वीकरणं = परिणयनम्। अत्रभवत्याः = पुरःस्थिताया वनितायाः। अभिव्यक्तसत्त्वलक्षणाम्—अभिव्यक्तं = स्फुटं प्रतीयमानं सत्त्वस्य = गर्भस्य लक्षणं = कपोलपाण्डिमजघनगौरवादिरूपं चिह्नं यस्यास्ताम्। क्षेत्रिणमाशङ्कमानः—क्षेत्रं = पत्नी यस्यासौ क्षेत्री तं क्षेत्रिणम्। "क्षेत्रं पत्नीशरीरयोः" इत्यमरः। एतादृशमात्मानं शङ्कमानः। यत इयं गर्भिणी मयाऽधुना परिगृह्येत चेत् तदाऽहं क्षेत्री भवेयम्, न तु बीजी; अस्यां संजातमपत्यं च नौरसं स्यात्, अपि तु क्षेत्रजम्; तच्च औरसात् हीनम् इत्येका शङ्का, अथ चान्येनोढाया अस्याः परिग्रहे मम क्षेत्रमेवैषा भवेत्, न तु धर्मपत्नी इत्यपरा। अतः कथमिमां प्रतिपत्स्ये = अङ्गीकरिष्यामि।

**अपवार्येति**। "रहस्यं कथ्यतेऽन्यस्य परावृत्त्याऽपवारितम्" इत्युक्तलक्षणमपवारणमभिनीयेत्यर्थः। राजोक्तिमाकर्ण्य शकुन्तला चिन्तयति—**अज्जस्स** इति। 'आर्यस्य परिणय एव सन्देहः। कुत इदानीं मे दूराधिरोहिण्याशा' इति संस्कृतम्। **कुत इति**। सफला न स्यादिति भावः। दूराधिरोहिणी—दूरम् = अत्यर्थं 'तत्र गत्वा महिषीपदं प्राप्स्यामि' इत्याद्यधिरोढुं शीलं यस्याः सा, 'परिग्रहबहुत्वेऽपि' इत्याद्युक्तविषया च।

---

१ अक्षत्रियं मन्यमानः। २ भग्ना।

**शार्ङ्गरवः**—मा तावत्—

[1]कृताभिमर्शामनुमन्यमानः सुतां त्वया नाम मुनिर्विमान्यः ।
मुष्टं प्रतिग्राहयता स्वमर्थं पात्रीकृतो दस्युरिवासि येन ॥ २० ॥

राज्ञो वचनमाकर्ण्य कुपितः शार्ङ्गरव आह—**मेति** । मा तावदिति वैपरीत्ये । भवदुक्तमिदं विपरीतमित्यर्थः ।

किं तदित्याह—**कृताभिमर्शामिति** । कृताभिमर्शां सुताम् अनुमन्यमानः मुनिः त्वया विमान्यो नाम । मुष्टं स्वमर्थं प्रतिग्राहयता येन ( त्वं ) दस्युरिव पात्रीकृतोऽसि इत्यन्वयः ।

कृताभिमर्शाम्—कृतः = विहितः अभिमर्शः = बलात् स्पर्शः, बलाद्धर्षणं यस्याः स्ताम् । अनेन सातिशयापराधकारित्वं ध्वन्यते । सुताम् = ईदृशीं पुत्रीं शकुन्तलाम् अनुमन्यमानः = अनुमोदमानः । इयं महिषीत्वेन प्रतिगृह्यतामिति त्वत्समीपं प्रापयन्नित्यर्थः । अनेन एवं सापराधेऽपि त्वयि मुनित्वेन तस्य तादृशी कृपा युज्यत एवेति ध्वनितम् । अत एव मुनिः = कण्वः महत्यपि कोपकारणे न केवलम् कुप्यन् अपि तु तदेव कोपस्थानं प्रशंसन् अतिमृदुरसौ त्वया = एवमपराधं कृत्वाऽप्यधुना तत्स्मरणमप्यकुर्वाणेन राज्ञेत्यर्थान्तरसंक्रामितम् । विमान्यो नाम—अत्र पूर्वोक्त मा तावदिति सम्बद्ध्यते । तावन्मा विमान्यो नामेति सम्बन्धः । तावत् = साकल्येन मा विमान्यः = नावज्ञातव्यः । नामेति क्रोधे । अयमर्थः—मुनिकर्तृकस्य त्वत्कर्मकस्य च विमाननस्यात्र सम्भावना, न तु त्वत्कर्तृकस्य मुनिकर्मकस्य; त्वं खलु सुताभिमर्शादपराद्धः, अतो विपरीतमेतदिति । मुष्टं = चोरितं स्वं = निजम् अर्थं = वित्तं कन्यारूपं प्रतिग्राहयता—प्रतिग्राह्यत्वेन = स्वीकार्यत्वेन बोधयता,

१ कृतावमर्शाम् ।

शारद्वतः—शार्ङ्गरव ! विरम त्वमिदानीम् । शकुन्तले ! वक्तव्यमुक्तमस्माभिः । सोऽयमत्रभवानेवमाह; दीयतामस्मै प्रत्ययप्रतिवचनम् ।

---

तदधीनं कारयतेत्यर्थः । येन = मुनिना दस्युरिव = चौर इव त्वं पात्रीकृतोऽसि = अपात्रमपि त्वं पात्रमिव सम्पद्यमानः कृतोऽसि ।

अत्रोपमया अपराधिन्यप्यनुग्रहेच्छोर्विमाननस्यात्यन्तमयुक्तत्वमशुभोदर्कत्वं च द्योत्यते । तदेनां स्वीकृत्य मुनिं संमानयेति भावः । एवमपराधिनः कन्यादानेन सन्तोषार्थं प्रवृत्तस्य स सन्तोषो नास्ति, परं विमाननालक्षणानर्थोत्पादाद्विषमालङ्कारः । इवशब्दो वाक्यार्थोपमाने । इन्द्रवज्रोपेन्द्रवज्रयोस्तृतीयोपजातिः ।

शकुन्तलाविषये राज्ञोऽनङ्गीकारोक्तिमाकर्ण्य कुपितः शार्ङ्गरव आह—'हे राजन् ! मुनेः कन्यां बलाद्धर्षितवान् कृतापराधोऽपि भवान् दयालुना मुनिनाऽनुमोदितगान्धर्वपरिणयोऽस्ति । तेनैव भवता सम्प्रति तामेव तस्य सुतां प्रत्याख्याय स मुनिर्नावज्ञातुं योग्यः । मुनिनैव सापराधस्य भवतोऽवज्ञा कर्तुं योग्या, प्रकृते भवानेव मुनिमवज्ञातुमुपक्रमते, तन्न युक्तम् । येन मुनिना स्वमर्थं मुष्णन् पश्चात्तमेव प्रतिग्राहितो दस्युरिव त्वमपात्रमपि कन्यादानेन पात्रीकृतोऽसि, त्वं च तमेवावजानासि; नेदं योग्यम् । तस्मादेनां मुनितनयामङ्गीकृत्य मुनिं संमानय' इति भावः ॥ २० ॥

अथ शारद्वतो ब्रूते—शार्ङ्गरवेति । विरम त्वमिदानीम् = इतः परं त्वया न वक्तव्यम् । राज्ञो निर्बन्धो दृष्टः, तदेवंविधैर्वचनप्रतिवचनैरलमित्यर्थः । वक्तव्यमुक्तमस्माभिः = अस्माभिर्यावद्वक्तुं शक्यं तावदुक्तमित्यर्थः । सोऽयमत्रभवानेवमाह—सः = अस्मद्वचनविषयः, त्वया स्वपतिरित्युक्तश्च । अयमत्रभवान् = मान्यो राजा एवमाह = अस्मदुक्ते विप्रतिपन्नः परिणयमेव अपलपति । प्रत्ययप्रतिवच-

**शकुन्तला**—(अपवार्य) इमं अवत्थन्तरं गदे तारिसे अणुराए किं वा सुमराविदेण? अत्ता दाणिं मे सोअणीओ [1]त्ति ववसिदं एदं। (प्रकाशम्) अज्जउत्त! (इत्यर्धोक्ते) संसइदे दाणिं ण एसो समुदाआरो। [2]पोरव! ण जुत्तं णाम दे तह पुरा अस्समपदे सहावुत्ताणहिअअं इमं जणं समअपुव्वं [3]पतारिअ ईदिसेहिं अक्खरेहिं पच्चाचक्खिदुं।

नम् = प्रत्ययार्थं प्रतिवचनम्, विश्वासजनकमुत्तरमित्यर्थः। अत्र न साधनान्तरमिति भावः। मध्यमपदलोपी समासः।

अथ शकुन्तला शोच्याऽस्मीति स्वयं विचारयति—**इमं इति**। इदमवस्थान्तरं गते तादृशेऽनुरागे किं वा स्मारितेन? आत्मेदानीं मे शोचनीय इति व्यवसितमेतत्। आर्यपुत्र! (इत्यर्द्धोक्ते) संशयिते इदानीं नैष समुदाचारः। पौरव! न युक्तं नाम ते तथा पुरा आश्रमपदे स्वभावोत्तानहृदयमिमं जनं समयपूर्वं प्रतार्य ईदृशैरक्षरैः प्रत्याख्यातुम्' इति संस्कृतम्। तादृशे = अतिशयिते अनुरागे इदम् = एतत् अवस्थान्तरं = अन्यामवस्थाम्, रूपविपर्ययम्। गते = प्राप्ते सति स्मारितेन—भावे क्तः। वा किम्? न किमपि फलम्। इदानीं मे आत्मा = स्वरूपं शोचनीयः = कलङ्कान्मोचनीय इति हेतोः एतत् व्यवसितम् = आरब्धो मयैष उद्यमः। यद्वा राज्ञः स्मरणं हि प्रत्ययप्रतिवचनस्य फलम्, तस्यानुरागाभावे निष्फलत्वमत आत्मनः शोच्यता निश्चितेत्यर्थः। अतो विराम एव श्लाघ्य इति भावः। अत्र निर्वेदो दैन्यं च ध्वन्यते। अथापि शारद्वतवचनगौरवादाह—**आर्यपुत्रेति**। परिणेतुरेवेदं सम्बोधनम्। परिणये एव संशयिते = जातसन्देहे सति एष समुदाचारः = सम्यगाचारः न = न युक्त इत्यर्थः। पौरव = पुरुवंशोत्पन्न! राजन्! अयमयुक्तत्वे हेतुः। पुरुवंशोत्पन्नस्य ते मादृशजनप्रतारणं न

१ त्ति किंचि वदिस्सं। २ पोरव! जुत्तं णाम। ३ संभाविअ।

इदमवस्थान्तरं गते तादृशेऽनुरागे किं वा स्मारितेन ? आत्मेदानीं मे शोचनीय इति व्यवसितमेतत् । आर्यपुत्र ! संशयित इदानीं नैष समुदाचारः । पौरव ! न युक्तं नाम ते तथा पुराऽऽश्रमपदे स्वभावोत्तानहृदयमिमं जनं समयपूर्वं प्रतार्येदृशैरक्षरैः प्रत्याख्यातुम् ।

**राजा**—(कर्णौ पिधाय) शान्तं पापम् ।

---

योग्यमित्यर्थः । नामेति कुत्सायाम् । "नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने" इत्यमरः । स्वभावोत्तानहृदयम्—स्वभावेन = निसर्गतः उत्तानम् = आर्जवयुक्तं हृदयं यस्य तम् । स्वप्नेऽप्यकल्पितभवद्वञ्चनमिति भावः । अनेनात्मनोऽतिमुग्धत्वं तेन च परवञ्चनानभिज्ञत्वं परात्मजनविवेकशून्यत्वं च ध्वनितम् । इमं जनम् = मां शकुन्तलाम् । समयपूर्वम् = "एकैकमत्र दिवसे" इत्यादिसङ्केतपूर्वकम् । अथवा समयपूर्वम् = ज्ञानपूर्वम् । "समयाः शपथाचारकालसिद्धान्तसंविदः" इत्यमरः । प्रतार्य = वञ्चयित्वा । प्रतिश्रुताकरणमेवात्र वञ्चनं विवक्षितम् । ईदृशैरक्षरैः = अतिक्रूरैः परकलत्रत्वप्रतिपादकैर्हृदयविदारकैर्वर्णैः प्रत्याख्यातुम् = निराकर्तुं न युक्तमिति सम्बन्धः । इदं प्रत्याख्यानं वाङ्मात्रेणैव, न तत्त्वतः, अग्रे परिग्रहस्य वक्ष्यमाणत्वादिति श्रुतेरनुसन्धानाय कवेरक्षरैरित्युक्तिः । पुरुवंशे जातस्य तवेदमत्यन्तमनुचितमित्यर्थः । तस्मादिमं जनं न निराकुरुष्वेति भावः ।

**कर्णौ पिधायेति** । कर्णौ हस्ताभ्यामावृत्य । पापश्रवणनिवारणायैवम् । अथ शकुन्तलाया वचनमसहमानो राजा आह—**शान्तमिति** । आशंसायां क्तः । शान्तं पापम्—पापं = दुष्कृतम्, लक्षणया पापोक्तिः । शान्तं = निवृत्तं भवतु । मैवं वदेत्यर्थः ।

व्यपदेशमाविलयितुं [1]किमीहसे जनमिमं च पातयितुम् ।
कूलंकषेव सिन्धुः प्रसन्नमम्भस्तटतरुं च ॥ २१ ॥

व्यपदेशमिति । कूलंकषा सिन्धुः प्रसन्नम् अम्भः तटतरुं चेव व्यपदेशमाविलयितुम् इमं जनं पातयितुं च ईहसे किम् इत्यन्वयः ।

कूलंकषा—कूलं = तटं कषति = भिनत्ति या तादृशी । कूलोपपदात् कषेः खच् । तटसङ्घर्षिणीत्यर्थः । कलुषीकरणे तरुपातने च हेतुः । सिन्धुः = नदी प्रसन्नम् = निर्दोषं स्वच्छं च । अम्भः = जलप्रवाहम्, तटतरुं चेव = तीरस्थं वृक्षं च यथा । नदी प्रसन्नमम्भो यथा कलुषयति तटतरुं च पातयति तद्वदित्युपमा । व्यपदेशम्—व्यपदिश्यतेऽनेनेति व्यपदेशः = कुलम्, पितृकुलमिति यावत्; तम् । आविलयितुम् = दूषयितुं कलुषयितुं च । इमं जनं = मल्लक्षणम्, मामित्यर्थः । पातयितुं च = धर्मात् पतितं कर्तुं च ईहसे किम् = चेष्टसे किम् ? त्वं तु इहागमनेनैव पतिताऽसीति णिचा ध्वन्यते ।

अत्र दूषणपतनयोरवश्यंभाव उपमया व्यज्यते । मतिर्भावः । आर्या जातिः ।

दुर्वासःशापतिरोहितस्मृती राजा शकुन्तलया स्वानङ्गीकरणे सुतरामुपालब्धस्तद्वचःश्रवणमपि पापजनकं सम्भाव्य कर्णौ पिधाय सविषादं वदति—'हे नारि ! शान्तं पापम् । किमेवं वदसि ? यथा प्रावृट्कालप्रभाव णंतारुण्यमदगर्विता काऽपि नदी तटसङ्घर्षं कुर्वाणा प्रसन्नमपि पाथःप्रवाहं कलुषीकरोति, तटनिर्भेदेन तटाश्रयं तरुं च पातयति; तथा मया पूर्वमपरिगृहीतपाणिरपि मां स्वपतिं ब्रवाणा कुलटाचरिता त्वं स्वपितृकुलं दूषयितुं मां च स्वधर्मात् पतितं कर्तुं चेष्टसे किम् ? पापेयं तव चेष्टा शान्ता भवतु' इति भावः ॥२१॥

---

१ समीहसे मां च नाम ।

**शकुन्तला**—होदु; जइ परमत्थतो परपरिग्गहसङ्किणा तुए एव्वं वत्तुं पउत्तं ता अहिण्णाणेन इमिणा तुह आसङ्कं अवणइस्सं ।

भवतु; यदि परमार्थतः परपरिग्रहशङ्किना त्वयैवं वक्तुं प्रवृत्तं तदभिज्ञानेनानेन तवाशङ्कामपनेष्यामि ।

**राजा**—[1]उदारः कल्पः ।

**शकुन्तला**—(मुद्रास्थानं परामृश्य) हद्धी ! अङ्गुलीअअसुण्णा मे अङ्गुली ।

---

अथ धर्मारण्यात् प्रस्थानसमये सखीसन्दिष्टं स्मृत्वा अभिज्ञानाङ्गुलीयकदर्शनेन राज्ञः शङ्कां परिहर्तुमुपक्रममाणा शकुन्तला ब्रूते—**होदु** इति । 'भवतु; यदि परमार्थतः परपरिग्रहशङ्किना त्वयैवं वक्तुं प्रवृत्तं तदभिज्ञानेनानेन तवाशङ्कामपनेष्यामि' इति संस्कृतम् । परमार्थतः = यथार्थमेव परपरिग्रहशङ्किना—परपरिग्रहम् = अन्यकलत्रं शङ्कते यस्तथाविधेन । परदारशङ्कयैव तेऽद्य ईदृशीवृत्तिर्मयि, न च वञ्चनबुद्धिर्यदीत्यर्थः । तत् = तदा अभिज्ञानेन = प्रत्ययहेतुना मुद्रिकारूपचिह्नेनेत्यर्थः । अनेन = प्रस्थानकाले त्वद्दत्तेन मत्करतलगतत्वात् सम्प्रति मदधीनेन । राजोक्तौ—**उदारः कल्प** इति । उदारः कल्पः = मुख्यो न्यायः । "कल्पः स्यात् प्रत्यये न्याये" इति **विश्वः** । महान् विश्वासो वा । यद्वा उदारः = महान्, उत्तम इत्यर्थः । कल्पः = सङ्कल्पः । साधुरेष प्रस्तावो यदभिज्ञानेन शङ्कामपनेष्यसीति । उदारः = विदग्ध इति वा । "उदारो महति ख्याते दानशौण्डविदग्धयोः" इति **वैजयन्ती** ।

**मुद्रास्थानं परामृश्य**—मुद्र्यतेऽनया इति मुद्रा = उत्कीर्णवर्णमङ्गुलीयकम्, तस्याः स्थानम् = अङ्गुलिमूलं परामृश्य = स्पृष्ट्वा । शकुन्तला वदति—**हद्धी**

---

1 प्रथमः ।

हा धिक् ! अङ्गुलीयकशून्या मेऽङ्गुलिः । ( इति सविषादं गौतमीमवेक्षते । )

**गौतमी**—णूणं दे सक्कावदारब्भन्तरे सचीतित्थसलिलं वन्द-माणाए पब्भट्टं अङ्गुलीअअं ।

नूनं ते शक्रावताराभ्यन्तरे शचीतीर्थसलिलं वन्दमानायाः प्रभ्रष्टमङ्गुलीयकम् ।

**राजा**—( सस्मितम् ) इदं तत्प्रत्युत्पन्नमति स्त्रैणमिति यदुच्यते ।

**शकुन्तला**—एत्थ दाव विहिणा दंसिदं पहुत्तणं । अवरं दे कहिस्सं ।

---

**इति** । 'हा धिक् ! अङ्गुलीयकशून्या मेऽङ्गुलिः' इति संस्कृतम् । अहो मे दैववैपरीत्यमिति भावः । **गौतमीमवेक्षते इति** । कथमेतदभूदिति तदभिप्रायः ।

अथ तदङ्गुलीयकादर्शनस्य सङ्गतिं सम्भावयन्ती गौतमी ब्रूते—**णूणं इति** । 'नूनं ते शक्रावताराभ्यन्तरे शचीतीर्थसलिलं वन्दमानायाः प्रभ्रष्टमङ्गुलीयकम्' इति संस्कृतम् । शक्रावताराभ्यन्तरे—अवतरणम् = अवतारः, शक्रस्य अवतारः शक्रावतारः, लक्षणया तदुपलक्षितो देशः । तस्य अभ्यन्तरे = मध्ये प्रभ्रष्टं = करात् च्युतम् ।

**सस्मितमिति** । मिथ्यावचनोपन्यासचातुर्यात्तयोरात्मवञ्चनोद्यमं सम्भाव्य स्मितम्, तेन सहेत्यर्थः । इदम् = अनया तापसतरुण्याऽलीकस्याङ्गुलीयकस्यादर्शने कथिते तापसवृद्धया तस्य सङ्गतिकथनम्, तत् = जगति प्रसिद्धम् । प्रत्युत्पन्नमति—प्रत्युत्पन्ना = तत्तत्काले तत्तदुचितविषयोन्मेषवती मतिः = बुद्धिर्यस्य तत्, प्रतिभाप्रभावात् तत्तत्कालसमुचितव्यवहारनिपुणमित्यर्थः । "तात्कालिकी तु प्रतिभा प्रत्युत्पन्नमतिः स्मृता" इति । स्त्रैणम्=स्त्रीसमूहः । स्त्रीजातिः प्रत्युत्पन्नमतिरिति गौतमीवचनात् प्रत्यक्षं ज्ञायतेऽस्माभिरिति सोल्लुण्ठनोक्तिः ।

अथ शकुन्तला वदति—**एत्थ इति** । 'अत्र तावद्विधिना दर्शितं प्रभुत्वम् ।

अत्र तावद्विधिना दर्शितं प्रभुत्वम् । अपरं ते कथयिष्यामि ।

**राजा**—श्रोतव्यमिदानीं संवृत्तम् ।

**शकुन्तला**—णं एक्कस्सिं दिअहे णोमालिआमण्डवे णलिणीपत्त-भाअणगअं उअअं तुह हत्थे संणिहिदं आसि ।

नन्वेकस्मिन्दिवसे नवमालिकामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते संनिहितमासीत् ।

---

अपरं ते कथयिष्यामि' इति संस्कृतम् । अत्र = अस्मिन्नभिज्ञानाङ्गुलीयकप्रदर्शन-विषये विधिना = स्वेच्छापरिकल्पितलोकतन्त्रेण विधात्रा । प्रभुत्वं=स्वातन्त्र्यम् । विधिवैपरीत्यमेवात्र हेतुरिति भावः । अत्र विधिं प्रत्यसूया गम्यते । अपरम्=अभि-ज्ञानान्तरम् । राजोक्तौ- **श्रोतव्यमिदानीं संवृत्तमिति** । पूर्वं द्रष्टव्यत्वेनोक्त-मभिज्ञानमद्य श्रोतव्यमभूदित्यर्थः । अनेन कथयिष्यमाणमपीदृशमेवेति राज्ञो हृदयं प्रतीयते । भवतीभिः कल्पनासहस्रं विधायालीकवचनोपन्यासः कर्तव्यः । स चेन्मया न श्रूयेत, तर्हि ममाश्रवणापराध एव स्यादिति प्रयोजनाभावेऽपि श्रवण-मात्रे विधिरिति संवृत्तपदेन द्योत्यते ।

शकुन्तलाऽभिज्ञानान्तरमाह— **णं एक्कस्सिं इति** । 'नन्वेकस्मिन् दिवसे नवमालिकामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते संनिहितमासीत्' इति संस्कृतम् । नन्विति वाक्यारम्भे ।

नन्वाक्षेपे परिप्रश्ने प्रत्युक्ताववधारणे ।
वाक्यारम्भेऽप्यनुनयामन्त्रणानुज्ञयोरपि ॥

इति हैमः । नलिनीपत्रभाजनगतम्—नलिनीपत्रनिर्मितं भाजनं = पात्रं तत्रस्थमित्यर्थः । आतिथ्यक्रियासमारम्भे मया समानीतमुदकं पादप्रक्षालनाद्यर्थं

**राजा**—शृणुमस्तावत् ।

**शकुन्तला**—तक्खणं सो मे पुत्तकिदओ दीहापङ्गो णाम मिअपोदओ उवट्ठिओ । तुए अअं दाव पढमं पिअउ त्ति अणुअम्पिणा उवच्छन्दिदो उअएण । ण उण दे अपरिचआदो हत्थब्भासं उवगदो । पच्छा तस्सिं एव्व मए गहिदे सलिले णेण किदो पणओ । तदा तुमं इत्थं पहसिदो सि—सव्वो सगन्धेसु विस्ससिदि; दुवेवि एत्थ

---

तव करे समर्पितमभूदिति भावः । राजोक्तौ—**शृणुमस्तावदिति** । विवक्षितं सर्वमुच्यताम्, सर्वमपि श्रोद्धुं सन्नद्धाः स्म एवेति भावः । अथ शकुन्तला वक्तव्यशेषं ब्रूते—**तक्खणं इति** । 'तत्क्षणं स मे पुत्रकृतको दीर्घापाङ्गो नाम मृगपोतकः उपस्थितः । त्वयाऽयं तावत्प्रथमं पिबत्वित्यनुकम्पिनोपच्छन्दित उदकेन । न पुनस्तेऽपरिचयाद्धस्ताभ्याशमुपगतः । पश्चात्तस्मिन्नेव मया गृहीते सलिलेऽनेन कृतः प्रणयः । तदा त्वमित्थं प्रहसितोऽसि—सर्वः सगन्धेषु विश्वसिति; द्वावप्यत्रारण्यकाविति' इति संस्कृतम् । सः इत्यनुभूतार्थकम् । पुत्रकृतकः = कृत्रिमः पुत्रः, पुत्रबुद्धया पालित इत्यर्थः । मृगपोतकः = हरिणशिशुः उपस्थितः = तत्रागतः । अयं तावत्=एष मृगशिशुरेव । **प्रथममिति** । पादप्रक्षालनादिकं तु पश्चात्संपाद्यमिति भावः । इति=अनेन प्रकारेण । अनुकम्पिना=दयमानेन उपच्छन्दितः—उपच्छन्दनम् = अनुवृत्तिः, अभिलाषानुरूपं प्रार्थित इत्यर्थः । सः जलार्थमागतः, त्वं च जलमेव अदाः इति छन्दानुवर्तनम् । अपरिचयात् = परिचयाभावात्, अज्ञातत्वादित्यर्थः । हस्ताभ्याशं = हस्तसमीपम् उपगतः=प्राप्तः । कृतः प्रणयः = प्रीतिः कृता, जलपानं कृतमित्यर्थः । प्रहसितोऽसि=प्रहासं कृतवानसि । हासप्रकारमाह—**सर्वः सगन्धेषु विश्वसितीति** । सगन्धेषु = समानगन्धेषु,

आरण्णआ त्ति ।

तत्क्षणं स मे पुत्रकृतको दीर्घापाङ्गो नाम मृगपोतक उपस्थितः । त्वया अयं तावत्प्रथमं पिबत्वित्यनुकम्पिनोपच्छन्दित उदकेन । न पुनस्ते अपरिचयाद्धस्ताभ्याश-मुपगतः । पश्चात्तस्मिन्नेव मया गृहीते सलिलेऽनेन कृतः प्रणयः । तदा त्वमित्थं प्रहसितोऽसि—सर्वः सगन्धेषु विश्वसिति; द्वावप्यत्रारण्यकाविति ।

**राजा**—एवमादिभिरात्मकार्यनिर्वर्तिनीनामनृतमयवाङ्मधुभिराकृ-ष्यन्ते विषयिणः ।

**गौतमी**—महाभाअ ! ण अरुहसि एव्वं मन्तिदुं । तवोवणसं-वड्ढिदो अणभिण्णो अअं जणो कइदवस्स ।

---

तुल्यसंबन्धेष्वित्यर्थः । स्वयूथ्येष्विति यावत् । "गन्धः संबन्धलेशयोः" इति हैमः । "सगन्धो बन्धुरुच्यते" इति हलायुधश्च । बन्धुत्वमुपपादयति—द्वाविति । द्वावपि=युवाम् आरण्यकौ=अरण्यसंबन्धेन बन्धू इत्यर्थः ।

शकुन्तलोक्तिमाकर्ण्य राजा वदति—एवमिति । एवमादिभिः = उक्तसदृशै-र्वाक्यैरित्यर्थः । आत्मकार्यनिर्वर्तिनीनाम्—आत्मकार्य=स्वकार्यम् अवश्यं निर्वर्त-यन्ति=साधयन्ति यास्तासाम्=ललनानाम् । विशेषणादेव विशेष्यप्रतिपत्तिः । अनृतमयवाङ्मधुभिः=मिथ्यावचनात्मकपुष्परसविशेषैरित्यर्थः । विषयिणः=इन्द्रिय-परायणाः कामुका जनाः आकृष्यन्ते = विमार्गं नीयन्ते । अत्र नाहं विषयी, अतस्तव अनृतवाङ्मधुधाराभिर्नाकृष्ये इति भावः । अनृतवाचां मधुत्वारोपात् विषयिणां भ्रमरत्वं स्त्रीणां लतात्वं च गम्यते इति एकदेशविवर्तिरूपकम् ।

राजोक्तिमाकर्ण्य गौतमी वदति—महाभाअ इति । 'महाभाग ! नार्हस्येवं मन्त्रयितुम् । तपोवनसंवर्धिताऽनभिज्ञोऽयं जनः कैतवस्य' इति संस्कृतम् । नार्हसीत्यत्र हेतुः तपोवनेति । अयं जनः = शकुन्तलारूपः । कैतवस्य=कपटाचारस्य ।

महाभाग ! नार्हस्येवं मन्त्रयितुम्। तपोवनसंवर्धितोऽनभिज्ञोऽयं जनः कैतवस्य।

**राजा**—तापसवृद्धे !

स्त्रीणामशिक्षितपटुत्वममानुषीषु[1]
संदृश्यते किमुत याः प्रतिबोधवत्यः।
प्रागन्तरिक्षगमनात्स्वमपत्यजात-
मन्यैर्द्विजैः परभृताः खलु पोषयन्ति ॥ २२ ॥

सत्यमेवेयंभणति, तपोवनवर्धितत्वात् कैतवं न जानातीति भावः। गौतमीवचः श्रुत्वा राजा सोपहासमाह—**तापसवृद्धे इति**। तापसी चासौ वृद्धा चेति तत्सम्बुद्धिः। वेश्याजनन्या इव तपोऽपदेशेनेयमेवं भणति इति राजमनोगतं सम्बुद्ध्या सूच्यते।

स्त्रीस्वभावं विवृण्वन्नाह—**स्त्रीणामिति**। स्त्रीणां (मध्ये) अमानुषीषु (अपि) अशिक्षितपटुत्वं संदृश्यते; याः प्रतिबोधवत्यः किमुत ! परभृताः स्वमपत्यजातम् अन्तरिक्षगमनात् प्राक् अन्यैर्द्विजैः पोषयन्ति खलु इत्यन्वयः।

स्त्रीणां=स्त्रीजातावुत्पन्नानाम् मध्ये अमानुषीषु = मानुषव्यतिरिक्तासु, वञ्चक-वागादिव्यवहाररहितास्वपीत्यर्थः। तास्वपि अशिक्षितपटुत्वं=शिक्षां विना नैस-र्गिकं पाटवम्। यद्वा अनुपदिष्टेषु विषयेषु नैपुण्यम्, अर्थात् वञ्चने। संदृश्यते = सम्यग् लक्ष्यते। याः प्रतिबोधवत्यः = प्रतिभावत्यः शिक्षाशालिन्यश्च तासु वागा-दिव्यवहारकुशलासु मानुषीषु किमुत ! तासामनुपदिष्टवञ्चकत्वकौशलं किमु वक्तव्य-मित्यर्थः। परभृताः=कोकिलाः। साभिप्रायमिदम्। "वनप्रियः परभृतः" इत्यमरः। स्वं = स्वीयम् अपत्यजातं=अर्भकसमूहम्। "जातिर्जातं च सामान्यम्" इत्यमरः।

१ अमानुषीणाम्।

"जातं जात्योघजन्मसु" इति विश्वश्च। अन्तरिक्षगमनात् प्राक्=उड्डयनशक्त्युत्पत्तेः पूर्वम्। अन्यैर्द्विजैः = पक्षिभिः, प्रसिद्ध्या काकैः परिपोषयन्ति—परितः=सर्वप्रकारेण पोषयन्ति=पालयन्ति। खल्विति प्रसिद्धौ।

अत्र पूर्वार्द्धे काव्यार्थापत्तिः। स्त्रीसामान्यवृत्तान्तकथनेनेयं कैतवे निपुणेति प्रकृतार्थप्रतीतेरप्रस्तुतप्रशंसा अर्थान्तरन्यासश्च। परभृता इत्यनेन शकुन्तलायाः, स्वमपत्यमित्यनेन भरतस्य, अन्यैर्द्विजैरित्यनेन मारीचाश्रमवासिनां मुनीनाम्, प्रागन्तरिक्षगमनादित्यनेन देवेन्द्रप्रेषितमातलिसहकृतस्य राज्ञ आगमनात् पूर्वमित्यर्थस्य च प्रतीत्या मारीचाश्रमे मुनिभिः संरक्ष्यमाणायाः सपुत्रायाः शकुन्तलायाः स्थितिरिन्द्रलोकात् प्रत्यागमनकाले राज्ञस्तया संसर्गश्चेति वक्ष्यमाणः कथाभागोऽप्यत्र सूचितः। अत्र हेत्ववधारणनामकं सन्ध्यन्तराङ्गमुपक्षिप्तम्। तल्लक्षणं यथा—"निश्चयो हेतुनाऽर्थस्य मतं हेत्ववधारणम्" इति। परभृतादिदृष्टान्तेन स्त्रीत्वेन हेतुना मृषाभाषणलक्षणस्यार्थस्य निश्चयाद्धेत्ववधारणम्। वसन्ततिलका वृत्तम्।

तपोवनसंवर्द्धितेयं शकुन्तला कैतवाचारं न जानातीति गौतमीवचः श्रुत्वा राजा सोपहासमाह—'अयि वृद्धे पतिव्रते तापसवृद्धे! किं न जानासि स्त्रीस्वभावम्? शृणु; स्त्रियो हि निसर्गादेव पण्डिताः; वञ्चकवागादिव्यवहारं कर्तुमक्षमासु अमानुषीषु गोमहिष्यादिष्वपि शिक्षां विनैव वञ्चननैपुण्यम् अनुपदिष्टविषयकौशलं च सम्यग् लक्ष्यते। या मानुष्यः प्रतिभावत्यः शिक्षाशालिन्यो वञ्चकवागादिव्यवहारक्षमास्तासां कौशलं किं वक्तव्यम्! कोकिलाङ्गनाः खलु वर्णेन सदृशं स्वीयार्भकसमूहमुड्डयनशक्त्युत्पत्तिपर्यन्तं काकपक्षिद्वारा पोषयन्ति, अत एव च ताः परभृता इत्युच्यन्ते। तस्मात् वनवर्द्धिताऽपीयं शकुन्तला स्त्रीस्वभावसुलभं वञ्चनकौशलमवश्यमेव जानाति' इति भावः॥२२॥

**शकुन्तला**—(सरोषम्) अणज्ज ! अत्तणो हिअआणुमाणेण पेक्खसि । को दाणिं अण्णो [1]धम्मकञ्चुअप्पवेसिणो तिणच्छण्णकूवोवमस्स तव अणुकिदिं पडिवदिस्सदि ?

अनार्य ! आत्मनो हृदयानुमानेन पश्यसि । क इदानीमन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते ?

---

अथ राज्ञोऽधिक्षेपमसहमाना शकुन्तला तमुपालभते—**अणज्ज** इति । 'अनार्य ! आत्मनो हृदयानुमानेन पश्यसि । क इदानीमन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते' इति संस्कृतम् । अनार्य = आर्याचारविचारविवर्जित ! आत्मनो हृदयानुमानेन—आत्मनो हृदयम् अनु = हृदयानुरूपं यत् मानं = मितिः तेन प्रेक्षसे = जानासि । ईक्षणमत्र ज्ञानमात्रम् । आत्महृदयमिव परहृदयमपीति कल्पनेन आत्मवदस्मान् जानासीत्यर्थः । कथयन्ति च लौकिकाः—'स्वयं पापी परान् पापिन आशङ्कते' इति । क इदानीमन्यः = त्वद्व्यतिरिक्तो जनः । धर्मकञ्चुकप्रवेशिनः—धर्मस्य कञ्चुकं = प्रावरणं प्रवेष्टुं शीलं यस्य तथाविधस्य । बहिः सर्वप्रकारेण व्याजेन धर्मपरस्येत्यर्थः । अत एव तृणच्छन्नकूपोपमस्य = तृणाच्छादितमुखकूपसदृशस्य । तृणच्छन्नमुखः कूपो हि स्थलबुद्ध्या जनान् पातयति, एवमेव त्वयि विश्वासं विदधतो जनांस्त्वं वञ्चयसि । अन्तर्नृशंसस्येत्यर्थः । अनुकृतिम् = अनुकरणं प्रतिपत्स्यते = करिष्यति ।

अथ राजा दुष्यन्तः कुपितायाः शकुन्तलायाः नेत्रारुणिमभ्रूभङ्गाभ्यामनुभावाभ्यां कोपमकृतकं निश्चित्य ऊढाया निरपराधायाः परित्यागे एव एवंविधः कोपः सम्भवति इति तया सह परिणयस्य कृतत्वं सम्भावयन्नपि दुर्वासःशापमहिम्ना

---

1 धम्मकंचुअव्ववदेसिणो ।

**राजा**—(आत्मगतम्) संदिग्धबुद्धिं [1]मां कुर्वन्नकैतव इवास्याः कोपो लक्ष्यते। तथा ह्यनया—

मय्येव विस्मरणदारुणचित्तवृत्तौ
वृत्तं रहः प्रणयमप्रतिपद्यमाने।
भेदाद्भ्रुवोः कुटिलयोरतिलोहिताक्ष्या
भग्नं शरासनमिवातिरुषा स्मरस्य ॥ २३ ॥

---

अनिश्चिन्वन् आत्मगतं विमृशति—सन्दिग्धबुद्धिमिति। सन्दिग्धबुद्धिम्—सन्दिग्धा = इयं मया परिणीता न वेति सन्देहमापन्ना बुद्धिर्यस्य तथाविधम्। अकैतव इव = अकृत्रिम इव, वास्तव इत्यर्थः। लक्ष्यते = लक्षणैर्ज्ञायते। अत्र तर्को ध्वन्यते।

कोपाकृत्रिमत्वज्ञापकमाह—तथा ह्यनया—मय्येवेति। विस्मरणदारुणचित्तवृत्तौ रहो वृत्तं प्रणयमप्रतिपद्यमाने मय्येव अतिरुषा अतिलोहिताक्ष्या अनया कुटिलयोः भ्रुवोर्भेदात् स्मरस्य शरासनं भग्नमिव इत्यन्वयः।

विस्मरणदारुणचित्तवृत्तौ—विस्मरणेन = स्मृतिलोपात् दारुणा = निरनुक्रोशा चित्तवृत्तिः = मनोव्यापारो यस्य तस्मिन् इति अप्रतिपत्तौ हेतुः। रहः = विजने वृत्तं = जातं प्रणयं=परिचयं स्नेहं वा अप्रतिपद्यमाने = अनङ्गीकुर्वति सति, तन्निमित्तेनेत्यर्थः। मय्येव—मय्येव, न तु यस्मिन्कस्मिंश्चित्तटस्थे; किन्तु रहःप्रणयनप्रतिसंबन्धिनि मयि। एवकारेण कोपस्य तात्त्विकत्वं ध्वन्यते। अतिरुषा = तीव्रेण स्मरविषयेण रोषेण अतिलोहिताक्ष्या = आरक्तलोचनया अनया = मुनिकन्यया कुटिलयोः = वक्रयोः भ्रुवोः भेदात् = भङ्गात्, ल्यब्लोपे पञ्चमी; भ्रूभेदमप-

---

१ मामधिकृत्य।

(प्रकाशम्) भद्रे ! प्रथितं दुष्यन्तस्य चरितम्। [1]तथापीदं न लक्षये।

दिश्येत्यर्थः। स्मरस्य=कामस्य शरासनं = त्रिलोकीविजये प्रधानसाधनभूतं धनुः भग्नमिव = छिन्नमिव। कोऽस्य धनुर्भञ्जनादपरः पराभव इत्यर्थः।

अत्र सापह्नवा उत्प्रेक्षा। तया भ्रूगतः संस्थानसौष्ठवातिशयः सकलयुवजन-हृदयोन्मादकत्वं च ध्वन्यते। भ्रूवर्णनं चेदं किञ्चिदुन्मिषितां रतिमनुभावयति। वसन्ततिलका वृत्तम्।

शकुन्तलया सरोषमधिक्षिप्तो राजा तस्या अकैतवं कोपमालक्ष्य कदाचिन्मयेयं परिणीता स्यात् इति सन्दिहानोऽपि मुनिशापतिरोहितस्मृतिः किमप्यनिश्चिन्वानः तस्या भ्रूभङ्गं वर्णयन्नाह—'परिणयवृत्तान्तविस्मरणेन मुनिकन्यादृशा निर्दयचित्ते अत एव तया वर्णितं रहो निष्पन्नं वृत्तान्तमनङ्गीकुर्वति रहःप्रणयनप्रतिसंबन्धिनि मय्येव स्मरेणैवेयमवस्था कारितेति तद्विषये तीव्रेण रोषेण कोपातिरेकलोहिताक्ष्या-ऽनया मुनिकन्यया कुटिलयोर्भ्रुवोर्भङ्गात् स्मरस्य त्रिभुवनविजये प्रधानसाधनीभूतं धनुर्भग्नमिव। स्मरेण हि अनेनैव सहायभूतेन धनुषाऽहमिमामवस्थामापादिता, अतस्तस्य इदं धनुर्मया भज्यते; नातः परमसौ अन्या मुग्धाः एवं वञ्चयेत् इति बुद्ध्या' इति भावः ॥२३॥

अथ शापनिह्नुतस्मृती राजा प्रकाशमाह—**भद्रे इति**। भद्रे = कुलवधु ! प्रथितं = सर्वदा सुहृज्जनपरिवृतत्वादतिप्रकाशं दुष्यन्तस्य चरितम्। दुष्यन्त-स्येति अविसंवादित्वकृतज्ञत्वधार्मिकत्वाद्यर्थान्तरसंक्रमितम्। तथापि = एवमपि इदं = त्वत्परिणयनं न लक्षये = न स्मरामि। मम दिग्विजयार्थं गमनम्, इन्द्र-साहाय्यार्थं स्वर्लोकप्रस्थानम्, मृगयाप्रसंगेन मुनिजनसत्त्ररक्षणार्थं धर्मारण्य-

१ प्रजास्वपीदं न दृश्यते।

**शकुन्तला**—सुट्ठु दाव अत्त सच्छन्दचारिणी [1]किदह्मि; जा अहं इमस्स पुरुवंसप्पच्चएण मुहमहुणो हिअअट्ठिअविसस्स हत्थब्भासं उवगदा ।

सुष्ठु तावदत्र स्वच्छन्दचारिणी कृताऽस्मि; याऽहमस्य पुरुवंशप्रत्ययेन मुखमधोर्हृदयस्थितविषस्य हस्ताभ्याशमुपगता। (इति पटान्तेन मुखमावृत्य रोदिति ।)

---

निवासश्चेत्यादयः सर्वेऽपि व्यापारा मम हृदयपथमवतरन्ति । केवलमेकं त्वत्परिणयनमेव न स्मरामि । न चान्येनास्मिन्विषये कदाचिदपि प्रतिबोधितोऽस्मि । तस्मात् त्वं मयि वृथा मा कुप्य; मया सत्यमेव भणितम्, न त्वलीकम् इति भावः।

राजोक्तं श्रुत्वा शकुन्तला शोचति—**सुट्ठु** इति । 'सुष्ठु तावदत्र स्वच्छन्दचारिणी कृताऽस्मि; याऽहमस्य पुरुवंशप्रत्ययेन मुखमधोर्हृदयस्थितविषस्य हस्ताभ्याशमुपगता' इति संस्कृतम् । सुष्ठु = बलवत् । "बलवत्सुष्ठु" इत्यमरः । स्वच्छन्दचारिणी = आत्मच्छन्दविहारिणी कृताऽस्मि । अनेनेति शेषः । पुरुवंशप्रत्ययेन—पुरुवंशोत्पन्नः अभिजातोऽयमिति विश्वस्येत्यर्थः । मुखमधोः = मधुरभाषिणः हृदयस्थितविषस्य = क्रूरहृदयस्य । अत्र मधुपदेन मधुरवचनस्य, विषपदेन क्रौर्यस्य च निगरणादतिशयोक्तिः । विशेषणाभ्यामतिखलस्वभावत्वं ध्वनितम् । तथा चोक्तम्—

मुखं पद्मदलाकारं वचश्चन्दनशीतलम् ।
हृदयं वज्रकठिनं त्रिविधं धूर्तलक्षणम् ॥ इति ।

हस्ताभ्याशमुपगता = वशंवदा अभूवम् । अत्र निर्वेदो दैन्यं च ध्वन्यते । आभ्यामुपस्कृतो रोदनाद्यनुभावितो दुष्यन्तक्रौर्यनिमित्तको मुनिकन्याया व्यज्यमानः शोकोऽत्र करुणरसत्वमुपगच्छति । अग्रे चास्यैव परिपोषो वर्णयिष्यते ।

---

१ गणिआ समुवत्थिदा ।

**शार्ङ्गरवः**—इत्थमात्मकृतं [1]प्रतिहतं चापलं दहति ।

**अतः परीक्ष्य कर्तव्यं विशेषात्संगतं रहः ।**
**अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥ २४ ॥**

---

अथ शकुन्तलायास्तात्कालिकीमवस्थामनुसन्दधानः "सहसा विदधीत न क्रियाम्" इत्यादिन्यायं मनसि कृत्वा शार्ङ्गरव आह—**इत्थमात्मकृतमिति** । आत्मकृतम् = गुरुजनं बन्धुजनं चानपेक्ष्य स्वयमेवानुष्ठितम् प्रतिहतं = निषिद्धं चापलम् = अविमृश्यकारित्वरूपं चाञ्चल्यम् । इत्थं दहतीति संबन्धः । वर्तमान-प्रत्ययेन दहनावसानं न दृश्यत इति द्योत्यते । आत्मानं बन्धुजनं चेति शेषः ।

तत्र किं कर्तव्यमित्याह—**अत इति** । अतः रहः सङ्गतं विशेषात् परीक्ष्य कर्तव्यम् । अज्ञातहृदयेषु सौहृदम् एवं वैरी भवति इत्यन्वयः ।

अतः = अस्मात्कारणात्, यस्माच्चापलं दहति तस्मादित्यर्थः । रहः सङ्गतं = एकान्ते समागमः, गान्धर्वविवाहात्मकं सख्यमित्यर्थः । विशेषात् परीक्ष्य = येन सङ्गतं कर्तव्यं तस्य मनो विशेषरूपेण परीक्ष्य; अग्रे प्रतिविधानाभावात् । कर्तव्यम् = अनुष्ठेयम् । सङ्गतस्य परीक्ष्य कर्तव्यत्वे हेतुमाह—**अज्ञातेति** । अज्ञातहृदयेषु = पूर्वव्यवहारादिनाऽज्ञातचित्तवृत्तिषु कृतं सौहृदं = मैत्री एवम् = उक्तप्रकारानुसारेण वैरीभवति = पीडाकरं भवति ।

अत्र शकुन्तलादुष्यन्तयोः सङ्गतस्य कर्तव्यत्वे विशेषे प्रस्तुते सति सामान्य-सङ्गतमात्रस्याप्रस्तुतस्य वचनादप्रस्तुतप्रशंसा । उत्तरार्द्धे वैधर्म्येणार्थान्तरन्यासः । मत्याख्यो भावः । अनुष्टुब् वृत्तम् ।

शकुन्तलया बन्धुजनमनापृच्छ्य स्वेच्छया राज्ञा सह विहितस्य गान्धर्वस्य

---

१ अप्रतिहतम् ।

राजा—अयि भोः! किमत्रभवतीप्रत्ययादेवास्मान्संवृतदोषाक्षरेण[1] क्षिणुथ?

शार्ङ्गरवः—(सासूयम्) श्रुतं भवद्भिरधरोत्तरम्?

---

राजसकाशात् प्रत्याख्यानप्राप्तिरूपं फलं दृष्ट्वा क्रुद्धः शार्ङ्गरवः शकुन्तलां नीतितत्त्वमुपदिशन्नाह—'शकुन्तले! पश्य कीदृक् परिणतं ते चापलम्। अत एव विवाहात्मकं रहः सङ्गतमपरीक्षितचित्तैः सह कदाऽपि न कर्तव्यम्। येषां पूर्वव्यवहारैः परिचयैश्च हृदयं सम्यक् परीक्षितं स्यात्तैरेव तथाविधः सम्बन्धः करणीयः। अज्ञातहृदयेषु कृतं सौहृदमित्थंपर्यवसानं सन्तापकरं निन्दास्पदं च भवतीति तन्न कर्तव्यम्' इति भावः॥ २४॥

अथ शकुन्तलावचनप्रत्यायितस्य मुनेः शार्ङ्गरवस्य वचनमाकर्ण्य तस्य स्वविषये अविश्वासं सम्भावयन् राजा प्राह—**अयीति**। अत्रभवतीप्रत्ययादेव—अत्रभवत्यां=मुनिकन्यायां यः प्रत्ययः=श्रद्धातस्मादेव, तन्मात्रमवलम्ब्य। गम्भीराक्षेपपरमिदम्। एवकारेण सत्यवादिनि मयि भवतां विश्वासलवोऽपि नास्तीति द्योत्यते। अस्मानिति सत्यवादित्वाद्यर्थान्तरसंक्रमितम्। अस्मान्=पुरुवंशोत्पन्नान्, सर्वधर्मनिष्ठान्, सत्यवादिनः, इन्द्रादिभिरपि समुपचरितान् संवृतदोषाक्षरेण = शकुन्तलादोषसंकीर्तनव्याजेनाच्छादितास्मद्दोषाक्षरेण वचसेत्यर्थः। दोषसङ्कीर्तनस्य गौरवमक्षरपदेन द्योत्यते। क्षिणुथ = हिंस्थ, अधिक्षिपथेत्यर्थः।

अथ राजोक्तमसहमानो मुनिः स्वीयान् सहागतानाह—**श्रुतमिति**। अधरोत्तरम् = अधरं हीनं च तदुत्तरं चाधरोत्तरम्। स्वदोषाज्ञानादिति भावः। वचनतारतम्यं वा। "अधरो दन्तवसनेऽनूर्ध्वे हीनेऽधरोऽन्यवत्" इति **विश्वः**।

---

१ अस्मान्त्संभृतदोषैरधिक्षिपन्ति भवन्तः।

आजन्मनः शाठ्यमशिक्षितो य-
स्तस्याप्रमाणं वचनं जनस्य ।
[१]परातिसंधानमधीयते यै-
र्विद्येति ते सन्तु किलाप्तवाचः ॥ २५ ॥

अथवा अधरोत्तरं = विपर्ययः । यथा महाभारते—

अधर्मेण जितो धर्मः प्रवृत्तमधरोत्तरम् ।
शर्मिष्ठयाऽतिवृत्ताऽस्मि दुहित्रा वृषपर्वणः ॥ इति ।

**आजन्मन इति ।** यः आजन्मनः शाठ्यमशिक्षितः तस्य जनस्य वचनमप्रमाणम् । यैः परातिसन्धानं विद्येति अधीयते ते आप्तवाचः सन्तु किल इत्यन्वयः ।

यः = मुनिजनः शकुन्तला वा आजन्मनः=जन्मन आरभ्य शाठ्यं=परातिसन्धानरूपं धौर्त्यम् अशिक्षितः=स्वेनान्येन शिक्षां न ग्राहितः तस्य जनस्य = सरलप्रकृतेर्मिथ्याभाषणमजानतो मुनिकन्यारूपस्य जनस्य वचनं=कथनम् अप्रमाणं = विश्वासानर्हम् । यैः=राजनीतिकोविदैः सर्वदा मृषाव्यवहारतत्परै राजलोकैः परातिसन्धानं = परवञ्चनम्, तत्प्रतिपादकं कौटिल्याद्यर्थशास्त्रम् विद्येति अधीयते = इयं नः कुलविद्येति विद्यारूपत्वेन अधीयते। यथा विद्या सद्गुरोः सत्सम्प्रदायात्सुदिने मङ्गलपूर्वकमनध्यायनिवृत्तिपूर्वकं नियतात्मभिरधीयते, तद्वदियमप्यधीयते, न तु शिक्ष्यते । ते = तथाविधा राजलोकाः आप्तवाचः = प्रमाणभूतवचनाः सन्तु=भवन्तु । किलेति सम्भावनायाम् । "किलशब्दस्तु वार्तायां सम्भाव्यानुनयार्थयोः" इति विश्वः ।

१ पराभिसंधानम् ।

राजा—भोः सत्यवादिन् ! अभ्युपगतं तावदस्माभिरेवम्[1] । किं पुनरिमामतिसंधाय लभ्यते ?

शार्ङ्गरवः—विनिपातः ।

---

अत्रार्द्धद्वयेऽपि विपरीतलक्षणया काक्वा वा मुनीनां वचः प्रमाणम्, राज्ञां वचस्त्वप्रमाणमिति बोध्यत इति वक्रोक्तिः । किञ्चानेन स्ववचसां वास्तवत्वम्, राजवचसामनृतत्वं च भङ्ग्या प्रतिपाद्यत इति सामान्यनिबन्धनाऽप्रस्तुतप्रशंसा । चतुर्थ्युपजातिः ।

राजोक्तिमाकर्ण्य रुष्टो राज्ञोऽसत्यवादित्वं बाढं निश्चिन्वन् शार्ङ्गरवस्तस्मै किमप्युत्तरमदत्त्वा स्वीयानाह—'श्रुतं भवद्भिरस्य हीनमुत्तरम् ? विचारयत कीदृशोऽयं विपर्ययः ? यो मुनिजनस्तत्पालिता शकुन्तला वा जन्मारभ्य शाठ्यं कर्तुमशिक्षितः, न च जानाति कथं शठाः शाठ्यं कुर्वत इति, तस्य जनस्य वचनमविश्वसनीयम् । ये पुनः राजनीतिकोविदाः जन्मारभ्य स्वकुलविद्यामिव परवञ्चनोपदेशप्रदं कौटिल्याद्यर्थशास्त्रं नियमपूर्वकमधीयते ते सर्वदा मृषाव्यवहारतत्पराः परवञ्चका धूर्ता राजानो मान्या विश्वसनीयवाच इति सम्भाव्यन्ताम् । तस्मात्सर्वथाऽप्रमाणवचना राजानः' इति भावः ॥ २५ ॥

अथैवं शार्ङ्गरवेणाधिक्षिप्तो राजा सोपहासमाह—**भोः सत्यवादिन् इति** । सत्यवादिन्निति सोल्लुण्ठनोक्तिः । तावत् = प्रथमम् । एवम् = परातिसन्धानात्मकमनृतवादित्वम् । अभ्युपगमस्यानुवादोऽयम् । प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते इति न्यायेनाह—**किं पुनरिति** । किं पुनर्लभ्यते ? न किमपीत्यर्थः । अतिसन्धाय = वञ्चयित्वा । कुपितः शार्ङ्गरव आह—**विनिपात इति** । अधमं इत्यर्थः,

---

1 एवंविधा एव वयम् ।

**राजा**—विनिपातः पौरवैः [1]प्रार्थ्यत इति न श्रद्धेयम्।

**शारद्वतः**—[2]शार्ङ्गरव ! किमुत्तरेण ? अनुष्ठितो गुरोः संदेशः; प्रविनिवर्तामहे वयम्। ( राजानं प्रति )—

तदेषा भवतः कान्ता त्यज वैनां गृहाण वा।
[3]उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी ॥ २६ ॥

---

नरके निपतनं वा। लभ्यते इत्यनुषज्यते। राजा वदति—**विनिपात इति**। पौरवैः=पुरुवंशोत्पन्नै राजभिः, न केवलं मयेत्यर्थः। न श्रद्धेयम् = विश्वासानर्हम्। असत्यमप्यश्रद्धेयं न वदेत् इति नीतिरप्यत्र ध्वनिता भवति।

राज्ञः शार्ङ्गरवस्य च परस्परं वाक्कलहं निरोद्धुकामः शारद्वत आह—**शार्ङ्गरव इति**। किमुत्तरेण = प्रतिवचनेन किम् ? राज्ञा सह वादप्रतिवादेन अलमित्यर्थः। तद्विरमेति भावः। अनुष्ठितो गुरोः सन्देशः—गुरोः = महर्षेः कण्वस्य सन्देशः = वाचिकम्। गुर्वाज्ञानुसारेण शकुन्तला राजसकाशं प्रापिता, राज्ञा सह वादाय नादिष्टा वयम्। प्रतिनिवर्तामहे = आश्रमं प्रतिगच्छामः।

अथ स्वकार्यमुपसंहरन् राजानमाह—**तदेषेति**। तत् एषा भवतः कान्ता; एनां त्यज वा गृहाण वा। हि दारेषु सर्वतोमुखी प्रभुता उपपन्ना इत्यन्वयः।

तत् = यस्माद्वयमनुष्ठितगुरुनिदेशा आश्रमगमनोत्सुकाः स्मः तस्मात्। एषा भवतः कान्ता = इयं भवतो धर्मपत्नी। अस्यां परपरिग्रहशङ्का न कर्तव्येति भावः। किं चैषा त्वत्करे समर्पिता, अतः एनां त्यज = निष्कासय, गृहाण वा = धर्मपत्नीत्वेन स्वीकुरुष्व वा। कामचारे हेतुमाह—**उपपन्नेति**। हि = यतः दारेषु = कलत्रे विषये। दारशब्दो नित्यं बहुवचनान्तः। सर्वतोमुखी—सर्वासु

---

१ लभ्यते। २ भो राजन्। ३ उपयन्तुः।

गौतमि ! गच्छाग्रतः ।

( इति प्रस्थिताः । )

**शकुन्तला**—[1]कहं इमिणा किदवेण विप्पलद्ध ह्मि ! तुह्मे वि मं परिच्चअह ?

कथमनेन कितवेन विप्रलब्धाऽस्मि ! यूयमपि मां परित्यजथ ? (इत्यनुप्रतिष्ठते ।)

---

दिक्षु सुखं = लक्षणया प्रवृत्तिर्यस्याः सा तादृशी, सर्वप्रकारेत्यर्थः । त्यागे ताडने स्वीकारे दानादौ चेति भावः । प्रभुता = स्वतन्त्रता उपपन्ना = युक्ता । भर्तृतन्त्रं पत्न्या ग्रहणमग्रहणं च, तेन यथेच्छमस्यां वर्तस्वेति भावः ।

अत्रार्थान्तरन्यासोऽलङ्कारः । मतिर्भावः । अनुष्टुप् वृत्तम् ।

शार्ङ्गरवं राज्ञा सह विवादाद्विरमय्य स्वकार्यमुपसंहरन् शारद्वतो राजानमाह—"हे राजन् ! उत्तरप्रत्युत्तराभ्यां परस्पराधिक्षेपादिना च अलम् । इयं शकुन्तला निःसंशयं भवतो धर्मदाराः, नात्रास्माकं सन्देहः; भवताऽपि च नास्यां परपरिग्रहशङ्का कर्तव्या । महर्षिणा च भवतः करे समर्पितेयम् । इत्थमवस्थायां यद्येनां त्यक्तुमिच्छसि, तर्हि त्यज; धर्मपत्नीत्वेन ग्रहणमनुमन्यसे चेद् गृहाण । दारेषु सर्वप्रकारैर्भर्तुः स्वातन्त्र्यमस्तीति प्रसिद्धमेवास्ति । तत् यथेच्छमस्यां वर्तस्व' इति भावः ॥ २६ ॥

गौतमीमाह—**गौतमि ! गच्छाग्रत** इति । शकुन्तला वदति—**कहं** इति । 'कथमनेन कितवेन विप्रलब्धाऽस्मि ! यूयमपि मां परित्यजथ ?' इति संस्कृतम् । कितवेन = धूर्तेन । अनेन राज्ञो बुद्धिपूर्वं प्रत्याख्यानदोषः प्रकटीक्रियते । विप्रलब्धा = वञ्चिता । परित्यजथेत्यत्र काका मा परित्यजथेति द्योत्यते ।

---

१ अहं दाणिं ।

**गौतमी—**( स्थित्वा ) वच्छ सङ्गरव ! अणुगच्छदि इअं क्खु णो करुणपरिदेविणी सउन्दला। पच्चादेसपरुसे भत्तुणि किं वा मे [1]पुत्तिआ करेदु ?

वत्स शार्ङ्गरव ! अनुगच्छतीयं खलु नः करुणपरिदेविनी शकुन्तला। प्रत्यादेशपरुषे भर्तरि किं वा मे पुत्रिका करोतु ?

**शार्ङ्गरवः**—(सरोषं निवृत्य) किं पुरोभागे ! स्वातन्त्र्यमवलम्बसे ?

( शकुन्तला भीता वेपते। )

**शार्ङ्गरवः**—शकुन्तले !

---

अनुप्रतिष्ठमानां शकुन्तलां वीक्ष्य गौतमी ब्रूते—**वच्छ इति**। 'वत्स ! शार्ङ्गरव ! अनुगच्छतीयं खलु नः करुणपरिदेविनी शकुन्तला। प्रत्यादेशपरुषे भर्तरि किं वा मे पुत्रिका करोतु' इति संस्कृतम्। करुणपरिदेविनी—करुणम् = आर्तं परिदेवयते = विलपति या तादृशी। "विलापः परिदेवनम्" **इत्यमरः**। प्रत्यादेशपरुषे—प्रत्यादेशेन = निराकरणेन परुषे = रूक्षे, कठोरे सतीत्यर्थः। "प्रत्यादेशो निराकृतिः" **इत्यमरः**। किं वा = अनुगमनादन्यत् किमित्यर्थः। मे पुत्रिका = ममानुकम्पनीया कन्यका। अनेन शकुन्तलाया दयनीयत्वं द्योत्यते। अस्या अनन्यशरणत्वादस्मदनुगमनादन्य उपायो नास्तीत्यर्थः। गौतमीवचः श्रुत्वा शार्ङ्गरवः सरोषं निवृत्य शकुन्तलामाह—**किमिति**। पुरोभागे = दोषदर्शिनि ! दुष्टे इत्यर्थः। किं स्वातन्त्र्यमवलम्बसे = अस्मदाज्ञां विनैवास्माननुगच्छसि ? माऽस्माननुगम इति भावः।

---

१ तवस्सिणी।

यदि यथा वदति क्षितिपस्तथा
　　त्वमसि किं पितुरुत्कुलया त्वया ।
अथ तु वेत्सि शुचि व्रतमात्मनः
　　पतिकुले तव दास्यमपि क्षमम् ॥ २७ ॥

कुत इत्यत्राह—यदीति । क्षितिपो यथा वदति, यदि त्वं तथा असि, उत्कुलया त्वया पितुः किम् ? अथ तु आत्मनो व्रतं शुचि वेत्सि, पतिकुले दास्यमपि तव क्षमम् इत्यन्वयः ।

क्षितिपः = राजा दुष्यन्तः यथा वदति = यादृशं भाषते, यदि त्वं तथा = तादृशी असि, यदि त्वं तत्त्वत एवानूढा सगर्भा चासि; तदा उत्कुलया = कुलमुत्क्रान्तया, अतिक्रान्तकुलमर्यादयेत्यर्थः । तथाभूतया त्वया पितुः = कण्वस्य किम् ? न किमपि प्रयोजनमित्यर्थः । अथ तु = पक्षान्तरे । तुशब्दः पूर्वस्माद्व्यतिरेकं द्योतयति । आत्मनः शुचि व्रतं = पातिव्रत्यरूपं पवित्रं व्रतं वेत्सि = मनसा जानासि, तदा पतिकुले = भर्तृगृहे दास्यमपि = दासीभावोऽपि । दास्यस्य निकृष्टत्वमपिशब्दो द्योतयति । तव क्षमं = योग्यम् ।

हेत्वनुप्रासावलङ्कारौ । द्रुतविलम्बितं वृत्तम् ।

अनुप्रतिष्ठमानां शकुन्तलां शार्ङ्गरवः सरोषं ब्रूते—'शकुन्तले ! किमित्यकारणमस्माननुगच्छसि ? राजा दुष्यन्तो यथा कथयति तथैव त्वं यदि तत्त्वतस्तेनानूढैव सगर्भा जाताऽसि, तर्हि समतिक्रान्तपितृकुलमर्यादायास्तवास्यमपि तव पिता न पश्येत् ! अतोऽस्मदनुगमनमयोग्यम् । अथ पक्षान्तरे यदि त्वमात्मनः पातिव्रत्यव्रते बाढं विश्वस्ताऽसि, राज्ञ एव स्मृतिभ्रमो जातस्तर्हीदृगवस्थायां भर्तृगृहे दासीभावेनाप्यवस्थानं तव समुचितम्; अतोऽप्यस्मदनुगमनं न योग्यम्' इति भावः ॥२७॥

तिष्ठ; साधयामो वयम् ।

राजा—भोस्तपस्विन् ! किमत्रभवतीं विप्रलभसे ?

कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥ २८ ॥

---

तदेव व्यक्तमाह—**तिष्ठेति** । एवं पक्षद्वयेऽपि प्रतिप्रयाणे अयुक्ते सति तिष्ठ = आस्स्व । वयं साधयामः = गच्छामः ।

राजा वदति—**भोस्तपस्विन्निति** । अत्रभवतीम् = पूज्याम् । अनेन शकुन्तलायां राज्ञः परपरिग्रहत्वप्रतीतिर्व्यक्ता भवति । विप्रलभसे = छलयसि ?

इत्थं भवदुपायप्रयोगेणात्रासीनामप्येनां न स्वीकरिष्यामीति सदृष्टान्तं सामान्यमुखेनाह—**कुमुदानीति** । शशाङ्कः कुमुदान्येव, सविता पङ्कजान्येव बोधयति । हि वशिनां वृत्तिः परपरिग्रहसंश्लेषपराङ्मुखी (भवति) इत्यन्वयः ।

शशाङ्कः = चन्द्रः कुमुदान्येव = कुवलयान्येव, न पुनः पङ्कजानि; सविता = सूर्यः पङ्कजान्येव = पद्मान्येव, न तु कुमुदानि बोधयति = विकासयति । नापराणीत्युभयत्रैवकारार्थः । हि = निश्चितं वशिनां = जितेन्द्रियाणां वृत्तिः = व्यापारः वर्तनं वा परपरिग्रहसंश्लेषपराङ्मुखी—परस्य = अन्यस्य परिग्रहः = आयातं वस्तु भार्या वा तस्य संश्लेषः = स्वीकारः तत्र पराङ्मुखी = ततो निवृत्ता भवतीत्यर्थः । जितेन्द्रिया हि मनसाऽपि परकलत्रं न स्वीकुर्वन्तीति भावः । "परिग्रहः परिजने पत्न्याम्" इति विश्वः ।

अत्र दुष्यन्तकर्तृकशकुन्तलाऽनङ्गीकाररूपे विशेषे प्रस्तुते सामान्यवचनादप्रस्तुतप्रशंसा, पूर्वार्धे वैधर्म्येण दृष्टान्तश्च, अर्थान्तरन्यासो वा । एवकारद्वयेन चन्द्रसूर्ययोः प्रेमप्रवृत्तेर्वशित्वानुरूपं प्रतिनियतत्वमुच्यते । मतिर्भावः । आर्या जातिः ।

शार्ङ्गरवः—'यदा तु पूर्ववृत्तमन्यसङ्गाद्विस्मृतो भवांस्तदा कथमधर्मभीरुः ?

राजा—भवन्तमेवात्र गुरुलाघवं पृच्छामि;

मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये ।
दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांसुलः ॥ २९ ॥

---

'पतिकुले तव दास्यमपि क्षमम्' इति शकुन्तलामुपदिश्य तां स्वगृहे बलात् निवासयितुमुद्युक्तं शार्ङ्गरवं राजा प्राह—'भोस्तपस्विन् ! अत्रभवतीमेतां मुनिकन्यां किमिति छलयसि ? अस्मद्गृहनिवासेऽपि नाहमेनां स्वीकरिष्ये। किं न जानाति भवान् यत् चन्द्रः कुमुदान्येव विकासयति, न तु पद्मानि; सूर्यश्च पद्मान्येव विकासयति, न तु कुमुदानि ! एवमेव समर्था अपि वशिनः परकलत्राणि मनसाऽपि न कामयन्ते। तत् वृथैवैनामत्र निवासयितुं भवतामुद्यमः' इति भावः ॥२८॥

राजोक्तिमसहमानः शार्ङ्गरव आह—यदा इति। पूर्ववृत्तम् = अतीतं रहोवृत्तम् अन्यसङ्गात्=अन्तःपुरस्त्रीजनसंगात्, राज्यतन्त्रसंगाद्वा। तदा कथमधर्मभीरुः ? एवंविधस्य तव नास्त्येव अधर्माद्भयमित्यर्थः। अथ तदानीं धर्मसंकटे पतितो राजा पुरोहितमाह—भवन्तमिति। गुरुलाघवम् = दोषस्य बलाबलमित्यर्थः।

प्रष्टव्यमाह—मूढ इति। अहं मूढः स्याम्, वा एषा मिथ्या वदेत्; इति संशये दारत्यागी भवामि, आहो परस्त्रीस्पर्शपांसुलो भवामि ? इत्यन्वयः।

अहं मूढः = पूर्ववृत्तस्मरणमन्थरः स्याम् = भवेयम्, वा = पक्षान्तरे एषा = मुनिकन्या मिथ्या = मृषा वदेत्; इति संशये = मम अस्या वचसि च अप्रामाण्य-

---

१ राजन् ! अथ वंवृत्तं व्यासङ्गाद्विस्मृतं भवेत्।

**पुरोहितः**—( विचार्य ) यदि तावदेवं क्रियताम्।

**राजा**—अनुशास्तु मां भवान्।

**पुरोहितः**—अत्रभवती तावदाप्रसवादस्मद्गृहे तिष्ठतु। कुत

---

सन्देहे सतीत्यर्थः। निजमूढत्वे एतां त्यक्त्वा दारत्यागी=स्त्रीत्यागपातकी भवामि, आहो = पक्षान्तरे अस्या मिथ्यावादित्वे एनां गृहीत्वा परस्त्रीस्पर्शपांसुलः—परस्त्रीस्पर्शेन = परकलत्रसंगेन पांसुलः = पुंश्चलः, कलङ्कीति यावत्; भवामि। "पांसुलः पुंश्चलः" इति **विश्वः**। अस्याः परित्यागपक्षः परिग्रहपक्षश्च दोषापातभयात् न श्रेयान्; तत् किमत्र कर्तव्यमिति भवानेवोपदिशत्विति भावः।

वितर्कादयोऽत्र भावाः। अनुष्टुप् वृत्तम्।

राजा शकुन्तलास्वीकारास्वीकारविषये गुरुलाघवं पुरोहितं पृच्छति—'हे भगवन्! अत्र विषये भवानेव मामनुशास्तु। अहमेव वा विस्मृतपूर्ववृत्तो भवेयम्, इयं वा मिथ्या वदेत्; इत्थमुभयोर्वचसि अप्रमाणतां गाहमाने सति धर्मपत्नीं परित्यज्य दारत्यागदोषभाग्भवेयम्, उत अस्या वचनं प्रमाणीकृत्य वस्तुतः परस्त्रीभूतामेनां स्वीकृत्य परस्त्रीस्पर्शकलङ्कितो भवेयम्? उभयथाऽपि दोषप्रसक्तिः। तत् किं कर्तव्यमिति भवानेव मामुपदिशतु' इति भावः॥२९॥

उक्तवाक्यकदम्बकैर्विरोधनामकमङ्गमुपक्षिप्तम्। तल्लक्षणं तु—"उत्तरोत्तरवाक्यं तु विरोध इति संज्ञितः" इति।

पुरोहितो विचार्य कर्तव्यमाह—**यदीति**। यदि = संशयश्चेदित्यर्थः। तावत् = प्रथमम्। क्रियताम् = निश्चीयताम्। राजा वदति—**अनुशास्त्विति**। अनुशास्तु = कर्तव्यमुपदिशतु। अनेन पुरोहितस्य राजानुशासनाधिकारो द्योत्यते। पुरोहितः कर्तव्यमुपदिशति—**अत्रभवतीति**। अत्रभवती = पूज्या मुनिकन्यका।

इदमुच्यत इति चेत् ? त्वं [1]साधुभिरुद्दिष्टः प्रथममेव चक्रवर्तिनं पुत्रं जनयिष्यसीति । स चेन्मुनिदौहित्रस्तल्लक्षणोपपन्नो भविष्यति, अभिनन्द्य शुद्धान्तमेनां प्रवेशयिष्यसि । विपर्यये तु पितुरस्याः समीपनयनमवस्थितमेव ।

**राजा**—यथा गुरुभ्यो रोचते ।

**पुरोहितः**—वत्से ! अनुगच्छ माम् ।

**शकुन्तला**—भअवदि वसुहे ! देहि मे विवरं ।

भगवति वसुधे ! देहि मे विवरम् । ( इति रुदती प्रस्थिता । निष्क्रान्ता सह पुरोधसा तपस्विभिश्च । )

---

तावदित्यवधारणे । आप्रसवात् = प्रसवपर्यन्तम् । प्रथममेव = सर्वादौ । चक्रवर्तिनं = भाविनं सम्राजं पुत्रं जनयिष्यसि = उत्पादयिष्यसि इति साधुभिः = सारङ्गानुधावनप्रसङ्गे वैखानसैरित्यर्थः । उद्दिष्टः = अभिहितः । प्रथममपत्यं ते पुत्रो भविता, स च सप्तसमुद्रमुद्रितमहीपालको भावी इति साधूक्तिरस्तीति भावः । सः = अस्यां जनिष्यमाणः । तल्लक्षणोपपन्नः—तस्य = चक्रवर्तिनः लक्षणैः चिह्नैः उपपन्नः = युक्तः । अभिनन्द्य = सादरं सत्कृत्य शुद्धान्तम् = अन्तःपुरम् । विपर्यये तु = अन्यथा पुनः यद्येषा पुत्रं न जनयति, जनितमपि चक्रवर्तिलक्षणहीनं तदा अस्याः पितुः समीपनयनमवस्थितमेव = निर्धारितमेव । राजा पुरोहितोक्तिमनुमन्यमान आह—यथेति । पुरोहितः शकुन्तलामाह—वत्से इति ।

अथ पुरोहितमनुप्रस्थिता उभयलोकभ्रंशमसहमाना शकुन्तला सनिर्वेदं देहत्यागाय जानकीव वसुधामाशंसते—भअवदि वसुहे इति । 'भगवति वसुधे !

---

१ साधुनैमित्तिकैः ।

( राजा शापव्यवहितस्मृतिः शकुन्तलागतमेव चिन्तयति । )

( नेपथ्ये )

आश्चर्यम् !

**राजा**—( आकर्ण्य ) किं नु खलु स्यात् ?

( प्रविश्य )

**पुरोहितः**—( सविस्मयम् ) देव ! अद्भुतं खलु संवृत्तम् ।

**राजा**—किमिव ?

**पुरोहितः**—देव ! परावृत्तेषु कण्वशिष्येषु—

सा निन्दन्ती स्वानि भाग्यानि बाला
बाहूत्क्षेपं क्रन्दितुं च प्रवृत्ता ।

देहि मे विवरम्' इति संस्कृतम् । विवरम् = छिद्रम्, अवकाशमित्यर्थः । शकुन्तला- गतमेव = तद्विषयं वृत्तान्तमेवेत्यर्थः । अनेन राज्ञः शकुन्तलानुरागवासनाबलेन चित्तव्याक्षेप उक्तः । औत्सुक्यादयोऽत्र भावाः ।

**नेपथ्ये इति** । आश्चर्यम् = अद्भुतं वृत्तम् । राजोक्तौ 'किं नु' इति वितर्क- गर्भः प्रश्नः । खल्वित्यवधारणे । पुरोहितोक्तौ अद्भुतम् = आश्चर्यजनकं संवृत्तं = संजातम् । पुरोहितस्तदेव कथयति—**देव इति** । हे देव ! कण्वशिष्येषु परा- वृत्तेषु = आश्रमाभिमुखं प्रयातेषु ।

**सेति** । सा बाला स्वानि भाग्यानि निन्दन्ती सती बाहूत्क्षेपं क्रन्दितुं प्रवृत्ता च ( अभूत् ) । स्त्रीसंस्थानम् एकं ज्योतिः आरादेनामुत्क्षिप्य अप्सरस्तीर्थं जगाम इत्यन्वयः ।

सा बाला = मुनिकन्या स्वानि भाग्यानि निन्दन्ती = निजानि प्रतिकूलानि भागधेयानि शंसन्ती बाहूत्क्षेपम्—बाहू उत्क्षिप्य = ऊर्ध्वं क्षिप्त्वा, दुःखातिशय-

राजा—किं च?

पुरोहितः—

स्त्रीसंस्थानं चाप्सरस्तीर्थमारा-
[1]दुत्क्षिप्यैनां ज्योतिरेकं[2] जगाम ॥३०॥

वशात् बाहुद्वयमूर्ध्वं क्षिप्त्वेत्यर्थः। क्रन्दितुम् = उच्चैर्विलपितुं प्रवृत्ता च = प्रवृत्तमात्रा च। तत्क्षणमेव स्त्रीसंस्थानम्—स्त्रियाः = नार्याः संस्थानम् = आकृतिरिव आकृतिर्यस्य तत्, स्त्रीसमानाकृति इत्यर्थः। एकम् = अनिर्वचनीयं ज्योतिः = तैजसं शरीरम् आरात्=समीपादेव एनाम्=मुनिकन्याम् उत्क्षिप्य—उत्तोल्य अप्सरस्तीर्थं=तन्नामकं समीपवर्ति तीर्थविशेषं जगाम = तदभिमुखं प्रतस्थे।

अत्र मुनिकन्याविशेषणेन सेत्यनेन तस्याः पत्या स्वबन्धुभिश्च परित्यक्तत्वम्, अत एवाशरणत्वं द्योत्यते। स्वानि भाग्यानीत्यनेन समागमकाले नायकेन प्रणयवशात्प्रतिज्ञातानि प्रधानमहिषीत्वादीनि, पितृगृहे पूर्वं तपस्विनां वात्सल्यातिशयात् लोकोत्तरभर्तृलाभसूचकानि कल्याणप्रदानि आशीर्वचनानि च सूच्यन्ते। तेषां सर्वेषामेकपदे एवेदृशं विपर्ययं दृष्ट्वा शकुन्तलायास्तन्निन्दाकरणं चोपपद्यते। स्त्रीसंस्थानेन ज्योतिषा उत्क्षिप्य नीतेति वर्णनेन शकुन्तलायाः परपुरुषासंस्पृष्टत्वं ध्वन्यते। अत्र क्रिययोः समुच्चितत्वात् समुच्चयालङ्कारः। शालिनी वृत्तम्। नेपथ्ये इत्यादिना एतदन्तेन प्रबन्धेन अद्भुतरसो वर्णितः।

आत्मना सह शकुन्तलां स्वगृहं नयन् पुरोहितो मध्येमार्गं किमप्याश्चर्यं दृष्ट्वा प्रतिनिवृत्य राजानं ब्रूते—'हे राजन्! मया किमपि लोकोत्तरमाश्चर्यजनकं वृत्तं दृष्टम्। कण्वशिष्येषु शकुन्तलामनुपादाय आश्रमाभिमुखमध्वानं प्रस्थितेषु सत्सु

१ उत्क्षिप्याङ्के। २ एनाम्।

( सर्वे विस्मयं रूपयन्ति । )

**राजा**—भगवन् ! प्रागपि सोऽस्माभिरर्थः प्रत्यादिष्ट एव । किं वृथा तर्केणान्विष्यते ? विश्राम्यतु भवान् ।

**पुरोहितः**—(विलोक्य) विजयस्व । ( इति निष्क्रान्तः । )

**राजा**—वेत्रवति ! पर्याकुलोऽस्मि । शयनभूमिमार्गमादेशय ।

---

उभयकुलभ्रष्टां पत्या बन्धुभिश्च परित्यक्तामत एव अशरणामात्मानं मन्यमाना सा बाला अपत्यवत्सलैः ऋषिभिः पूर्वं दत्तानि लोकोत्तरभर्तृलाभसूचकान्याशीर्वचनानि स्वयमाशंसितानि भर्तुः प्रधानमहिषीपदप्राप्त्यादीनि च संप्रति आमूलतो विपर्यस्तानि स्वानि दुर्भाग्यानि निन्दन्ती शोकातिशयवशात् बाहू ऊर्ध्वमुत्क्षिप्य यावदुच्चैर्विलपितुमारभते तावदेव पश्यतामस्माकं लोचनानां जडिमानमापादयत् विद्युदिव त्वराशीलं किमपि नारीरूपधारि ज्योतिर्मयं वपुः सहसैव प्रादुर्भूय झटिति चैनां समुत्क्षिप्य निकटवर्त्यप्सरस्तीर्थाभिमुखं जगाम । तेन चानुषङ्गेण सा मुनिकन्या तिरोहिताऽभूत् । इत्थमिदमाश्चर्यजनकं वृत्तं मया दृष्टम्' इति भावः ॥३०॥

अथ राजा शकुन्तलातिरोधानं न मे दुःखावहमिति पुरोहितमाह—**भगवन्निति** । प्रागपि=इतः प्रस्थानात्पूर्वमपि, न केवलमिदानीमेव । सोऽर्थः=शकुन्तलारूपः प्रत्यादिष्ट एव = परपरिग्रहरूपत्वात् प्रत्याख्यात एव । अतः तत्तिरोधानेन न मे काऽपि क्षतिरिति भावः । किं वृथा तर्केणान्विष्यते—निष्प्रयोजनेन अन्योन्यवचनेन परपरिग्रहो वा, न वा सा, कुत्र गता, कया नीता, इति विचारणं माऽस्त्वित्यर्थः । भवान्विश्राम्यतु—मुनिकन्याविषयिणीं चिन्तां विहाय स्वस्थो भवतु ।

अथ दुर्वासःशापतिरोहितशकुन्तलास्मृतिको दुष्यन्तः शकुन्तलावियोगकाले वासनाबलेन मनसि समुज्जृम्भमाणं कमपि सन्तापमनुभवन् प्रतीहारीमाह—**वेत्रवति ! इति** । पर्याकुलोऽस्मि—ऋषिकुमारकमुनिकन्यादिविषयकवचःप्रति-

प्रतीहारी—इदो इदो देवो ।

इत इतो देवः । ( इति प्रस्थिता । )

राजा—

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।
बलवत्तु दूयमानं प्रत्याययतीव [1]मे हृदयम् ॥ ३१ ॥

वचोदुरुत्तरादिक्लेशेनेत्यर्थः । प्रतीहारी वदति—**इदो इति** । 'इत इतो देवः' इति संस्कृतम् ।

राजा आत्मनः पर्याकुलतां वर्णयति—**काममिति** । कामं प्रत्यादिष्टां मुनेस्तनयां परिग्रहं न स्मरामि । तु बलवत् दूयमानं मे हृदयं प्रत्याययतीव इत्यन्वयः ।

कामम = अतिशयेन प्रत्यादिष्टां = निराकृताम्, दूरनिरस्तत्वाददर्शनं गतामित्यर्थः । मुनेः = कण्वस्य तनयां=शकुन्तलां परिग्रहं न स्मरामि=पूर्वं स्त्रीत्वेन अङ्गीकृतवानस्मीति न स्मरामीत्यर्थः । अनेन विस्मरणस्य चापल्यं स्वयमेवाङ्गीकृतवानिति व्यज्यते । काममिति अर्धाङ्गीकारेण च स्मरणाभावस्य अप्रामाण्यं ख्याप्यते । इत्थमपि हृदयसंवादस्तु भवत्येवेत्याह—**बलवदिति** । तु = पुनः बलवत् = अत्यर्थं दूयमानं = पीड्यमानं मे = मम हृदयं प्रत्याययतीव = विश्वासमुत्पादयतीव । बलवद्दूयमानत्वान्मम हृदयं तु मुनिकन्या मत्परिग्रहभूतेति मां प्रत्याययतीवेत्यर्थः ।

प्रत्यायनस्य अस्पष्टतामिवशब्दो द्योतयति । मे हृदयमित्यनेन स्वहृदयस्य प्रामाण्यं ख्याप्यते । प्रत्याययतीवेत्युत्प्रेक्षया स्थायिन्या रतेरनुसन्धानं ध्वनितम् । पीडाकारणस्य स्मरणस्याभावेऽपि पीडोत्पत्तिवर्णनात् विभावनाऽलङ्कारः । अनुमानालङ्कारोऽपीति केचित् । मतिमूलको विकल्पो भावः । आर्या जातिः । अनेन प्रस-

१ माम् ।

( इति निष्क्रान्ताः सर्वे। )

इति पञ्चमोऽङ्कः।

ङ्गनामाङ्गमुपक्षिप्तम्। तल्लक्षणं च—"प्रसङ्गश्चैव विज्ञेयो गुरूणां कीर्तनं हि यत्" इति। अत्र मुनेस्तनयेति गुरुकीर्तनम्।

मुनिकुमारकवचःप्रतिवचोदुरुत्तरादिक्लेशपर्याकुलो विसृष्टपुरोहितादिवर्गो वेत्रवत्या निर्दिश्यमानशयनभूमिमार्गो राजा मनसा मुनिकन्यां विमृशति—'मुनिकुमारकाभ्यां सह मदन्तिकमुपगता मुनिकन्या न मम परिग्रह इति मया बाढं प्रत्यादिष्टा। पूर्वं मया तस्याः कृतं परिग्रहं च न बाढं स्मरामि। को जानाति? भवेद्वा कदाचित् परिगृहीता! कार्यान्तरव्यासङ्गादिदानीं विस्मृतो वा भवेयम्! मम हृदयं तु मुनिकन्यामुद्दिश्य सातिशयमन्तः पीड्यते। इयं हृदयपीडैव मम हृदि क्षणिकं विश्वासमुत्पादयति यन्मया मुनिकन्या पूर्वं परिगृहीतेति। पूर्वपरिगृहीताया अपि इदानीं तस्या निराकरणं भवेदेव दोषावहम्! किं करोमि? न जाने किं वृत्तमिति। हृदयपीडा च न मां सुखमवस्थातुं ददाति। इति सत्यमेव पर्याकुलोऽस्मि' इति भावः ॥३१॥

कामं प्रत्यादिष्टामिति श्लोकेन उत्तराङ्कार्थबिन्दुरुपक्षिप्यते। अस्मिन्नङ्के नायकस्य नायिकायाश्च वर्णितेन प्रतिकूलवचनप्राचुर्येण उत्तराङ्के वर्णयिष्यमाणो विप्रलम्भः पोषमुपगच्छति। अन्यद्विशदम्।

इति नारायणोन्नीते लक्ष्मीरित्यभिधाऽङ्किते।
शाकुन्तलस्य व्याख्याने पञ्चमोऽङ्कः समाप्तिमैत् ॥

---

इति श्रीमन्नारायणशास्त्रिणा प्रणीतायामभिज्ञानशाकुन्तलाभिनवटीकायां लक्ष्मीसमाख्यायां पञ्चमोऽङ्कः।



# षष्ठोऽङ्कः ।

( ततः प्रविशति नागरिकः श्यालः पश्चाद्बद्धपुरुषमादाय रक्षिणौ च । )

**रक्खिणौ**—( ताडयित्वा ) अले कुम्भीलआ ! कहेहि, कहिं तुए एशे [1]मणिबन्धणुक्किण्णणामहेए लाअकीए अङ्गुलीअए शमाशादिए ?

अरे कुम्भीरक ! कथय, कुत्र त्वयैतन्मणिबन्धनोत्कीर्णनामधेयं राजकीयमङ्गुलीयकं समासादितम् ?

---

अस्मिन्नङ्के नायकस्य राज्ञो दुष्यन्तस्य शकुन्तलापरित्यागजन्यानुशयपरिपोषितो विप्रलम्भरसः प्राधान्येन वर्णयिष्यते । अग्रे सार्थवाहप्रस्तावे पुत्रशोकप्रकृतिकः करुणः, मातलिप्रस्तावे वीरो रौद्रश्चेति रसा वर्णयिष्यन्ते । तत्रादौ विप्रलम्भश्रृङ्गारस्य पूर्वरङ्गभूतां शापनिवृत्तिं प्रदर्शयितुं प्रवेशकमारभते—**ततः प्रविशतीति** । नागरिकः = नगरवासिनां रक्षणार्थं राज्ञाऽधिकृतः श्यालः = राज्ञः कार्योपयोगी हीनजातिः कश्चित् । यथोक्तं **दशरूपके**—"म्लेच्छाभीरशकाराद्याः स्वस्वकार्योपयोगिनः" इति । "राज्ञः श्यालस्तु राष्ट्रियः" **इत्यमरश्च** । कोष्ठपाल इति यावत् । राजप्रियाया गणिकाया भ्राता, अत एव राजश्याल इति केचित् । पश्चाद्बद्धपुरुषम्—बाहू पृष्ठतः संगमय्य तयोर्बद्धं पुरुषमित्यर्थः ।

रक्षिणौ ब्रूतः—**अले इति** । 'अरे कुम्भीरक ! कथय, कुत्र त्वया एतन्मणिबन्धनोत्कीर्णनामधेयं राजकीयमङ्गुलीयकं समासादितम्' इति संस्कृतम् । कुम्भीकर = चौर ! "कुम्भीरको गण्डपदस्तस्करश्च मलिम्लुचः" इति **नाममाला** ।

---

१ महामणिभाशुले उक्किण्णणामाक्खले लाअकीए ।

**पुरुषः**——( भीतिनाटितकेन ) पशीदन्तु भावमिश्शे । हगे ण ईदिश-कम्मकाली ।

प्रसीदन्तु भावमिश्राः । अहं नेदृशकर्मकारी ।

**प्रथमः**——किं सोहणे बम्हणेत्ति कलिअ रज्जा पडिग्गहे दिण्णे ?

किं शोभनो ब्राह्मण इति कलयित्वा राज्ञा प्रतिग्रहो दत्तः ?

**पुरुषः**——सुणध दाणिं । हगे शक्कावदालब्भन्तरालवाशी धीवले ।

श्रृणुतेदानीम् । अहं शक्रावताराभ्यन्तरालवासी धीवरः ।

---

मणिबन्धनोत्कीर्णनामधेयम्——मणीनां बन्धने, बद्धेषु मणिष्वित्यर्थः । उत्कीर्णम् = उल्लिखितलिपि नामधेयम् = अभिधानं यस्मिन् तत् राजकीयं = राजसंबन्धि । कुत्र समासादितमिति कथनेन त्वया एतन्मुषितमिति द्योत्यते । पुरुषो भीतिं नाटयन् वदति——**पशीदन्तु इति** । 'प्रसीदन्तु भावमिश्राः । अहं नेदृशकर्मकारी' इति संस्कृतम् । "मान्यो भावस्तु वक्तव्यः" इति नाट्यपरिभाषानुसारेण भाव-मिश्रा इति संबोधनम् । न खल्विदं स्तेयलब्धमिति भावः ।

अथ रक्षिषु प्रथमस्तं पुरुषं मनसा चौरमवधार्य छलेनोपहसति——**किं इति** । 'किं शोभनो ब्राह्मण इति कलयित्वा राज्ञा प्रति हो दत्तः' इति संस्कृतम् । शोभनः = आभिजात्यादिगुणशाली सत्पात्रम् । कलयित्वा = ज्ञात्वा । प्रतिग्रहः——प्रतिगृह्यते इति प्रतिग्रहः = देयद्रव्यम् । पुनः पुरुषो वदति——**सुणध इति** । 'श्रृणुतेदानीम् । अहं शक्रावताराभ्यन्तरालवासी धीवरः' इति संस्कृतम् । श्रृणुत——वस्तुवृत्तमिति शेषः । शक्रावताराभ्यन्तरालवासी——शक्रावतारः = शचीतीर्थम्, तत्संबन्धात्तदेव ग्रामनामापि, तत्रत्य इत्यर्थः । अथ तं पुरुषं भीषयन् द्वितीयो

**द्वितीयः**—पाडच्चला ! किं अह्मेहिं जादी पुच्छिदा ?

पाटच्चर ! किमस्माभिर्जातिः पृष्टा ?

**श्यालः**—सूअअ ! कहेदु शव्वं अणुक्कमेण । मा णं अन्तरा पडिबन्धह ।

सूचक ! कथयतु सर्वमनुक्रमेण । मैनमन्तरे प्रतिबन्धय ।

**उभौ**—ज आवुत्तो आणवेदि । कहेहि ।

यदावुत्त आज्ञापयति । कथय ।

**पुरुषः**—अहके [1]जालुग्गालादिहिं मच्छबन्धणोवाएहिं कुडुम्बभलणं कलेमि ।

अहं जालोद्गालादिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि ।

---

रक्षी प्राह—**पाडच्चला** इति । 'पाटच्चर ! किमस्माभिर्जातिः पृष्टा ?' इति संस्कृतम् । पाटच्चर = चौर ! "दस्युः पाटच्चरः स्तेनः" इति हैमः । किमस्माभिर्जातिः पृष्टा ? इदमङ्गुलीयकं कुतो लब्धमिति पृष्टम्, न तु जातिः पृष्टेत्यर्थः ।

श्यालो वदति—**सूअअ** इति । 'सूचक ! कथयतु सर्वमनुक्रमेण । मा एनमन्तरे प्रतिबन्धय' इति संस्कृतम् । सूचकेति रक्षिणोरेकतरस्य नाम । मैनमन्तरे प्रतिबन्धय—राजाङ्गुलीयकलाभश्रवणपर्यन्तमेनं मा प्रतिबध्नीतमित्यर्थः । उभौ वदतः—**जं** इति । 'यत् आवुत्त आज्ञापयति । कथय' इति संस्कृतम् । आवुत्तः= भगिनीपतिः, "भगिनीपतिरावुत्तः" **इत्यमरः** । आवुत्तेति सम्बन्धित्वेन कथनमावर्जनार्थम् । पुरुषो वदति—**अहके** इति । 'अहं जालोद्गालादिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि' इति संस्कृतम् । जालम् = आनायः । उद्गालो नाम शरादिरचितो मत्स्यग्रहणसाधनविशेषः । बलिशादिः आदिपदार्थः । मत्स्यबन्धनोपायैरिति कथनेन तैर्मत्स्यान्निगृह्येत्यर्थात्सिध्यति । तच्छ्रुत्वा श्यालः

---

1 जालवलिशप्पहुदिहिं ।

**श्यालः**—( विहस्य ) विसुद्धो दाणिं आजावो ।
विशुद्ध इदानीमाजीवः ।

**पुरुषः**—भट्टा मा एव्वं ।

शहजे किल जे विणिन्दिए ण हु दे कम्म विवज्जणीअए ।
पशुमालणकम्मदालुणे अणुकम्पामिदुजेव्व[1] शोत्तिए ॥ १ ॥

भर्तः ! मैवम् ।

सहजं किल यद्विनिन्दितं न खलु तत्कर्म विवर्जनीयम् ।
पशुमारणकर्मदारुणोऽनुकम्पामृदुरेव श्रोत्रियः ॥

---

सोपहासमाह—**विसुद्धो इति**। 'विशुद्ध इदानीमाजीवः' इति संस्कृतम् । विशुद्ध इत्यत्र विपरीतलक्षणया निकृष्ट इत्यर्थः । आजीवः=जीवनोपायः । "आजीवो जीविका" इति कोशः ।

अथ राजश्यालपरिहासं परिहर्तुंकामः पुरुषो निकृष्टमप्याजीवमत्याज्यमित्याह—**भट्टा ! मा एव्वं । —शहजे इति** । 'भर्तः ! मैवम् । सहजं किल यद्विनिन्दितं न खलु तत्कर्म विवर्जनीयम् । पशुमारणकर्मदारुणोऽनुकम्पामृदुरेव श्रोत्रियः ॥' इति संस्कृतम् । हे भर्तः । एवं मा ( भण ) । यत् किल विनिन्दितं कर्म सहजं तत् न खलु विवर्जनीयम् । अनुकम्पामृदुः श्रोत्रिय एव पशुमारणकर्मदारुणः (भवति) इत्यन्वयः ।

हे भर्तः = स्वामिन् ! एवं मा भण = मम आजीवं मा निन्देत्यर्थः । यत् किल विनिन्दितं = गर्ह्यं कर्म सहजं = जन्मना सह जातम्, तत्तस्य धर्मतया विहितं जातिनिष्ठमित्यर्थः । अत एव तत् = कर्म न खलु विवर्जनीयम् = नैव

---

१ मिदुके वि ।

**श्यालः**—तदो तदो ?

ततस्ततः ?

**पुरुषः**—एक्कस्शिं दिअशे खण्डशो लोहिअमच्छे मए कप्पिदे

त्याऽयम्, यस्य यत्कर्म निन्दितमपि सहजम्, तस्य तत्कर्म न खलु विवर्जनीयमित्यर्थः। किं त्वनुष्ठेयमेवेति भावः। अनुकम्पामृदुः—अनुकम्पया = करुणया मृदुः = कोमलः श्रोत्रिय एव = वेदोक्तकर्मनिरतो वैदिको ब्राह्मण एव पशुमारणकर्मदारुणः—पशूनाम् = अजमेषादिप्राणिनां मारणं = घातः यज्ञे वधः तेन कर्मणा = तदनुष्ठानेन दारुणः = घोरः भवति।

अत्र एवकारोऽप्यर्थः। निसर्गतो दयामृदुरपि श्रोत्रियो यज्ञाङ्गतया वेदविहितमिति दारुणं पशुमारणं कर्म समाचरत्येवेत्यर्थः। अत्र धीवरस्य मत्स्याजीवे विशेषे प्रस्तुते सामान्यमुक्तमिति अप्रस्तुतप्रशंसा। मृदुरपि दारुण इति विरोधाभासश्च।

श्यालेन 'विशुद्ध आजीवः' इत्युपहसितः पुरुषो वदति—'हे स्वामिन्! धीवरस्य मम जालोद्गालादिभिर्मत्स्यबन्धनोपायैर्मत्स्यान् संपाद्य तद्द्वारा कुटुम्बभरणमित्याकारक आजीवो नोपहसितुं योग्यः। यतः इतरलोकदृष्ट्या गर्हितमपि यत् यस्य नैसर्गिकं विधिविहितं कर्म तत् तेन न कदाऽपि विवर्जनीयम्, अपि त्वनुष्ठेयमेव। स्वभावतो दयालुरपि आहिताग्निः श्रोत्रियो दीक्षितो ब्राह्मणः बौद्धादिभिर्निन्दितमपि यज्ञाङ्गतया वेदविहितमिति दारुणं पशुमारणकर्म समाचरत्येव। न च तत्तस्य कर्म धार्मिकाणां परिषदि समुपहसनीयं भवति। एवमेव ममापि कर्म नोपहसनीयम्' इति भावः॥ १॥

श्यालः पुनर्वदति—**तदो इति**। 'ततस्ततः' इति संस्कृतम्। अग्रिमं वृत्तान्तं कथयेत्यर्थः। पुरुषो वदति—**एक्कस्शिं इति**। 'एकस्मिन् दिवसे खण्डशो रोहित-

जाव; तश्श उदलब्भन्तले एदं लदणभाशुलं अङ्गुलीअअं देक्खिअ पच्छा अहके शे विक्कआअ दंशअन्ते गहिदे भावमिश्शेहिं । मालेह वा 'मुञ्चेह वा ! अअं शे आअमवुत्तन्ते ।

एकस्मिन्दिवसे खण्डशो रोहितमत्स्यो मया कल्पितो यावत्; तस्योदराभ्यन्तरे इदं रत्नभासुरमङ्गुलीयकं दृष्ट्वा पश्चादहं तस्य विक्रयाय दर्शयन्गृहीतो भावमिश्रैः । मारयत वा मुञ्चत वा ! अयमस्यागमवृत्तान्तः ।

**श्यालः**—जाणुअ ! विस्सगन्धी गोहादी मच्छबन्धो एव्व

---

मत्स्यो मया कल्पितो यावत्; तस्योदराभ्यन्तरे इदं रत्नभासुरमङ्गुलीयकं दृष्ट्वा पश्चादहं तस्य विक्रयाय दर्शयन् गृहीतो भावमिश्रैः । मारयत वा मुञ्चत वा ! अयमस्यागमवृत्तान्तः' इति संस्कृतम् । खण्डशः = खण्डं खण्डम् । रोहितमत्स्यः—रोहित इति मत्स्यजातिविशेषसंज्ञा । कल्पितः = खण्डितः । "कल्पनं कर्तनं क्लृप्तौ" इति **विश्वः** । तदा खण्ड्यमानस्य तस्य = रोहितमत्स्यस्य उदराभ्यन्तरे = जठरमध्ये रत्नभासुरं = प्रत्युप्तरत्नप्रभाप्रभासमानम् । तस्य = अङ्गुलीयकस्य । दर्शयन् = मणिकारश्रेष्ठिभ्यो मूल्यनिर्धारणाय दर्शयन्नित्यर्थः । भावमिश्रैः = मान्यैर्भवद्भिः । गृहीतः = संयतः । मारयत वा मुञ्चत वा—सापराधं मां मत्वा दण्डयत वा, निर्दोषं वा मत्वा मुञ्चत वेति कामचाराभ्यनुज्ञाने लोट् । अयं = मया एतावदुक्तः अस्य = अङ्गुलीयकस्य आगमवृत्तान्तः = प्राप्तेरिति वृत्तम् ।

श्यालो वदति—**जाणुअ** इति । 'जानुक ! विस्रगन्धी गोधादी मत्स्यबन्ध एव निःसंशयम् । अङ्गुलीयकदर्शनमस्य विमर्शयितव्यम् । राजकुलमेव गच्छामः' इति संस्कृतम् । जानुकेति रक्षिणोरन्यतरस्य नाम । विस्रगन्धी = अपक्वमांस-

---

१ कुट्टेध ।

णिस्संसअं । अङ्गुलीअअदंसणं से विमरिसिदव्वं । राअउलं एव्व गच्छामो ।

जानुक ! विस्रगन्धी गोधादी मत्स्यबन्ध एव निःसंशयम् । अङ्गुलीयकदर्शनमस्य विमर्शयितव्यम् । राजकुलमेव गच्छामः ।

**रक्षिणौ**—तह । गच्छ अले [1]गण्डभेदअ ।

तथा । गच्छ अरे गण्डभेदक ।

( सर्वे परिक्रामन्ति । )

**श्यालः**—सूअअ ! [2]इमं गोपुरदुआरे अप्पमत्ता [3]पडिवालह ; जाव इमं अङ्गुलीअअं जहागमणं भट्टिणो णिवेदिअ तदो सासणं पडिच्छिअ णिक्कमामि ।

---

गन्धी । "विस्रं स्यादामगन्धि यत्" इत्यमरः । गोधादी = गोधाशनो मत्स्यबन्धः = धीवरः । एतच्छरीरस्य अपक्कमांसगन्धयुक्तत्वात् गोधाशनो धीवर एवायमिति निश्चितमित्यर्थः । एतेन तद्वचनैकभागस्य सत्यत्वमनूदितम् । अथाप्यस्य अङ्गुलीयकलाभो विचारणीय इत्याह—**अङ्गुलीयकदर्शनमिति** । विमर्शयितव्यं = विचारयितव्यम् । अङ्गुलीयकागमवृत्तान्तो योऽनेनोक्तः सोऽपि सत्यो न वेत्यप्यालोचनीयमित्यर्थः । अत एव राजकुलं = राजभवनमेव गच्छामः । तत्र स्वामिने निवेदयामः ; स एव विमृशतु सत्यं न वेति भावः । रक्षिणौ ब्रूतः—**तहेति** । 'तथा । गच्छ अरे गण्डभेदक' इति संस्कृतम् । गण्डभेदमर्हतीति गण्डभेदकः ।

श्यालो वदति—**सूअअ इति** । 'सूचक ! इमं गोपुरद्वारे अप्रमत्तौ प्रति-

---

१ गण्ठिच्छेदअ । २ इध । ३ पडिबालेध मं, जाव लाअउलं पवेसिअ णिक्कमामि ।

सूचक ! इमं गोपुरद्वारेऽप्रमत्तौ प्रतिपालयतम्; यावदिदमङ्गुलीयकं यथाऽऽगमनं भर्तुर्निवेद्य ततः शासनं प्रतीक्ष्य निष्क्रमामि ।

**उभौ**—पविशदु आवुत्ते शामिपशादश्श ।

प्रविशत्वावुत्तः स्वामिप्रसादाय ।

(इति निष्क्रान्तः श्यालः ।)

**प्रथमः**—जाणुअ ! चिलाअदि क्खु आवुत्ते ।

जानुक ! चिरायते खल्वावुत्तः ।

**द्वितीयः**—णं अवशलोवशप्पणीआ लाआणो !

नन्ववसरोपसर्पणीया राजानः !

---

पालयतम्; यावदिदमङ्गुलीयकं यथाऽऽगमनं भर्तुर्निवेद्य ततः शासनं प्रतीक्ष्य निष्क्रमामि' इति संस्कृतम् । इमं = धीवरं गोपुरद्वारे = पुरद्वारप्रवेशमार्गे । "पुरद्वारं तु गोपुरम्" **इत्यमरः** । तत्र अप्रमत्तौ = सावधानौ प्रतिपालयतम् = रक्षतम् । यथाऽऽगमनम् = आगमनवृत्तान्तकथनपूर्वकम् । भर्तुरिति चतुर्थ्यर्थे षष्ठी; तेन भर्त्रे निवेद्येत्यर्थः । ततः = भर्तुः शासनम् = आज्ञां प्रतीक्ष्य = गृहीत्वा निष्क्रमामि = निर्गच्छामि । यावन्निष्क्रमामि तावत्प्रतिपालयतमिति संबन्धः । उभौ वदतः—**पविशदु** इति । 'प्रविशत्वावुत्तः स्वामिप्रसादाय' इति संस्कृतम् । स्वामिप्रसादाय—स्वामिनः प्रसादम् = अनुग्रहं लब्धुमित्यर्थः ।

रक्षिणोः प्रथमो वदति—**जाणुअ** इति । 'जानुक ! चिरायते खल्वावुत्तः' इति संस्कृतम् । चिरायते = विलम्बते । द्वितीयो वदति—**णं** इति । 'ननु अवसरोपसर्पणीया राजानः' इति संस्कृतम् । नन्वित्याक्षेपे । अवसरोपसर्पणीयाः—अवसरे = योग्यकाले उपसर्पणीयाः = उपगन्तव्याः । आज्ञां लब्ध्वैव राजानं द्रष्टुं शक्नोति जनः, न यथारुचि; अतो विलम्ब इति भावः ।

**प्रथमः**—जाणुअ ! फुल्लन्ति मे हत्था [1]इमश्श वहस्स शुमणा पिणद्धुं ।

जानुक ! प्रस्फुरतो मम हस्तावस्य वधार्थं सुमनसः पिनद्धुम् । ( इति पुरुषं निर्दिशति । )

**पुरुषः**—ण अलुहदि भावे अकालणमालणं भाविदुं ।

नार्हति भावोऽकारणमारणं भावयितुम् ।

**द्वितीयः**—( विलोक्य ) एशे अह्माणं शामी पत्तहत्थे लाअ-शाशणं पडिच्छिअ इदोमुहे देक्खीअदि । [2]गिद्धबली भविश्शशि, शुणो मुहं वा देक्खिश्शशि ।

एष नौ स्वामी पत्रहस्तो राजशासनं प्रतीक्ष्येतोमुखो दृश्यते । गृध्रबलिर्भ-विष्यसि, शुनो मुखं वा द्रक्ष्यसि ।

---

पुनः प्रथमो वदति—**जाणुअ** इति । 'जानुक ! प्रस्फुरतो मम हस्तौ अस्य वधार्थं सुमनसः पिनद्धुम्' इति संस्कृतम् । सुमनसः = पुष्पाणि, वध्यचि-ह्नभूतां पुष्पमालामित्यर्थः । प्रस्फुरतः—स्पन्देते । पिनद्धुं = बन्धुम् । अस्य कण्ठे वध्यचिह्नभूतां रक्तपुष्पमालां निक्षिप्य राजाज्ञया एनं हन्तुमहमुत्सुको-ऽस्मीत्यर्थः । धीवरो वदति—**ण** इति । 'नार्हति भावः अकारणमारणं भाव-यितुम्' इति संस्कृतम् । भावः = मान्यो भवान् अकारणमारणं = कारणं विनैव वधं भावयितुं = प्रापयितुं विचारयितुं वा । यतोऽहं निरपराध इति भावः ।

द्वितीयो रक्षी वदति—**एशे** इति । 'एष नौ स्वामी पत्रहस्तो राजशासनं प्रतीक्ष्य इतोमुखो दृश्यते । गृध्रबलिर्भविष्यसि, शुनो मुखं वा द्रक्ष्यसि' इति

---

१ इमं गण्ठिच्छेदअं वावादिदुं । २ शम्पदं एशे शउलाणं मुहं पेक्खदु, अहवा गिद्धशिआलाणं वली होदु ।

( प्रविश्य )

**श्यालः**—सूअअ ! मुञ्चेदु एसो जालोअजीवी । उववण्णो क्खु अङ्गुलीअअस्स आअमो ।

सूचक ! मुच्यतामेष जालोपजीवी । उपपन्नः खल्वङ्गुलीयकस्यागमः ।

**सूचकः**—जह आवुत्ते भणादि ।

यथाऽऽवुत्तो भणति ।

**द्वितीयः**—एशे जमशदणं पविशिअ पडिणिवुत्ते ।

एष यमसदनं प्रविश्य प्रतिनिवृत्तः । ( इति पुरुषं परिमुक्तबन्धनं करोति ।)

---

संस्कृतम् । नौ = आवयोः स्वामी=नगरपालः श्यालः पत्रहस्तः = हस्ते गृहीतपत्रः राजशासनं = राजाज्ञां प्रतीक्ष्य = गृहीत्वा इतोमुखः—इतः = अस्यां दिशि मुखं यस्य तादृशः । मन्ये त्वं गृध्रबलिः = गृध्रेभ्य उपहारः, गृध्रास्ते मांसं भक्षयिष्यन्तीत्यर्थः । अथवा शुनः = कुक्कुरस्य मुखं=दंशार्थं व्यात्तं मुखम् । राजाज्ञया शूलस्थं मृतं त्वां गृध्राः, आकण्ठं भुवि निखातं जीवितं वा कुक्कुराः खादिष्यन्तीति भावः ।

ततः श्यालः प्रविश्य वदति—**सूअअ इति** । 'सूचक ! मुच्यतामेष जालोपजीवी । उपपन्नः खल्वङ्गुलीयकस्यागमः' इति संस्कृतम् । जालोपजीवी—जालेन उपजीवति = जीविकां वर्तयति तथाविधो धीवरः । उपपन्नः=युक्तः अङ्गुलीयकस्य आगमः=प्राप्तिवृत्तान्त इत्यर्थः । अतोऽयं न चौर इति भावः । सूचको वदति—**जहेति** । 'यथा आवुत्तो भणति' इति संस्कृतम् । द्वितीयो रक्षी वदति—**एशे इति** । 'एष यमसदनं प्रविश्य प्रतिनिवृत्तः' इति संस्कृतम् । मृतः पुनर्जीवतीवायमित्यर्थः ।

पुरुषः—(श्यालं प्रणम्य) भट्टा ! [1]अह कीलिशे मे आजीवे ?

भर्तः ! अथ कीदृशो म आजीवः ?

श्यालः—एसो भट्टिणा अङ्गुलीअअमुल्लसम्मिदो पसादो वि दाविदो ।

एष भर्त्राऽङ्गुलीयकमूल्यसंमितः प्रसादोऽपि दापितः । (इति पुरुषाय स्वं प्रयच्छति ।)

पुरुषः—(सप्रणामं प्रतिगृह्य) भट्टा ! अणुग्गहीदह्मि ।

भर्तः ! अनुगृहीतोऽस्मि ।

सूचकः—एशे णाम अनुग्गहे जे शूलादो अवदालिअ हत्थि-क्खन्धे पडिट्ठाविदे ।

एष नामानुग्रहो यच्छूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः ।

---

अथ धीवरः श्यालं प्रणम्य वदति—भट्टा इति । 'भर्तः ! अथ कीदृशो मे आजीवः' इति संस्कृतम् । भर्तः = स्वामिन् ! अथ=पृच्छामि । मे आजीवः=मम जीवनम् । कीदृशः=किंविधः । गतो मत्स्यो गतं चाङ्गुलीयकम्, तदद्य केनोपायेन जीविकां करोमीत्यर्थः । यद्वा 'विशुद्ध इदानीमाजीवः' इति पूर्वं श्यालकृतस्योपहासस्य 'अथ कीदृशो मे आजीवः' इति प्रत्युपहासात्मकमुत्तरम् । श्यालो वदति—एसो इति । 'एष भर्त्राऽङ्गुलीयकमूल्यसंमितः प्रसादोऽपि दापितः' इति संस्कृतम् । संमितः=तुल्यः प्रसादः=पारितोषिकम् । अपिशब्दो मोचनं समुच्चिनोति । स्वं=धनम् । "स्वोऽस्त्रियां धने" इत्यमरः । धीवरः सप्रणामं तत्प्रतिगृह्य वदति—भट्टा इति । 'भर्तः ! अनुगृहीतोऽस्मि' इति संस्कृतम् । सूचको वदति—एशे इति । 'एष नामानुग्रहो यत् शूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः' इति संस्कृ-

---

[1] शम्पदं तुह केलके मे जीविदे ।

**जानुकः**—आवुत्त ! [1]पलिदोशं कहेहि; तेण अङ्गुलीअएण भट्टिणो शम्मदेण होदव्वं !

आवुत्त ! परितोषं कथय; तेनाङ्गुलीयकेन भर्तुः संमतेन भवितव्यम् !

**श्यालः**—ण तस्सिं महारुहं रदणं भट्टिणो बहुमदं [2]त्ति तक्केमि । तस्स दंसणेन भट्टिणो अभिमदो जणो सुमराविदो । मुहुत्तअं पकिदिगम्भीरो वि पज्जुस्सुअणअणो आसि ।

न तस्मिन्महार्हं रत्नं भर्तुर्बहुमतमिति तर्कयामि । तस्य दर्शनेन भर्तुरभिमतो जनः स्मारितः । मुहूर्तं प्रकृतिगम्भीरोऽपि पर्युत्सुकनयन आसीत् ।

**सूचकः**—[3]शेविदं णाम आवुत्तेण ।

सेवितं नामावुत्तेन ।

---

तम् । मरणं ते ध्रुवमासीत्, किन्तु राजानुग्रहेण न केवलं प्राणैरवियुक्तः, अपि तु अर्थेन पूजितः; तन्मन्ये शूलाग्रं गन्ता जनो हस्तिस्कन्धे आरोपित इत्यर्थः ।

जानुको वदति—**आवुत्त** इति । 'आवुत्त ! परितोषं कथय; तेनाङ्गुलीयकेन भर्तुः संमतेन भवितव्यम्' इति संस्कृतम् । पुनः श्यालो वदति—**ण** इति । 'न तस्मिन्महार्हं रत्नं भर्तुर्बहुमतमिति तर्कयामि । तस्य दर्शनेन भर्तुरभिमतो जनः स्मारितः । मुहूर्तं प्रकृतिगम्भीरोऽपि पर्युत्सुकनयन आसीत्' इति संस्कृतम् । तस्मिन्=अङ्गुलीयके । तस्य = अङ्गुलीयकस्य । अभिमतः = प्रियः । स्मारितः = स्मृतिपथं प्रापितः । प्रकृतिगम्भीरोऽपि=स्वभावतो गूढाकारोऽपि पर्युत्सुकनयनः उत्कण्ठाव्यञ्जकनेत्रव्यापारः । सूचको वदति—**शेविदं** इति । 'सेवितं नामा-

---

१ पालितोशिएण जाणामि । २ त्ति कदुअ परिदोसो । एत्ति उण तक्केमि । ३ दोसिदे शोइदे अ दाणिं भट्टा आवुत्तेण ।

**जानुकः**—णं ¹भणाहि इमश्श कए मच्छिअभत्तुणोत्ति ।

ननु भण अस्य कृते मात्स्यिकभर्तुरिति । ( इति पुरुषमसूयया पश्यति । )

**पुरुषः**—भट्टालक ! इदो अद्धं तुह्माणं ²शुमणोमुल्लं होदु ।

भट्टारक ! इतोऽर्धं युष्माकं सुमनोमूल्यं भवतु ।

**जानुकः**—एत्तके जुज्जइ ।

एतावद्युज्यते ।

**श्यालः**—धीवर ! महत्तरो तुमं पिअवअस्सओ दाणिं मे सं-

---

वृत्तेन' इति संस्कृतम् । नामेति प्रशंसायाम् । मान्येन भवता यथार्थमेव भर्तृसेवा कृतेत्यर्थः । जानुको वदति—**णं इति** । 'ननु भण अस्य कृते मात्स्यिकभर्तुरिति' इति संस्कृतम् । नन्वित्याक्षेपे । अस्य = मत्स्यानां शत्रोर्धीवरस्य कृते सेवितमावुत्तेन इति भणेत्यर्थः । पुरुषमसूयया पश्यति—पुरुषं = धीवरम् । सासूयनिरीक्षणमर्थकामुकत्वात् ।

पुरुषो वदति—**भट्टालकेति** । 'भट्टारक ! इतोऽर्धं युष्माकं सुमनोमूल्यं भवतु' इति संस्कृतम् । इतः = प्रसादप्राप्तादर्थात् । अर्धमिति नपुंसकनिर्देशेन समप्रविभाग उक्तः । सुमनोमूल्यं = पुष्पमूल्यमिति विनयोक्तिः । पूर्वोक्तवध्यचिह्नभूतमालापनयनमूल्यमिति गूढोऽभिसन्धिर्वा । जानुको वदति—**एत्तके इति** । 'एतावद्युज्यते' इति संस्कृतम् । युक्तमेवैतदित्यर्थः । श्यालो धीवरविषये सौहार्दं सूचयन्नाह—**धीवरेति** । 'धीवर ! महत्तरस्त्वं प्रियवयस्यक इदानीं मे संवृत्तः । कादम्बरीसखित्वमस्माकं प्रथमशोभितमिष्यते । तत् शौण्डिकापणमेव गच्छामः' इति संस्कृतम् । महत्तरः = अतिशयेन महान्, इतरापेक्षयाऽतिशयः । कादम्बरी

---

१ भणेमि । २ शुलामुल्लं ।

वुत्तो। कादम्बरीसक्खिअं अह्माणं पढमसोहिदं इच्छीअदि। ता सोण्डिआपणं एव्व गच्छामो।

धीवर! महत्तरस्त्वं प्रियवयस्यक इदानीं मे संवृत्तः। कादम्बरीसखित्वमस्माकं प्रथमशोभितमिष्यते। तच्छौण्डिकापणमेव गच्छामः।

(इति निष्क्रान्ताः सर्वे।)

प्रवेशकः।

(ततः प्रविशत्याकाशयानेन [1]सानुमती नामाप्सराः।)

= मद्यम्। प्रथमशोभितं = सौहार्दप्रथमारम्भे शोभमानमित्यर्थः। इष्यते = मया प्रार्थ्यते। शौण्डिकापणम् = मद्यविक्रेतुः पण्यशालाम्।

**प्रवेशक इति।** प्रवेशयतीति प्रवेशकः, नीचपात्रप्रयुक्तो भाविभूतार्थसूचकः अङ्कसन्धिविशेषः। प्रवेशकलक्षणं यथा—

यन्नीचैः केवलं पात्रैर्भाविभूतार्थसूचनम्।
अङ्कयोरुभयोर्मध्ये स विज्ञेयः प्रवेशकः॥ इति।

अत्र राज्ञः अङ्गुलीयदर्शनम्, तेन तत्क्षणमेव शापनिवृत्त्या कान्तास्मरणं च प्रतिपादितम्। तस्यानन्तरावस्था अङ्कमुखपात्रैः प्रदर्शयिष्यते इति।

अथ नायिकायाः शकुन्तलाया वृत्तान्तस्य अत्यन्तविच्छेदाभावाय अप्सरःपदेन पूर्वं सूचितायाः सानुमत्याः प्रवेशमाह—**तत इति।** आकाशयानेन—आकाशेन यत् यानं = गमनं तेनेत्यर्थः। अथ मारीचाश्रमे मात्रा मेनकया सह निवसन्त्या मधुमासारम्भे परिस्फुरन्मदनया अत एव प्रियविरहदुःखं सोढुमक्षमया शकुन्तलया प्रेयोवृत्तान्तसाक्षात्करणाय अप्सरस्तीर्थगमनकाले संदिष्टा सखी सानुमती स्वकार्यं

१ मिश्रकेशी।

**सानुमती**—णिव्वट्टिदं मए पज्जाअणिव्वत्तणिज्जं अच्छरा-तित्थसण्णिज्झं जाव साहुजणस्स अभिसेअकालो त्ति । संपदं इमस्स राएसिणो उदन्त पच्चक्खीकरिस्सं । मेणआसंबन्धेण सरीरभूदा

निर्वर्त्य पुनः सुहृत्कार्यं कर्तुमभिलषन्ती मनसि वदति—**णिव्वट्टिदं** इति । निर्वर्तितं मया पर्यायनिर्वर्तनीयमप्सरस्तीर्थसान्निध्यं यावत्साधुजनस्याभिषेक-काल इति । सांप्रतमस्य राजर्षेरुदन्तं प्रत्यक्षीकरिष्यामि । मेनकासंबन्धेन शरीर-भूता मे शकुन्तला । तया च दुहितृनिमित्तमादिष्टपूर्वाऽस्मि । (समन्तादवलोक्य) किं नु खलु ऋतूत्सवेऽपि निरुत्सवारम्भमिव राजकुलं दृश्यते ? अस्ति मे विभवः प्रणिधानेन सर्वं परिज्ञातुम् । किन्तु सख्या आदरो मया मानयितव्यः । भवतु ; अनयोरेवोद्यानपालिकयोस्तिरस्करिणीप्रतिच्छन्ना पार्श्ववर्तिनी भूत्वा उपलप्स्ये' इति संस्कृतम् । पर्यायनिर्वर्तनीयम्—पर्यायेण = क्रमेण, अप्सरोभिर्वारक्रमेण निर्वर्तनीयम् = अनुष्ठेयम् । अभिषेककालः = स्नानसमयः । इतीति हेतौ । स्वकार्य-निर्वर्तनोक्त्या कार्यान्तरस्यायमवसर इति सूच्यते । कृतकृत्यस्य कामे अधिकार इति न्यायात् । अत आह—**सांप्रतमिति** । अस्य राजर्षेः = दुष्यन्तस्य उदन्तं = वृत्तान्तम् । "वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्" **इत्यमरः** । प्रत्यक्षीकरिष्यामी-त्यादिप्रत्यक्षीकरणे हेतुर्मेनकेत्यादि । मेनकासंबन्धेन = मेनकापुत्रीत्वेन शरीरभूता= शरीरवत् प्रेमास्पदभूता । अनेन तत्संदेशस्य अवश्यानुष्ठेयत्वं द्योत्यते । तया = मेनकया । आदिष्टपूर्वा = पूर्वं कृतादेशा । ऋतूत्सवेऽपि = ऋतूत्सवोचितकालेऽपि नि त्सवारम्भमिव = उत्सवारम्भशून्यमिव । विभवः = सामर्थ्यम् । प्रणिधानेन = दिव्यदृष्ट्या । दिवि वर्तमानयैव मया दिव्यदृष्ट्या सर्वमपि ज्ञातुं शक्यते इत्यर्थः । किन्त्विति विशेषे । **सख्या आदरो मया मानयितव्य इति** । मांसचक्षुषा

मे सउन्दला। ताए अ दुहिदुणिमित्तं आदिट्ठपुव्वह्मि। (समन्तादवलोक्य) किं णु क्खु [1]उदुच्छवे वि णिरुच्छवारम्भं विअ राअउलं दीसइ ? अत्थि मे विहवो पणिधाणेण सव्वं परिण्णादुं। किं दु सहीए आदरो मए माणइदव्वो। होदु; इमाणं एव्व उज्जाणपालिआणं तिरक्खरिणीपडिच्छण्णा पस्सवत्तिणी भविअ उवलहिस्सं।

निर्वर्तितं मया पर्यायनिर्वर्तनीयमप्सरस्तीर्थसांनिध्यं यावत्साधुजनस्याभिषेककाल इति। सांप्रतमस्य राजर्षेरुदन्तं प्रत्यक्षीकरिष्यामि। मेनकासंबन्धेन शरीरभूता मे शकुन्तला। तया च दुहितृनिमित्तमादिष्टपूर्वाऽस्मि। किं नु खलु ऋतूत्सवेऽपि निरुत्सवारम्भमिव राजकुलं दृश्यते ? अस्ति मे विभवः प्रणिधानेन सर्वं परिज्ञातुम्। किं तु सख्या आदरो मया मानयितव्यः। भवतु; अनयोरेवोद्यानपालिकयोस्तिरस्करिणीप्रतिच्छन्ना पार्श्ववर्तिनी भूत्वोपलप्स्ये। (इति नाट्येनावतीर्य स्थिता।)

---

प्रत्यक्षीकरणं हि सख्या शकुन्तलया सन्दिष्टम्, तत्तथा कर्तव्यमित्यर्थः। उद्यानपालिके विलोक्याह—**भवत्विति**। तिरस्करिणीप्रतिच्छन्ना—तिरस्करिणी नाम अदृश्यकारिणी काऽपि विद्या, तया प्रतिच्छन्ना = गूढविग्रहा पार्श्ववर्तिनी = समीपसंचारिणी। उपलप्स्ये = ज्ञास्यामि। नाट्येनावतीर्य स्थिता—भूतलावतरणं नाटयित्वा उद्यानपालिकयोः पार्श्वे स्थितेत्यर्थः। भूतलावतरणनाटनं तु गङ्गावतरणेन। तल्लक्षणं तु—

अङ्घ्रेरुत्क्षेपनिक्षेपावनुप्रोन्नतसन्नतौ।
भजेतां विपताकौ चेदेवमेव शिरस्तदा॥
गङ्गावतरणम्। इति।

---

1 उवत्थिदुच्छवे।

( ततः प्रविशति चूताङ्कुरमवलोकयन्ती चेटी। अपरा च पृष्ठतस्तस्याः।)

प्रथमा—

[1]आतम्महरिअपण्डुर ! जीविदसव्व ! वसन्तमासस्स।
[2]दिट्ठो सि चूदकोरअ ! उदुमङ्गल ! तुमं पसाएमि ॥२॥

आताम्रहरितपाण्डुर ! जीवितसर्व ! वसन्तमासस्य।
दृष्टोऽसि चूतकोरक ! ऋतुमङ्गल ! त्वां प्रसादयामि ॥

---

तत इति। चूताङ्कुरमवलोकयन्ती = नवोद्गतत्वात्सादरं पश्यन्ती चेटी = परिचारिका। पृष्ठतः = पश्चात्। द्वे चेट्यौ प्रविशतः; एते एवोद्यानपालिके।

तयोः प्रथमा वदति—आतम्म इति। 'आताम्रहरितपाण्डुर! जीवितसर्व! वसन्तमासस्य। दृष्टोऽसि चूतकोरक! ऋतुमङ्गल! त्वां प्रसादयामि॥' इति संस्कृतम्। हे आताम्रहरितपाण्डुर ! वसन्तमासस्य जीवितसर्व ! ऋतुमङ्गल ! चूतकोरक ! दृष्टोऽसि; त्वां प्रसादयामि इत्यन्वयः।

हे आताम्रहरितपाण्डुर—आ = ईषत् ताम्र = ताम्रवर्ण हरित = श्यामल पाण्डुर = शुभ्र ! त्रिभिरपि वर्णैः किञ्चिन्मिश्र इत्यर्थः। इयं स्वभावोक्तिः। अनेन आकृत्या रमणीयत्वं द्योत्यते। वसन्तमासस्य—प्रथमस्य वासन्तिकमासस्य = फाल्गुनस्य जीवितसर्वं = जीवितसर्वस्वेत्यर्थः। सारतम इति यावत्। सत्स्वप्यन्येषु प्रसूनेषु तदङ्कुरेण ऋतोरुच्छ्वसितत्वमिव गम्यते इति रूपणम्। ऋतुमङ्गल—ऋतोः= वसन्तस्य मङ्गल = प्रथमसूचकत्वात् मङ्गलारम्भभूत वसन्तश्रेयस्कर ! अनेनैव वसन्तस्य इतरर्त्वपेक्षया समुत्कर्षः। चूतकोरक = आम्रमुकुल ! दृष्टोऽसि ; अत एव

---

१ आतम्महरिअवेण्टं उस्ससिअं विअ। २ दिट्टं चूअङ्कुरअं छणमङ्गल्लं निअच्छामि।

**द्वितीया**--परहुदिए ! किं एआइणी मन्तेसि ?

परभृतिके ! किमेकाकिनी मन्त्रयसे ?

**प्रथमा**--महुअरिए ! चूदकलिअं देक्खिअ उम्मत्तिआ परहुदिआ होदि !

मधुकरिके ! चूतकलिकां दृष्ट्वोन्मत्ता परभृतिका भवति !

---

त्वां प्रसादयामि—प्रसन्नो भव, यथाऽस्मिन्वसन्तेऽहं सुखं वसेयमित्यर्थः।

हर्षोऽत्र भावः। गाथा छन्दः।

नवोद्गतमाम्रकोरकं दृष्ट्वा हृष्टमनाश्चेटी तमवलोकयन्ती वदति—'हे ईषत्ताम्रश्यामशुभ्रेति वर्णत्रयमिश्र ! वसन्तावतारसूचकत्वात् प्रथमाविर्भावे नयनाह्लादकत्वाच्च वसन्तमासस्य जीवितसर्वस्वभूत ! प्रथमपरिजृम्भणेन वसन्तर्तुमङ्गलस्वरूप ! आम्रमुकुल ! त्वमद्य मया दैवात् दृष्टोऽसि; त्वां प्रसादयामि। त्वं तथा प्रसन्नो भव, यथाऽस्मिन्वसन्तेऽहं सुखं वसेयम्' इति भावः॥ २॥

द्वितीया चेटी वदति—**परहुदिए** इति। 'परभृतिके ! किमेकाकिनी मन्त्रयसे' इति संस्कृतम्। परभृतिकेति प्रथमायाश्चेट्या नाम। उन्मत्तेव एकाकिनी किमिति जल्पसीत्यर्थः। अथ सा परभृतिका मधुकरिकां नाम द्वितीयां चेटीं श्लेषवक्रोक्त्या प्रतिवक्ति—**महुअरिए** इति। 'मधुकरिके ! चूतकलिकां दृष्ट्वा उन्मत्ता परभृतिका भवति' इति संस्कृतम्। चूतकलिकाम् = आम्रकोरकम्। अत्राहं परभृतिका = कोकिला इति श्लेषः। मधुकरिकेत्यत्रापि पूर्ववत् श्लेषः। अहं परभृतिका = कोकिला, त्वं मधुकरिका = भृङ्गीति योजना। चूतकलिकोद्गमं श्रुत्वा मधुमासावतारसंभावनया प्रहृष्टा द्वितीया चेटी प्रथमायाः समीपमुपगम्य वदति—

**द्वितीया**—( सहर्षं त्वरयोपगम्य ) कहं उवट्ठिदो महुमासो ?

कथमुपस्थितो मधुमासः ?

**प्रथमा**—महुअरिए ! तव दाणिं कालो एसो मदविब्भमगीदाणं !

मधुकरिके ! तवेदानीं काल एष मदविभ्रमगीतानाम् !

**द्वितीया**—सहि ! अवलम्ब मं जाव अग्गपादट्ठिआ भविअ चूदकलिअं गेण्हिअ कामदेवच्चणं करेमि ।

सखि ! अवलम्बस्व मां यावदग्रपादस्थिता भूत्वा चूतकलिकां गृहीत्वा कामदेवार्चनं करोमि ।

**प्रथमा**—जइ मम वि क्खु अद्धं अच्चणफलस्स !

---

**कहं इति** । 'कथमुपस्थितो मधुमासः' इति संस्कृतम् । कथमित्याश्चर्ये । वसन्तकालः समुपागतः किमिति प्रश्नः । प्रथमा वदति—**महुअरिए इति** । 'मधुकरिके ! तवेदानीं काल एष मदविभ्रमगीतानाम्' इति संस्कृतम् । मधुकरिके = छलात् भ्रमरि ! भ्रमरकामिन्यास्तव मदेन मत्ततया यानि विभ्रमगीतानि = विलासगानानि तेषां कालः = समयः आगतः । वसन्ते कुसुमितासु वनराजिषु भ्रमर्यास्तव गायनं स्वाभाविकं भवति; इदानीं स एव समयस्ते प्राप्त इत्यर्थः ।

अथ द्वितीया वदति—**सहीति** । 'सखि ! अवलम्बस्व मां यावदग्रपादस्थिता भूत्वा चूतकलिकां गृहीत्वा कामदेवार्चनं करोमि' इति संस्कृतम् । अग्रपादस्थिता = अग्रयोः पादयोः स्थिता, अङ्गुलीषु स्थिता सतीत्यर्थः । प्रांशुलभ्यां चूतकलिकां गृहीत्वा कामदेवस्यार्चनं यावत्करोमि, तावन्मामवलम्बस्व = धारयेत्यर्थः । प्रथमा वदति—**जइ इति** । 'यदि ममापि खल्वर्धमर्चनफलस्य' इति

यदि ममापि खल्वर्धमर्चनफलस्य !

**द्वितीया**—अकहिदे वि एदं संपज्जइ; जदो एक्कं एव्व णो जीविदं, दुधा ट्ठिदं सरीरं। (सखीमवलम्ब्य स्थिता चूताङ्कुरं गृह्णाति।) अए ! अप्पडिबुद्धो वि चूदप्पसवो एत्थ बन्धणभङ्गसुरभी होदि ! (इति कपोतहस्तकं कृत्वा)—

---

संस्कृतम्। यदि खलु = निश्चितम्। ममाप्यर्चनफलस्यार्धं भवति तदाऽवलम्बे, नान्यथेत्यर्थः। द्वितीया वदति—**अकहिदे** इति। 'अकथितेऽप्येतत्संपद्यते; यत एकमेव नौ जीवितम्, द्विधा स्थितं शरीरम्। (सखीमवलम्ब्य स्थिता चूताङ्कुरं गृह्णाति।) अये ! अप्रतिबुद्धोऽपि चूतप्रसवोऽत्र बन्धनभङ्गसुरभिर्भवति ! (इति कपोतहस्तकं कृत्वा) त्वमसि मया चूताङ्कुर ! दत्तः कामाय गृहीतधनुषे। पथिकजनयुवतिलक्ष्यः पञ्चाभ्यधिकः शरो भव॥' इति संस्कृतम्। अकथितेऽपि = त्वया मया वा अनुक्तेऽपि एतत् = अर्धलाभः संपद्यते = सिद्ध्यति। कारणमाह—**यत इति**। यतः = यस्मात् नौ = आवयोः। शरीरं द्विधा स्थितम्; जीवितं = प्राणाः एकमेव। अये इति आश्चर्ये। अप्रतिबद्धोऽपि = अविकसितोऽपि चूतप्रसवः = आम्रकलिका बन्धनभङ्गसुरभिः—बन्धनं = वृन्तम्, "संदाने च तथा वृन्ते मायायां बन्धनं स्मृतम्" इति **रुद्रः**। तस्य भङ्गेन = छेदेन सुरभिः = घ्राणतर्पणो भवति। अविकसितस्यापि चूतप्रसवस्य ईदृक् सौरभम्, विकासे पुनः कीदृक् स्यादिति भावः। **कपोतहस्तकमिति**। अयं संज्ञाशब्दः करतलयोः सर्वाङ्गसंश्लेषे वर्तते। तं कृत्वा, प्रणामाञ्जलिं बद्ध्वेत्यर्थः। कपोतहस्तकलक्षणं यथा **सङ्गीतरत्नाकरे**— "कपोतोऽसौ करो यत्र श्लिष्टमूलाग्रपार्श्वगः। प्रणामे गुरुसंभाषे" इति।

[1]तुमं सि मए चूदङ्कुर ! दिण्णो कामस्स [2]गहिदधणुअस्स ।
पहिअजणजुवइलक्खो [3]पञ्चाब्भहिओ सरो [4]होहि ॥ ३ ॥

अकथितेऽप्येतत्संपद्यते; यत एकमेव नौ जीवितम्, द्विधा स्थितं शरीरम् ।
अये ! अप्रतिबुद्धोऽपि चूतप्रसवोऽत्र बन्धनभङ्गसुरभिर्भवति !

त्वमसि मया चूताङ्कुर ! दत्तः कामाय गृहीतधनुषे ।
पथिकजनयुवतिलक्ष्यः पञ्चाभ्यधिकः शरो भव ॥

(इति चूताङ्कुरं क्षिपति ।)

---

त्वमसीति । हे चूताङ्कुर ! गृहीतधनुषे कामाय त्वं मया दत्तः असि । पथिकजनयुवतिलक्ष्यः पञ्चाभ्यधिकः शरो भव इत्यन्वयः ।

हे चूताङ्कुर = सहकारप्रसव ! गृहीतधनुषे = गृहीतं धनुर्येन तस्मै । अनेन धनुषः सर्वदा सज्जत्वम्, युद्धोद्यमः, शरदानस्य औचित्यं च सूच्यते । कामाय = मन्मथाय त्वं मया दत्तः = समर्पितः असि । पथिकजनयुवतिलक्ष्यः—पथिक-जनानां = प्रोषितानां युवतयः = तरुण्यो भार्यास्ता एव लक्ष्यं = शरव्यं यस्य स तथाविधः पञ्चाभ्यधिकः—पञ्चभ्यः = अरविन्दादिभ्यः पञ्चभ्यः शरेभ्यः अधिकः = अतिरिक्तः, षष्ठ इत्यर्थः । शरः = बाणो भव ।

इदं च कामशराणां पञ्चसंख्याकत्वप्रसिद्धिमनुसृत्योक्तम् । केचित्तु पञ्चसु शरेषु श्रेष्ठ इत्यर्थ इति चूतसामान्यस्य कामशरत्वमभ्युपेत्य व्याचक्षते । अत्र पञ्चाभ्यधिकत्वे शरस्य असंबन्धे संबन्धलक्षणा अतिशयोक्तिः । गाथा छन्दः ।

नवीने वसन्तावतारे परभृतिका नाम चेटी कामदेवमुद्दिश्य चूताङ्कुरं समर्प-यन्ती कामदेवार्चनमन्त्रगाथां पठति—'हे चूतप्रसव ! सर्वदा गृहीतसज्जधनुषे

---

१ अरिहसि मे । २ गहिदचावस्स । ३ पञ्चन्तरिओ । ४ होदुं ।

(प्रविश्यापटीक्षेपेण कुपितः)

**कञ्चुकी**—मा तावत् । अनात्मज्ञे ! देवेन प्रतिषिद्धे वसन्तोत्सवे त्वमाम्रकलिकाभङ्गं किमारभसे ?

**उभे**—(भीते) पसीददु अज्जो । अग्गहीदत्थाओ वअं ।

प्रसीदत्वार्यः । अगृहीतार्थे आवाम् ।

---

शृङ्गाराद्वैतसाम्राज्यपरिपन्थिभिः सह सर्वदा युद्धोद्यताय भगवते मन्मथाय त्वं मया समर्पितोऽसि । अरविन्दादयो भगवतः कामस्य शराः सन्त्येव; त्वं तु पथिकजनान् तद्भार्याश्च लक्ष्यभूताः समं विद्ध्वा प्रसिद्धेभ्यः पञ्चभ्यः शरेभ्यः सारवत्तया श्रेष्ठो भव ।' चूताङ्कुरो हि सर्वेषामुद्दीपकानामग्रणीरिति भावः ॥ २ ॥

**अपटीक्षेपेणेति** । तिरस्करिणीतिरस्कारेणेत्यर्थः । नेपथ्यरङ्गमञ्चयोरन्तराले वर्तमानां यवनिकामपसार्येति यावत् । "नासूचितस्य पात्रस्य प्रवेशो निर्गमोऽपि च" इत्युक्तेरत्र कञ्चुकिनः सूचनाभावादपटीक्षेपेण प्रवेशः । स च संभ्रमं सूचयति । तत्र हेतुः कोपः । तत्र च चूताङ्कुरप्रक्षेपदर्शनं हेतुः । **मा तावदिति** । साम्प्रतमेवं मा कुरुतमित्यर्थः । निषेधस्य प्राथम्येनोक्तिः राजाज्ञागौरवात् । अनात्मज्ञे = स्वभावानभिज्ञे, अविमृश्यकारिणि, कर्तव्यमूढे इत्यर्थः । देवेन = प्रकरणात् राज्ञा दुष्यन्तेन आम्रकलिकाभङ्गं = सहकारमञ्जरीच्छेदम् । किमारभसे = किमर्थमारम्भं करोषि ? त्वयाऽप्यधुना आरम्भ एव क्रियते, सोऽपि किमर्थमिति भावः । इदमेव कोपकारणम् । चेट्यौ ब्रूतः—**पसीददु इति** । 'प्रसीदत्वार्यः । अगृहीतार्थे आवाम्' इति संस्कृतम् । आवाभ्यामज्ञानादेवं कृतम्, देवेन कृतो वसन्तोत्सवप्रतिषेध आवाभ्यां नावगतः; तदज्ञानात्कृतमपराधं भवान्मर्षयतु इति भावः ।

कञ्चुकी—न किल श्रुतं युवाभ्यां यद्वासन्तिकैस्तरुभिरपि देवस्य शासनं प्रमाणीकृतं तदाश्रयिभिः पत्रिभिश्च? तथा हि—

चूतानां चिरनिर्गताऽपि कलिका बध्नाति न स्वं रजः
संनद्धं यदपि स्थितं कुरवकं तत्कोरकावस्थया।
कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं
शङ्के संहरति स्मरोऽपि चकितस्तूणार्धकृष्टं शरम् ॥४॥

---

राजकृतवसन्तोत्सवप्रतिषेधाज्ञानस्यासम्भाव्यत्वमाकलयन् कञ्चुकी आह—नेति। किलेत्यसंभावनायाम्। युवाभ्यां देवस्य शासनं न श्रुतमित्येतदसंभाव्यमित्यर्थः। वासन्तिकैः = वसन्तकाले पुष्यद्भिः। तरुभिरपीत्यपिशब्दः अचेतनानां राजशासनानुष्ठानस्यासम्भावनां द्योतयति। शासनम् = आज्ञाम्। "शासनं नृपदत्तोर्व्यां शास्त्राज्ञालेखशास्तिषु" इति हैमः। प्रमाणीकृतं = पालितम्। तदाश्रयिभिः = वृक्षाश्रयिभिः पत्रिभिः = पुंस्कोकिलादिभिः पक्षिभिः। अत्र तरुभिरपि देवस्य शासनं प्रमाणीकृतमिति गम्योत्प्रेक्षा, वक्ष्यमाणानां वस्तुस्वाभाव्यादेव तथात्वात्। अथवा असंबन्धे संबन्धरूपा अतिशयोक्तिः, राजाज्ञायास्तत्त्वतोऽसंबन्धात्।

उक्तमर्थमुपपादयति—तथा हि—चूतानामिति। चूतानां कलिका चिरनिर्गताऽपि स्वं रजो न बध्नाति। कुरवकं यदपि सन्नद्धं तत् कोरकावस्थया स्थितम्। पुंस्कोकिलानां रुतं शिशिरे गतेऽपि कण्ठेषु स्खलितम्। स्मरोऽपि चकितः (सन्) तूणार्धकृष्टं शरं संहरति (इति) शङ्के इत्यन्वयः।

चूतानां कलिका = आम्रमञ्जरी। जात्यभिप्रायेणैकवचनम्। कलिकाशब्दो बाधितमुख्यार्थः अभिनवोद्गतिसाधर्म्यान्मञ्जरीं लक्षयति। अविकासितत्वं च

फलं ज्ञेयम् । चिरनिर्गताऽपि = चिरकालात् प्रकटिताऽपि, शिशिरान्तप्रोद्भिन्नाऽपीत्यर्थः । स्वम् = आत्मीयम् । अनेनात्यावश्यकत्वं ध्वन्यते । रजः = परागं न बध्नाति = न धत्ते, न दृष्टं करोतीत्यर्थः । न विकसतीति यावत् । यथा काचन बाला प्रौढतया रजोदर्शनं न यातीति समासोक्तिरपि । कुरवकं = तदाख्यं कुसुमम्, शोणकुरण्टकमिति प्रसिद्धम् । इदमपि जातावेकवचनम् । यदपि सन्नद्धं = वृन्तात् बहिर्निर्गतमपि, विकसितुमुद्युक्तमित्यर्थः । अत्र सन्नद्धशब्दो बाधितमुख्यार्थः सन् यः सन्नद्धः स युद्धाय बहिर्निर्गच्छतीति बहिर्निर्गमनसाम्यात् कुरवकं लक्षयन् अतिशोभावहत्वं ध्वनयति । तत् = सन्नद्धमपि कोरकावस्थया स्थितं = कलिकावस्थयैव स्थितम् । पुंस्कोकिलानां = कोकिलयूनां रुतं = शब्दितं शिशिरे गतेऽपि = हिमावसाने जाते, वसन्ताविर्भावे सत्यपि कण्ठेषु स्खलितं = प्रतिहतम्, कण्ठपर्यन्तमायातं बहिर्नोद्गच्छतीति न श्रूयते इत्यर्थः । अस्फुटः कोकिलस्वनो जात इति भावः । शिशिरात्ययेऽपि, इत्थमप्रबुद्धे चूतकोरके, अप्रफुल्ले कुरवके, संयते च कोकिलालापे स्मरोऽपि = सर्वविजयी भगवान् मन्मथोऽपि चकितः सन् = राजाज्ञया भीतः सन् तूणार्धकृष्टं = तूणीरादर्धनिष्कासितम्, राजशासनघोषणायाः प्राङ्निष्कासितप्रायमित्यर्थः । शरं = बाणं संहरति = राजशासनघोषणामाकर्ण्य पुनस्तूणं प्रति प्रवेशयतीत्यर्थः । इति शङ्के = इति मन्ये । प्रहर्तुमना एवासीत् स्मरः, कथमन्यथा निर्गता चूतकलिका; सन्नद्धं कुरवकम्; रुतोत्सुकश्च कोकिलः ? परन्तु देवादेशान्न प्रहरति । तादृशोऽप्यादेशो युवाभ्यां न श्रुतः ? युज्यत एवैतदिति वक्रोक्तिः ।

अत्र कामस्य भीतत्वं शरसंहरणं चेत्युभयमुत्प्रेक्ष्यम् । कामस्य प्रसूनशरत्वात् वसन्तपुष्पाणामसकलोत्पन्नत्वादियमुत्प्रेक्षा । अस्यां च पूर्ववाक्यार्थत्रयं हेतुत्वेन योज्यम् । काव्यलिङ्गम् । चिरनिर्गमनादिकारणेऽपि विकासादिरूपकार्यानुत्पत्ति-

**सानुमती'**— णत्थि संदेहो ! महाप्पहाओ राएसी !

नास्ति संदेहः ! महाप्रभावो राजर्षिः !

---

कथनात् विशेषोक्तिश्चेत्यलंकाराः । अनेन श्लोकेन राजशासनस्य सार्वत्रिकी व्याप्तिरुक्ता । शार्दूलविक्रीडितं वृत्तम् ।

राजोद्याने चेटीभ्यां मन्मथमुद्दिश्य कृतं चूताङ्कुरक्षेपमवलोक्य क्रुद्धः कञ्चुकी राजशासनात् वसन्तोत्सवनिषेधेऽपि तयोस्तत्कर्म निषेधितवान् । ताभ्यां पुनः 'आवामगृहीतार्थे स्वः, प्रसीदतु भवान्' इति प्रसादितो वासन्तिकैस्तरुभिस्तदाश्रयिभिः पत्त्रिभिश्च देवस्य शासनं कथं प्रमाणीक्रियते इति निदर्शनपूर्वकं वर्णयन्नाह—'संप्रति शिशिरेऽतीते समुन्मिषति च मधुमासवैभवे चिरकालादुद्गता अपि सहकारमञ्जर्यस्तदवस्थायामत्यावश्यकमपि परागयोगं न दधते । विकसितुमुद्यतमपि शोणकुरण्टकं कलिकावस्थयैव स्थितं लक्ष्यते । वसन्तावतारे निसर्गतो रक्तकण्ठा अपि कोकिलयुवानः स्वकाकलीं कण्ठाद्बहिर्न प्रकटयन्ति । इत्थमेव च त्रिभुवनविजयी वसन्तसचिवो भगवान्मन्मथोऽपि वसन्तावतारं लक्षयित्वा तूणीरादर्धमाकृष्टमपि स्वं शरं पुनस्तूणीरमेव प्रवेशयतीति मन्ये । इत्थमचेतनैस्तिर्यग्भिः सचेतनैश्च देवस्य शासनं शिरसाऽऽदाय स्वभावोऽपि परिहृतः । युवाभ्यां पुनः राजशासनघोषणैव नाकर्णितेति कथमेतद्युज्यते ?' इति भावः ॥ ४ ॥

अथ तत्र तिरस्करिणीविद्यया प्रतिच्छन्ना भूत्वा स्थिता सानुमती चूतकलिकाद्यवस्थां सम्यगुपलक्ष्य कञ्चुकिवचः सविस्मयमनुवदति—**णत्थि इति** । **'नास्ति संदेहः ! महाप्रभावो राजर्षिः'** इति संस्कृतम् । नात्र विस्मयस्यावकाशः; अस्य राजर्षेर्महाप्रभावत्वात् सर्वमुपपद्यते इत्यर्थः ।

---

१ उभे ।

**प्रथमा**—अज्ज ! कति दिअहाइं अह्माणं मित्तावसुणा रट्ठिएण भट्टिणो पाअमूलं पेसिदाणं । इत्थं अ णो पमदवणस्स पालणकम्म समप्पिद । ता आअन्तुअदाए अस्सुदपुव्वो अम्हेहिं एसो वुत्तन्तो ।

आर्य ! कति दिवसान्यावयोर्मित्रावसुना राष्ट्रियेण भर्तुः पादमूलं प्रेषितयोः । इत्थं च नौ प्रमदवनस्य पालनकर्म समर्पितम् । तदागन्तुकतयाऽश्रुतपूर्व आवाभ्यामेष वृत्तान्तः ।

**कञ्चुकी**—भवतु; न पुनरेवं प्रवर्तितव्यम् ।

**उभे**—अज्ज ! कोदूहलं णो; जइ इमिणा जणेण सोदव्वं कहेदु, अअं किंणिमित्तं भट्टिणा वसन्तुस्सवो पडिसिद्धो ?

---

अथ चेट्योरन्यतरा उत्सवप्रतिषेधस्याश्रवणे संगतिमाह—अज्ज इति । 'आर्य ! कति दिवसान्यावयोर्मित्रावसुना राष्ट्रियेण भर्तुः पादमूलं प्रेषितयोः । इत्थं च नौ प्रमदवनस्य पालनकर्म समर्पितम् । तदागन्तुकतया अश्रुतपूर्व आवाभ्यामेष वृत्तान्तः' इति संस्कृतम् । राष्ट्रियेण = नगरपालेन राजश्यालेन । मित्रावसुना = तन्नाम्ना भर्तुः = स्वामिनः पादमूलं = चरणसमीपं प्रेषितयोः आवयोः । कति = द्वित्राणि दिवसानि = दिनानि । दिवसशब्दस्य पुंस्येव बहुशः प्रयोगो भवति । प्रमदवनस्य = तन्नाम्नः राजोद्यानस्य पालनकर्म = सेकसंमार्जनादिसंस्काराधिकारः । तत् = तस्मात् आगन्तुकतया = अचिरागमनेन हेतुना । एष वृत्तान्तः वसन्तोत्सवप्रतिषेधः । अश्रुतपूर्वः = इतः पूर्वं न श्रुतः । अथ कञ्चुकी तदुक्तमभ्युपगच्छन्नाह—**भवत्विति** । चूतकलिकाभङ्गादिभिरुत्सवारम्भो न कर्तव्य इत्यर्थः ।

चेट्यौ ब्रूतः—**अज्जेति** । 'आर्य ! कौतूहलं नौ; यद्यनेन जनेन श्रोतव्यं कथयतु, अयं किं निमित्तं भर्त्रा वसन्तोत्सवः प्रतिषिद्धः ?' इति संस्कृतम् । नौ = आवयोः

आर्य ! कौतूहलं नौ; यद्यनेन जनेन श्रोतव्यं कथयतु, अयं किं निमित्तं भर्त्रा वसन्तोत्सवः प्रतिषिद्धः ?

**सानुमती**—उस्सवप्पिआ क्खु मणुस्सा ! गुरुणा कारणेण होदव्वं !

उत्सवप्रियाः खलु मनुष्याः ! गुरुणा कारणेन भवितव्यम् !

**कञ्चुकी**—बहुलीभूतमेतत्किं न कथ्यते ? किमत्रभवत्योः कर्णपथं नायातं शकुन्तलाप्रत्यादेशकौलीनम् ?

**उभे**—सुदं रट्ठिअमुहादो जाव अङ्गुलीअअदंसणं ।

श्रुतं राष्ट्रियमुखाद्यावदङ्गुलीयकदर्शनम् ।

---

कौतूहलम्, अस्तीति शेषः । अनेन जनेन = नीचेन चेटीजनेन श्रोतव्यं = श्रवणयोग्यम् ।

सानुमती स्वगतं वदति—**उस्सवप्पिआ** इति । 'उत्सवप्रियाः खलु मनुष्याः ! गुरुणा कारणेन भवितव्यम्' इति संस्कृतम् । मनुष्याः उत्सवप्रियाः = प्रियोत्सवाः; तथाप्युत्सवः प्रतिषिद्धः; तन्मन्ये गुरुणा = महता कारणेन भवितव्यम् ।

कञ्चुकी उत्तरयति—**बहुलीभूतमिति** । बहुलीभूतं = व्याप्तम्, बहुकर्णगतमित्यर्थः । एतत् = उत्सवप्रतिषेधनिमित्तम् । किं न कथ्यते—यत्सर्वैः श्रुतं तस्य कथने को दोषः ? अत्र = अस्मिन्नगरे, इहागमनात्परमित्यर्थः । शकुन्तलाप्रत्यादेशकौलीनम्—शकुन्तलायाः प्रत्यादेशात् = निराकरणात् यत् कौलीनं = राज्ञो लोकवादः । "स्यात् कौलीनं लोकवादे" **इत्यमरः** । तत् किं भवत्योः कर्णपथं नायातं = भवतीभ्यां न श्रुतम् ? चेट्यौ ब्रूतः—**सुदं** इति । 'श्रुतं राष्ट्रियमुखाद्यावदङ्गुलीयकदर्शनम्' इति संस्कृतम् । अङ्गुलीयकस्य दर्शनं यावत् =

**कञ्चुकी**—तेन ह्यल्पं कथयितव्यम् । यदैव खलु स्वाङ्गुलीयकदर्शनादनुस्मृतं देवेन सत्यमूढपूर्वा मे तत्रभवती रहसि शकुन्तला मोहात्प्रत्यादिष्टेति, तदा प्रभृत्येव पश्चात्तापमुपगतो देवः । तथा हि—

**रम्यं द्वेष्टि यथापुरा प्रकृतिभिर्न प्रत्यहं सेव्यते**
**शय्याप्रान्तविवर्तनैर्विगमयत्युन्निद्र एव क्षपाः ।**
**दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा**
**गोत्रेषु स्खलितस्तदा भवति च [1]व्रीडाविलक्षश्चिरम् ॥ ५ ॥**

तत्पर्यन्तं सर्वं राष्ट्रियस्य मुखाच्छ्रुतम् । पुनः कञ्चुकी वदति—तेन ह्येति । सत्यं = तत्त्वत एव ऊढपूर्वा—पूर्वम् ऊढा = विवाहिता । मे = मया । अव्ययमेतत् । तथा च **वामनः**—"तेमेशब्दौ निपातौ त्वयामयेत्यर्थे" इति । रहसि = विजने । मोहात् = मतिभ्रमात् प्रत्यादिष्टा = निराकृता । इति देवेन यदैवानुस्मृतं तदा प्रभृतीत्यन्वयः ।

राज्ञः पश्चात्तापस्य परिपोषमनुभावमुखेन दर्शयन्नाह—**तथा हि**—**रम्यमिति** । रम्यं द्वेष्टि; यथापुरा प्रकृतिभिः प्रत्यहं न सेव्यते; उन्निद्र एव शय्याप्रान्तविवर्तनैः क्षपाः विगमयति; यदा दाक्षिण्येन अन्तःपुरेभ्य उचितां वाचं ददाति तदा गोत्रेषु स्खलितः ( सन् ) चिरं व्रीडाविलक्षो भवति च इत्यन्वयः ।

रम्यं = स्रक्चन्दनचन्द्रपादादिकं लोके यद्यदाह्लादकरं भोग्यं वस्तु तत्तत् द्वेष्टि = उद्वेजकत्वात् चक्षुषाऽपि न पश्यतीत्यर्थः । यथापुरा = पूर्ववत् प्रकृतिभिः= अमात्यैः प्रत्यहं = प्रतिदिनं न सेव्यते । पूर्वं तु अमात्यादिभिः कार्यापेक्षितया

[1] व्रीडाऽवनम्रः ।

सर्वदा सेव्यते स्म, अधुना त्ववसरापेक्षमित्यर्थः । पूर्ववाक्यद्वयेन अरतिर्दर्शिता । उन्निद्र एव = उत्क्रान्ता निद्रा यस्य सः, गतनिद्रः; जाग्रदेवेत्यर्थः । शय्याप्रान्तविवर्तनैः—शय्यायाः = राजोचितस्य महार्हस्य तल्पस्य प्रान्तयोः = पर्यन्तयोः, न तु मध्ये यानि विवर्तनानि = परिलुण्ठनानि, न स्वापः । दक्षिणे पार्श्वे शयितः क्षणं दक्षिणप्रान्ते, ततश्च विरक्तो वामपार्श्वपरिवर्तनमिच्छन् वामप्रान्ते, भूयश्च दक्षिणप्रान्ते, ततोऽपि पुनर्वामप्रान्ते इत्येवं क्रमेण यानि परिवर्तनानि तैरित्यर्थः । क्षपाः = निशाः, न तु निशाम् । प्रतिनिशमीदृगवस्थासंभवाद्बहुवचनम् । विगमयति = निरुद्धं यथा स्यात्तथा अतिवाहयति । अनेन विरहसंतापनिस्सहत्वमाविष्कृतम् । एवं विवर्तनपरो महिषीभिः प्रार्थितो यदा दाक्षिण्येन = उदारतया, अत्यन्तानुरोधेन; न तु रागाभिनिवेशेन अन्तःपुरेभ्यः = देवीभ्यः । अन्तःपुरशब्दः उपचारादन्तःपुरस्थवाची । उचितां = तत्कालयोग्याम्, अभ्यस्तां प्रार्थनानुरूपां वा वाचं ददाति = प्रश्नानुरूपमुत्तरं दत्ते इत्यर्थः । अनेन आत्मावस्थानिगूहनाय यत्नः प्रकाश्यते । तदा = तस्मिन्नवसरे गोत्रेषु = नामसु । "गोत्रं तु नाम्नि च" इत्यमरः । स्खलितः = अन्यनामगृहे कृतान्यनामग्रहः, शकुन्तलामयहृदयः अन्यामपि स्त्रियं शकुन्तलाशब्देनैवामन्त्रयन् सन्नित्यर्थः । चिरं = चिरकालाय व्रीडाविलक्षः—व्रीडया = लज्जया विलक्षः = विस्मयान्वितो भवति च = जायते च । "विलक्षो विस्मयान्वितः" इत्यमरः । चित्तव्याक्षेपनिमित्तको मुखभावभेदो वैलक्ष्यम् । तथा चोक्तम्—

आत्मनः स्खलिते सम्यग्ज्ञातेऽन्यैर्यस्य जायते ।
अपत्रपाऽतिमहति स विलक्ष इति स्मृतः ॥ इति ।

अत्र पश्चात्तापादिके कारणे वक्तव्ये तत्कार्यस्य रम्यद्वेषादेर्वचनात् पर्यायोक्तम्, काव्यलिङ्गं च । उक्तैरनुभावैर्व्यज्यमानैश्चिन्ताविषादादिभिर्भावैश्च विप्रलम्भः स्फुटमभिव्यज्यते । शार्दूलविक्रीडितं वृत्तम् ।

**सानुमती**—पिअं मे।

प्रियं मे।

**कञ्चुकी**—अस्मात्प्रभवतो वैमनस्यादुत्सवः प्रत्याख्यातः।

---

अङ्गुलीयकदर्शनात् शकुन्तलापरिणयं स्मृतवतः पूर्वं मोहात्कृतं तस्याः प्रत्यादेशं विचिन्त्य बाढमनुतप्यमानस्य राज्ञो दुष्यन्तस्य तात्कालिकीमवस्थां कञ्चुकी वर्णयति—'सर्वदा उत्सवप्रियोऽपि देवः सांप्रतं स्रक्चन्दनचन्द्रपादादीनि आह्लादकराणि भोग्यवस्तूनि चक्षुषाऽपि न पश्यति; तेषां सेवनं तु दूरे। पर्वमभिगम्यस्य यस्य प्रभोर्निकटे अमात्यादयः प्रकृतयः सर्वदैव तं परिवार्य तिष्ठन्ति स्म। सांप्रतं तु आवश्यकराज्यकार्यापेक्षया द्वित्रा एव प्रधानामात्यादयस्तं मुहूर्तमुपगच्छन्ति। निशासु प्रायो जाग्रदेव महार्हे राजकीये तल्पे दक्षिणवामपार्श्वयोः पर्यायेण परिलुण्ठनैरेव निशाः क्षपयति। ईदृगवस्थं महीपालं दृष्ट्वा यदा अन्तःपुरस्था देव्यस्तदीयमनामयं पृच्छन्ति तदा नितान्तं दक्षिण आत्मावस्थानिगूहनाय प्रयतमानः स राजा ताभ्यस्तत्कालोचितमभ्यसितं तत्प्रार्थनानुरूपं वोत्तरं ददाति। किन्तु तदैव तासां नामोच्चारणे स्खलितः शकुन्तलामयहृदयत्वात् ता अपि शकुन्तलाशब्देनैव व्यपदिशन् तासां मुखभङ्गविकारेण आत्मस्खलितं लक्षयित्वा सद्यो व्रीडया विलक्षो भवति। इत्थं शकुन्तलाप्रत्यादेशमुद्दिश्य पश्चात्तप्यमानस्य शकुन्तलैकहृदयस्य परित्यक्तसर्वसुखोपभोगस्य लोकैः स्फुटं विभाव्यमानविकारस्य देवस्य दुरवस्था वर्णयितुं न शक्यते' इति भावः॥ ५॥

अथ राज्ञो दुष्यन्तस्य तादृशीमवस्थां शकुन्तलानुरागैकहेतुकामवधार्य सानुमती सहर्षं स्वगतं विमृशति—**पिअं मे** इति। 'प्रियं मे' इति संस्कृतम्।

कञ्चुकी पूर्वानुवृत्तो स्ववचनक्रमे चेटीद्वयं प्राह—**अस्मा**दिति। अस्मात् =

उभे—जुज्जइ ।

युज्यते ।

( नेपथ्ये )

एदु एदु भवं ।

एतु एतु भवान् ।

कञ्चुकी—( कर्णं दत्वा ) अये ! इत एवाभिवर्तते देवः ! स्वकर्मानुष्ठीयताम् ।

उभे—तह ।

तथा । ( इति निष्क्रान्ते । )

( ततः प्रविशति पश्चात्तापसदृशवेषो राजा विदूषकः प्रतीहारी च । )

कञ्चुकी—(राजानमवलोक्य) अहो सर्वास्ववस्थासु रमणीयत्व-

---

पूर्वोक्तात् प्रभवतः = प्रभूतात् प्रबलादित्यर्थः । वैमनस्यात् = मनस्तापात् उत्सवः = वसन्तोत्सवः प्रत्याख्यातः = निषिद्धः । चेट्यौ ब्रूतः—जुज्जइ इति । 'युज्यते' इति संस्कृतम् । ईदृशे मनःसन्तापे देवस्य वसन्तोत्सवप्रत्याख्यानं समुचितमेवेत्यर्थः ।

एदु एदु इति । 'एतु एतु भवान्' इति संस्कृतम् । कञ्चुकी नेपथ्ये 'एतु एतु' इति वचनं श्रुत्वा राजागमनं संभावयन्नाह—अये इति । इत एव = अस्यामेव दिशि अभिवर्तते = आगच्छति । स्वकर्म = आत्मकार्यम्, उद्यानरक्षाकर्म । चेट्यौ ब्रूतः—तहेति । 'तथा' इति संस्कृतम् । निष्क्रान्ते इति । अत्र चेट्योः कञ्चुकिनश्च प्रवेशः राजकीयविरहवृत्तान्तप्रदर्शनार्थः ।

राजानमुपस्थितमवलोक्य कञ्चुकी स्वगतं विमृशति—अहो इति । अहो इति विस्मये । सर्वास्ववस्थासु = सर्वेषु दशाविशेषेषु, विशेषतो दुःखावस्थाया-

माकृतिविशेषाणाम् ! एवमुत्सुकोऽपि[1] प्रियदर्शनो देवः । तथा हि—

प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठार्पितं[2]
बिभ्रत्काञ्चनमेकमेव वलयं[3] श्वासोपरक्ताधरः ।
[4]चिन्ताजागरणप्रतान्तनयनस्तेजोगुणादात्मनः
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते ॥६॥

मपीत्यर्थः । यदा यादृश्यो या अवस्था उपस्थितास्तासु ताद्रूप्येण रमणीयत्वमिति यावत् । आकृतिविशेषाणां = विशिष्टाकृतीनाम्, मधुराकृतीनामित्यर्थः । स्वभावतो मधुराकाराः दुःखावस्थास्वपि नैसर्गिकं रामणीयकत्वं न जहतीत्यर्थः । उक्तं सामान्यं विशेषेण समर्थयति—एवमुत्सुकोऽपीति । एवम् = इत्थम् उत्सुकोऽपि = उन्मना अपि देवः = राजा प्रियदर्शनः = नयनलोभनीयाकृतिः ।

उक्तमर्थमुपपादयति—तथा हि—प्रत्यादिष्टेत्यादिना । प्रत्यादिष्टविशेषमण्डनविधिः वामप्रकोष्ठार्पितम् एकमेव काञ्चनं वलयं बिभ्रत् श्वासोपरक्ताधरः चिन्ताजागरणप्रतान्तनयनः ( देवः ) क्षीणोऽपि संस्कारोल्लिखितो महामणिरिव आत्मनः तेजोगुणात् न आलक्ष्यते इत्यन्वयः ।

प्रत्यादिष्टविशेषमण्डनविधिः—प्रत्यादिष्टः = कृशतया अरतेश्च निराकृतः विशेषमण्डनानां = राजावश्यधार्यव्यतिरिक्तानां प्रक्षेप्याङ्गुलीयकहाराद्यलंकाराणां विधिः = धारणविधिर्येन सः । अनेन—

अङ्गान्यभूषितान्येव प्रक्षेप्याद्यैर्विभूषणैः ।
येन भूषितवद्भान्ति तद्रूपमिति कथ्यते ॥

१ वैमनस्यपरीतोऽपि । २ प्रकोष्ठे श्लथम् । ३ श्वासापरक्ताधरः । ४ चिन्ताजागरणप्रताम्रनयनः ।

इति लक्षितलक्षणं रूपं ध्वन्यते। वामप्रकोष्ठार्पितम्—वामे प्रकोष्ठे=मणिबन्धादूर्ध्वदेशे अर्पितं=दत्तम्। "प्रकोष्ठे विस्तृतकरे रूपकक्षान्तरेऽपि च। कूर्परादधरे चापि" इति विश्वः। एकमेव काञ्चनं=सौवर्णं वलयं=कङ्कणं बिभ्रत्=धारयन्। काञ्चनमेवेत्यनेन अन्यासंस्पृष्टत्वेन अतिशीतलत्वं ध्वन्यते। वलयमित्येकवचनं द्वितीयस्य वोढुमसामर्थ्यात्। वामप्रकोष्ठेन एकवलयधारणं मङ्गलार्थम्। अतः एकं=मुख्यम्, सर्वदा सत्त्वात्। "एके मुख्यान्यकेवलाः" **इत्यमरः**। श्वासोपरक्ताधरः—श्वासैः=अविरलविनिर्गलद्विरहोष्णनिःश्वासैः उपरक्तः=पाटलः, न तु रूक्षः अधरः=अधरोष्ठो यस्य सः चिन्ताजागरणप्रतान्तनयनः—चिन्तया=शकुन्तलागतया यज्जागरणं=रात्रौ अनिद्रा तेन प्रकर्षेण तान्ते=म्लाने नयने=नेत्रे यस्य सः। जागरणेन नयनयो रक्तप्रान्तत्वम्, तेन च शोभातिशययोगित्वं च ध्वनितम्। देवः=राजा दुष्यन्तः क्षीणोऽपि=प्रजागरादिभिः कृशोऽपि संस्कारोल्लिखितः—संस्कारार्थम् उल्लिखितः=उद्घृष्टः, शाणघर्षणकृश इत्यर्थः। महामणिरिव=मणिराज इव। महाशब्देन जात्यत्वं सर्वगुणविशिष्टत्वं महत्त्वं च ध्वनितम्। आत्मनः=स्वस्य तेजोगुणात्=दीप्तिलक्षणात् तेजोबाहुल्यात् नालक्ष्यते=क्षीण इति न परिज्ञायते, प्रेक्षकैरिति शेषः। यथा शाणोल्लिखितो महामणिः पूर्वापेक्षया कृशोऽपि दीप्तिबाहुल्यात् कृश इति न प्रतीयते, तद्वदित्युपमा।

अत्र प्रत्यादिष्टेत्यादिना उत्सुकत्वम्, तेजोगुणादित्यादिना प्रियदर्शनत्वं चोपपादितम्। अरतिसङ्कल्पजागरतनुताद्याः कामावस्था अप्यत्र सूचिताः। राजाश्रयाश्चिन्ताग्लान्यादयो भावा अभिव्यज्यन्ते। महामण्युपमया राज्ञः क्षणे क्षणे नवत्वं द्योत्यते। कञ्चुकिगतौ हर्षविस्मयाख्यौ भावौ चाभिव्यज्येते। स्वभावोक्तिरुपमा चालङ्कारौ। किञ्चानेन नायकसात्त्विकगुणेषु माधुर्यनामा गुण उपक्षिप्तः।

**सानुमती**—(राजानं दृष्ट्वा) ठाणे क्खु पच्चादेसविमाणिदा वि इमस्स किदे सउन्दला [1]किलम्मदि त्ति ।

स्थाने खलु प्रत्यादेशविमानिताऽप्यस्य कृते शकुन्तला क्लाम्यतीति ।

---

तल्लक्षणं यथा—"तन्माधुर्यं यत्र गात्रदृष्ट्यादेः स्पृहणीयता । सर्वावस्थासु सर्वत्र" इति । शार्दूलविक्रीडित वृत्तम् ।

शकुन्तलाप्रत्याख्यानेनानुतप्यमानस्य परित्यक्तमण्डनाङ्गसंस्कारस्य गाढोत्कण्ठाविक्लवस्यापि राज्ञः प्रियदर्शनत्वं कञ्चुकी वर्णयति—'अयमस्माकं देवः प्रियमण्डनोऽपि संप्रति अवश्यधार्यव्यतिरिक्तान् हाराद्यलंकारान् नावलोकते, न च स्पृशति । मङ्गलाचारत्वेनावश्यधार्यं काञ्चनमयमेकमेव वलयं वामप्रकोष्ठे बिभर्ति । अविरलैर्विरहोष्णैश्च निःश्वासैः स्वभावपाटलोऽस्याधरो बाढमुपरक्तश्च दृश्यते । प्रतिनिशं शकुन्तलामयचित्ततया तामेव चिन्तयन् जागरणैरेव असौ निशा अतिवाहयतीति विशेषारुणनयनप्रान्तः कृशशरीरो देवः शाणोत्तेजितो महामणिरिव स्वाभाविकेन दीप्तिभूम्ना कृश इति न प्रतीयते । इत्थं मण्डनविशेषशून्यो जागरणकृशोऽपि देवः पूर्वापेक्षयाऽपि नः प्रियदर्शन एव प्रतिभाति' इति भावः ॥ ६ ॥

अथ प्रच्छन्नविग्रहा राजानमवलोकमाना सानुमती तदाकृतेर्लोकोत्तरत्वमवेक्ष्य तं श्लाघते—**ठाणे इति**। 'स्थाने खलु प्रत्यादेशविमानिताऽपि अस्य कृते शकुन्तला क्लाम्यतीति' इति संस्कृतम् । प्रत्यादेशविमानिताऽपि—प्रत्यादेशेन = प्रत्याख्यानेन विमानिता = अपमानिताऽपि अस्य कृते = दुष्यन्तस्य कृते, दुष्यन्तार्थमित्यर्थः । क्लाम्यति = तप्यते, इति स्थाने खलु = युक्तमेवेत्यर्थः ।

---

१ किलिस्सदि ।

राजा—(ध्यानमन्दं परिक्रम्य)—

प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम् ।
अनुशयदुःखायेदं हतहृदयं संप्रति विबुद्धम् ॥ ७ ॥

ध्यानमन्दमिति । ध्यानेन = चिन्तया मन्दं = मन्थरं यथा स्यात्तथेत्यर्थः । अनेन राज्ञः अनालम्बनता सूच्यते । सा च मनसः शून्यताऽऽत्मिका, "अनालम्बनता वाऽपि शून्यता मनसि स्मृता" इत्युक्तेः ।

प्रतिबुद्धप्रियावृत्तान्तो राजा तत्परित्यागजनितपश्चात्तापेन तप्यमानः सन् हृदयमधिक्षिपन्नाह—प्रथममिति । प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तमिदं हतहृदयं संप्रति अनुशयदुःखाय विबुद्धम् इत्यन्वयः ।

प्रथमं = प्रियासमागमसुखानुभवे स्वयं समुपनते मयि च तां प्रत्यादिशति तत्समये सारङ्गाक्ष्या—सारङ्गस्य = मृगस्य अक्षिणी = नयने इव अक्षिणी यस्यास्तथाविधया, मृगाक्ष्या । अनेन तदानीन्तनावस्थास्मरणं मृगपोतकसलिलप्रदानसमयकृतपरिहासस्यानुस्मरणं च सूच्यते । प्रियया = अत्यन्तहृद्यया शकुन्तलया । अनेन प्रतिबोधस्य औचित्यं ध्वन्यते । प्रतिबोध्यमानमपि—मम हृदयस्य स्वत एव प्रतिबोध उचित आसीत्, स तु नाभूत्; अपि तु तया प्रयत्नेनापि प्रतिबोध्यमानमपि = प्रत्यभिज्ञामापादितमपि । अत्र प्रतिबोधः = प्रत्यभिज्ञा । अपीति विरोधे । सुप्तं = मोहमुपगतम्, जडमित्यर्थः । इदं = मदीयं हतहृदयं = अस्पृष्टसुकृतगन्धं दुष्टहृदयं संप्रति = अधुना, प्रियायामसुलभदर्शनायामित्यर्थः । अनुशयदुःखाय = केवलं पश्चात्तापदुःखमनुभवितुं विबुद्धं = जागरितम् ।

अत्र पूर्वार्धे विशेषोक्तिः । प्रतिबोधाभावः तद्विरुद्धेन सुप्तपदेनोक्तः । उत्तरार्धे विभावना च । निर्वेदचिन्तादयो भावा व्यज्यन्ते । हृदयं प्रत्यसूया प्राधान्येन व्यज्यते । आर्या जातिः ।

**सानुमती**—णं ईदिसाणि तवस्सिणीए भाअहेआणि !

नन्वीदृशानि तपस्विन्या भागधेयानि !

**विदूषकः**—(अपवार्य) लङ्घिदो एसो भूओ वि 'सउन्दलावाहिणा। ण आणे कहं चिकिच्छिदव्वो भविस्सदि त्ति ।

---

अङ्गुलीयकोपगमेन अपगतशापप्रभावः प्रतिबुद्धप्रियावृत्तान्तो राजा तदानीं मोहात्तां प्रत्यादिश्य संप्रति पश्चात्तापेन परितप्यमानः स्वं हृदयमधिक्षिपन्नाह—'अस्पृष्टसुकृतगन्ध हे मदीय दुष्टहृदय ! यदा मुनिकुमारकाभ्यां सह प्रिया स्वयमुपगताऽऽसीत् , तदा तस्याः समागमसुखानुभवे स्वयमुपनते सति मृगाक्ष्या अतिहृद्यया प्रियया तया मृगपोतकसलिलदानसमयकृतपरिहासादिप्रत्यभिज्ञानेषु अनुस्मारितेष्वपि मोहान्धेन भवता न किञ्चिदपि श्रुतम्, अपि तु जडतामापन्नेन तां मिथ्यावादिनीं निर्धार्य प्रत्यादेशपारुष्यं दर्शितम् । हे हतहृदय ! तदानीं तथा सुप्तं त्वं चिराय किमिति न सुप्तमेवासीः ? संप्रति विबुद्धस्य तव केवलं पश्चात्तापदुःखमेवानुभवितुं लप्स्यते; प्रियालाभस्तु संभावनामतिक्रान्त एव' इति भावः ॥ ७ ॥

राजोक्तिमाकर्ण्य सानुमती स्वगतं सानन्दमाह—णं इति । 'ननु ईदृशानि तपस्विन्या भागधेयानि !' इति संस्कृतम् । ईदृशानि = अलौकिकानि । यतोऽयं महाराजस्तन्निमित्तमेवं संतप्यते । तपस्विन्याः = दीनायाः भागधेयानि = भाग्यानि । यद्वा भागधेयानीति कार्ये कारणोपचारः । ईदृशोऽस्य तस्यामनुराग इत्यर्थः ।

राजानं शकुन्तलाविषये अनुतप्यमानं दृष्ट्वा विदूषको वदति—लङ्घिदो इति । 'लङ्घित एष भूयोऽपि शकुन्तलाव्याधिना । न जाने कथं चिकित्सितव्यो भविष्यतीति' इति संस्कृतम् । लङ्घितः = आक्रान्तः । शकुन्तलाव्याधिना—शकुन्तलैव

---

१ सउन्दलावादेण ।

लङ्घित एष भूयोऽपि शकुन्तलाव्याधिना । न जाने कथं चिकित्सितव्यो भविष्यतीति ।

**कञ्चुकी**—(उपगम्य) जयतु जयतु देवः । महाराज ! प्रत्यवेक्षिताः प्रमदवनभूमयः । यथाकाममध्यास्तां विनोदस्थानानि महाराजः ।

**राजा**—वेत्रवति ! मद्वचनादमात्यमार्यपिशुनं ब्रूहि; चिरप्रबोधनान्न संभावितमस्माभिरद्य धर्मासनमध्यासितुम्; यत्प्रत्यवेक्षितं पौरकार्यमार्येण तत्पत्रमारोप्य दीयतामिति ।

**प्रतीहारी**—जं देवो आणवेदि ।

---

व्याधिः = रोगः, उद्वेगदायित्वात्; तेन । यद्वा शकुन्तलायाः सकाशाद्यो व्याधिस्तेन । कथं चिकित्सितव्यः = केनोपायेन प्रतिकर्तव्यो भविष्यतीति न जाने, शकुन्तलाया अलभ्यत्वादिति भावः । अनेन नर्मसचिवस्य विषादोऽभिव्यज्यते ।

कञ्चुकी समुपगम्याह—**जयत्विति** । प्रत्यवेक्षिताः = निपुणदर्शनेन अनीप्सितापसारणात् शोधिताः सम्पादितयोगक्षेमाश्च । प्रमदवनस्य भूमयः = ते ते प्रदेशाः । राज्ञो निःशङ्कसंचारार्थं प्रत्यवेक्षणमिति नीतिः । तथा च **हलायुधः**—"विज्ञेयं प्रमदवनं नृपस्तु यस्मिन् शुद्धान्तैः सह रमते पुरोपकण्ठम्" इति । "कारयेद्वनविशोधनमादौ" इति चान्यत्र । यथाकामं = स्वेच्छया, निर्भयमित्यर्थः । अध्यास्ताम् = अधितिष्ठतु ।

आर्यपिशुनम्—पिशुन इति मन्त्रिणो नाम । चिरप्रबोधनात् = चिरेण जागरणात्, वेलाऽतिक्रमादित्यर्थः । धर्मासनं = विचारासनम् । अध्यासितुं न संभावितमिति संबन्धः । पत्रमारोप्य = पत्रस्थं कृत्वा । अनेन वाक्येन राज्ञो विरहपर्याकुलत्वेऽपि वर्णाश्रमपरिपालनाधिकारे जागरूकत्वस्य अस्खलितत्वं प्रतिपाद्यते । प्रदर्शयिष्यमाणस्य अनपत्यतादुःखस्य बिन्दुरूपं चेदम् । प्रतीहारी वदति—जं

यद्देव आज्ञापयति । (इति निष्क्रान्ता ।)

**राजा**—[1]वातायन ! त्वमपि स्वं नियोगमशून्यं कुरु ।

**कञ्चुकी**—यदाज्ञापयति देवः । (इति निष्क्रान्तः ।)

**विदूषकः**—किदं भवदा णिम्मच्छिअं । संपदं सिसिरातवच्छे-अरमणीए इमस्सिं पमदवणुद्देसे अत्ताणं रमइस्ससि ।

कृतं भवता निर्मक्षिकम् । सांप्रतं शिशिरातपच्छेदरमणीयेऽस्मिन्प्रमदवनोद्देशे आत्मानं रमयिष्यसि ।

**राजा**—वयस्य ! रन्ध्रोपनिपातिनोऽनर्था इति यदुच्यते तद-व्यभिचारि वचः । कुतः !

---

**इति** । 'यद्देव आज्ञापयति' इति संस्कृतम् । राजोक्तौ वातायनेति कञ्चुकिनो नाम । नियोगम् = अधिकारम् ।

प्रतीहारिकञ्चुकिनोर्निष्क्रमणे विदूषको वदति—**किदं इति** । 'कृतं भवता निर्मक्षिकम् । सांप्रतं शिशिरातपच्छेदरमणीयेऽस्मिन्प्रमदवनोद्देशे आत्मानं रम-यिष्यसि' इति संस्कृतम् । कृतं भवता निर्मक्षिकम्—इतरे जनास्त्वयाऽपसारिता इत्यर्थः । शिशिरातपच्छेदरमणीये—शिशिरः = शीतः, आतपः = ग्रीष्म इति द्वौ ऋतू; तयोः छेदः = अन्तरालम्, वसन्त इति यावत् । तस्मिन् रमणीये = पुष्पपल्लवोद्गममनोहरे आत्मानं रमयिष्यसि = पुष्पाणि पल्लवानि च वीक्ष्य सुखितो भविष्यसि । अथ राजा मदनोद्दीपकस्य वसन्तस्याविर्भावेन प्रवृद्धमदन-तापो वदति—**वयस्येति** । रन्ध्रोपनिपातिनः—रन्ध्रे = छिद्रे उपनिपतन्ति = समीपस्था भवन्ति ते अनर्थाः = उपद्रवाः, इति यदुच्यते = "छिद्रेष्वनर्था बहु-लीभवन्ति" इति, लोकैरिति शेषः । अव्यभिचारि = सत्यम् ।

---

1 पार्वतायन ।

मुनिसुताप्रणयस्मृतिरोधिना
मम च मुक्तमिदं तमसा मनः ।
मनसिजेन सखे ! प्रहरिष्यता
धनुषि चूतशरश्च निवेशितः ॥ ८ ॥

उक्तं सामान्यं स्ववृत्तान्तेन समर्थयति—**मुनिसुताप्रणयस्मृतिरोधिनेति** । ( हे सखे ! पश्य ) मुनिसुताप्रणयस्मृतिरोधिना तमसा मम इदं मनः मुक्तं च; प्रहरिष्यता मनसिजेन धनुषि चूतशरो निवेशितश्च इत्यन्वयः ।

हे सखे = मित्र माधव्य ! पश्य = विलोकय, मुनिसुताप्रणयस्मृतिरोधिना—मुनिसुतायां = शकुन्तलायां यः प्रणयः = अभिलाषः, तद्विषयिणी प्रार्थनेत्यर्थः । तस्य या स्मृतिस्तां रुणद्धि यत्तेन, तादृशस्मृतिलोपिनेत्यर्थः । राज्ञः शकुन्तलाया मुनिसुतात्वेन संप्रति प्रत्यभिज्ञानात्तथोक्तिः । पूर्ववृत्तान्तानुस्मरणं चानेन व्यज्यते । तमसा = मोहेन मम इदं मनः = चित्तं मुक्तं च इत्येकोऽनर्थः । तत्क्षणमेव प्रहरिष्यता = मत्प्रहारमिच्छता मनसिजेन = कन्दर्पेण धनुषि = सायके चूतशरः = आम्रमुकुलाख्यः पञ्चाभ्यधिको बाणः निवेशितश्च = नियोजितश्च ।

अत्र चकारौ भिन्नक्रमौ प्रिययोर्यौगपद्यं द्योतयतः । मम प्रियावियोगानुस्मरणं वसन्तकालश्च सममेव प्रादुरभूदित्यर्थः । अनेन चोत्कण्ठाया दुर्विषहत्वम्, अहो मे दैववैपरीत्यमित्यात्मनि दैन्यं च द्योत्यते । यदि मूढ एव तिष्ठेयं तर्हि कोऽप्यनर्थो न स्यात्; प्रबुद्धोऽधुना दुःखमनुभवामीत्येकोऽनर्थः; तदेव दुःखं वर्धयन् वसन्तः प्राप्त इति द्वितीयस्तत्रानर्थः । अतो ब्रवीमि, रन्ध्रोपनिपातिनोऽनर्था इति यदुच्यते, तदव्यभिचारि वच इति संगतिः । अत्र तमोरूपप्रतिबन्धकनिवृत्तिमुखेन कार्यस्य स्मरणस्य प्रतिपादनादप्रस्तुतप्रशंसा समुच्चयश्चालंकारौ । भोजराजमते

**विदूषकः**—चिट्ठ दाव । इमिणा दण्डकट्ठेण [1]कन्दप्पवाहिं णासेस्सं ।

तिष्ठ तावत् । अनेन दण्डकाष्ठेन कन्दर्पव्याधिं नाशयिष्यामि । ( इति दण्डकाष्ठमुद्यम्य चूताङ्कुरं पातयितुमिच्छति ।)

**राजा**—(सस्मितम्) भवतु; दृष्टं ब्रह्मवर्चसम् । सखे ! कोप-

---

चात्र स्मरणालंकारः; "अदृष्टादपि स्मरणे स्मरणालङ्कारः" इत्युक्त्वा तदलङ्कारे पद्यमिदमुदाहृतं तेन । द्रुतविलम्बितं वृत्तम् ।

छिद्रेष्वनर्था बहुलीभवन्तीति लोकोक्तेः सत्यतां स्ववृत्तान्तेन समर्थयन् राजा आह—'सखे माधव्य ! पश्य; यावदहं शकुन्तलाप्रणयवृत्तान्तं नास्मार्षं तावत् सुखित एवासम् । संप्रति तु अङ्गुलीयकदर्शनात्प्रभृति मुनिसुतास्मरणप्रतिरोधकेन मोहेन मे मनो मुक्तं सत् स्वकृततदीयप्रत्यादेशपारुष्येण अनुतप्यते, मुनिसुतामुद्दिश्य बाढं समुत्कण्ठते च; अयमेकोऽनर्थः । अत्रान्तरे एव मम अकारणवैरिणेव मां प्रहर्तुमिच्छता मन्मथेन त्रिभुवनविजयिन्यमोघे स्वीये धनुषि च आम्रमुकुलाख्यः पञ्चाभ्यधिको बाणः संयोजितश्च; अयं द्वितीयोऽनर्थः । संप्रति वसन्तसमयाविर्भावात् प्रवृद्धमदनसन्तापोऽहं पूर्वापेक्षया सविशेषं क्लिश्ये' इति भावः ॥ ८ ॥

अथ राज्ञ औत्सुक्यस्यावगाढतां परीक्षितुकामो विदूषको हास्यप्रौढिमवलम्ब्याह—**चिट्ठ दाव** इति । 'तिष्ठ तावत् । अनेन दण्डकाष्ठेन कन्दर्पव्याधिं नाशयिष्यामि' इति संस्कृतम् । तिष्ठ = संतापं मा कृथा इत्यर्थः । कन्दर्पव्याधिं = कामपीडाम् । राजोक्तौ—**सस्मितमिति** । विदूषकीयहास्यवचनश्रवणात्

---

[1] कन्दप्पवाणं ।

विष्टः प्रियायाः किंचिदनुकारिणीषु लतासु दृष्टिं विलोभयामि ?

**विदूषकः**—णं आसण्णपरिआरिआ [1]चदुरिआ भवदा संदिट्ठा; माहवीमण्डवे इमं वेलं अदिवाहिस्सं; तहिं मे चित्तफलअगदं सहत्थलिहिदं तत्तहोदीए सउन्दलाए पडिकिदिं आणेहि त्ति।

नन्वासन्नपरिचारिका चतुरिका भवता संदिष्टा; माधवीमण्डप इमां वेला-

---

स्मितम्। राजाऽपि परिहासगर्भमाह—**भवत्विति**। भवतु = आस्तां कन्दर्पव्याधिनाशनकथयेत्यर्थः। ब्रह्मवर्चसं = ब्राह्मं तेजः दृष्टम् = सर्वानर्थपरिहारसामर्थ्यं तवास्त्येवेति भावः। अथ सन्तापशान्त्युपायं पृच्छति—**सखे! केति**। संबोधनेन नायं परिहासावसरः, किन्तु कन्दर्पव्याधिप्रतीकारश्चिन्त्यतामिति द्योत्यते। किञ्चिदनुकारिणीषु = ईषत्सदृशीषु दृष्टिं विलोभयामि = विनोदयामि, विरहिणां हि प्रियजनसदृक्षानुभवादयो विनोदा भवन्ति। अथ विदूषको विनोदोपायः पूर्वमेव निर्णीत इत्याह—**णं इति**। 'नन्वासन्नपरिचारिका चतुरिका भवता सन्दिष्टा; माधवीमण्डपे इमां वेलामतिवाहयिष्ये; तत्र मे चित्रफलकगतां स्वहस्तलिखितां तत्रभवत्याः शकुन्तलायाः प्रतिकृतिमानयेति' इति संस्कृतम्। नन्वित्याक्षेपे। आसन्नपरिचारिका—आसन्ना = अन्तःपुरकार्येष्वभ्यन्तरा परिचारिका = चेटी। चतुरिकेति तस्या नाम। माधवीमण्डपे इत्यादिरानयेत्यन्तः संदेशप्रकारः। परिचारिकालक्षणं मातृगुप्ताचार्यैरुक्तं यथा—

> संवाहने च गन्धे च तथा चैव प्रसाधने।
> तथाऽऽभरणसंयोगमाल्यसंग्रथनेषु च॥
> विज्ञेया नामतः सा तु नृपतेः परिचारिका। इति।

---

१ लिविअरी मेहाविणी।

मतिवाहयिष्ये; तत्र मे चित्रफलकगतां स्वहस्तलिखितां तत्रभवत्याः शकुन्तलायाः प्रतिकृतिमानयेति।

**राजा**—ईदृशं [1]हृदयविनोदनस्थानम्। तत्तमेव मार्गमादेशय।

**विदूषकः**—इदो इदो भवं।

इत इतो भवान्।

( उभौ परिक्रामतः। सानुमत्यनुगच्छति।)

**विदूषकः**—एसो मणिसिलापट्टअसणाहो माहवीमण्डवो [2]उवआररमणिज्जदाए णिस्संसअं साअदेण विअ णो पडिच्छदि। ता पविसिअ णिसीददु भवं।

---

चित्रफलकगताम्—चित्रफलकः = चित्रलेखनपट्टः, तत्रस्थामित्यर्थः। सादृश्यदर्शनं लतासु, प्रतिकृतिदर्शनं फलके इति सर्वथा विरहिमनोविनोदनं माधवीमण्डपे संपत्स्यते इति भावः। राजा विदूषकोक्तमनुवदन्नाह—**ईदृशमिति**। ईदृशं = सादृश्यप्रतिकृतिदर्शनोभयसम्पादकम्। हृदयविनोदनस्थानमित्यनेन तत्र कालातिवाहनस्यौचित्यं सूच्यते। विदूषको वदति—**इदो इदो इति**। 'इत इतो भवान्' इति संस्कृतम्।

पुनरपि विदूषको वदति—**एसो इति**। एष मणिशिलापट्टकसनाथो माधवीमण्डपः उपचाररमणीयतया निःसंशयं स्वागतेनेव नौ प्रतीच्छति। तत्प्रविश्य निषीदतु भवान्' इति संस्कृतम्। मणिशिलापट्टकसनाथः = प्रशस्तमणिशिलाबद्धः। उपचाररमणीयतया—उपचारः = आस्तरणादिः तेन रमणीयः, तस्य भावस्तत्ता, तया। स्वागतेनेव = शोभनमागमनं ते, इत आस्यताम्,

---

१ हृदयाश्वासनम्। २ उवहाररमणीज्जदाए णिसग्गमारुदेण अ।

एष मणिशिलापट्टकसनाथो माधवीमण्डप उपचाररमणीयतया निःसंशयं स्वागतेनेव नौ प्रतीच्छति । तत्प्रविश्य निषीदतु भवान् ।

(उभौ प्रवेशं कृत्वोपविष्टौ ।)

**सानुमती**—लदासंस्सिदा देक्खिस्सं दाव सहीए पडिकिदिं । तदो से भत्तुणो [1]बहुमुहं अणुराअं णिवेदइस्सं ।

लतासंश्रिता द्रक्ष्यामि तावत्सख्याः प्रतिकृतिम् । ततोऽस्या भर्तुर्बहुमुखमनुरागं निवेदयिष्यामि । (इति तथा कृत्वा स्थिता ।)

**राजा**—सखे ! सर्वमिदानीं स्मरामि शकुन्तलायाः प्रथमवृत्तान्तम् । कथितवानस्मि भवते च । स भवान्प्रत्यादेशवेलायां मत्समीपगतो नासीत् । पूर्वमपि न त्वया कदाचित्संकीर्तितं तत्रभवत्या नाम । कच्चिदहमिव विस्मृतवानसि त्वम् ?

---

अत्रत्यं कुसुमसौरभमनुभूयताम्' इति स्फुटेन वचसेव नौ = आवां प्रतीच्छति = प्रत्युद्गमनेन संभावयतीव ।

अथ सानुमती स्वगतं वदति—**लदासंस्सिदा इति** । 'लतासंश्रिता द्रक्ष्यामि तावत्सख्याः प्रतिकृतिम् । ततोऽस्या भर्तुर्बहुमुखमनुरागं निवेदयिष्यामि' इति संस्कृतम् । लतासंश्रिता—लतां संश्रिता = आश्रिता, लतालीना भूत्वेत्यर्थः । बहुमुखं = बहूनि मुखानि यस्य तादृशम्, प्रतिकृतिदर्शनाद्यनेकप्रकारविशिष्टं शतधारं स्रवन्तमित्यर्थः ।

अथ मनोविनोदनायोपविष्टो राजा प्रियावृत्तान्तं सर्वमप्यनुस्मरन् तत्प्रस्तावमाह—**सखे इति** । शकुन्तलायाः प्रथमवृत्तान्तम् = आश्रमे परिचयादिकम् । प्रत्यादेशवेलायां मत्समीपगतो नासीत्—प्रत्यादेशस्य = परित्यागस्य वेलायां =

---

१ बहुमदं ।

**विदूषकः**—ण विसुमरामि, किंतु सव्वं कहिअ अवसाणे उण तुए परिहासविअप्पओ एसो, ण भूदत्थो त्ति आचक्खिदं। मए वि मिप्पिण्डबुद्धिणा तह एव्व गहीदं। अहवा भविदव्वदा क्खु बलवदी!

न विस्मरामि, किंतु सर्वं कथयित्वाऽवसाने पुनस्त्वया परिहासविजल्प एषः, न भूतार्थ इत्याख्यातम्। मयाऽपि मृत्पिण्डबुद्धिना तथैव गृहीतम्। अथवा भवितव्यता खलु बलवती!

**सानुमती**—एव्वं णेदं!

एवं नु एतत्!

---

समये हंसपदिकासकाशं प्रेषितः। यदि भवान् प्रत्यादेशकाले मत्समीपेऽभविष्यत् तर्हि मामवश्यं प्रत्यबोधयिष्यत्; ततः प्रत्यादेशोऽपि नाभविष्यत् इति भावः। कच्चिदिति प्रश्नमात्रे। विदूषको वदति—**ण इति**। 'न विस्मरामि, किन्तु सर्वं कथयित्वा अवसाने पुनस्त्वया परिहासविजल्प एषः, न भूतार्थः इत्याख्यातम्। मयाऽपि मृत्पिण्डबुद्धिना तथैव गृहीतम्। अथवा भवितव्यता खलु बलवती' इति संस्कृतम्। अवसाने = वाक्यशेषे। भूतार्थः = सत्यार्थः, "वृत्ते क्ष्मादावृते भूतम्" **इत्यमरः**। इत्याख्यातं = 'परिहासविजल्पितं सखे! परमार्थेन न गृह्यतां वचः' इत्यादिनोक्तम्। मृत्पिण्डबुद्धिना = मृत्पिण्डमिव बुद्धिर्यस्य तेन, जडबुद्धित्वात् कपटानभिज्ञेन यथोक्तग्राहिणा चेत्यर्थः। अथवा = पक्षान्तरे, किमनया पर्यालोचनया? भवितव्यता बलवती—त्वया परिहासविजल्पितमिदमित्यपि संकथासु मया न कथितम्; अतोऽत्र भवितव्यतैव हेतुरित्यर्थः।

अथ सानुमती राज्ञो विस्मरणस्यासंभाव्यतां विचिन्त्य अथवेत्युक्तमनुवदति—**एव्वं इति**। 'एवं नु एतत्' इति संस्कृतम्। एतद्भवितव्यतानिबन्धनमेवेति भावः।

राजा—( ध्यात्वा ) सखे ! त्रायस्व माम् ।

विदूषकः—भो ! किं एदं ? अणुववण्णं क्खु ईदिसं तुइ । कदा वि सप्पुरिसा सोअवत्तव्वा ण होन्ति । णं पवादे वि णिक्कम्पा गिरीओ !

भोः ! किमेतत् ? अनुपपन्नं खल्वीदृशं त्वयि । कदाऽपि सत्पुरुषाः शोकवक्तव्या न भवन्ति । ननु प्रवातेऽपि निष्कम्पा गिरयः !

राजा—वयस्य ! निराकरणविक्लवायाः प्रियायाः समवस्थामनुस्मृत्य बलवदशरणोऽस्मि ।

---

अथ प्रियां ध्यायन् राजा मदनसंतापातिशयमसहमानो विदूषकमाह—**सखे इति** । अत्र भवानेव मे शरणमिति संबुद्ध्या सूच्यते । त्रायस्व मामित्यनेन दुःखपारवश्यं च । विदूषको राजानमाश्वासयन्नाह—**भो इति** । 'भोः! किमेतत् ? अनुपपन्नं खल्वीदृशं त्वयि । कदाऽपि सत्पुरुषाः शोकवक्तव्या न भवन्ति । ननु प्रवातेऽपि निष्कम्पा गिरयः' इति संस्कृतम् । त्वयि = धैर्यादिगुणशालिनीत्यर्थान्तरसंक्रमितम् । शोकवक्तव्याः—शोके—जाते अन्येन वक्तव्याः = निन्द्याः न भवन्तीत्यर्थः । अत्र अप्रस्तुतप्रशंसा । दृष्टान्तमाह—**नन्विति** । प्रवातेऽपि = अतिशयितवातेऽपि । गिरयः = पर्वताः । निष्कम्पाः = निश्चलाः । समानार्थः प्रयोगो यथा **रघुवंशे**—"न पादपोन्मूलनशक्तिरंहः शिलोच्चये मूर्च्छति मारुतस्य" इति । अथ राजा विदूषकं प्रत्यात्मनः शोकस्य प्राबल्यमाह—**वयस्येति** । निराकरणविक्लवायाः—निराकरणेन = प्रत्याख्यानेन विक्लवायाः = विह्वलायाः । अनुस्मृत्य = ध्यात्वा बलवत् = अत्यर्थम् अशरणः = परवशः ।

सा हि—

इतः प्रत्यादेशात्स्वजनमनुगन्तुं व्यवसिता
[1]स्थिता तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे ।
पुनर्दृष्टिं बाष्पप्रसरकलुषामर्पितवती
मयि क्रूरे यत्तत्सविषमिव शल्यं दहति माम् ॥९॥

उक्तमर्थं विवृणोति—सा हि—इत इति। इतः प्रत्यादेशात् हि सा स्वजनमनुगन्तुं व्यवसिता गुरुसमे गुरुशिष्ये तिष्ठ इति उच्चैः वदति स्थिता। बाष्पप्रसरकलुषां दृष्टिं पुनः क्रूरे मयि अर्पितवती (इति) यत् तत् सविषं शल्यमिव मां दहति इत्यन्वयः।

इतः = अस्माज्जनात्, मत्सकाशादित्यर्थः। प्रत्यादेशात् = निराकरणात् हि सा = शकुन्तला स्वजनं = शार्ङ्गरवादिकं बन्धुजनम् अनुगन्तुम् = अनुयातुं व्यवसिता = उद्युक्ता। अत्र इतः प्रत्यादेशादिति कथनेन 'भर्ता रक्षति यौवने' इति न्यायात् प्रत्यादेशस्यात्यन्तमनौचित्यमुभयलोकविरोधश्चेति नावधारितमिति द्योत्यते। स्वजनमनुगन्तुं व्यवसितेत्यनेन च भर्तृपरित्यागे स्वजनगमनानुव्यसायो युक्त एवेति च सूच्यते। गुरुसमे—गुरुणा = पित्रा कण्वेन समे = तुल्ये गुरुशिष्ये = शार्ङ्गरवे तिष्ठ = विरम अनुगमनात्, इति उच्चैः = गभीरं वदति सति = कथयति सति। अत्र उच्चैरित्यनेन शिष्यस्य कोपो व्यज्यते। गुरुशिष्ये इत्यनेन गौरवम्। गुरुसमे इत्यनेन तदतिशयः, तेन तद्वचनस्यानुल्लङ्घनीयत्वं च द्योत्यते। स्थिता = गमनाद्विरता बाष्पप्रसरकलुषाम्—बाष्पाणां = नेत्रजलानां प्रसरः = प्रवृत्तिस्तेन कलुषाम् = आविलां दृष्टिं पुनः = भूयोऽपि क्रूरे = निर्दये मयि = निर्घृणहृदये

१ मुहुः।

परोपकारानिरते तादृशनिरुपाधिवञ्चके अलीकधर्मकञ्चुके इत्याद्यर्थान्तरसंक्रमितम् । अर्पितवती = दत्तवती इति = एतत्सर्वम् यत् तत् सविषं = विषदिग्धं शल्यमिव = शङ्कुरिव मां दहति = संतापयति ।

बाष्पप्रसरकलुषामिति दृष्टिविशेषणेन गत्यन्तराभावात् तस्यास्तादात्विको दुःखातिशयो व्यज्यते । तथाविधां दृष्टिमर्पितवतीत्यनेन 'अयम् इदानीं वा गृह्णीयात्' इति शकुन्तलाया अभिप्रायः, तेन तस्या दयनीयत्वं च ध्वन्यते । क्रूरे इत्यनेन तदानीमप्यनुग्रहाभावादत्यर्थं कठोरहृदय इति आत्मनि निर्वेदो व्यज्यते । तदित्यनेनानुभूततथाविधदृष्ट्यर्पणं परामृश्यते, अर्पिता दृष्टिरिति पर्यवस्यति; विशिष्टदृष्टेरेव विशिष्टशल्यसाम्यात् । अत्रोपमया दहनस्य प्रतिक्षणं दुःसहत्वम् , वर्तमाननिर्देशेनानवसानं च द्योत्यते । अत्र दृष्टेर्दाहकत्वासंभवात् मुख्यार्थबाधे कार्यकारणसंबन्धात् तापं लक्षयत्तदतिशयं व्यञ्जयतीति दहतिपदमत्यन्ततिरस्कृतवाच्यम् । मया प्रत्याख्याता सा बन्धुजनमनुगता तेनापि परित्यक्ता पुनर्मामेव प्राप्ता ; क्रूरस्त्वहं तथापि विमुख एवासम् ; अद्य पुनस्तत्सर्वं स्मृत्वा शोकपरवशो भवामीत्याशयः । अत्र नायकगताश्चिन्ताविषादौत्सुक्यादयो भावा व्यज्यन्ते । उपमा, तादृशदृष्टेस्तादृशेऽर्पणात् समं च । शिखरिणी वृत्तम् ।

प्रमदवने नर्मसचिवेन माधव्येन सह एकान्ते समुपविष्टो राजा दुष्यन्तो मोहात् स्वयं निराकृतायाः प्रियायाः समवस्थामनुस्मृत्य अत्यर्थं शोकपरवशस्तात्कालिकीं स्वमनोवस्थां विदूषकं प्रति कथयन्नाह—'सखे माधव्य ! विचारयन्नपि नावगन्तुं पारयामि कथं मम तदानीं तादृशो मोहोऽभूदिति । तदानीं मोहान्धेन मया सर्वथा प्रत्यादिष्टा सा बाला अगतितया शार्ङ्गरवादिकं स्वबन्धुजनमनुगन्तुं व्यवसिताऽभूत् । अथ ज्येष्ठत्वात् गुरुसमेन अनुलङ्घनीयवचसा शार्ङ्गरवेण सक्रोधं 'विरमास्मदनुगमनात्' इत्युच्चैरादिष्टा स्थिताऽभूत् । तदानीं कदाचिदहं दयाक्रान्तः

**सानुमती**—अम्महे ! ईदिसी [1]स्वकज्जपरदा ! इमस्स संदावेण अहं रमामि ।

अहो ! ईदृशी स्वकार्यपरता ! अस्य संतापेनाहं रमे ।

**विदूषकः**—भो ! अत्थि मे तक्को केण वि तत्तहोदी आआ-सचारिणा णीदे त्ति ।

भोः ! अस्ति मे तर्कः केनापि तत्रभवती आकाशचारिणा नीतेति ।

---

पुनरेनां गृह्णीयामित्याशया अश्रुजलप्रसराविलां दयनीयां दृष्टिं नितान्तं क्रूरे अलीक-धर्मकञ्चुके मयि अर्पितवती । परन्तु नृशंसेन मया सोऽपि तस्याः प्रणय उपेक्षित एव । अशरणभावेन तया तदानीं मयि कृतो दृष्टिक्षेपः स्रियमाणः सन्नद्यापि सविषं शल्यमिव मदन्तरङ्गं दहत्येव । इत्थमस्यास्तथाविधं दृष्टिक्षेपं यदा यदाऽहं स्मरामि तदा तदा बलवदशरणो भवामि' इति भावः ॥ ९ ॥

राज्ञ उक्तं श्रुत्वा सानुमती स्वगतमाह—**अम्महे इति** । 'अहो ! ईदृशी स्वकार्यपरता ! अस्य संतापेनाहं रमे' इति संस्कृतम् । स्वकार्यपरता = स्वार्थनिष्ठता । सर्वेषामिति शेषः । अयमर्थान्तरन्यासः । रमे = हृष्यामि । अस्य सन्तापेन मम संतोष इत्यर्थः । सन्तापे संतोष इति विषमम् । एतद्वाक्यार्थसमर्थकः पूर्वोक्तोऽर्था-न्तरन्यासः । यथा यथाऽस्य तापस्तथा तथा शकुन्तलानयनोपायं प्रति प्रयत्नवान् भविष्यतीत्याशयः ।

अथ नर्मसचिवो विदूषकः किंचित्संतापशमनाय राजानं रसान्तरे प्रवेशयन्नाह—**भो ! अत्थि इति** । 'भोः ! अस्ति मे तर्कः केनापि तत्रभवती आकाशचारिणा नीतेति' इति संस्कृतम् । केनापि = केनापि पुरुषेण । आकाशचारिणा = व्योमवि-

---

[1] परवसदा इमस्स मम्पि सन्दावेदि ।

राजा—कः पतिदेवतामन्यः परामर्ष्टुमुत्सहेत ? मेनका किल सख्यास्ते जन्मप्रतिष्ठेति श्रुतवानस्मि; तत्सहचारिणीभिः सखी ते हृतेति मे हृदयमाशङ्कते ।

सानुमती—[1]संमोहो क्खु विह्मअणिज्जो ण पडिबोहो ।

संमोहः खलु विस्मयनीयो न प्रतिबोधः ।

विदूषकः—जइ एव्वं, अत्थि क्खु समाअमो कालेण तत्तहोदीए ।

यद्येवम् , अस्ति खलु समागमः कालेन तत्रभवत्या ।

हारिणा । नीतेति = अपहृतेति । अतस्तत्प्रतीकाराय प्रयत्नः कार्यं इति भावः । अथ राजा तन्नेत्याह— क इति । पतिदेवतां = पतिव्रताम् । इदं हेतुगर्भम् । परामृष्टुम् = स्प्रष्टुम् । जन्मप्रतिष्ठा = जन्मस्थानम् । "प्रतिष्ठा स्थानमात्रके" इति विश्वः ।

अथ सानुमती दुर्ज्ञेयेऽपि अप्सरोभिः शकुन्तलाहरणे वस्तुनि यथावत्प्रतिभाप्रसरणेन राजानं श्लाघमाना विस्मरणस्यात्यन्तासंभाव्यतां परामृशति—संमोहो इति । 'संमोहः खलु विस्मयनीयो न प्रतिबोधः' इति संस्कृतम् । संमोहः = पूर्वं शकुन्तलाया विस्मरणम् । प्रतिबोधः = पश्चात्स्मरणम् । विस्मयनीयत्वे तदभावे च प्रतिभाविशेषशालित्वं हेतुः । यस्य सामान्यजनदुर्ज्ञेये वस्तुनि इत्थं प्रतिभा प्रसरति, तस्यैवेदृक् संमोहो विस्मयजनक इत्यर्थः ।

अथ राजवचनेन आश्वासनोपायं पश्यन् विदूषक आह—जईति । 'यद्येवम्, अस्ति खलु समागमः कालेन तत्रभवत्या' इति संस्कृतम् । यदि मेनकाऽऽज्ञया तत्सहचारिणीभिरेव शकुन्तला हृता तर्हि किञ्चित्कालानन्तरं तया सह तव समागमो

१ संमोहे वि विह्मअणीओ क्खु इमस्स पडिबोधो ।

**राजा**—कथमिव ?

**विदूषकः**—ण क्खु मादापिदरा भत्तविओअदुक्खिअं दुहिदरं देक्खिदुं पारेन्ति ।

न खलु मातापितरौ भर्तृवियोगदुःखितां दुहितरं द्रष्टुं पारयतः ।

**राजा**—वयस्य !

स्वप्नो नु माया नु मतिभ्रमो नु
'क्लिष्टं नु तावत्फलमेव पुण्यम्' [2] ।
असंनिवृत्त्यै तदतीतमेते
मनोरथानामतटप्रपाताः ॥ १० ॥

---

भविष्यतीत्यर्थः । राजा तत्र हेतुं पृच्छन्नाह—**कथमिवेति** । विदूषक आह—**ण क्खु इति** । 'न खलु मातापितरौ भर्तृवियोगदुःखितां दुहितरं द्रष्टुं पारयतः' इति संस्कृतम् । पारयतः = शक्नुतः । न खल्विति संबन्धः । अतो मेनका त्वया तां संयोजयिष्यतीत्यर्थः ।

अथ राजा स्नेहः पापशङ्कीति नीत्या तन्नेति विदूषकमाह—**वयस्य ! स्वप्नो न्विति** । असन्निवृत्त्यै अतीतं तत् स्वप्नो नु, माया नु, मतिभ्रमो नु, तावत्फलमेव क्लिष्टं पुण्यं नु ! हे वयस्य ! एते मनोरथानाम् अतटप्रपाताः । यद्वा—एते मनोरथाः तटप्रपाता नाम इत्यन्वयः ।

असन्निवृत्त्यै = पुनर्निवर्तनाभावाय । अनेनोत्कण्ठातिशयो व्यज्यते । अतीतं = गतं तत् = पूर्वानुभूतं शकुन्तलासमागमरूपं वस्तु, तत्संगमनं तत्सुखं वा । तत्र स्वप्नादिभिश्चतुर्भिर्वितर्कैरत्यन्तासंभावनीयदर्शनीयत्वं व्यज्यते । तत्र "अदृष्ट-

---

१ क्लसम् । २ पुण्यैः ।

मप्यर्थमदृष्टवैभवात्करोति सुस्विजनदर्शनातिथिम्" इत्युक्तेः स्वप्ने संभाव्यते एतत् इति 'स्वप्नो नु' इति पूर्ववितर्कः। स्वप्नः = स्वाप्नं वस्तु । नुशब्दः सर्वत्र संशये । स्वप्नश्चेत् जाग्रदवस्थायां नानुभूयते इत्यत आह—माया नु—मन्त्रतन्त्राभ्यामसतः प्रकटनं माया, तस्याः कपटघटितत्वाद्विषयसत्त्वाभाव इति भावः । ऐन्द्रजालिकादिनिर्मितं वस्त्वित्याशयः । स्यादेवम्, यद्यधिष्ठानं न प्रतीतं स्यादित्यत आह—मतिभ्रमो नु = मतिभ्रमेण प्रतीतं वस्तु । यथा रज्ज्वादौ सर्पादि । तेन अन्याधिष्ठाने शकुन्तलाभ्रम इत्यर्थः । स्यादेवम्, यदि व्यवहारक्षमत्वं न स्यादत आह—तावत्फलमेव क्लिष्टं पुण्यं नु—यावान् व्यवहारः संभाषणादिर्जातः, तावदेव = तत्परिमितमेव फलं यस्य तत् । क्लिष्टम् = अत्यल्पम् । तादृशः कश्चिदत्युत्कृष्टो धर्मः पूर्वजन्मन्यत्यल्प एवाचरितः, यस्य तादृक् अल्पं फलम्; भोगेन क्षीणं पुण्यं नु इत्यर्थः । एवं चतुर्ष्वपि पक्षेषु तया पुनः समागमः असम्भवोऽत आह—हे वयस्य = हे सखे ! माधव्य ! एवमतीतस्य तस्य असन्निवृत्तिं स्वाप्नादिभिश्चतुर्भिः संदेहैरुपपाद्य तस्यात्ययं विशेषरूपं सामान्येन समर्थयति—एते इति । एते स्वाप्नादयश्चत्वारः पक्षाः मनोरथानाम् = अभिलाषाणाम्, पुनःसमागमाभिलाषाणामित्यर्थः । अतटप्रपाताः—अतटरूपाः = तुङ्गशैलाग्ररूपाः प्रपाताः = अधःपतनस्थानानि । स्वप्नमायामतिभ्रमैः कृतानां मिथ्यात्वात्तेषां पुनः प्राप्तिरसंभवा । पुण्यस्य च क्लिष्टत्वात्तथैव । तद्यथा शैलाग्रात्पतितो न प्रत्यावर्तते तथैव ममाप्ययं पुनःसमागमाभिलाषो न सम्पत्स्यते इत्यर्थः । यद्वा एते = त्वया उच्यमानाः, मया वा आशास्यमानाः मनोरथाः = मनोरथविषयाः ते तटप्रपाताः—तटस्य = नदीकूलस्य प्रपात इव प्रपातो येषां ते । प्रपातो विनाशः पतनं च । यथा वर्षासमये गङ्गादेस्तटा ओघेन पीड्यमाना अहमहमिकया पतन्ति, एकः पतति, तदुपरि अन्यः; तदुपरि इतरः; एवम् मनोरथानामेके विलीयन्ते, अन्ये

उत्पद्यन्ते; तेऽपि विलीयन्ते, तदितरे उत्पद्यन्ते इत्यर्थः। नामेत्यलीके। अलीका मनोरथा इत्यर्थः।

अत्र संदेहोऽर्थान्तरन्यासश्च। विषादमत्यादयो भावाः। इन्द्रवज्रोपेन्द्रवज्रयोर्द्वादशी उपजातिः।

राज्ञ आश्वासनाय पुनरपि शकुन्तलासंगमो भविष्यतीति वादिनं विदूषकं निषिद्ध्य शकुन्तलासंगमस्यात्यन्तासंभाव्यतां वर्णयन् राजा वदति—'हे वयस्य माधव्य! यदुच्यते भवता पुनः शकुन्तलासङ्गमः सम्भवीति, तत्र नाहं विश्वसिमि। पश्य; यो मम शकुन्तलया संगमो जातः, यच्च तदानीं मया लोकोत्तरं सुखमनुभूतम्, तत् सर्वथा पुनर्निवर्तनाभावाय बाढमतीतमेव। तस्य वास्तविकत्वेऽपि इदानीं ससन्देहं मे मनः; कदाचिन्मया स्वप्ने एवेदं सर्वमनुभूतं स्यात्! तदपि न संभवति; जाग्रदवस्थायां तदनुभवस्य स्मरणात्। अतस्तर्कयामि, मन्त्रतन्त्राभ्यामसतः प्रकटनात्मिका सा माया स्यात्! किन्तु शकुन्तलारूपस्याधिष्ठानस्य तत्र प्रतीतेर्निरधिष्ठानं वस्तुवैचित्र्यप्रदर्शिता माया न संभवति। अतो मन्ये मतिभ्रमः स्यादिति! अन्यस्यामेव योषिति शकुन्तलात्वभ्रमः सम्पन्न इति! किन्तु तथा सति व्यवहारक्षमत्वं न संभवति। प्रकृते तु तथाव्यवहारस्य स्फुटं स्मरणात् मतिभ्रमोऽपि वक्तुं न शक्यते। अतो मन्ये मया पूर्वस्मिन् जन्मनि कश्चिदत्युत्कृष्टो धर्मः अत्यल्प एवाचरितः। यस्य तादृगल्पं फलं मुहूर्तं शकुन्तलासमागमरूपेण सम्पन्नम्। अथ क्षीणे पुण्ये निमित्तापाये नैमित्तिकस्याप्यपाय इति दिशा तादृशपुण्यजन्यं समागमसुखमपि चिरायावसितमिति। एवं चतुर्ष्वपि पक्षेषु तया पुनःसमागमोऽसम्भवः। तत् हे वयस्य! यथा शैलाग्रात्पतितो न प्रत्यावर्तते, तथैव ममाप्ययं पुनःसमागमाभिलाषो न संपत्स्यते। यद्वा हे वयस्य! अतः परमेते त्वया उच्यमाना मया वा आशास्यमाना मनोरथास्तटप्रपाता एव।

**विदूषकः**—मा एव्वं । णं अङ्गुलीअअं एव्व णिदंसणं अवस्सं-भावी अचिन्तणिज्जो समाअमो होदि त्ति ।

मैवम् । नन्वङ्गुलीयकमेव निदर्शनमवश्यंभाव्यचिन्तनीयः समागमो भवतीति ।

**राजा**—(अङ्गुलीयकं विलोक्य) अये ! इदं तावदसुलभस्थानभ्रंशि शोचनीयम् !

---

यथा वर्षासमये गङ्गादिनदीतटाः प्रवाहजवेन पीड्यमाना एकस्योपर्यन्यः, तदुपरीतर इति क्रमेण पतन्ति; एवमेव मनोरथानामेके विलीयन्ते, अन्ये उत्पद्यन्ते; तेऽपि विलीयन्ते, तदितरे उत्पद्यन्ते । इत्थं च सर्वथा अलीका एव ते' इति भावः ॥ १० ॥

अथ विदूषको नैराश्यस्य नात्रावकाश इति प्रतिसमाधत्ते—मा एव्वं इति । 'मैवम् । नन्वङ्गुलीयकमेव निदर्शनमवश्यम्भावी अचिन्तनीयः समागमो भवतीति' इति संस्कृतम् । मैवम्—भणेति शेषः । निदर्शनं = दृष्टान्तः । अचिन्तनीयः = अप्रतर्क्यः । यथा भवितव्यताबलेन यत्रकुत्रचिद्भ्रष्टस्य जले पतितस्य मत्स्येन च गिलितस्याङ्गुलीयकस्य पुनः समागमोऽभूत्तथा प्रियतमाया अपि भवेदित्यर्थः । अतो न शोचनीयमिति भावः ।

अथ प्रियागममसंभाव्यमेव मन्वानो राजा निदर्शनद्वारेणोद्बोधितमचेतन-मङ्गुलीयकं चेतनवदनुशोचति— अये इति । इदम् = अङ्गुलीयकम् । तावत् = प्रथमम् । पश्चात् सा शोचनीयेति भावः । असुलभस्थानभ्रंशि—असुलभात् = सुकृतशतलभ्यत्वेनातः परं दुष्प्रापात् स्थानात् = शकुन्तलाङ्गुलिप्रदेशात् भ्रंशि = अधःपतनशीलम्, अत एव शोचनीयम् = तत्प्रत्यापत्त्यभावाच्छोचितुमर्हम् ।

तव सुचरितमङ्गुलीय ! नूनं
प्रतनु [1]ममेव विभाव्यते फलेन ।
अरुणनखमनोहरासु तस्या-
श्च्युतमसि लब्धपदं यदङ्गुलीषु ॥ ११ ॥

अत्र हेतुमाह—**तवेति** । हे अङ्गुलीय ! फलेन विभाव्यते (यद्) तव सुचरितं नूनं ममेव प्रतनु । यत् अरुणनखमनोहरासु तस्या अङ्गुलीषु लब्धपदं च्युतमसि इत्यन्वयः ।

हे अङ्गुलीय = अङ्गुलीभूषण ! अत्र दैन्यद्योतिकया संबोधनकाका इदानीमयं जनो दौर्भाग्ये तव सब्रह्मचारी जात इति द्योत्यते । फलेन = त्वयाऽनुभूतेन, अत्यल्पफलत्वेन हेतुनेत्यर्थः । विभाव्यते = अनुमीयते यत् तव सुचरितं = पुण्यं नूनं = निश्चयेन ममेव = ममाल्पपुण्यमिव प्रतनु = अत्यल्पम् । अतीन्द्रियस्य धर्मस्य प्रतनुत्वं कथं ज्ञातुं शक्यते इत्यत आह—**अरुणेत्यादि** । यत् = यस्मात् अरुणनखमनोहरासु—अरुणैः = आरक्तैः नखैः = नखरैः मनोहरासु = मनोरमासु तस्याः विजितत्रिभुवनसुन्दर्या मयि निर्व्याजमनुरक्तायाः पुरः परिस्फुरन्त्या इव शकुन्तलाया अङ्गुलीषु = करशाखासु । बहुवचनेन आदरात् अङ्गुलीयस्य प्रत्यङ्गुलि प्रतिक्षणमामोचनं ध्वन्यते । पुरुषाङ्गुलीयस्य स्थूलत्वात् कदाचित्कनिष्ठिकायाम्, तत्र शिथिलं सत् अन्याङ्गुलौ, तत्रापि तथाविधमितराङ्गुल्यामिति बहुवचनाभिप्रायो वा । प्रेमातिशयेन वा सर्वाङ्गस्पृष्टिकेव सर्वाङ्गुलीषु निक्षेपः । यद्वा विरहातिकृशतया मुकुलीकृतासु पञ्चस्वङ्गुलीषु सममेव विन्यासाद्बहुवचनोपपत्तिः ।

1 कृशेन ।

तथाविधोऽभियुक्तानां प्रयोगो यथा—"तस्याः किञ्चित्सुभग ! तदभूत्तानवं तद्वियोगाद्येनाकस्माद्वलयपदवीमङ्गुलीयं प्रयाति" इति । लब्धपदं = महता भाग्योदयेन यथाकथञ्चित्प्राप्तस्थित्यपि सत् च्युतमसि = भ्रष्टमसि ।

अरुणनखमनोहरास्वित्यङ्गुलीविशेषणे अरुणेति विशेषणं नखस्येव तलस्याप्युपलक्षकम् । अङ्गुलीनां मनोहरत्वं च नातिस्थूलत्वेन, नातिकृशत्वेन, नातिह्रस्वत्वेन, नातिदीर्घत्वेन, अवक्रत्वेन, सरलत्वेन चेत्यर्थः । एतेन स्वयोग्यत्वं ध्वन्यते । अङ्गुलीलक्षणं च यथोक्तं **सामुद्रे स्त्रीलक्षणे**—

नातिह्रस्वा नातिदीर्घा न स्थूला न कृशा अपि ।
अवक्राः सरला रक्तनखा रक्ततला अपि ॥
कोमलाः सितबिन्द्वाढ्या भङ्गुरा दीप्तिमन्नखाः ।
तादृगङ्गुलयो यस्याः सा भवेद्राजवल्लभा ॥ इति ।

अत्र उपमा, अनुमानम्, काव्यलिङ्गं चालङ्काराः । केषाञ्चिन्मते नात्रोपमालङ्कारः संभवति । अनेन नायकस्योन्मादावस्थाप्रवेशो वर्णितः । पूर्ववद्विषादादयो भावा व्यङ्ग्याः । पुष्पिताग्रा वृत्तम् ।

अङ्गुलीयकनिदर्शनेन पुनरप्यवश्यम्भाविनं शकुन्तलाया अचिन्तनीयं समागमं निर्दिशतो विदूषकस्य वचनेन सञ्जाताङ्गुलीयकस्मृती राजा स्वाङ्गुलिगतं तद्विलोक्य 'अये ! इदं तावदसुलभस्थानभ्रंशि शोचनीयम्' इत्यादिना अङ्गुलीयकमुद्दिश्य शोकप्रलापमारभते—'हे अङ्गुलीयक ! यथा मम पुण्यमल्पमेवास्ति, तथैव तवापि तदल्पमेवेति फलेनानुमिनोमि । अल्पपुण्योऽहं लोकातिशायिसौन्दर्याया अप्सरःसंभवायाः प्रियायाः शकुन्तलायाः स्वल्पसुकृतोपनतं क्षणिकं समागमसुखमासाद्य मोहान्धः पुण्यक्षयपरिणतया दुर्वृत्त्या प्रेरितः सन् तां स्वयमेव प्रत्याख्याय हारितवानस्मि । लब्धावबोधश्च संप्रति चिराय विलपामि ।

**सानुमती**—जइ अण्णहत्थगदं भवे, सच्चं एव्व सोअणिज्जं भवे !

यद्यन्यहस्तगतं भवेत्, सत्यमेव शोचनीयं भवेत् !

**विदूषकः**—भो ! इअं णाममुद्दा केण उग्घादेण तत्तहोदीए हत्थाब्भासं पाविदा ?

भोः ! इयं नाममुद्रा केनोद्घातेन तत्रभवत्या हस्ताभ्याशं प्रापिता ?

**सानुमती**—मम वि कोदूहलेण आआरिदो एसो ।

ममापि कौतूहलेनाकारित एषः ।

---

अङ्गुलीयकेन त्वयाऽपि अरुणवर्णनखप्रभाभासुरासु प्रियायास्तस्या अङ्गुलीषु पर्यायेण पूर्वंपुण्यवशात्कतिचिदहानि पदमवाप्य क्षीणे पुण्ये शचीतीर्थं वन्दमानायास्तस्या अङ्गुलिसकाशादधो निपत्य मत्स्योदरे स्थितिरासादिता । तन्मन्ये त्वमपि अहमिव अल्पपुण्यमेवेति सुतरां शोच्यमसि' इति भावः ॥११॥

अथ सानुमती अङ्गुलीयकमिदानीमत्युन्नतस्थानस्थितम्, अतो न शोच्यमित्याह—**जइति** । 'यद्यन्यहस्तगतं भवेत्, सत्यमेव शोचनीयं भवेत्' इति संस्कृतम् । अन्यहस्तगतं भवेत् = राजानं विहाय अन्यस्य हस्तगतं भवेदित्यर्थः । तर्हीति शेषः । राज्ञः प्रशंसनमिदम् ।

विदूषकः पृच्छति—**भो इति** । 'भोः ! इयं नाममुद्रा केनोद्घातेन तत्रभवत्या हस्ताभ्याशं प्रापिता ?' इति संस्कृतम् । नाममुद्रा = भवन्नाममुद्राऽङ्कितमङ्गुलीयकमित्यर्थः । केनोद्घातेन = केनोपक्रमेण । "उद्घातः कथ्यते धीरैः स्खलिते समुपक्रमे" इति **धरणिः** । हस्ताभ्याशं = हस्तनैकट्यम् । प्रापिता—भवतेति शेषः । त्वया तस्यै किमर्थं दत्तेति वचने अनौचित्यप्रसंगादेतादृगुक्तिः ।

सानुमती वदति—**मम वि इति** । 'ममापि कौतूहलेनाकारित एषः'

**राजा**—श्रूयताम्; स्वनगराय प्रस्थितं मां प्रिया सबाष्पमाह—कियच्चिरेणार्यपुत्रः प्रतिपत्तिं दास्यतीति ।

**विदूषकः**—तदो तदो ?

ततस्ततः ?

**राजा**—पश्चादिमां मुद्रां तदङ्गुलौ निवेशयता मया प्रत्यभिहिता—

एकैकमत्र दिवसे दिवसे मदीयं
नामाक्षरं गणय गच्छति यावदन्तम् ।
तावत्प्रिये ! मदवरोधगृहप्रवेशं[1]
नेता जनस्तव समीपमुपैष्यतीति ॥१२॥

तच्च दारुणात्मना मया मोहान्नानुष्ठितम् ।

---

इति संस्कृतम् । आकारितः = अङ्कुरितः । आकारित इवेति गम्योत्प्रेक्षा । ममाप्येतच्छ्रवणे कौतूहलमासीत्; तदेवानेन पृष्टमिति भावः ।

राजोत्तरयति—**श्रूयतामिति** । अवहितो भवेति भावः । सबाष्पमित्यनेन स्मर्यमाणतया भाविनो वियोगस्य दुःसहत्वं द्योत्यते । कियच्चिरेण = कतिभिर्दिवसैः । प्रतिपत्तिं = वार्ताम्, संदेशमिति यावत् । "प्रतिपत्तिः प्रवृत्तौ स्यात्" इति धरणिः । विदूषकः पृच्छति—**तदो तदो इति** । 'ततस्ततः' इति संस्कृतम् । राजोत्तरयति—**पश्चादिति** । इमां मुद्राम् = इदं मन्नाममुद्राङ्कितमङ्गुलीयकम् । निवेशयता = परिधापयता प्रत्यभिहिता = प्रत्युक्ता । प्रियेत्यनुषज्यते ।

प्रत्यभिधानप्रकारमाह—**एकैकमिति** । हे प्रिये ! अत्र दिवसे दिवसे एकैकं

---

1 मदवरोधनिदेशवर्ती ।

मदीयं नामाक्षरं गणय। यावदन्तं गच्छति, तावत् मदवरोधगृहप्रवेशं नेता जनस्तव समीपमुपैष्यतीति इत्यन्वयः।

हे प्रिये = शकुन्तले! अत्र = अस्मिन्नङ्गुलीयके दिवसे दिवसे = प्रतिदिनम्। वीप्सायां द्विर्वचनम्। एकैकम् = एकम् एकम्, एकमेव; न द्वे त्रीणि वा। मदीयम् = मत्संबन्धि नामाक्षरं = नामात्मकमक्षरजातं गणय = एकं द्वे त्रीणि इति क्रमेण संख्यानं कुरु। यावत् = यावत्कालं तद्गणनम् अन्तम् = अक्षराणामवसानं गच्छति, यावद्गणनसमाप्तिरित्यर्थः। तावत् = त्रिचतुरैर्दिनैरित्यर्थः। मदवरोधगृहप्रवेशम्—मम अवरोधगृहम् = अन्तःपुरम्, तत्र प्रवेशं = द्वारं नेता = प्रापकः जनः = त्वदानयनयोग्यः कश्चिन्मदीयो जन इत्यर्थः। तव समीपं = निकटम् उपैष्यति = अभिगमिष्यति; इति = एतत्। मयाऽपि प्रत्यभिहिता इति पूर्वेण संबन्धः।

तच्च = तत् प्रियानेतृजनप्रेषणम्। चकारो विस्मरणस्यात्यन्तमसंभाव्यतां द्योतयति। दारुणात्मना = क्रूरहृदयेन। इदं निर्वेदगर्भमभिधानम्। मोहादिति। मोहस्य विधिप्रयुक्तत्वेन विधिं प्रत्यसूया व्यज्यते।

अत्र पूर्वानुभूतसंभोगाङ्गानां स्मर्यमाणतया वर्णनं नायकस्य विप्रलम्भपरिपोषार्थम्। काव्यलिङ्गमलङ्कारः। वसन्ततिलका वृत्तम्।

स्वनाममुद्रायाः शकुन्तलाकरगमनवृत्तान्तं विदूषकं प्रति वर्णयन् राजा आह—'सखे माधव्य! अवसिते गान्धर्वे पश्चात्स्वनगराय प्रस्थितं मां प्रिया सबाष्पमाह 'कियच्चिरेण आर्यपुत्रः प्रतिपत्तिं दास्यति' इति। ततो मया इमां स्वमुद्रां तदङ्गुलौ निवेशयता सा प्रिया इत्थं प्रत्यभिहिता—'हे प्रिये! अस्मिन् अङ्कितमन्नामाक्षरजातेऽङ्गुलीयके प्रतिदिनं मन्नामाक्षरेषु एकमेकमक्षरमेव गणय। यावत्तान्यक्षराण्यन्तं गच्छन्ति, तावत् अर्थात्त्रिचतुरैर्दिनैस्त्वदानयनयोग्यः कश्चित्कुलीनो

**सानुमती**—रमणीओ क्खु अवही विहिणा विसंवादिदो ।

रमणीयः खल्ववधिर्विधिना विसंवादितः ।

**विदूषकः**—कहं धीवलकप्पिअस्स लोहिअमच्छस्स उदलब्भन्तले आसि ?

कथं धीवरकल्पितस्य रोहितमत्स्यस्योदराभ्यन्तर आसीत् ?

**राजा**—शचीतीर्थे वन्दमानायाः सख्यास्ते हस्ताद्गङ्गास्रोतसि परिभ्रष्टम् ।

---

मदीयो बन्धुजनस्त्वदन्तिकमागत्य त्वां सबहुमानं मदीयमन्तःपुरं प्रवेशयिष्यति ।' इति मया सा तदानीं प्रत्यभिहिता । अथ दुर्विधिप्रयुक्तेन मोहेन हतबुद्धिना क्रूरहृदयेन मया न कोऽपि जनस्तदन्तिकं प्रेषितः । सरलहृदया सा बाला मां चिरं प्रतिपाल्य तातेन प्रेषिता बन्धुसहाया मां स्वयमेव समुपस्थिता । ततश्च कर्मचण्डालेन मया तथाभूताऽपि सा प्रत्याख्याता । इदानीं लब्धावबोधः हा धिक् ! चिराय विलपामि' इति भावः ॥ १२ ॥

अथ सानुमती राज्ञ इत्थमनुरागातिशयं सविस्मयं विलोकयमाना प्राह—**रमणीओ इति ।** 'रमणीयः खल्ववधिर्विधिना विसंवादितः' इति संस्कृतम् । रमणीयः = प्रतिदिनमिष्टजननामकीर्तने व्यापृतत्वात् मनोरमः अवधिः = विरहस्य सीमा । विधिना = दैवेन, शापेन च विसंवादितः = नामाक्षराणामन्तः, नेतुश्चागमनमिति विसंवादं प्रापितः ।

विदूषको वदति—**कहं इति ।** कथं धीवरकल्पितस्य रोहितमत्स्यस्योदराभ्यन्तर आसीत्' इति संस्कृतम् । अङ्गुलीयकमिति शेषः । धीवरकल्पितस्य—धीवरेण कल्पितस्य = खण्डशः कृतस्य । राजा वदति—**शचीतीर्थमिति ।**

**विदूषकः**—जुज्जइ ।

युज्यते ।

**सानुमती**—अदो एव्व तवस्सिणीए सउन्दलाए अधम्मभीरुणो इमस्स राएसिणो परिणए संदेहो आसी । अहवा [1]ईदिसो अणुराओ अहिण्णाणं अवेक्खदि ? कहं विअ एदं ?

अत एव तपस्विन्याः शकुन्तलाया अधर्मभीरोरस्य राजर्षेः परिणये सन्देह आसीत् । अथवेदृशोऽनुरागोऽभिज्ञानमपेक्षते ? कथमिवैतत् ?

**राजा**—उपालप्स्ये तावदिदमङ्गुलीयकम् ।

---

शचीतीर्थमिति गङ्गायां शक्रावतारापरपर्यायस्तीर्थविशेष उच्यते । विदूषक आह—**जुज्जई**ति । 'युज्यते' इति संस्कृतम् । उपपद्यते इत्यर्थः ।

सानुमती प्राह—**अदो** इति । 'अत एव तपस्विन्याः शकुन्तलाया अधर्मभीरोरस्य राजर्षेः परिणये संदेह आसीत् । अथवा ईदृशोऽनुरागोऽभिज्ञानमपेक्षते ? कथमिवैतत्' इति संस्कृतम् । शापाज्ञानादस्या ईदृशी उक्तिः । अत एव = अङ्गुलीयकप्रणाशादेव तपस्विन्याः = मुग्धायाः । अनेन तस्याः पतनानवहितत्वं सूच्यते । अधर्मभीरोः = परस्त्रीस्पर्शशङ्किनः । अनेन परिणयसंदेहे हेत्वन्तरं व्यावर्त्यते । अथवा = पक्षान्तरे । अङ्गुलीयकादर्शनस्य संदेहहेतुत्वं न संभवतीत्यर्थः । कुत इत्यत्राह—**ईदृश** इति । ईदृशः = अलौकिकः । अभिज्ञानम् = परिचायकमङ्गुलीयकादिकम् । **कथमिवैतदि**ति । ईदृशानुरागस्यात्यन्ततिरोधानात् हेत्वन्तरेणावश्यं भाव्यम्; तत्त्वस्माभिर्न विदितमिति भावः ।

अथ राजा अङ्गुलीयकस्य शकुन्तलाकरात् भ्रंशमनुस्मरन्नाह—**उपालप्स्ये**

---

१ ण ईदिसो ।

विदूषकः—(आत्मगतम्) गहीदो णेण पन्था उम्मत्तआणम् ।

गृहीतोऽनेन पन्था उन्मत्तानाम् ।

राजा—

कथं नु तं [1]बन्धुरकोमलाङ्गुलिं
करं विहायासि निमग्नमम्भसि ।

अथवा—

अचेतनं नाम गुणं न लक्षये-
न्मयैव कस्मादवधीरिता प्रिया ॥१३॥

---

इति । उपालम्भः = अधिक्षेपः । तावत् = प्रथमम् । अङ्गुलीयकस्यैवानर्थबीजत्वात् । अथ विदूषको राजानमचेतनाङ्गुलीयकोपालम्भपरमवेक्ष्य स्वगतमाह—

**गहीदो इति ।** 'गृहीतोऽनेन पन्था उन्मत्तानाम्' इति संस्कृतम् । उन्मत्तपदवीमारूढोऽयमित्यर्थः । अनेनोन्मादस्य दीर्घकालप्रवृत्तत्वं सूच्यते ।

राजा अङ्गुलीयकमुपालभमान आह—**कथं न्विति ।** (हे अङ्गुलीयक !) बन्धुरकोमलाङ्गुलिं तं करं विहाय कथं नु अम्भसि निमग्नमसि ? अथवा अचेतनं गुणं न लक्षयेन्नाम ! मयैव प्रिया कस्मादवधीरिता ? इत्यन्वयः ।

हे अङ्गुलीयक ! बन्धुरकोमलाङ्गुलिम्—बन्धुराः = सुन्दराः, उन्नतानताः, पर्वसु नताः, तन्मध्ये = उदरे उन्नताः; कोमलाः = अकर्कशाश्च अङ्गुलयः = करशाखा यत्र तम् । "बन्धुरं सुन्दरे रम्ये" इति विश्वः । तम् = रक्तोत्पलच्छविम्, अतिमृदुलम्, मया वारं वारं स्वहृदयन्यस्तम्, येन अतिप्रीत्या तव धारणं कृतम्, पुर इव परिस्फुरन्तम्; शकुन्तलायाः करं = पाणिं विहाय =

---

१ कोमलबन्धुराङ्गुलिम् ।

त्यक्त्वा । अनेन बुद्धिपूर्वकस्त्याग उक्तो न मोहाद्भ्रंशः । कथं = केन निमित्तेन । न्विति प्रश्ने । अम्भसि = जले निमग्नमसि = आत्मानं मज्जयसि स्म । लोकोक्तिरियम्—सर्वथा विरक्ता हि आत्मन्यनादराः सन्तो जले मज्जन्ति; अकारणमेव अयुक्तमिदमाचरितं भवता । अथवा—'उपालप्स्ये तावदिदम्' इत्युक्तस्याक्षेपे । नेदमुपालभ्यमित्यर्थः । अत्र हेतुमाह—**अचेतनमिति** । अचेतनं = चेतनाहीनं वस्तु कर्तृ गुणं = सौन्दर्यादिकं प्रेमादिलक्षणं चोत्कर्षं न लक्षयेत् = द्रष्टुं न शक्नुयात् ! नामेत्यसंभावनायाम् । अचेतनं गुणान् लक्षयितुं शक्नुयादित्यसंभाव्यमित्यर्थः । अथात्राहमेवोपालभ्य इत्याह—**मयेति** । मयैव = गुणपक्षपातिना मयैवेत्यर्थः । एवकारेण कारणं विनैवेति सूच्यते । प्रिया = न तु स्त्रीमात्रम्, अपि तु प्राणाधिकप्रेयसी शकुन्तला कस्मात् = केन कारणेन अवधीरिता = तिरस्कृता ? न तु त्यक्ता; त्यक्तायाः पुनरुपादाने महापुरुषस्यानौचित्यप्रसंगात् । मत्कर्तृकप्रियावधीरणं निर्हेतुकमित्यर्थः । अतोऽहमेवोपालभ्य इति भावः ।

अत्र पूर्वार्धे उन्मादः, उत्तरार्धे मतिः, अन्त्यपादे निर्वेदादयश्च भावा अभिव्यज्यन्ते । तृतीयपादेऽर्थान्तरन्यासः, अवधीरणाकारणाभावेऽपि तदुत्पत्तेर्विभावना च । वंशस्थं वृत्तम् ।

राजा अङ्गुलीयकमुपालभमान आह—'हे मदीयाङ्गुलीयक ! मया सस्नेहं प्रियाया अङ्गुलीषु परिधापितमपि त्वं नितान्तसुन्दरोन्नतानतसुकुमाराङ्गुलिशालिनं रक्तोत्पलच्छविमतिमृदुलं मया वारं वारं स्वहृदये न्यस्तं येन चातिप्रीत्या तव धारणं कृतं पुर इव परिस्फुरन्तं तं प्रियायाः करं बुद्धिपूर्वं परित्यज्य विरक्तमिव जले आत्मानं मज्जयसि स्म । अकारणमयुक्तं चेदं तवाचरितम् । अथवा किमस्याचेतनस्याङ्गुलीयकस्योपालम्भेन ? नेदमुपालभ्यम् । यतश्चेतनारहितं वस्तु सौन्द-

विदूषकः—(आत्मगतम्) 'अहं क्खु बुभुक्खाए खादिदव्वत्ति ।

अहं खलु बुभुक्षया खादितव्य इति ।

राजा—अकारणपरित्यागानुशयतप्तहृदयस्तावदनुकम्प्यतामयं जनः पुनर्दर्शनेन !

र्यादिकं प्रेमादिकं च गुणोत्कर्षं लक्षयितुं न शक्नोति । सचेतनेन गुणपक्षपातिनाऽप्यनुचितकारिणा मया एव अकारणमेव प्राणाधिकप्रेयस्यपि शकुन्तला कथं तिरस्कृता ? अचेतनस्य दोषस्तु क्षन्तुं योग्यः, परन्तु सचेतने गुणपक्षपातिनि यदसंभवं तदेवानृशंस्यं मयाऽनुष्ठितमित्यतोऽहमेवोपालब्धुं योग्यः' इति भावः ॥ १२ ॥

अथ विदूषकः 'कस्मादवधीरिता प्रिया' इत्यवधीरणे हेतुः पृष्ट इति मत्वा तत्रायं हेतुरिति हास्यप्रौढ्या राजानं विनोदयितुमाह—अहं इति । 'अहं खलु बुभुक्षया खादितव्य इति' इति संस्कृतम् । इतीति हेतौ । इत्यतो हेतोस्त्वयाऽवधीरितेत्यर्थः । बुभुक्षाकर्तृकखादनोक्त्या बुभुक्षाऽतिशयो दर्शितः । असावुन्मत्तः, अत एव विषयान्तरसंचाराभावात् मया भोजनार्थं गन्तुमशक्यमिति भावः । अथ च अहं यथा बुभुक्षया भक्षितव्यस्तथाऽयमपि तया भक्षितव्य इत्यप्यर्थः । प्रकरणबलात् बुभुक्षेति स्त्रीलिङ्गनिर्देशाच्च ।

अथ राजा तदुक्तमशृण्वन् प्रियावधीरणानुस्मरणेन बाढं परितप्यमानहृदयः संकल्पोपनीतां प्रियां प्रार्थयते—अकारणेति । अकारणं = कारणराहित्येन यः परित्यागस्तेन योऽनुशयः = पश्चात्तापस्तेन तप्तं हृदयं यस्य सः । अनुकम्प्यतामित्यत्र हेतुभूतमिदं विशेषणम् । इदं नायकवचनं चतुरिकाप्रवेशबिन्दुः ।

राज्ञा प्रार्थितं प्रियादर्शनं सम्पादयितुं चित्रफलकसहितायाश्चतुरिकायाः

१ कहं बुभुक्खाए ।

(प्रविश्यापटीक्षेपेण चित्रफलकहस्ता)

**चतुरिका**—इअं चित्तगदा भट्टिणी।

इयं चित्रगता भट्टिनी। ( इति चित्रफलकं दर्शयति।)

**विदूषकः**—साहु वअस्स ! महुरावत्थाणदंसणिज्जो भावाणुप्पवेसो। क्खलदि विअ मे दिट्ठी [1]णिण्णुण्णअप्पदेसेसु।

साधु वयस्य ! मधुरावस्थानदर्शनीयो भावानुप्रवेशः। स्खलतीव मे दृष्टिर्निम्नोन्नतप्रदेशेषु।

---

प्रवेशः कविना दर्शितः। अपटीक्षेपेण प्रवेशोऽतित्वरासम्पादनाय। अपटीक्षेपेण—अपटी = जवनिका। "अपटी काण्डपटीका प्रतिसीरा जवनिका तिरस्करिणी" इति **हलायुधः**। तस्याः क्षेपम् = अपसारणमकृत्वा। चतुरिका वदति—**इअं इति**। 'इयं चित्रगता भट्टिनी' इति संस्कृतम्। चित्रगता = आलिखिता। भट्टिनी = अनभिषिक्ता राजदाराः। 'देवी कृताभिषेकायामितरासु तु भट्टिनी' **इत्यमरः**।

विदूषको राजानं विनोदयितुं चित्रं श्लाघते—**साहु इति**। 'साधु वयस्य ! मधुरावस्थानदर्शनीयो भावानुप्रवेशः। स्खलतीव मे दृष्टिर्निम्नोन्नतप्रदेशेषु' इति संस्कृतम्। साधु = अद्भुतम्। मधुरावस्थानदर्शनीयः—मधुरं = हृद्यं यदवस्थानं = रेखास्थानोत्पन्नस्तनजघनाद्याकृतिविशेषः तेन दर्शनीयः = हृद्यः भावानुप्रवेशः—भावानाम् = अनुरागादिद्योतकेङ्गिताद्याकाराणाम् अनुप्रवेशः = अभ्यन्तरीकरणम्। सुन्दराकारतया भावाविर्भावो रम्यतर इत्यर्थः। निम्नोन्नतप्रदेशेषु = नीचोच्चप्रदेशेषु नाभिस्तनादिषु स्खलतीव = चलतीव। उच्चेषु प्रतिहता निम्नेष्वधःपतितेव

---

[1] णिहुदप्पदेसेसु।

सानुमती—अम्मो एसा राएसिणो णिउणदा ! जाणे सही अग्गदो मे वट्टदि त्ति।

अहो एषा राजर्षेर्निपुणता ! जाने सख्यग्रतो मे वर्तत इति।

राजा—

यद्यत्साधु न चित्रे स्यात्क्रियते तत्तदन्यथा।
तथापि तस्या लावण्यं [1]रेखया किंचिदन्वितम् ॥१४॥

---

भवतीत्यर्थः। यथा प्रत्यक्षदृष्टायामाकृतौ निम्नोन्नतेषु दृष्टिः स्खलति तथा चित्रेऽपीति महदालेख्यकौशलमिति भावः।

विदूषकोक्तमेवानुसंधाय सानुमती वदति—अम्मो इति॥ 'अहो एषा राजर्षेर्निपुणता! जाने सखी अग्रतो मे वर्तते इति' इति संस्कृतम्। अहो इत्याश्चर्ये। निपुणता = चित्रनिर्माणकौशलम्। सखी = शकुन्तला। चित्रलिखिताऽपि सखी प्रत्यक्षवत् पुरो भासते इत्यर्थः। जाने इति। तादात्म्यात् साक्षात्सखी स्वयमग्रतो वर्तते इति संभावयामीत्यर्थः।

राजा प्रकृत्यपेक्षया चित्रगतप्रतिकृतेरपकर्षमाह—यद्यदिति। चित्रे यत् यत् साधु न स्यात्, तत्तत् अन्यथा क्रियते। तथापि रेखया तस्या लावण्यं किञ्चिदन्वितम् इत्यन्वयः।

चित्रे = मत्कृते आलेख्ये यद्यत् = विलिख्यमानं यद्यद्वस्तु साधु न स्यात् = सम्यङ् न भवति, तत्तत् = तदेव तत्सर्वमित्यर्थः। अन्यथा क्रियते = पौनःपुन्येन प्रवृत्त्या साधु क्रियते इत्यर्थः। लेखकैरिति शेषः। अत्र सामान्यनिबन्धनया अप्रस्तुतप्रशंसया प्रस्तुतो विशेषो गम्यते। मया चित्रे तस्या लावण्यं सर्वं

---

१ लेखया।

**सानुमती**—सरिसं ¹एदं पच्छादावगुरुणो सिणेहस्स अणवले-वस्स अ।

सदृशमेतत्पश्चात्तापगुरोः स्नेहस्यानवलेपस्य च।

**विदूषकः**—भो! दाणिं तिण्णिओ ²तत्तहोदीओ दीसन्ति;

संपादयितुं पौनःपुन्येन यत्नः कृत इत्यर्थः। तथापि = कृतेऽपि महति श्रमे रेखया = चित्रेण तस्याः = शकुन्तलायाः लावण्यं = कमनीयता किञ्चित् = अत्यल्पमेव अन्वितम् = अनुगतम्। पौनःपुन्येन प्रयत्ने कृतेऽपि तस्या लावण्यं चित्रे स्वल्पमेवायातमित्यर्थः।

अत्र चित्रलेखनप्रकारकथनेन राज्ञस्तस्यां विप्रलम्भवशादधिकमनुरागपारवश्यं ध्वन्यते।

या स्वयं विधात्रा 'चित्रे निवेश्य परिकल्पितसत्त्वयोगा, मनसा वा रूपोच्चयेन कृता', सा कथमशक्तेन मया मानुषेण सम्यगालिखितुं शक्यते? तत् हे सखे! विदूषक! वृथैवोक्तं भवता साधु वयस्येत्यादि प्रशंसावाक्यमिति भावः।

अनुष्टुप् वृत्तम्। रेखालक्षणं यथा **संगीतरत्नाकरे**—

शिरोनेत्रकरादीनामङ्गानां मेलने सति।
कार्यस्थितिर्यतो नेत्रहरा रेखा प्रकीर्तिता॥ इति॥ १४॥

राज्ञः पश्चात्तापवचनमाकर्ण्य सानुमती स्वगतं वदति—**सरिसं इति**। 'सदृशमेतत्पश्चात्तापगुरोः स्नेहस्य अनवलेपस्य च' इति संस्कृतम्। सदृशम् = अनुरूपम्। एतत् = वचनं पश्चात्तापगुरोः—पश्चात्तापेन = अनुतापेन गुरोः = गुणितस्य, अधिकस्येत्यर्थः। अनवलेपस्य = विनयस्य।

अथ चित्रे लिखितानां स्त्रीणां मध्ये ग्राम्यदृशा गुणसाम्यात् कतमा शकुन्तलेत्यजानन् विदूषको राजानं पृच्छति—**भो इति**। 'भोः! इदानीं तिस्रस्तत्र-

१ एव्वं। २ आइदिओ।

सव्वाओ अ दंसणीआओ ! कदमा इत्थ तत्तहोदी सउन्दला ?

भोः ! इदानीं तिस्रस्तत्रभवत्यो दृश्यन्ते; सर्वाश्च दर्शनीयाः ! कतमाऽत्र तत्रभवती शकुन्तला ?

**सानुमती**—अणभिण्णो क्खु ईदिसस्स रूवस्स मोहदिट्ठी अअं जणो ।

अनभिज्ञः खल्वीदृशस्य रूपस्य मोघदृष्टिरयं जनः ।

**राजा**—त्वं तावत्कतमां तर्कयसि ?

**विदूषकः**—तक्केमि जा एसा सिढिलकेसबन्धणुव्वन्तकुसुमेण केसन्तेण उब्भिण्णस्सेअबिन्दुणा वअणेण विसेसदो ओसरिआहिं बाहाहिं

---

भवत्यो दृश्यन्ते; सर्वाश्च दर्शनीयाः । कतमाऽत्र तत्रभवती शकुन्तला ?' इति संस्कृतम् । तिस्रः = शकुन्तला, सख्यौ प्रियंवदाऽनसूये चेति त्रिसंख्याकाः ।

विदूषकप्रश्नेन सानुमती तमुपहसति—अणभिण्णो इति । 'अनभिज्ञः खल्वीदृशस्य रूपस्य मोघदृष्टिरयं जनः' इति संस्कृतम् । रूपस्य = सौन्दर्यस्य मोघदृष्टिः = यतो रूपविशेषं न जानाति, ततो निष्फलदृष्टिरित्यर्थः । अयं जनः = नर्मसचिवः । अयं जन इत्यनेन तस्य ग्रामीणत्वमाकलय्य तन्नामग्रहणे अनास्था सूच्यते । यद्वा चित्रे पञ्चवर्णप्रभापटलं दृष्ट्वा मूढदृष्टिरसौ संजात इति ।

राजा तं पृच्छति—त्वमिति । एतासु कां शकुन्तलां निश्चिनोषीत्यर्थः विदूषको वदति—तक्केमीति । 'तर्कयामि यैषा शिथिलकेशबन्धनोद्वान्तकुसुमेन केशान्तेन उद्भिन्नस्वेदबिन्दुना वदनेन विशेषतः अपसृताभ्यां बाहुभ्यामवसेक-स्निग्धतरुणपल्लवस्य चूतपादपस्य पार्श्वे ईषत्परिश्रान्तेव आलिखिता, सा शकुन्तला; इतरे सख्याविति' इति संस्कृतम् । तर्कयामि = संभावयामि । शिथिलकेश-बन्धनोद्वान्तकुसुमेन—शिथिलं = श्लथं केशबन्धनं यस्य अत एव उद्वान्तानि =

अवसेअसिणिद्धतरुणपल्लवस्स चूअपाअवस्स पासे इसिपरिस्सन्ता विअ आलिहिदा, सा सउन्दला; इदराओ सहीओ त्ति ।

तर्कयामि यैषा शिथिलकेशबन्धनोद्वान्तकुसुमेन केशान्तेनोद्भिन्नस्वेदबिन्दुना वदनेन विशेषतोऽपसृताभ्यां बाहुभ्यामवसेकस्निग्धतरुणपल्लवस्य चूतपादपस्य पार्श्वे ईषत्परिश्रान्तेवालिखिता, सा शकुन्तला; इतरे सख्याविति ।

**राजा**—निपुणो भवान् । अस्त्यत्र मे भावचिह्नम् ।

**स्विन्नाङ्गुलिविनिवेशो[1] रेखाप्रान्तेषु दृश्यते [2]मलिनः ।**

**अश्रु च कपोलपतितं दृश्यमिदं वर्तिकोच्छ्वासात् ॥१५॥**

च्युतानि कुसुमानि = पुष्पाणि यस्मात्तादृशेन केशान्तेन उपलक्षिता, उद्भिन्नस्वेदबिन्दुना—उद्भिन्नाः = संजाताः स्वेदबिन्दवः = श्रमजलजालानि यस्मिंस्तादृशेन वदनेन = मुखेन उपलक्षिता, विशेषतः = बाहुल्येन अपसृताभ्याम् = आनताभ्यां बाहुभ्याम् उपलक्षिता, अवसेकस्निग्धतरुणपल्लवस्य—अवसेकेन = सेचनेन स्निग्धाः = मसृणाः तरुणपल्लवाः = नवपत्राणि यस्मिंस्तादृशस्य चूतपादपस्य = आम्रवृक्षस्य पार्श्वे = निकटे ईषत्परिश्रान्तेव = किञ्चिदिव जातश्रमा आलिखिता = चित्रिता, सा = शकुन्तला; इतरे = परिशिष्टे सख्यौ = प्रियंवदाऽनसूये । इति तर्कयामीति संबन्धः । ईषत्परिश्रान्तेवेत्यत्र केशबन्धशैथिल्यम्, स्वेदोद्गमः, भुजापसरणं चेति त्रीणि श्रमोपलक्षणानि । राजा विदूषकोक्तिमनुमोदमानः श्लाघते—**निपुणो भवानिति** । निपुणः = विशेषज्ञः, रूपविशेषस्य सूक्ष्मेक्षिकयैव कुशाग्रधिषणैरेव लक्षितुं शक्यत्वादिति भावः । विशेषमाह—**अस्त्यत्रेति** । अत्र = शकुन्तलाचित्रे । भावचिह्नम् = अनुरागलक्षणम् ।

चिह्नस्वरूपमाह—**स्विन्नेति** । रेखाप्रान्तेषु मलिनः स्विन्नाङ्गुलिविनिवेशः

१ विनिवेशात् । २ मलिना ।

दृश्यते । इदं च कपोलपतितमश्रु वर्तिकोच्छ्वासात् दृश्यम् इत्यन्वयः ।

रेखाप्रान्तेषु—रेखायाः = तूलिकाङ्कस्य आलेख्यस्य प्रान्तेषु = पार्श्वदेशेषु मलिनः = असितः स्विन्नाङ्गुलिविनिवेशः—स्विन्नानां = भावोदयात् स्वेदयुक्तानाम् अङ्गुलीनां = करशाखानां विनिवेशः = संस्थापनं विन्यासो वा दृश्यते = लक्ष्यते । चित्रलेखनावस्थायां भावोदयात् अङ्गुलीषु स्वेदः, स्वेदाच्च अङ्कस्य मालिन्यम्; अङ्कस्य मालिन्यादेव च भावोदयानुमानम् । अङ्गुलीनां विन्यासस्थानस्य मालिन्यात् तासां स्वेद ऊह्य इति निष्कृष्टो भावः । इदं च कपोलपतितम्—कपोलयोः = चित्रस्थायाः शकुन्तलाया गण्डयोः पतितं = प्राप्तम् अश्रु = मम सात्विकभावेनोत्पन्नं मदीयं नेत्रजलं वर्तिकोच्छ्वासात्—वर्तिका = चित्रपटे लेपविशेषः तत्साध्यायाः रेखाया उच्छ्वासात् = संश्लेषशैथिल्यात् । "पटलेपे पक्षिभेदे तूलिकायां च वर्तिका" इत्यजयः । दृश्यम् = लक्ष्यम् ।

अत्र अनुमानालङ्कारः । अनेन च हेतुलक्षणं भूषणमुपक्षिप्तम् । तल्लक्षणं तु—"स हेतुरिति निर्दिष्टो यत्साध्यार्थं प्रसाधकम्" इति । आर्या जातिः ।

चित्रे तिसृषु मुनिकन्यासु नैपुण्येन शकुन्तलामुपलक्षयन्तं नर्मसचिवं विदूषकं माधव्यं श्लाघमानो राजा वदति—'सखे माधव्य ! त्वं नूनं निपुणोऽसि; त्वया शकुन्तला सम्यक् तर्किता । अस्मिन् चित्रेऽपि बाढमस्ति मम भावचिह्नम्, यदपि भवता लक्षितुं सुशकम् । पश्य; अस्मिन् चित्रे तूलिकाङ्कस्य पार्श्वदेशेषु असितः कश्चिदङ्को दृश्यते; यश्च चित्रलेखनावसरे शकुन्तलामनुस्मरतो मम भावोदयात स्वेदयुक्तानामङ्गुलीनां विन्यासेन सम्पन्नः । इदमेकं भावचिह्नम् । अन्यच्च चित्रे लिखितायाः प्रियतमायाः शकुन्तलायाः कपोलभागे पतितं मामकीनं नयनजलं चित्रपटलेपविशेषस्य संश्लेषशैथिल्यात् उच्छूनतया वा द्रष्टुं शक्यं भावचिह्नमस्ति' इति भावः ॥ १५ ॥

चतुरिके ! अर्धलिखितमेतद्विनोदस्थानम्। गच्छ; वर्तिकां तावदानय।

**चतुरिका**—अज्ज माढव्व ! अवलम्ब चित्तफलअं, जाव आअच्छामि।

आर्य माधव्य ! अवलम्बस्व चित्रफलकम्, यावदागच्छामि।

**राजा**—अहमेवैतदवलम्बे। (इति यथोक्तं करोति।)

(निष्क्रान्ता चेटी।)

**राजा**—अहं हि—

साक्षात्प्रियामुपगतामपहाय पूर्वं
चित्रार्पितां पुनरिमां बहु मन्यमानः।
स्रोतोवहां पथि निकामजलामतीत्य
जातः सखे ! प्रणयवान्मृगतृष्णिकायाम् ॥१६॥

---

एतत् = इदं **विनोदस्थानम्**—विनोदः = तप्तहृदयस्य समाश्वासनम्, तस्य स्थानम् = उपायभूतम्। एतच्चित्रमित्यर्थः। **अर्धलिखितम्** = असमाप्तमित्यर्थः। **वर्तिकां** = तूलिकाम्। तावदित्यवधारणे।

चतुरिका वदति—**अज्ज इति**। 'आर्य माधव्य ! अवलम्बस्व चित्रफलकम्, यावदागच्छामि' इति संस्कृतम्। अवलम्बस्व = धारयस्व। **अहमेवैतदवलम्बे इति**। आत्मविनोदार्थमिति भावः। यथोक्तं करोति = धारयति।

अथ राजा आत्मनः अविमृश्यकारितामनुसंधाय अनुतापवान् आह—**अहं हि—साक्षादिति**। हे सखे ! अहं हि पूर्वं साक्षादुपगतां प्रियामपहाय चित्रार्पितामिमां पुनः बहु मन्यमानो निकामजलां स्रोतोवहां पथि अतीत्य मृगतृष्णिकायां प्रणयवान् जातोऽस्मि इत्यन्वयः।

हे सखे = माधव्य ! अहं हि = चतुरोऽपि मोहान्धोऽहं पूर्वं = प्रथमम् (अव्यवहितसमये, न तु कालान्तरे) साक्षात् = प्रत्यक्षेण । "साक्षात्प्रत्यक्षतुल्ययोः" इत्यमरः । उपगताम्—उप = समीपे गतां = प्राप्ताम्, न तु आभासमात्रेण, न च अश्रुतागमनाम् । प्रियां = प्रेयसीम्, न केवलं नारीमात्रम् । अपहाय = प्रत्यक्षेण प्रियामिति ज्ञातामपि अवगणय्य, न तु त्यक्त्वा; त्यक्तस्य पुनरुपादाने महापुरुषस्यानौचित्यप्रसंगात् । चित्रार्पिताम्—चित्रे = आलेख्ये अर्पितां = लिखिताम् इमां = पुरतो दृश्यमानां पुनः = अन्तरं बहु मन्यमानः = आदरेण अवलोकमानः, तस्यां श्रद्दधान इत्यर्थः । निकामजलां = संपूर्णोदकां स्रोतोवहां = नदीं पथि=मार्गे अतीत्य = अतिक्रम्य, मार्गवशादेवानायासेन प्राप्तामुपेक्ष्येत्यर्थः । मृगतृष्णिकायां=मरुमरीचिकायां प्रणयवान् = प्रीतियुक्तः, साकाङ्क्षो वा जातोऽस्मि = संपन्नोऽस्मि । प्रथममार्गे महानदीमुत्तीर्य गतवतः पिपासोः पश्चान्मृगतृष्णिकायां प्रणय इव प्रथमं स्वयमुपनतां प्रियामवधीरितवतो मम चित्रार्पितायामस्यां बहु मान इति तात्पर्यम् ।

अत्र हेतुर्निदर्शना चालंकारौ । वसन्ततिलका वृत्तम् ।

स्वकीयमविमृश्यकारित्वमनुसंधाय बाढमनुतप्यमानो राजा विदूषकस्य पुरः स्वावस्थां वर्णयन्नाह—'सखे माधव्य ! पश्य मम दुरवस्थाम्; अहं हि एतत्समयाव्यवहितपूर्वमेव मदन्तिके स्वयमुपगतां मम प्राणप्रेयसीम्, न तु नारीसामान्यम्; साक्षाच्छरीरधारिणीमुपस्थिताम्, न त्वाभासमात्रम्; ईदृशीं प्रत्यक्षेण प्रियामिति ज्ञातामप्यवगणय्य, न तु त्यक्त्वा तस्या अभावेन संप्रत्यनुतप्यमानः चित्रलिखितां पुरतो दृश्यमानामेनामादरेणावलोकमानः अस्यामेव सर्वभावेन श्रद्दधानश्चाहं मार्गे अनायासेनोपगतां संपूर्णोदकां महानदीमतिक्रम्य पिपासाशान्त्यर्थं मरुमरीचिकायां प्रणयवानिव जातोऽस्मि । वर्त्मन्येव प्राप्तां स्वादूदकां नदीं त्यक्त्वा

**विदूषकः**—( आत्मगतम् ) ' एसो अत्तभवं णदिं अदिक्कमिअ णिअतिण्हिआं संकन्तो । ( प्रकाशम् ) भो ! अवरं किं एत्थ लिहिदव्वं ?

एषोऽत्रभवान्नदीमतिक्रम्य मृगतृष्णिकां संक्रान्तः । भोः ! अपरं किमत्र लिखितव्यम् ?

**सानुमती**—जो जो पदेसो सहीए मे अहिरूवो तं तं आलिहिदुकामो भवे !

यो यः प्रदेशः सख्या मेऽभिरूपस्तं तमालिखितुकामो भवेत् !

---

मरीचिकानुसरणं यथा हासकरम्, स्वयमागतां प्रियां शकुन्तलां विहाय काल्पनिकेन तच्चित्रेण चेतोविनोदनमपि तथैव' इति भावः ॥ १६ ॥

राजोक्तं सत्यमिति विदूषकः स्वगतमनुवदति—**एसो इति** । 'एषः अत्रभवान् नदीमतिक्रम्य मृगतृष्णिकां संक्रान्तः । ( प्रकाशम् ) भोः ! अपरं किमत्र लिखितव्यम् ?' इति संस्कृतम् । नदीं = शकुन्तलारूपाम् । मृगतृष्णिकां = चित्ररूपाम् । अयम् एतस्याः कथं निवर्तनीयो भविष्यतीत्याशयः; पूर्वम् 'उन्मत्तानां पन्था अनेन गृहीतः' इत्युक्तेः । एतदुक्तं राज्ञा श्रुतं चेत्तस्य तापो वर्धेतेति आत्मगतमुक्तम् । प्रकाशमाह—**भो इति** । अस्मिन् चित्रे भवान् किमन्यल्लिखितुमिच्छतीत्याशयः । अत्र विषादो भावः ।

सानुमती स्वगतं वदति—**जो जो इति** । 'यो यः प्रदेशः सख्या मे अभिरूपस्तं तमालिखितुकामो भवेत्' इति संस्कृतम् । मे सख्याः=शकुन्तलायाः । अभिरूपः = रम्यः । "अभिरूपो बुधे रम्ये" इति **विश्वमेदिन्यौ** । मम सखी शकुन्तला येषु येषु स्थानेषु रमते, तानि तानि स्थानानि राज्ञा चित्रेऽस्मिन् लिखितुमिष्टानीत्याशयः ।

राजा—श्रूयताम्—

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
पादास्तामभितो [1]निषण्णहरिणा गौरीगुरोः पावनाः।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ॥१७॥

---

अथ प्रगाढोन्मादो राजा प्रसंगानुप्रसंगेन शकुन्तलाचित्रनिर्माणशेषं पूरयितुमुपक्रममाणो विदूषकप्रश्नमुत्तरयति—**श्रूयताम्—कार्येति**। सैकतलीनहंसमिथुना स्रोतोवहा मालिनी कार्या। तामभितो निषण्णहरिणाः गौरीगुरोः पावनाः पादाः (कार्याः)। शाखालम्बितवल्कलस्य तरोरधः कृष्णमृगस्य शृङ्गे वामनयनं कण्डूयमानां मृगीं च निर्मातुमिच्छामि इत्यन्वयः।

सैकतलीनहंसमिथुना—सैकते = पुलिने लीनं = सुखासीनं हंसमिथुनं = मरालयुगुलं यस्यास्तादृशी। अनेन उद्दीपकत्वातिशयो व्यज्यते। स्रोतोवहा = नदी। अनेन जलवाहित्वं स्वभावतः परित्यागशीलत्वं रमणीयत्वमुद्दीपकत्वं च व्यज्यते। मालिनी = मालिनी नाम्नी कार्या = लिखितव्या। तथेच्छामीति भावः। ताम् = मालिनीम् अभितः = तस्या उभयोः पार्श्वयोरित्यर्थः। अभितोयोगे द्वितीया। निषण्णहरिणाः—निषण्णाः = उपविष्टाः हरिण्यश्च हरिणाश्चेत्येकशेषः। हरिणमिथुनानीत्यर्थः। येषु ते। अनेन तस्य प्रदेशस्य अत्यन्तविविक्तत्वं भृशमुद्दीपकत्वं सुरतक्षमत्वं च ध्वन्यते। गौरीगुरोः—गौर्याः = पार्वत्याः गुरोः = पितुर्हिमवतः। इदं पावनत्वोपपादकम्। पावनाः = पवित्राः पादाः = प्रत्यन्तपर्वताः। कार्याः इति लिङ्गवचनविपरिणामः। लिखितव्या इत्यर्थः। शाखा-

---

१ निषण्णचमराः।

लम्बितवल्कलस्य—शाखासु = वृक्षस्कन्धेषु लम्बितानि = अवसक्तानि वल्कलानि = वृक्षत्वचो यस्य। अनेन तरोराश्रमस्थत्वं छायाबाहुल्यं च सूच्यते। वृक्षत्वचां शोषणार्थं निक्षिप्तत्वात् शाखालम्बनं च युज्यते। तरोः = आश्रमवृक्षस्य अधः = तले कृष्णमृगस्य = कृष्णसारजातीयस्य हरिणस्य शृङ्गे = विषाणे वामनयनं = वामाक्षि कण्डूयमानां = निकषन्तीं मृगीं च=हरिणीं च निर्मातुं = चित्रे लिखितुम् इच्छामि = वाञ्छामि।

अत्र मृग्याः स्ववामनयनकण्डूयनं शृङ्गारानुभावसूचकं घर्षणमात्रम्। अनेनाप्युद्दीपकत्वं ध्वनितम्। पूर्वं कार्येत्युक्त्या अत्र निर्मातुमिच्छामीत्युक्तिस्तु घर्षणस्य चित्रे लिखितुमशक्यत्वात्। तेन एतदपि इच्छामि, न वस्तुतः कर्तव्यमिति भावः। कामतन्त्रकाराणां सिद्धान्तश्चायम्—

रिरंसा यत्र जायेत कण्डूतिस्तत्र जायते।
मृगीणां वामनयने योषितां मदनालये॥ इति।

कण्डूयमानामिति शानच्प्रत्ययेन निश्चलस्थित्या कृष्णमृगस्य मृगीवृत्त्यनुसारित्वं परस्परास्थाबन्धश्च द्योत्यते। वाक्यत्रयेणात्र जलवनस्थलानां कामधर्मोभयानुकूलत्वं प्रकाश्यते। तत्र सैकतेत्यादि निषण्णहरिणा इति कण्डूयमानां मृगीमिति च शृङ्गारे उपक्रमोपसंहारः। कण्डूयमानां मृगीमित्यत्र च कण्डूयनस्य स्त्रिया मृग्या आरब्धत्वात् विपरीतरतमिव संभोगस्य कोऽप्यपूर्वो महिमा प्रकाश्यते। पूर्वार्धेन मनःप्रसादहेतुकं रम्यत्वम्, उत्तरार्धेन मदनोद्दीपकत्वं च दर्शितम्। अत्र सूक्ष्मवस्तुस्वरूपकथनरूपा स्वभावोक्तिः, गौरीगुरोरिति प्रसंगोपादानादुदात्तालंकारश्च। शार्दूलविक्रीडितं वृत्तम्।

चित्रे किमपरं लिखितव्यमिति विदूषकप्रश्नमुत्तरयन् राजा आत्मनो लिखितुमिष्टानि वर्णयति—'सखे माधव्य! अस्मिन् चित्रे मया मालिनी नाम नदी

**विदूषकः**—( आत्मगतम् ) जह अहं देक्खामि, पूरिदव्वं ऐोन चित्तफलअं लम्बकुच्चाणं तावसाणं कदम्बेहिं ।

यथाऽहं पश्यामि, पूरितव्यमनेन चित्रफलकं लम्बकूर्चानां तापसानां कदम्बैः ।

**राजा**—वयस्य ! अन्यच्च शकुन्तलायाः प्रसाधनमभिप्रेतमस्माभिः ।

---

चित्रयितुमिष्टा; यस्याः पुलिनप्रदेशे विहरन्ति हंसमिथुनानि च मया निर्मातव्यानि । मालिन्या नद्याश्चोभयपार्श्वयोः सुखासीनैर्हरिणमिथुनैरध्यासिताः पवित्रतमस्य गौरीगुरोर्हिमवतः प्रत्यन्तपर्वता अपि चित्रणीयाः । तत्रैव च आतपशोषणार्थं यत्र वल्कलानि लम्बन्ते, तादृशमेकं तरुमालिखितुमिच्छामि; यस्य तले निषण्णस्य कृष्णमृगस्य विषाणे निजमदनबाधासूचनाय आत्मनो वामनयनं कण्डूयमाना मृगाङ्गनाऽपि लिखितुमिष्टाऽस्ति । इदमेवापरमस्मिन् चित्रे चित्रयितुमिष्टम्' इति भावः ॥ १७ ॥

राजा आश्रमपदस्य लिखितव्यत्वोक्तया तच्छेषतया लिखितव्यं विदूषकः स्वगतमूहति—**जह इति** । 'यथाऽहं पश्यामि, पूरितव्यमनेन चित्रफलकं लम्बकूर्चानां तापसानां कदम्बैः' इति संस्कृतम् । यथाऽहं पश्यामि = एवं मयाऽनुमीयते । अत्र यथाशब्दोऽनुमाने । "यथाशब्दस्तु निर्दिष्टस्तुल्ययोगानुमानयोः" इति **विश्वः** । लम्बकूर्चानां = दीर्घश्मश्रूणाम् । इयं हासालम्बनत्वोक्तिः । "कूर्चोऽस्त्री श्मश्रुपीठयोः" इति **विश्वः** । कदम्बैः = समूहैः । विदूषकस्यानेन आत्मकृतभाषणेन तस्य चित्रविन्यासौचित्यानौचित्यविवेकराहित्यं प्रकाश्यते ।

राजा वदति—**वयस्येति** । अभिप्रेतम् = अतिप्रियम्, मया उद्दिष्टम् । प्रसाधनम् = अलंकरणम् । अनेन तस्यावश्यलिखितव्यत्वं व्यज्यते । विदूषकः

**विदूषकः**—किं विअ ?

किमिव ?

**सानुमती**—वणवासस्स [1]सोउमारस्स [2]अ जं सरिसं भविस्सदि !

वनवासस्य सौकुमार्यस्य च यत्सदृशं भविष्यति !

**राजा**—

कृतं न कर्णार्पितबन्धनं सखे !
शिरीषमागण्डविलम्बिकेसरम् ।
न वा शरच्चन्द्रमरीचिकोमलं
मृणालसूत्रं रचितं स्तनान्तरे ॥१८॥

पृच्छति—**किं विअ इति**। 'किमिव' इति संस्कृतम्। किं तत् अभिप्रेतं प्रसाधनमित्यर्थः। अत्र इवेति वाक्यालंकारे। "इवेतीषदर्थोपमोत्प्रेक्षावाक्यालङ्कारेषु" इति **वर्धमानः**।

प्रसाधनमुद्दिश्य सानुमती चिन्तयति—**वणवासस्स इति**। 'वनवासस्य सौकुमार्यस्य च यत्सदृशं भविष्यति' इति संस्कृतम्। शकुन्तलाया इत्यनुषङ्गः। वनवासस्य = अरण्यावस्थितेः सौकुमार्यस्य = मार्दवस्य। सदृशं = योग्यम्। यत्सदृशं भविष्यति, तल्लिखितव्यमित्यर्थः। वनवासस्येत्यनेन पुष्पादिकम्, सौकुमार्यस्य चेत्यनेन कुसुमानामपि यत्कोमलतरं तदेकद्वित्रिधारणं चेत्यवगम्यते।

अकृतं प्रसाधनं राजा वर्णयति—**कृतमिति**। हे सखे ! कर्णार्पितबन्धनम् आगण्डविलम्बिकेसरं शिरीषं न कृतम्। स्तनान्तरे शरच्चन्द्रमरीचिकोमलं मृणालसूत्रं न वा रचितम् इत्यन्वयः।

हे सखे = हे वयस्य माधव्य ! कर्णार्पितबन्धनम्—कर्णे = श्लोके अर्पितम् =

१ कण्णआभावस्स। २ अविणअस्स अ।

आरोपितं बन्धनं = वृन्तं यस्य तत् । अत्र कर्णशब्देन स्वस्य तेन भूषणत्वं बोधयता नैकट्यात्कर्णशिरोऽन्तरालदेशो लक्ष्यते । तेन परस्परोपकारकरणादन्योन्यालंकारो व्यङ्ग्यः । आगण्डविलम्बिकेसरम्—आगण्डं = गण्डं मर्यादीकृत्य विलम्बिनः = लम्बमानाः केसराः = किञ्जल्का यस्य तत् । एतेन केवलं कर्णं न भूषयति अपि तु गण्डमपीति व्यज्यते । शिरीषं = शिरीषपुष्पं न कृतं = तथाविधं न विहितम् । चित्रे अभूषितः कर्णौ गण्डश्च; अद्य स मया शिरीषेण भूषयिष्यते इत्याशयः । स्तनान्तरे = स्तनयोर्मध्यावकाशस्थले शरच्चन्द्रमरीचिकोमलम्—शरच्चन्द्रस्य = शारदशशाङ्कस्य मरीचिः = ज्योत्स्ना सेव कोमलं = स्निग्धं शुभ्रं च । कोमलमित्यनेन धर्मयोरेकनिर्देश इति न्यायात् धावल्यादिकमपि द्योत्यते । मृणालसूत्रं = बिससालिका न वा रचितं = न चालिखितम् ।

अत्र वाशब्दः समुच्चये । एतेन तस्याः स्तनयोरतिपीवरतया परस्परोत्पीडनत्वम्, तेन आलिङ्गनयोग्यत्वम्, तेन च तदप्राप्त्या स्वस्य अधन्यत्वादिकं च द्योत्यते । अत्राप्यन्योन्यशोभाहेतुत्वेन अन्योन्यालंकारो व्यङ्ग्यः । क्रिययोः समुचितत्वात् समुच्चयालङ्कारः, एकाधिकरणत्वेनापि तस्येष्टत्वात् । उपमा च । वंशस्थं वृत्तम् ।

शकुन्तलायाः किं प्रसाधनं भवताऽभिप्रेतमिति विदूषकस्य प्रश्नमुत्तरयन् राजा प्राह—'सखे माधव्य ! मया चित्रे आलिखितायाः प्रियायाः शकुन्तलायाः कर्णयोरुपरिष्टात् शिरीषपुष्पस्य वृन्तं न विन्यस्तम् ; यस्य केसराः कपोलप्रदेशपर्यन्तं विलम्बमानाः कर्णयोः कपोलयोश्च कामपि श्रियं जनयेयुः । एवमेव पीवरयोः अत एव परस्परोत्पीडकयोस्तस्याः स्तनयोरन्तराले तन्वी शारदशशाङ्ककोमला अतिधवला बिससूत्रमालाऽपि न विन्यस्ता; या स्तनयोः तदन्तरस्य च शोभां जनयन्ती स्तनसन्निधानेन स्वयमपि शोभिता स्यात् । इदमेव ममाभिप्रेतं प्रसाधनम्' इति भावः ॥ १८ ॥

**विदूषकः**—भो ! किं णु तत्तहोदी रत्तकुवलअपल्लवसोहिणा अग्गहत्थेण मुहं ओवारिअ चइदचइदा विअ ठिआ ? ( सावधानं निरूप्य दृष्ट्वा ) आ ! एसो दासीएपुत्तो कुसुमरसपाडच्चरो तत्तहोदीए वअणं [1]अहिलङ्घेदि महुअरो ।

भोः ! किं नु तत्रभवती रक्तकुवलयपल्लवशोभिनाऽग्रहस्तेन मुखमपवार्य चकितचकितेव स्थिता ? आः ! एष दास्याःपुत्रः कुसुमरसपाटच्चरस्तत्रभवत्या वदनमभिलङ्घति मधुकरः ।

**राजा**—ननु वार्यतामेष धृष्टः ।

---

विदूषकः पृच्छति—**भो इति** । 'भोः ! किं नु तत्रभवती रक्तकुवलयपल्लवशोभिना अग्रहस्तेन मुखमपवार्य चकितचकितेव स्थिता ? ( सावधानं निरूप्य दृष्ट्वा ) आः ! एष दास्याःपुत्रः कुसुमरसपाटच्चरस्तत्रभवत्या वदनमभिलङ्घति मधुकरः' इति संस्कृतम् । रक्तकुवलयपल्लवशोभिना = रक्तोत्पलदलसदृशश्रीजुषा अग्रहस्तेन = हस्ताग्रेण, मणिबन्धादङ्गुल्यग्रपर्यन्तं यो बाहोरंशस्तेन । "हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदाभ्याम्" इति **वामनः** । अपवार्य = आच्छाद्य चकितचकिता = अत्यर्थं भीता । इवेति संभावनायाम् । स्थिता किं नु इति संबन्धः । आः इति क्रोधे । दास्याःपुत्रः = दुर्विनीतः । "पुत्रेऽन्यतरस्याम्" इति निन्दायां षष्ठ्या अलुक् । कुसुमरसपाटच्चरः = पुष्पमधुचौरः । अनेनैवापराधेन दण्ड्यः, अपराधान्तरे च सुतरां दण्डनीय इति व्यज्यते । यस्याः कस्याश्चिन्न, अपि तु तत्रभवत्याः = पूज्यायाः शकुन्तलायाः वदनमभिलङ्घति = मुखमभिलक्ष्य धावति । मधुकर इति साभिप्रायम् । अथ उन्मादावस्थां प्रतिपन्नो राजा चित्रगतामपि शकुन्तलां साक्षात् प्रियामेव मन्वान आह—**नन्विति** । नन्वित्यनुवादे । एवं तर्हीत्यर्थः । वार्यतां = प्रतिषिद्ध्यताम् ।

---

१ अहिलसदि ।

विदूषकः—भवं एव्व अविणीदाणं सासिदा इमस्स वारणे पहविस्सदि !

भवानेवाविनीतानां शासिताऽस्य वारणे प्रभविष्यति !

राजा—युज्यते। अयि भोः कुसुमलताप्रियातिथे ! किमत्र परिपतनखेदमनुभवसि ?

एषा कुसुमनिषण्णा तृषिताऽपि सती भवन्तमनुरक्ता।
प्रतिपालयति मधुकरी न खलु मधु विना त्वया पिबति॥१९॥

---

अथ विदूषकश्चित्रगतस्य मधुकरस्य वारयितुमशक्यत्वं विचिन्त्य राजानं चोन्मादावस्थापन्नं संभाव्य सोल्लुण्ठं स्वभावोक्तिमाह—भवं एव्व इति। 'भवानेवाविनीतानां शासिता अस्य वारणे प्रभविष्यति' इति संस्कृतम्। भवानेव, न त्वहम्। अविनीतानां शासितेति हेतुगर्भम्। विकलाङ्गेन मया ब्राह्मणेन कथमेष वारयितुं शक्यते ? अविनीतानां = दुर्वृत्तानां शासिता=विनेता। भवानेव अस्य वारणे प्रभविष्यति=शक्तो भविष्यति। राजा तु तादृक्त्वबुध्यैव प्रत्युत्तरयति—युज्यत इति। युज्यते = युक्तमेव। अहमेवैनं वारयिष्ये इत्यर्थः।

अथ भ्रमरमभिमुखीकृत्य मधुरवचनेन प्रियामुखाद्वियोजयितुमुपक्रमते—अयि भो इति। कुसुमलताप्रियातिथे—कुसुमप्रधाना लता कुसुमलता तस्याः प्रियातिथे ! कुसुमलता समुपस्थितं त्वां सत्करिष्यति, अतस्तामेवाभिसरेति भावः। किं=किमर्थम्। अत्र = अस्या वदने। परिपतनखेदं = सञ्चरणपरिश्रमम्। अत्र परिपततस्ते केवलं परिपतनखेद एवानुभवितव्यः स्यात्, न मधुलवस्यापि लाभ इति यावत्।

चित्रे काचन मधुकर्यपि लिखिताऽऽसीत् ; तां निर्दिश्य राजा मधुकरं ब्रूते—एषेति। अनुरक्ता एषा मधुकरी तृषिता कुसुमनिषण्णा सत्यपि भवन्तं प्रतिपालयति। त्वया विना न खलु मधु पिबति इत्यन्वयः।

अनुरक्ता=त्वयि प्रेमवती । अयं प्रतिपालने हेतुः । अनेन च तव तत्र गमनमुचितमिति ध्वन्यते । एषा = पुरोनिर्दिश्यमाना मधुकरी = भवद्दयिता भ्रमरी तृषिता = पिपासिता, पक्षान्तरे अभिलाषवती, आग्रहवती वा कुसुमनिषण्णा = पुष्पोपविष्टा । अनेन पानव्यवसाय उक्तः । तव अयत्नसाध्यं स्थानमिति च सूच्यते । सत्यपि—इत्थं वर्तमानाऽपि, पक्षान्तरे पतिव्रताऽपि । अनेन प्रेमातिशयो द्योत्यते । भवन्तं = त्वां प्रतिपालयति = प्रतीक्षते । तत्र कारणमाह—त्वया विना= त्वां विहाय न खलु = निश्चयेन न, मधु = मकरन्दं पिबति = आस्वादयति । अस्याः स्नेहस्त्वया मानयितव्यः; तत् तत्रैव गच्छ । अनुरक्ता पतिव्रता तव दयिता मधुकरी तेन तुष्येत् । कुसुमिता लता च प्रियमतिथिं त्वां संमानयिष्यतीत्याशयः ।

अत्र चित्रन्यस्ताया मधुकर्याः स्वाभाविकस्य पानाभावस्य, त्वया विनेत्यादिनोक्तस्य कृत्रिमस्य च तस्य अभेदाध्यवसायादतिशयोक्तिः । मधुकर्यास्तृषितत्वं कुसुमोपर्युपवेशनादेव । नायकनायिकाव्यवहारसमारोपात् समासोक्तिः । आर्या जातिः ।

उन्मादावस्थापन्नो राजा विदूषकोक्त्या चित्रस्थं मधुकरं वारयितुं प्रवृत्तस्तमाह—'हे कुसुमप्रधानलताप्रियातिथे ! मधुकरेन्द्र ! किमत्र मम प्रियाया वदनमभिलङ्घसे ? नात्रत्यं मधु भवता पातुं शक्यम् । कुसुमितां लतामेव भवानभिसरतु । पश्यतु भवान्; एषा पिपासावती मकरन्दपानाय कुसुमोपर्युपविष्टा भवदेकानुरक्ता साध्वी बालेव मधुकरी उपस्थितमपि मधु त्वां विहाय न पिबति; किन्तु त्वामेव प्रतीक्षते । त्वं तु पराङ्गनाधरसर्वस्वकामुको भूत्वा चिरयसि ! तदेतन्न युक्तम् । नात्र ते मनोरथपूर्तिर्भवित्री । कुसुमितां लतामेव समुपेत्य भवन्तं प्रतीक्षमाणां प्रणयिनीं प्रसाद्य तया सह मधूनि पिबन् कुसुमितायाः लतायाः सकाशादातिथ्यसत्कारमवाप्नुहि' इति भावः ॥१९॥

सानुमती—'अज्ज वि अभिजादं क्खु एसो वारिदो ।

अद्याप्यभिजातं खल्वेष वारितः ।

विदूषकः—पडिसिद्धा वि वामा एसा जादी !

प्रतिषिद्धाऽपि वामैषा जातिः !

राजा—एवं भोः ! न मे शासने तिष्ठसि ? श्रूयतां तर्हि संप्रति—

अक्लिष्टबालतरुपल्लवलोभनीयं
　पीतं मया सदयमेव रतोत्सवेषु
बिम्बाधरं 'स्पृशसि चेद्भ्रमर ! प्रियाया-
　स्त्वां कारयामि कमलोदरबन्धनस्थम् ॥ २० ॥

---

सानुमती स्वगतं वदति—**अज्ज वि** इति । 'अद्याप्यभिजातं खल्वेष वारितः इति संस्कृतम्' । अद्यापि = उन्मादावस्थायामपि, अथवा प्रियापरिभवेऽपि अभिजातं = कुलीनताऽनुरूपम्, अपरुषमित्यर्थः । एषः = मधुकरः । अथ विदूषको राज्ञा वारितोऽप्ययं न विरमतीत्याह—**पडिसिद्धा इति** । 'प्रतिषिद्धाऽपि वामैषा जातिः' इति संस्कृतम् । एषा जातिः=तिर्यग्जातिः । प्रतिषिद्धाऽपि = निवारिताऽपि वामा = प्रतिकूला, विरुद्धमार्गवर्तिनीत्यर्थः । एष त्वदाज्ञां न बहु मनुते इति भावः । अथ राजा प्रतिषिद्धमपि विरोधमाचरन्तं भ्रमरं प्रति क्रुद्ध आह—**एवमिति** । एवम् = अनेन विधिना मत्प्रियाऽभिमुखमेव धावन् शासने = निदेशे न तिष्ठसि = न वर्तसे ? अत्र काक्वा प्रश्नः । श्रूयतां तर्हि संप्रति = मदाज्ञोल्लङ्घनस्य मया दास्यमानो दण्डः श्रूयतामित्यर्थः । श्रोतव्यमाह—**अक्लिष्टेति** । हे भ्रमर ! अक्लिष्टबालतरुपल्लवलोभनीयं मया

---

१ अदिअत्थं क्खु । २ दशसि ।

रतोत्सवेषु सदयमेव पीतं प्रियाया बिम्बाधरं स्पृशसि चेत् त्वां कमलोदरबन्धनस्थं कारयामि इत्यन्वयः ।

हे भ्रमर = हे मधुकर ! अक्लिष्टबालतरुपल्लवलोभनीयम्—अक्लिष्टः = केनापि न मृदितः, अशुष्क इति वा बालः = नूतनः तरोः = वृक्षस्य पल्लवः = दलं तद्व- ल्लोभनीयं = सुन्दरम् । अत्र तात्स्थ्यं वक्तुं तरुपदोपादानम् । मया = दुष्यन्तेन रतोत्सवेषु = सुरतक्रीडासु, उत्कण्ठाऽतिशयवताऽपि मया सदयमेव = सानुकम्पम्, स्वादं स्वादमित्यर्थः । पीतं = रसितम्, न तु निर्दयं दष्टम् । एतेन अतिकोमलत्वं ध्वनितम् । तादृशं प्रियायाः = शकुन्तलायाः बिम्बाधरं = बिम्बसदृशमधरोष्ठम् । अनेन रक्तिमाऽतिशयः प्रकाश्यते । स्पृशसि चेत् = दशसि चेत् ! स्पर्शोऽपि न कर्तव्यः, का कथा रसास्वादने इति भावः । त्वाम् = अपराधिनं कमलोदरबन्ध- नस्थम्—कमलस्य = कस्यचित्पद्मस्य उदररूपं यद्बन्धनं = कारागृहं तत्र तिष्ठति यस्तादृशं कारयामि = राजाऽहं त्वां परदारधर्षणापराधेन निरुणध्मि । अनेन तमसा घोरमवातसञ्चारं पद्मोदरं च मदाज्ञया तव कृते कारागृहं भविष्यतीत्याशयः ।

कारयामीति प्रयोजकत्वोक्तिः स्वस्य प्रभुत्वं प्रकाशयति । अनेन सूर्यस्यापि निजाज्ञाकारित्वं ध्वन्यते । स्वाभाविकस्य तस्य स्वप्रयोजकत्वव्यापारेणोक्तेरति- शयोक्तिश्च । प्रतिनायकव्यवहारसमारोपात् समासोक्तिः । कमलोदरे = जलमध्ये बन्धनस्थमिति श्लेषोऽपि । हेतुरूपकोपमाऽनुप्रासाः । वसन्ततिलकं वृत्तम् ।

पूर्ववदेवोन्मादावस्थापन्नो राजा चित्रस्थमात्मना वार्यमाणमप्यनिवृत्तं भ्रमरं प्रति क्रुद्धः सन् दण्डयिष्यामीति तं भीषयन्नाह—'हे भ्रमर ! कामुकवृत्तिस्त्वम- भिनवकरास्पृष्टकोमलपल्लववत्कमनीयं मया च सुरतक्रीडासु स्वादं स्वादं सदयमेव पीतम्, न तु निर्दयं दष्टं मम प्रियायाः शकुन्तलाया बिम्बफलमप्यधरीकुर्वाणं

**विदूषकः**—एव्वं तिक्खणदण्डस्स किं ण भाइस्सदि ? (प्रहस्य आत्मगतम्) एदो दाव उम्मत्तो ! अहं पि एदस्स सङ्गेण [1]ईदिसवण्णो विअ संवुत्तो ! (प्रकाशम्) भो ! चित्तं क्खु एदं !

एवं तीक्ष्णदण्डस्य किं न भेष्यति ? एष तावदुन्मत्तः ! अहमप्येतस्य सङ्गेनेदृशवर्ण इव संवृत्तः ! भोः ! चित्रं खल्वेतत् !

**राजा**—कथं चित्रम् ?

**सानुमती**—अहं पि दाणिं अवगदत्था; किं उण [2]जहालिहि-

रक्तिमातिशयशालिनमधरोष्ठं यदि स्पृशसि, तावतैव तवापराधेन त्वां कमलोदर-रूपे घोरेण तमसाऽऽवृते अवातसंचारे बन्धने निधास्यामि । मम प्रियां धर्षयितुं कृतसाहसस्य तवायमेव दण्डः समुचितः' इति भावः ॥ २० ॥

विदूषको वदति—एव्वं इति । 'एवं तीक्ष्णदण्डस्य किं न भेष्यति ? ( प्रहस्य, आत्मगतम् ) एष तावदुन्मत्तः ! अहमप्येतस्य संगेन ईदृशवर्ण इव संवृत्तः ! ( प्रकाशम् ) भोः ! चित्रं खल्वेतत्' इति संस्कृतम् । तीक्ष्णदण्डस्य = कठोरशासनस्य किं न भेष्यति ? भेष्यत्येवेत्यर्थः । आक्षेपगर्भेयमुक्तिः । सुकुमारोऽयं दण्ड इति भावः । **प्रहस्येति** । स्वावस्थाया अनुसंधानात् हास्यं कृत्वेत्यर्थः । ईदृशवर्णः—अत्र वर्णपदेन स्वभावो लक्ष्यते; एवंविध इत्यर्थः । यद्वा वर्णः = रूपम् । "वर्णः स्याद्रूपभेदयोः" इति **शाश्वतः** । एवंरूप इत्यर्थः । "संसर्गजा दोषगुणा भवन्ति" इति न्यायेन उन्मत्तसंसर्गादहमपि तत्समान एव जातोऽस्मी-त्याशयः । चित्रं खल्वेतदिति कथनेन चित्रस्थस्य मधुकरस्य दण्डनं भवतोऽशक्य-मिति भावः । राजा पृच्छति—**कथमिति** ।

सानुमती वदति--**अहं पि इति** । 'अहमपीदानीमवगतार्था ; किं पुनर्यथा-

1 ईदिसो ज्जेव । 2 जधाचिन्तिदाणुसारी ।

दाणुभावी एसो !

अहमपीदानीमवगतार्था; किं पुनर्यथालिखितानुभाव्येषः !

**राजा**—वयस्य ! किमिदमनुष्ठितं पौरोभाग्यम् ?

**दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन ।**
**स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता ॥२१॥**

---

लिखितानुभाव्येषः' इति संस्कृतम् । इदानीम् = अस्मिन्नेव क्षणे अवगतार्था—अवगतः = ज्ञातः अर्थः = वस्तु, चित्रत्वमित्यर्थः, यया तादृशी संजाता । यथालिखितानुभावी—यथालिखितं = लिखितानुरूपम् अनुभवति ध्यायति यस्तादृशः एषः = राजा । मयाऽपि ज्ञातं सखीमेव पुरः पश्यामीति; शकुन्तलामयहृदय एष राजा चित्रस्थामिमां स्वयमुपस्थितां प्रियामेव मन्यते यदि, तन्न चित्रम् । किं पुनः = किं वक्तव्यमित्यर्थः ।

राजा वदति—**वयस्येति** । किम् = किमर्थम् । पौरोभाग्यम्—पुरोभागिणः = दुष्कर्मनिरतस्य कार्यम्, अकार्यमित्यर्थः । "दोषैकदृक् पुरोभागी" **इत्यमरः** । दोषदर्शित्वमिति वा । अनुष्ठितम् = आचरितम् । पौरोभाग्यमित्यनेन अपराधो लक्ष्यते ।

तमेव विवृण्वन्नाह—**दर्शनसुखमिति** । स्मृतिकारिणा त्वया तन्मयेन हृदयेन साक्षादिव दर्शनसुखमनुभवतो मे कान्ता पुनरपि चित्रीकृता इत्यन्वयः ।

स्मृतिकारिणा = इदं चित्रम्, न साक्षात् शकुन्तलेति स्मृतिं कारितवता त्वया = माधव्येन तन्मयेन = शकुन्तलामयेन हृदयेन = चेतसा, कान्तैवेयमिति दृढबुद्ध्येत्यर्थः । साक्षादिव = प्रत्यक्षमिव । इवेति वाक्यालङ्कारे । दर्शनसुखम्—दर्शनस्य = प्रत्यक्षदृष्टेः सुखम् = आनन्दम् अनुभवतः = उपलभमानस्य मे =

( इति बाष्पं विहरति। )

सानुमती—पुव्वावरविरोही अपुव्वो एसो विरहमग्गो।
पूर्वापरविरोध्यपूर्व एष विरहमार्गः।

मम कान्ता = प्रिया शकुन्तला पुनरपि = भूयोऽपि चित्रीकृता = चित्ररूपेण परिणमिता। अथवा आश्चर्यरूपा कृता। "आलेख्याश्चर्ययोश्चित्रम्" इत्यमरः।

अत्र स्मृतिकारिणा चित्रीकृतेति शब्दशक्तिमूलो विरोधाभासो व्यङ्ग्यः। उत्प्रेक्षाऽलङ्कारः। भोजेन तु "परप्रयत्नादपि स्मरणे स्मरणालङ्कारः" इति स्मरणालंकारं लक्षयता तत्रेदमुदाहृतम्। अकारणपरित्याग इत्यादिना एतदन्तेन प्रबन्धेन चित्रं नाम सन्ध्यन्तराङ्गमुपक्षिप्तम्। तल्लक्षणं तु—"चित्रं स्वाकारस्य विलेखनम्" इति। आर्या जातिः।

शकुन्तलाचित्रं तन्मयेन हृदयेन पश्यन् 'चित्रमिदम्' इति विदूषकेण प्रबोधितस्तस्य तत्प्रबोधनम् अपराधपक्षे गणयन् राजा तस्यापराधरूपत्वमेव वर्णयन्नाह—'सखे माधव्य! विरहविनोदनाय प्रियायाः प्रतिकृतिं लिखित्वा तदानीं तां प्रतिकृतिरूपेणैव जानन्नपि संप्रति तन्मयेन हृदयेन तां साक्षादिव समुपस्थितां प्रियां मन्यमानोऽहं तद्दर्शनसुखान्यनुभवन्नासम्। त्वया तु चित्रमिदमिति कथयता सा मे कान्ता भूयोऽपि आलेख्यरूपैव कृता। अथवा आश्चर्यरूपा कृता। तच्च मे दर्शनसुखमपि विनाशितम्। तस्मात् भवताऽयं गुरुरपराधः कृत इति मन्ये' इति भावः॥ २१॥

इति बाष्पं विहरति—मम प्रिया प्राक् नष्टा, पुनः प्राप्ता, भूयोऽपि नष्टा; इति हेतोरश्रुजलं मुञ्चतीत्यर्थः।

सानुमती वदति—पुव्वावरविरोही इति। 'पूर्वापरविरोधी अपूर्व एष विरहमार्गः' इति संस्कृतम्। पूर्वापरविरोधी—पूर्वस्य = प्रथमावस्थायाः अप-

**राजा**—वयस्य ! कथमेवमविश्रान्तदुःखमनुभवामि ?

**प्रजागरात्खिलीभूतस्तस्याः स्वप्ने समागमः ।**
**बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि ॥ २२ ॥**

---

रस्य = उत्तरावस्थायाश्च यो विरोधः = परस्परप्रतिषेधस्तद्वान् । पूर्वमास्थया प्रियायाः परिग्रहः, पश्चादनास्थया परित्यागः, पुनरिदानीमास्थया पश्चात्ताप इति पूर्वापरविरोधः । यद्वा पूर्वं चित्रस्य चित्रत्वेन ज्ञानम्, पुनस्तस्य उन्मादावस्थायां सत्यत्वेन ज्ञानम्, पुनरपि चित्रत्वेन ज्ञानमिति पूर्वापरविरोधः । अत एव अपूर्वः = आश्चर्यकारी, अदृष्टपूर्वो वा; नूतन इत्यर्थः। विरहमार्गः—विरहस्य = इष्टजनवियोग-शोकस्य मार्गः = पन्थाः, रीतिरित्यर्थः । अत्र विस्मयो भावः ।

अथ राजा आलेख्यदर्शनात्मकस्य विनोदस्य बाष्पादिना प्रतिहननात् सखेदं विदूषकमाह—**वयस्येति** । संबोधनेन त्वमेवात्र मम शरणमिति सूच्यते । **कथमेवेत्यादि** । ईदृक् निरन्तरदुःखमनुभवितुं नाहं शक्नोमीत्यर्थः ।

कुत इत्यत्राह—**प्रजागरादिति** । प्रजागरात् तस्याः स्वप्ने समागमः खिलीभूतः । बाष्पस्तु चित्रगतामप्येनां द्रष्टुं न ददाति इत्यन्वयः ।

प्रजागरात् = रात्रिजागरणात् तस्याः = प्रियायाः शकुन्तलायाः स्वप्ने = निद्रायां समागमः = मत्समीपागमनं खिलीभूतः = प्रतिहतः, निरुद्ध इत्यर्थः । बाष्पस्तु = तां तां पूर्वावस्थां स्मरतो मे दुःखान्नेत्राभ्यां स्रवदश्रुजलम् । "बाष्पो नेत्रजलोष्मणोः" इति **विश्वः** । चित्रगतामपि = आलेख्ये लिखितामपि । अत्र साक्षाद्दर्शनं पुनरतिदुर्लभमेवेत्यपिशब्देन द्योत्यते । एनां = प्रियां द्रष्टुं न ददाति= दर्शनं प्रतिरुन्धे । यद्वा अवसरमिति शेषः ।

हेत्वनुप्रासौ । अनुष्टुप् वृत्तम् ।

सानुमती—सव्वहा पमज्जिदं तुए पच्चादेसदुक्खं ¹सउन्दलाए ।
सर्वथा प्रमार्जितं त्वया प्रत्यादेशदुःखं शकुन्तलायाः ।
( प्रविश्य )

आत्मनः ईदृङ्निरन्तरदुःखसहनाशक्तत्वं वर्णयन् राजा विदूषकमाह—'सखे माधव्य ! प्रणष्टा सा प्रिया मया क्वापि नोपलभ्यते । यदि कदाचित्तां स्वप्ने पश्येयम्, तदपि न संभवति; यतो निरन्तरं तन्मयहृदयतया तामेवानुध्यायतो मम खण्डितेव निद्रा नेत्रयोर्नोपसर्पति । निद्राया अभावेन च स्वप्नोऽप्यसंभवीति तत्रापि तस्याः समागमो दुर्लभ एव । तत् चित्रे दर्शनं विना नान्यच्छरणम् । परं तु तदपि न संभवति; यतः प्रियया सह तानि तानि समागमसुखानि स्मरतो दुःखातिरेकान्नेत्राभ्यामविरतं बाष्पोदकं मुञ्चतो मम नेत्रयोः सर्वदा बाष्प-परिपूरितत्वाच्चित्रदर्शनमपि दुःसंपादमेव । इत्थं द्विविधेऽपि विनोदनोपाये विहते कथय, वयस्य ! कथमविश्रान्तं दुःखमनुभवामि ? अधुना त्वात्मविस्मृतिवशादेको दर्शनोपायो लब्धोऽभूत् । त्वं पुनस्तत्र पौरोभाग्यमाचरन् मां प्रबोधितवानसि । हा धिक् ! किं करोमि मन्दभाग्यः ?' इति भावः ॥२२॥

अथ राज्ञोऽवस्थामालोक्य सानुमती सकरुणमाह—सव्वहा इति । 'सर्वथा प्रमार्जितं त्वया प्रत्यादेशदुःखं शकुन्तलायाः' इति संस्कृतम् । सर्वथा = सर्व-प्रकारेण, वाङ्मनःकायिकैर्व्यापारैरित्यर्थः । प्रमार्जितं = दूरीकृतम् । शकुन्तलायाः प्रत्यादेशदुःखम्—शकुन्तलायाः प्रत्यादेशेन = निराकरणेन यदस्माकं दुःखमभूत्त-दित्यर्थः । तद्दुःखादप्येवमधिकदुःखानुभवदर्शनादिति भावः । यद्वा मया कथ-यिष्यमाणेनैतद्वृत्तान्तेन तव प्रेमातिशयं बुद्ध्वा सा प्रत्यादेशदुःखं परित्यक्ष्यतीति भावः । प्रमार्जितमिति भाविनोऽप्यर्थस्य भूतत्वेन निर्देशः अविलम्बं द्योतयति ।

१ पिअसहीए पच्चक्खं ज्जेव सहिजणस्स ।

**चतुरिका**—जेदु जेदु भट्टा । वट्टिआकरण्डअं गेण्हिअ इदोमुहं पत्थिद ह्मि ।

जयतु जयतु भर्ता । वर्तिकाकरण्डकं गृहीत्वेतोमुखं प्रस्थिताऽस्मि ।

**राजा**—किं च ?

**चतुरिका**—सो मे हत्थादो अन्तरा तरलिआदुदीआए देवीए वसुमदीए अहं एव्व अज्जउत्तस्स उवणइस्सं त्ति सबलक्कारं गहीदो ।

स मे हस्तादन्तरा तरलिकाद्वितीयया देव्या वसुमत्याऽहमेवार्यपुत्रस्योपनेष्यामीति सबलात्कारं गृहीतः ।

**विदूषकः**—[1]दिट्ठिआ तुमं मुक्का ।

---

अत्रान्तरे प्रविष्टा चतुरिका वदति—**जेदु इति**। 'जयतु जयतु भर्ता। वर्तिकाकरण्डकं गृहीत्वा इतोमुखं प्रस्थिताऽस्मि' इति संस्कृतम्। वर्तिकाकरण्डकम्—वर्त्तिका = चित्रलेखनसाधनम्, करण्डकं = भाजनम्। इतोमुखं = भवदभिमुखम्। राजा पृच्छति—**किंचेति**। प्रस्थिताऽसि; ततः किं जातम्, तत्कथयेत्यर्थः। पुनश्चतुरिका वदति—**सो मे इति**। 'स मे हस्तादन्तरा तरलिकाद्वितीयया देव्या वसुमत्या अहमेव आर्यपुत्रस्योपनेष्यामीति सबलात्कारं गृहीतः' इति संस्कृतम्। अन्तरा = मध्ये, मार्गे इत्यर्थः। तरलिकाद्वितीयया—तरलिका नाम देव्या वसुमत्याः सखी, तत्सहितयेत्यर्थः। उपनेष्यामि = समीपं प्रापयिष्यामि, इति = एतदुक्त्वा सबलात्कारं = हठकारितया सहेत्यर्थः। वर्तिकाकरण्डकनयनं विनोदार्थं राज्ञः शकुन्तलाप्रतिकृतिलेखनोपयोगि भवेदिति मत्वा प्रणयकोपेन तद्विघटनाय देव्या वसुमत्या एवमाचरितमिति कोपानुभावोऽयम्।

विदूषकस्तामाह—**दिट्ठिआ इति**। 'दिष्ट्या त्वं मुक्ता' इति संस्कृतम्।

---

१ तुमं कधं विमुक्का ।

दिष्ट्या त्वं मुक्ता।

**चतुरिका**—जाव देवीए विडवलग्गं उत्तरीअं तरलिआ मोचेदि ताव मए णिव्वाहिदो अत्ता।

यावद्देव्या विटपलग्नमुत्तरीयं तरलिका मोचयति तावन्मया निर्वाहित आत्मा।

**राजा**—वयस्य! उपस्थिता देवी बहुमानगर्विता च। भवानिमां प्रतिकृतिं रक्षतु।

**विदूषकः**—अत्ताणं त्ति भणाहि। (चित्रफलकमादायोत्थाय च)

---

दिष्ट्या = सौभाग्येन। वर्तिकाकरण्डकवत् त्वमपि देव्या न गृहीतेति आत्मनः सौभाग्यं मन्यस्वेत्यर्थः। चतुरिका वदति—**जाव** इति। 'यावद्देव्या विटपलग्नमुत्तरीयं तरलिका मोचयति तावन्मया निर्वाहित आत्मा' इति संस्कृतम्। विटपलग्नं = वृक्षशाखासंसक्तम्। इदं कोपेनससंभ्रमगमनात्। आत्मा = देहः। निर्वाहितः = इमं देशं प्रापितः, पलायिताऽस्मीत्यर्थः। तेनैवाहं मुक्ता, न हि स्वेच्छया तयोरिति भावः। "आत्मा देहमनोब्रह्मस्वभावधृतिबुद्धिषु" इति विश्वः।

राजा वदति—**वयस्येति**। उपस्थिता = आगतप्राया। बहुमानगर्विता—बहुमानेन = इयद्दिनपर्यन्तं मत्कर्तृकेण बह्वादरेण गर्विता = जातगर्वा। अहमेव आर्यपुत्रस्य बहुमतेत्यभिमानवतीत्यर्थः। भवानिमां प्रतिकृतिं रक्षतु = भवता एतच्चित्रं गोपनीयम्। देवी यद्येतदवस्थं मामवलोकयेत्तदा कुपितायास्तस्याः प्रसादनं दुःशकं स्यात्। यदि च सा मया प्रयत्नलिखितामिमां शकुन्तलाप्रतिकृतिं पश्येत्, नूनमीर्ष्यया एनां नाशयेत्। अतो भवानिमां प्रतिकृतिं गृहीत्वा इतः शीघ्रमपयात्विति भावः।

देव्यागमनश्रवणेन विदूषकः ससंभ्रममाह—**अत्ताणं इति**। 'आत्मानमिति भण। (चित्रफलकमादाय उत्थाय च) यदि भवानन्तःपुरकालकूटान्मोक्ष्यते तदा

जइ भवं [1]अन्तेउरकालकूडादो मुच्चीअदि तदो म मेहप्पडिच्छन्दे पासादे सद्दावेहि ।

आत्मानमिति भण । यदि भवानन्तःपुरकालकूटान्मोक्ष्यते तदा मां मेघप्रतिच्छन्दे प्रासादे शब्दापय । ( इति द्रुतपदं निष्क्रान्तः । )

**सानुमती**—अण्णसंकन्तहिअओ वि पढमसंभावणं [2]अवेक्खदि; सिढिलसोहदो दाणिं एसो ।

मां मेघप्रतिच्छन्दे प्रासादे शब्दापय' इति संस्कृतम् । आत्मानमिति भण = भवान् आत्मानं रक्षतु इति कथयेत्यर्थः । किं मन्यसे प्रतिकृतिमात्रं नाशयेद्देवी ? मामपि हन्याद्यदि पश्येत् । तन्न केवलं प्रतिकृतिरपि तु मया तत्सकाशादात्माऽपि रक्षणीय इति भावः । यद्वा अत्र आत्मशब्देन विदूषको राजा चेत्युभयमपि गृह्यते । तेन प्रतिकृतिरक्षणेनोभावपि रक्षितौ भवेतामित्याशयः । अन्तःपुरकालकूटात्—अन्तःपुरमेव कालकूटं = महाविषम् । अत्र कालकूटशब्देन कालुष्यसादृश्यात् कलहो लक्ष्यते । अन्तःपुरकलहादित्यर्थः । मोक्ष्यते = मुक्तो भविष्यति । मेघप्रतिच्छन्दे प्रासादे—मेघप्रतिच्छन्द इति प्रासादस्य गुणनाम । शब्दापय = शब्दं कारय । तत्र भवदाह्वानं श्रुत्वा अहं शब्दं करिष्यामीत्यर्थः । द्रुतपदं निष्क्रान्तः—द्रुतानि = सत्वराणि पदानि यस्मिंस्तद्यथा स्यात्तथा निष्क्रान्तः । एतदर्थमेव देवीप्रसंगः । निष्क्रमणफलं च मातलिप्रवेशे स्पष्टीभविष्यति । विदूषकस्य मेघच्छन्दप्रासादप्राप्तिस्तत्र मातलिप्रवृत्तिसौकर्यायेत्यग्रे स्फुटी भविष्यति ।

अथ सानुमती राज्ञो वचनमाकर्ण्य तेन तस्य देवीविषये असाधारणं दाक्षिण्यमवगत्य सविस्मयं श्लाघमाना वदति—**अण्णसंकन्तहिअओ** इति । 'अन्यसंक्रान्तहृदयोऽपि प्रथमसंभावनामपेक्षते; शिथिलसौहार्द इदानीमेषः'

१ अन्तेउरकूटवागुरादो । २ रक्खदि ।

अन्यसंक्रान्तहृदयोऽपि प्रथमसंभावनामपेक्षते; शिथिलसौहार्द इदानीमेषः ।

( प्रविश्य पत्रहस्ता )

प्रतीहारी—जेदु जेदु देवो ।

जयतु जयतु देवः ।

राजा—वेत्रवति ! न खल्वन्तरा दृष्टा त्वया देवी ?

प्रतीहारी—अह इं ! पत्तहत्थं मं देक्खिअ पडिणिउत्ता ।

अथ किम् ! पत्रहस्तां मां प्रेक्ष्य प्रतिनिवृत्ता ।

राजा—कार्यज्ञा कार्योपरोधं मे परिहरति ।

---

इति संस्कृतम् । अन्यसंक्रान्तहृदयोऽपि—अन्यस्यां = शकुन्तलायां संक्रान्तम् = आसक्तं हृदयं यस्य तादृशोऽपि प्रथमसंभावनाम्—प्रथमा = पूर्वमहिषी तत्संभावनं = तद्बहुमानम् । यद्वा प्रथमा = प्राक्कृता या संभावना = सत्क्रिया, पूर्वदर्शिता या वसुमत्यां प्रीतिस्तामित्यर्थः । अपेक्षते = मानयति । शिथिलसौहार्दः—शिथिलं = मन्दं सौहार्दं = प्रेम यस्य स तथाविधः । सर्वेश्वरोऽपि सन्नयं राजा देव्या वसुमत्याः सकाशात् प्रतिकृतिं निगूहति । तत्र कारणं प्रथमप्रदर्शितप्रणयगौरवम्, न तु वसुमतीप्रेमेति भावः ।

अथ राज्ञो विरहवेदनायाः परिपोषं प्रदर्शयितुमनपत्यतादुःखं वर्णयिष्यन् कविः प्रतीहार्याः प्रवेशमाह—प्रविश्य पत्रहस्तेति । जेदु इति । 'जयतु जयतु देवः' इति संस्कृतम् ।

राजा पृच्छति—वेत्रवतीति । खल्विति प्रश्ने । देवी = वसुमती । अन्तरा = मध्ये, मार्गे इत्यर्थः । प्रतीहारी वदति—अह इं इति । 'अथ किम् ! पत्रहस्तां मां प्रेक्ष्य प्रतिनिवृत्ता' इति संस्कृतम् । राजा वदति—कार्यज्ञेति । कार्यज्ञा—कार्यं = करणीयं जानाति या तथाविधा, कार्याकार्यविवेकिनी । इदं हेतुगर्भम् ।

**प्रतीहारी**—देव ! अमच्चो विण्णवेदि—'अत्थजादस्स गणणाबहुलदाए एक्कं एव्व पोरकज्जं अवेक्खिदं; तं देवो पत्तारूढं पच्चक्खीकरेदु त्ति ।

देव ! अमात्यो विज्ञापयति—अर्थजातस्य गणनाबहुलतयैकमेव पौरकार्यमवेक्षितम्; तद्देवः पत्रारूढं प्रत्यक्षीकरोत्विति ।

**राजा**—इतः पत्रिकां दर्शय ।

( प्रतिहार्युपनयति । )

**राजा**—( अनुवाच्य ) कथम् ? समुद्रव्यवहारी सार्थवाहो धन-

---

कार्योपरोधम्—कार्यस्य = राजकार्यस्य उपरोधं = विघ्नं परिहरति = त्यजति । राजकार्यस्य विघ्नजननमकार्यमिति मत्वा निवर्त्तते देवी इति भावः ।

प्रतीहारी वदति—**देवेति** । 'देव ! अमात्यो विज्ञापयति—अर्थजातस्य गणनाबहुलतया एकमेव पौरकार्यमवेक्षितम् ; तद्देवः पत्रारूढं प्रत्यक्षीकरोत्विति' इति संस्कृतम् । अर्थजातस्य = तैस्तैराधिकरणिकैः प्रेषितस्य वित्तसमूहस्य गणनाबहुलतया—गणनायाः = संख्यानस्य बहुलतया = बाहुल्येन । अवेक्षितम् = आलोचितम् । पत्रारूढम् = पत्रे आरूढम्, पत्रस्थम् । देवः प्रत्यक्षीकरोतु = स्वयमालोचयतु । राजा वदति—**इत इति** । इतः पत्रिकां दर्शय = पत्रिकां मत्समीपमुपनयेत्यर्थः ।

**राजेति** । अनुवाच्य = प्रपठ्य । कथमिति विचारे । समुद्रव्यवहारी—समुद्रेण व्यवहरति = पणते, क्रयविक्रयकर्म कुरुते यस्तथाविधः; पोतवणिगित्यर्थः । सार्थवाहः—सार्थान् = वणिक्समूहान् वाहयति = प्रापयति देशान्तराणि यस्तथाविधः, वणिक्पतिः । धनमित्र इति तन्नाम । नौव्यसने—नावां = पोतानां व्यसनं भ्रंशः, जलमज्जनं तस्मिन् । "व्यसनं विपदि भ्रंशे" इत्यमरः । विपन्नः=

---

१ रज्जकज्जस्स बहुलतया ।

मित्रो नाम नौव्यसने विपन्नः ? अनपत्यश्च किल तपस्वी ? राजगामी तस्यार्थसंचय इत्येतदमात्येन लिखितम् । कष्टं खल्वनपत्यता ! बहुधनत्वाद्बहुपत्नीकेन तत्रभवता भवितव्यम् ! विचीयतां यदि काचिदापन्नसत्त्वा तस्य भार्यासु स्यात् ।

**प्रतीहारी**—देव ! दाणिं एव्व साकेदअस्स सेट्ठिणो दुहिआ णिव्वुत्तपुंसवणा जाआ से सुणीअदि ।

देव ! इदानीमेव साकेतस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना जायाऽस्य श्रूयते ।

**राजा**—ननु गर्भः पित्र्यं रिक्थमर्हति । गच्छ; एवममात्यं ब्रूहि ।

**प्रतीहारी**—जं देवो आणवेदि ।

---

मृतः । अनपत्यः = पुत्रकन्याद्यपत्यरहितः । किलेति वार्तायाम् । तपस्वी = अनुकम्प्यः । राजगामी = राजैकलभ्यः तस्य = धनमित्रस्य वणिजः । अर्थसंचयः = प्रभूतमर्थजातम् । धनमित्रावस्थां विचिन्त्य सविषादमाह—**कष्टमिति** । कष्टं = दुःखोत्पादिकेत्यर्थः । अत्र कार्यकारणयोरभेदोपचारः । बहुधनत्वात् = आढ्यत्वात् बहुपत्नीकेन = भार्याबाहुल्यवता । विचीयताम् = अन्विष्यताम् । आपन्नसत्त्वा = गर्भिणी । प्रतीहारी वदति—**देवेति** । 'देव ! इदानीमेव साकेतस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना जाया अस्य श्रूयते' इति संस्कृतम् । साकेतस्य = अयोध्यानिवासिनः श्रेष्ठिनः = वणिजः । निर्वृत्तपुंसवना—निर्वृत्तं = संपन्नं पुंसवनं = गर्भाधानोत्तरं कर्तव्यः संस्कारविशेषो यस्यास्तादृशी अस्तीति श्रूयते ।

राजा वदति—**नन्विति** । नन्वित्यवधारणे । गर्भः = गर्भस्थमपत्यं पित्र्यं = पितुरागतं रिक्थं = धनम् । "रिक्थं धनं वसु" **इत्यमरः** । अर्हति = लब्धुं योग्यो भवति । एवं = गर्भः पित्र्यं रिक्थमर्हतीत्येवंरूपम् । प्रतीहारी वदति—**जं देवो इति** । 'यद्देव आज्ञापयति' इति संस्कृतम् ।

यद्देव आज्ञापयति। ( इति प्रस्थिता। )

**राजा**—एहि तावत्।

**प्रतीहारी**—इअह्मि।

इयमस्मि।

**राजा**—किमनेन संततिरस्ति नास्तीति ?

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना।
स स पापादृते तासां दुष्यन्त इति घुष्यताम्॥ २३॥

---

अथ राजा अपरमपि किञ्चिद्वक्तुकामः प्रस्थितामपि प्रतीहारीं निवर्तयितुकामः प्राह—**एहि तावदिति**। प्रतीहारी वदति—**इअं ह्मि इति**। 'इयमस्मि' इति संस्कृतम्। राजा वदति—**किमनेनेति**। सन्ततिरस्तु वा, माऽस्तु वा; तद्विचारो माऽस्त्विति भावः।

धनमित्रस्य अर्थजातं तद्बान्धवैरुपभुज्यतामित्यर्थं दर्शयितुं सामान्येनाह—**येन येनेति**। प्रजाः येन येन स्निग्धेन बन्धुना वियुज्यन्ते, पापादृते दुष्यन्तस्तासां स स इति घुष्यताम् इत्यन्वयः।

प्रजाः = जनाः येन येन स्निग्धेन = स्नेहयुक्तेन बन्धुना = बान्धवेन, पित्रादिस्वजनेन वियुज्यन्ते = वियुक्ता भवन्ति, पापादृते = पातकिनं विहाय। पापस्य विपत्तौ तत्कार्यकारी नेत्यर्थः। यद्वा पापादृते = स्त्रीणां भर्तृत्वेन विनेत्यर्थः। दुष्यन्तः = तन्नामकोऽहं राजा तासां = प्रजानां स स इति = येन बन्धुना प्रजा वियुक्ताः स स बन्धुरिति घुष्यताम् = विज्ञाप्यताम्, भेरीप्रहारपूर्वकमावेद्यतामित्यर्थः।

छेकवृत्त्यनुप्रासावलंकारौ। अनुष्टुप् वृत्तम्।

प्रतीहारी—एव्वं णाम घोसइदव्वं। (निष्क्रम्य, पुनः प्रविश्य) काले पवुट्ठं विअ अहिणन्दिदं देवस्स सासणम्।

एवं नाम घोषयितव्यम्। काले प्रवृष्टमिवाभिनन्दितं देवस्य शासनम्।

राजा—(दीर्घमुष्णं च निःश्वस्य) एवं भोः! संततिच्छेदनिरवल-

---

धनमित्रस्यानपत्यत्वेऽपि तदीयमर्थजातं राजगामि न भवतु, तद्बान्धवा एव तमर्थ-मुपभुञ्जन्तु इत्याशयवान् राजा सामान्यात्मना स्वप्रजासु घोषणीयमर्थं विवृणोति—'मम राज्ये प्रजासु यः कश्चित् येन येन आत्मीयेन सुतकलत्रादिना बन्धुना वियुक्तो भवति, तेन अहं राजा दुष्यन्त एव स आत्मीयो बन्धुरिति निर्धार्यताम्। केवलं ये पापिनो जनास्तेषां बन्धुर्नाहं भवितुमिच्छामि। पतिवियुक्ताभिः स्त्रीभिश्च नाहं पतिरित्यवधारणीयः, तथा सति उभयोरपि पातकित्वं प्रसज्येत। धनमि-त्रस्य च अपत्यं नास्तीति न मन्तव्यम्। यतोऽहमेव तस्य अपत्यस्थानीयोऽस्मीति तदीयमर्थजातं तद्बान्धवाः सुखमुपभुञ्जन्तु। घुष्यतां चायमर्थः प्रकृतिषु' इति भावः॥ २३॥

प्रतीहारी वदति—एव्वं इति। 'एवं नाम घोषयितव्यम्। (निष्क्रम्य, पुनः प्रविश्य) काले प्रवृष्टमिवाभिनन्दितं देवस्य शासनम्' इति संस्कृतम्। एवं नाम घोषयितव्यम्=एवं घोषयिष्यामीत्यर्थः। काले=अपेक्षितसमये प्रवृष्टं=प्रभूतवृष्टिः। योग्यकाले पर्जन्यागमनमिव राजशासनं लोकैः पूजितमित्यर्थः। अत्र प्रतीहार्याः पुनः प्रवेशं यावत् राज्ञो व्यापारान्तरराहित्यवर्णनेन राजा अनप-त्यतावस्थामेव ध्यायन् स्थित इति सूच्यते।

अथ राजा अनपत्यतावस्थामेव चिन्तयन् स्वयमाह—एवमिति। एवं=धनमित्रवत्। भो इति अलक्ष्यामन्त्रणं प्रतीहारीसंबोधनं वा। यद्वा भोः इति

म्बानां कुलानां मूलपुरुषावसाने संपदः परमुपतिष्ठन्ति ! ममाप्यन्ते [1]पुरुवंशश्रिय एष वृत्तान्तः !

**प्रतीहारी**—पडिहदं अमङ्गलम् ।

प्रतिहतममङ्गलम् ।

**राजा**—धिङ्मामुपस्थितश्रेयोऽवमानिनम् !

---

चिन्तायाम् । दीर्घनिःश्वासादयस्तदनुभावाः । संततिच्छेदनिरवलम्बानाम्—संतत्याः = पुत्रकन्यादिसंतानस्य छेदेन = अभावेन निरवलम्बानां = निराश्रयाणाम् । मूलपुरुषावसाने—मूलपुरुषस्य = कारणपुरुषस्य अवसाने = अन्ते, अभावे, नाशे इत्यर्थः । परम् = अन्यं जनम् उपतिष्ठन्ति = संगच्छन्ते । उक्तमर्थमात्मनि योजयन्नाह—**ममापीति** । ममापि = पुरुवंशचरमपुरुषस्य दुष्यन्तस्य अन्ते = अवसाने, मयि मृते इत्यर्थः । पुरुवंशश्रियः = पुरुवंशराजलक्ष्म्याः । अत्र वंशवैशिष्ट्यं द्योतयता पुरुपदेन तद्राजलक्ष्म्याः परोपस्थानमतिशोच्यमिति सूच्यते । एष वृत्तान्तः = एतत्सदृशो वृत्तान्तः । स्यादिति शेषः । तच्छ्रुत्वा प्रतीहारी आह—**पडिहदं इति** । 'प्रतिहतममङ्गलम्' इति संस्कृतम् । अमङ्गलं = भवदन्तरूपं पौरवश्रियः पराश्रयणं च प्रतिहतं = निराकृतं भवतु ।

अत्रार्थे आत्मानमेवापराधिनं मन्यमानो राजा सनिर्वेदमाह—**धिगिति** । उपस्थितश्रेयोऽवमानिनम्—उपस्थितं = स्वयं प्राप्तं यच्छ्रेयः = सापत्यदाररूपं तदवमन्यते यस्तथाविधं मां धिक् । अत्र श्रेयःपदेन आपन्नसत्त्वा शकुन्तला विवक्षिता ।

---

१ पुरुवंशश्रीरकाल इवोप्तबीजा भूरेव वृत्ता ।

सानुमती—असंसअं सहिं एव्व हिअए करिअ णिन्दिदो णेण अप्पा ।

असंशयं सखीमेव हृदये कृत्वा निन्दितोऽनेनात्मा ।

राजा—

संरोपितेऽप्यात्मनि धर्मपत्नी
त्यक्ता मया नाम कुलप्रतिष्ठा ।
कल्पिष्यमाणा महते फलाय
वसुन्धरा काल इवोप्तबीजा ॥ २४ ॥

---

सानुमती स्वगतमाह—**असंसअं** इति । 'असंशयं सखीमेव हृदये कृत्वा निन्दितोऽनेनात्मा' इति संस्कृतम् । असंशयं = निस्सन्देहम् । राजोक्तार्थानुवादप्रायमेतत् । सखीमेव = शकुन्तलामेव ।

अथ राजा उपस्थितश्रेयोऽवमानिनमिति पूर्वोक्तमेवार्थं दुःखातिशयेन विशदीकुर्वन्नाह—**संरोपितेऽपीति** । काले उप्तबीजा महते फलाय कल्पिष्यमाणा वसुन्धरेव कुलप्रतिष्ठा धर्मपत्नी आत्मनि संरोपितेऽपि मया त्यक्ता नाम इत्यन्वयः।

काले = स्वसमये उप्तबीजा—उप्तम् = आहितं बीजं यस्यां तादृशी, न्यस्तबीजेत्यर्थः । इदं पत्नीपक्षेऽपि योज्यम् । महते = प्रभूताय फलाय = सस्याय, पत्नीपक्षे संतानरूपाय कल्पिष्यमाणा = प्रभविष्यन्ती वसुन्धरेव = रत्नधात्री पृथ्वीव कुलप्रतिष्ठा—कुलस्य = पुरुवंशस्य प्रतिष्ठा = स्थितिहेतुभूता । ( परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे । समुद्ररशना चोर्वी सखी च युवयोरियम् ॥ इति प्रागुक्तेः।) धर्मपत्नी = धर्मदाराः शकुन्तला आत्मनि संरोपितेऽपि = बीजे निषिक्तेऽपीत्यर्थः । पुत्रगर्भे उत्पादितेऽपीति भावः । "आत्मा प्रविश्य जायायां पुत्ररूपेण जायते"

सानुमती—'अपरिच्छिण्णा दाणिं दे संददी भविस्सदि ।

इति स्मृतेः । "आत्मा वै पुत्रनामासि" इति आत्मनः पुत्रत्वश्रुतेश्च । आसन्नप्रसवायास्तस्यास्तत्कालं परित्यागोऽत्यन्तमनुचित आसीदित्यपिशब्दो द्योतयति । मया = दुष्यन्तेन, तादृशधार्मिकेण तादृशसावधानेनेत्यर्थान्तरसंक्रमितम् । त्यक्ता नाम = निराकृता नाम । नामेति कुत्सने ।

अत्र वसुन्धरेवेत्युपमा, महते फलाय कल्पिष्यमाणेति साधारणो धर्मः । काव्यलिङ्गं च । धर्मपत्नीपरित्यागः कृत इत्येव नापराधः, संततिविच्छेदस्याप्यहमेव हेतुरिति निर्वेदाद्युपस्कृतः शोकातिशयो गम्यते । इन्द्रवज्रोपेन्द्रवज्रयोरष्टमी उपजातिः ।

आत्मनः उपस्थितश्रेयोऽवमानित्वं विवृण्वन् राजा आह—योग्यकाले न्यस्तबीजा, अत एव भविष्यति काले प्रभूताय धान्यादिफलाय प्रभविष्यन्ती रत्नधात्री पृथ्वीव आत्मनः कुलस्य स्थितिहेतुभूता 'द्वे प्रतिष्ठे कुलस्य मे' इत्यादिना स्वयं च तथा प्रतिश्रुता, स्वयं निषिक्तबीजा, आपन्नसत्त्वा धर्मदाराः शकुन्तला धार्मिकंमन्येनापि मया परित्यक्ता । यथा योग्यकाले उप्तबीजा पृथ्वी कालान्तरे प्रभूतं सस्यं ददाति, एवं मया स्वयं निषिक्तबीजा धृतगर्भा मम धर्मपत्नी शकुन्तलाऽपि दशमासानन्तरं मम कुलस्थितिहेतुभूतं सुन्दरं कुमारमजनयिष्यत्, येन मे संततिच्छेदचिन्ताऽपि नाभविष्यत् । किन्तु दुर्भाग्योऽहमापन्नसत्त्वामपि तां परित्यज्य संप्रति धिक्करोमि निजभाग्यानि, इति सत्यमेवाहमुपस्थितश्रेयोऽवमानी' इति भावः ॥ २४ ॥

अनपत्यताविषये राज्ञो विलपितं श्रुत्वा दयमानहृदया सानुमती तस्मै स्वगतं

१ अपरिच्छिन्ना ।

अपरिच्छिन्नेदानीं ते सन्ततिर्भविष्यति।

**चतुरिका**—(जनान्तिकम्) अए! इमिणा सत्थवाहवुत्तन्तेण द्विउणुव्वेओ भट्टा! णं अस्सासिदुं मेहप्पडिच्छन्दादो अज्जं माढव्वं गेण्हिअ आअच्छामि।

अयि! अनेन सार्थवाहवृत्तान्तेन द्विगुणोद्वेगो भर्ता! एनमाश्वासयितुं मेघप्रतिच्छन्दादार्यं माधव्यं गृहीत्वा आगच्छामि।

**प्रतीहारी**—सुट्ठु भणासि।

सुष्ठु भणसि। (इति निष्क्रान्ता।)

**राजा**—अहो! दुष्यन्तस्य संशयमारूढाः पिण्डभाजः! कुतः!

---

शुभाशीः प्रयुङ्क्ते—**अपरिच्छिण्णा इति**। 'अपरिच्छिन्नेदानीं ते संततिर्भविष्यति' इति संस्कृतम्। इदानीं = शकुन्तलायां तव पुत्रे सर्वदमने जाते संततिः = कुलप्रवाहः अपरिच्छिन्ना = विच्छेदरहिता।

चतुरिका वदति—**अए इति**। 'अयि! अनेन सार्थवाहवृत्तान्तेन द्विगुणोद्वेगो भर्ता! एनमाश्वासयितुं मेघप्रतिच्छन्दादार्यं माधव्यं गृहीत्वा आगच्छामि' इति संस्कृतम्। सार्थवाहवृत्तान्तेन—सार्थवाहस्य = वणिक्पतेर्धनमित्रस्य वृत्तान्तेन = वार्तया द्विगुणोद्वेगः—द्विगुणः = समधिकः उद्वेगः = पीडा यस्य स तथाविधः। मेघप्रतिच्छन्दात् = तन्नामकात् प्रासादात्। प्रतीहारी वदति—**सुट्ठु इति**। 'सुष्ठु भणसि' इति संस्कृतम्।

अथ राजा अनपत्यतया न केवलमैहिकस्य, अपि तु पारत्रिकस्यापि कल्याणस्य विघातो जात इति अत्यन्तं शोचति—**अहो इति**। अहो इति खेदे। दुष्यन्तस्येति निन्दागर्भम्। संशयमारूढाः—संशयं = सङ्कटम् आरूढाः = आपन्नाः पिण्डभाजः = पितरः, नूनमन्नकृच्छ्रमुत्पश्यन्ति पितर इत्यर्थः। तत्र हेतुमाह—**कुत इति**।

अस्मात्परं बत यथाश्रुति संभृतानि
को नः कुले निवपनानि [1]करिष्यतीति।
नूनं प्रसूतिविकलेन मया प्रसिक्तं
[2]धौताश्रुशेषमुदकं पितरः पिबन्ति ॥ २५ ॥

पितॄणामवस्थां संभावयन्नाह—**अस्मादिति**। नूनं बत अस्मात् परं नः कुले यथाश्रुति संभृतानि निवपनानि कः करिष्यति? इति पितरः प्रसूतिविकलेन मया प्रसिक्तमुदकं धौताश्रुशेषं पिबन्ति इत्यन्वयः।

नूनं = निश्चयेन। बतेति खेदे। अस्मात् परं = दुष्यन्तात्परम्, पश्चात्; मृते दुष्यन्ते इत्यर्थः। नः कुले = पुरुवंशे यथाश्रुति = वेदानतिक्रमेण, वेदोक्तविधानपूर्वकमित्यर्थः। संभृतानि = सञ्चितानि, बहूपकरणयुक्तानि वा। निवपनानि = श्राद्धादीनि, पितृतर्पणादीनि च। "पितृदानं निवापः स्यात्" इत्यमरः। कः करिष्यति? न कोऽपीत्यर्थः। नियच्छतीति पाठे वर्तमानसामीप्ये लट्, दास्यतीत्यर्थः। इति = एवं सञ्चिन्त्य पितरः = मम पूर्वपुरुषाः प्रसूतिविकलेन—प्रसूत्या= सन्तत्या विकलेन = रहितेन, अनपत्येनेत्यर्थः। मया = दुष्यन्तेन प्रसिक्तं = दत्तम् उदकं = जलं धौताश्रुशेषम्—धौतानि = क्षालितानि अश्रूणि=बाष्पजलानि येन तस्मात् शेषम् = अवशिष्टं यथा तथा पिबन्ति = धयन्ति। मद्दत्तेन जलेन प्रथममश्रूणि क्षालयित्वा पश्चात्तच्छेषं जलं पितरः पिबन्तीति संभावयामीत्यर्थः।

काव्यलिङ्गोत्प्रेक्षालङ्कारौ। वसन्ततिलकं वृत्तम्।

आत्मनोऽनपत्यतया स्वस्मात्परं पिण्डदाभावात् पितॄणां संशयारूढत्वं निश्चित्य तेषां सांप्रतिकीमवस्थां सम्भावयन् राजा वर्णयति—'मया खलु अद्य यावत् मम

१ नियच्छतीति। २ धौताश्रुसेकम्।

( इति मोहमुपगतः । )

चतुरिका—( ससंभ्रममवलोक्य ) समस्ससदु भट्टा ।

समाश्वसितु भर्ता ।

सानुमती—हद्धी ! हद्धी ! सदि क्खु दीवे ववधाणदोसेण एसो

पूर्वं पितरो वेदोक्तविधानानुसारेण श्राद्धैस्तर्पणैश्च संभाविताः । मम चानपत्यतया मत्तः परं नास्ति कोऽपि तेभ्यो मह्यं च पिण्डदाता । अतो मन्ये निरपत्येन मया संप्रति दीयमानमुदकं पितरो धौताश्रुशेषं पिबन्ति । अग्रे कोऽप्युदकदाता नास्तीति शोकेन रुदन्तस्ते मद्त्तेन तर्पणोदकेन प्रथममश्रूणि मार्जयन्ति, पश्चात्तदेवावशिष्टं पिबन्ति' इति भावः ॥२५॥

मोहमुपगत इति । मूर्च्छित इत्यर्थः । अनेन राज्ञः पश्चात्तापस्य पराकाष्ठा द्योत्यते ।

चतुरिका वदति—समस्ससदु इति । 'समाश्वसितु भर्ता' इति संस्कृतम् ।

अथ सानुमती राज्ञस्तादृशीमवस्थामालोक्य सकरुणमाह—हद्धि इति । 'हा धिक् ! हा धिक् ! सति खलु दीपे व्यवधानदोषेण एषोऽन्धकारदोषमनुभवति ! अहमिदानीमेव निर्वृतं करोमि । अथवा श्रुतं मया शकुन्तलां समाश्वासयन्त्या महेन्द्रजनन्या मुखात्—यज्ञभागोत्सुका देवा एव तथाऽनुष्ठास्यन्ति, यथा अचिरेण धर्मपत्नीं भर्ता अभिनन्दिष्यतीति । तत्र युक्तं कालं प्रतिपालयितुम्; यावदनेन वृत्तान्तेन प्रियसखीं समाश्वासयामि' इति संस्कृतम् । सति खलु दीपे व्यवधान-दोषेण एषोऽन्धकारदोषमनुभवति—सत्येव पुत्रे तदज्ञानादेष तद्राहित्यदुःखमनुभवतीत्यर्थः । अत्र ललितालंकारः । व्यवधानदोषेण—व्यवधानम् देशान्तरेण, अपवरकादिना च; स एव दोषस्तेन अन्धकारदोषं मोहलक्षणम् । अथ च तिमिर-

अन्धआरदोसं अणुहोदि ! 'अहं दाणिं एव्व णिव्वुदं करेमि। अहवा सुदं मए सउन्दलं समस्ससअन्तीए महेन्दजणणीए मुहादो—जण्णभाओस्सुआ देवा एव्व तह अणुचिट्ठिस्सन्ति, जह अइरेण धम्मपदिणिं भट्टा अहिणन्दिस्सदि त्ति। ता ण जुत्तं कालं पडिपालिदुं; जाव इमिणा वुत्तन्तेण पिअसहिं समस्सासेमि।

हा धिक्! हा धिक्! सति खलु दीपे व्यवधानदोषेणषोऽन्धकारदोषमनुभवति! अहमिदानीमेव निर्वृतं करोमि। अथवा श्रुतं मया शकुन्तलां समाश्वासयन्त्या महेन्द्रजनन्या मुखात्—यज्ञभागोत्सुका देवा एव तथानुष्ठास्यन्ति, यथाऽचिरेण धर्मपत्नीं भर्ताऽभिनन्दिष्यतीति। तन्न युक्तं कालं प्रतिपालयितुम्; यावदनेन वृत्तान्तेन प्रियसखीं समाश्वासयामि। ( इत्युद्भ्रान्तकेन निष्क्रान्ता। )

---

कृत दोषं वस्त्वदर्शनलक्षणम्। सत्यामपि शकुन्तलायां तददर्शने प्रस्तुते साम्याद्दीपकस्याप्रस्तुतस्य वचनादप्रस्तुतप्रशंसा वा। निर्वृतं करोमि = सुखितं करोमि, पुत्रसद्भावं निवेदयामीति भावः। अथवेत्याक्षेपे। न निवेदयामीत्यर्थः। तत्र हेतुमाह—**श्रुतमित्यादि**। महेन्द्रजनन्याः = अदितेः। अयमुत्तराङ्कबिन्दुः। कालं प्रतिपालयितुं = विलम्बं कर्तुमित्यर्थः। अनेन वृत्तान्तेन = आलेख्यविनोदनमोहोपगमनादिवृत्तान्तेनेत्यर्थः। अनेन आदानं नामाङ्गमुपक्षिप्तम्। तल्लक्षणं तु—"बीजकार्योपगमनमादानमिति संज्ञितम्" इति। 'भर्ता शकुन्तलामभिनन्दिष्यति' इति बीजकार्योपगमनम्। **उद्भ्रान्तकेन निष्क्रान्तेति**। उद्भ्रान्तकेन = उद्भ्रान्तकनाम्ना उत्प्लुतिकरणेन। अस्मिन्नङ्के यदर्थं सानुमत्याः प्रवेशः कल्पितस्तत्कार्यमेतावता निर्व्यूढम्। निष्क्रान्ता च सानुमतीति।

अथ नायकं राजानं रसान्तरे प्रवेशयितुं मातलिप्रवेशं प्रस्तौति—

---

१ किं दाणिं।

( नेपथ्ये )

अब्बम्हण्णम् !

अब्रह्मण्यम् !

**राजा**—( प्रत्यागतः, कर्णं दत्त्वा ) अये ! माधव्यस्येवार्तस्वरः ! कः कोऽत्र भोः ?

( प्रविश्य )

**प्रतीहारी**—( ससंभ्रमम् ) परित्ताअदु देवो संसअगदं वअस्सम् ।

परित्रायतां देवः संशयगतं वयस्यम् ।

**राजा**—केनात्तगन्धो माणवकः ?

**प्रतीहारी**—अदिट्ठरूवेण केण वि सत्तेण अदिक्कमिअ मेहप्पडिच्छन्दस्स पासादस्स अग्गभूमिं आरोविदो ।

---

**नेपथ्ये—अब्बम्हण्णं इति**। 'अब्रह्मण्यम्' इति संस्कृतम्। ब्रह्मणि साधु ब्रह्मण्यम्, न ब्रह्मण्यम् अब्रह्मण्यम्। ब्राह्मणविषये यत् निषिद्धं तत्, ब्रह्महत्येत्यर्थः। अवध्योऽहमिति भावः। "अब्रह्मण्यमवध्योक्तौ" इत्यमरः।

**कर्णं दत्त्वेति**। अनेन राज्ञो मोहनवृत्तिर्दर्शिता। माधव्यस्येव = विदूषकस्येव। आर्तस्वरः = रोदनम्।

प्रतीहारी प्रविश्य ससम्भ्रममाह—**परित्ताअदु इति**। 'परित्रायतां देवः संशयगतं वयस्यम्' इति संस्कृतम्। संशयगतं = जीवनमरणसंशयं प्राप्तं वयस्यं = विदूषकम्। राजा पृच्छति—**केनेति**। केन = जनेन विधिना वा आत्तगन्धः = अभिभूतः। "आत्तगन्धोऽभिभूतः स्यात्" इत्यमरः। माणवक इत्यनेन दयनीयत्वं द्योत्यते। केनाभिभूतो विदूषक इति भावः। प्रतीहारी वदति—**अदिट्ठरूवेण इति**। 'अदृष्टरूपेण केनापि सत्त्वेनातिक्रम्य मेघप्रतिच्छन्दस्य प्रासादस्याग्रभूमिमारोपितः' इति संस्कृतम्। अदृष्टरूपेण = प्रच्छन्नाकृतिना केनापि सत्त्वेन = भूत-

अदृष्टरूपेण केनापि सत्त्वेनातिक्रम्य मेघप्रतिच्छन्दस्य प्रासादस्याग्रभूमिमारोपितः।

**राजा**—(उत्थाय) मा तावत्। ममापि सत्त्वैरभिभूयन्ते गृहाः? अथवा—

अहन्यहन्यात्मन एव तावज्ज्ञातुं
प्रमादस्खलितं न शक्यम्।
प्रजासु कः केन पथा प्रयाती-
त्यशेषतो [1]वेदितुमस्ति शक्तिः॥ २६॥

---

पिशाचादिष्वन्यतमेन अतिक्रम्य = अभिभूय मेघप्रतिच्छन्दस्य = तन्नाम्नः प्रासादस्य = हर्म्यस्य अग्रभूमिं = शिखराग्रम् आरोपितः = प्रापितः।

राजा वदति—**मा तावदिति**। मा तावत् एवं ब्रूहीत्यर्थः। विपरीतमेतदिति तात्पर्यम्। ममापि = सत्त्वाभिभाविनो ममापि दुष्यन्तस्य सत्त्वैः = क्षुद्रैर्भूतादिभिः, न त्वात्मसमैस्तेजस्विभिः अभिभूयन्ते = आक्रम्यन्ते गृहाः = गृहाणि, न तु जनपदः। अत्र राज्ञः स्वापकर्षसंभावनया दैन्यं भावः। ममाप्यतिधार्मिकस्य यथाशास्त्रं प्रजापरिपालकस्य नानायज्ञादिकर्तुर्गृहाः सत्त्वैरभिभूयन्ते? इति प्रश्नकाकुः। अथवेत्याक्षेपे। नैतदनुपपन्नमित्यर्थः।

कुत इत्यत्राह—**अहनीति**। अहनि अहनि आत्मन एव प्रमादस्खलितं तावत् ज्ञातुं न शक्यम्; प्रजासु कः केन पथा प्रयाति इति अशेषतो वेदितुं शक्तिः अस्ति? इत्यन्वयः।

अहन्यहनि = प्रतिदिनम् आत्मन एव = स्वस्यापि प्रमादस्खलितम्—प्रमा-

---

१ कस्य पुनः प्रभुत्वम्।

( नेपथ्ये )

भो वअस्स ! [1]अविहा अविहा !

देन = अनवधानतया स्खलितं = विपरीतकरणम्, धर्मप्रच्युतिरिति यावत् । तावत् = साकल्येन, आदौ वा ज्ञातुं न शक्यम् = बोद्धुं न पार्यते । जनैः, मया वेति शेषः । अन्यथा कथं मे अज्ञानाद्धर्मपत्नीपरित्यागः ? यदि सन्निहिततमे आत्म॰ न्यप्येवं भवेत्, तदा अगोचरासु प्रजासु = प्रकृतिषु । निर्धारणे सप्तमी । कः = को जनः केन पथा = सत्पथेन असत्पथेन वा प्रयाति = चरति, इति = एतत् अशेषतः = साकल्येन वेदितुं = ज्ञातुं शक्तिः = सामर्थ्यम् अस्ति ? नास्त्येवेति काकुः ।

अत्र काव्यार्थापत्तिरलंकारः । मतिर्भावः । इन्द्रवज्रोपेन्द्रवज्रयोस्त्रयोदशी उपजातिः ।

नेपथ्ये माधव्यस्याक्रन्दितं श्रुत्वा प्रतीहारीवचनेन तस्य केनापि अदृष्टरूपेण सत्त्वेनाभिभूतिं ज्ञात्वा प्रथमं ममापि ग्रहाः सत्त्वैरभिभूयन्ते ! इति सगर्वं वदन्नपि राजा किञ्चिद्विचिन्त्य पक्षान्तरेणाह—'योऽहं प्रतिदिनमात्मन एवानवधानेन जातं दुराचरणं धर्मपत्नीपरित्यागादिरूपं साकल्येन बोद्धुं न पारयामि, स एवाहं मम प्रजासु कः पुरुषः केन न्याय्येन अन्याय्येन वा पथा चरति इति साकल्येन बोद्धुं कथं पारयेयम् ? आत्मसंबन्धेऽपि यस्य सम्यग्ज्ञानं नास्ति, स कथं ब्रूयात्—प्रजासु मे पापः कोऽपि नास्तीति । तस्मात् किंनिमित्तोऽयमपचार इति ज्ञातुं न शक्यम्' इति भावः ॥ २६ ॥

**नेपथ्ये—भो वअस्स इति ।** 'भो वयस्य ! अविहा अविहा !' इति

१ अविधावेहि ।

भो वयस्य ! अविहा अविहा !

**राजा**—( गतिभेदेन परिक्रामन् ) सखे ! न भेतव्यं न भेतव्यम् ।

( नेपथ्ये )

( पुनस्तदेव पठित्वा ) कहं ण भाइस्सं ? एस मं को वि [1]पच्चवणदसिरोहरं इच्छुं विअ [2]तिण्णभङ्गं करेदि !

कथं न भेष्यामि ? एष मां कोऽपि प्रत्यवनतशिरोधरमिक्षुमिव त्रिभङ्गं करोति !

**राजा**—( सदृष्टिक्षेपम् ) धनुस्तावत् !

( प्रविश्य शार्ङ्गहस्ता )

**यवनी**—भट्टा ! एदं हत्थावावसहिदं सरासणं ।

---

संस्कृतम् । अविहेति खेदे, "अविहा अविहा निर्वेदे" इत्युक्तेः । **गतिभेदेनेति** । क्रोधोद्धतगत्येत्यर्थः । न भेतव्यं न भेतव्यमिति विदूषकाश्वासनपरम् ।

पुनस्तदेव पठित्वा = पुनः 'अविहा अविहा' इत्युच्चार्येत्यर्थः । कहं इति । 'कथं न भेष्यामि ? एष मां कोऽपि प्रत्यवनतशिरोधरमिक्षुमिव त्रिभङ्गं करोति' इति संस्कृतम् । कोऽपि = अज्ञातस्वरूपः । एषः = जनः । प्रत्यवनतशिरोधरम्—प्रत्यवनता = पृष्ठतो वक्रा शिरोधरा = ग्रीवा यस्य तथाविधम् अत एव इक्षुमिव त्रिभङ्गम्—त्रिषु स्थानेषु भङ्गः = वक्रता यस्य तथाविधं करोति । अत्र भङ्गः = परिभवः; इक्षुपक्षे भञ्जनम् ।

**धनुस्तावदिति** । आनयेति शेषः । शार्ङ्गहस्ता—शृङ्गस्य = महिषविषाणस्य विकारः शार्ङ्गं = धनुः हस्ते यस्यास्तादृशी । यवनी वदति—भट्टा इति । 'भर्तः ! एतद्धस्तावापसहितं शरासनम्' इति संस्कृतम् । हस्तावापसहितम्—

---

१ पच्चामोडिअ । २ भग्गरिंथ ।

भर्तः ! एतद्धस्तावापसहितं शरासनम् ।

( राजा सशरं धनुरादत्ते । )

( नेपथ्ये )

एष त्वामभिनवकण्ठशोणितार्थी
शार्दूलः पशुमिव हन्मि चेष्टमानम् ।
आर्तानां भयमपनेतुमात्तधन्वा
दुष्यन्तस्तव शरणं भवत्विदानीम् ॥२७॥

---

हस्तम् आवपति = रक्षति ज्याघातादिति हस्तावापः, वामहस्ते परिधेयचर्मविशेषः । अनेकार्थत्वाद्धातूनां वपिरत्र रक्षणार्थः । यद्वा हस्तम् अवाप्नोति = लभते रक्ष्यत्वेन, इति हस्तावापः; कर्मण्यण् । तेन सहितं शरासनं = ज्याघातवारणसहितं धनुरित्यर्थः ।

**नेपथ्ये—एष इति** । अभिनवकण्ठशोणितार्थी (अहम्) शार्दूलः पशुमिव चेष्टमानं त्वाम् एष हन्मि । आर्तानां भयम् अपनेतुम् आत्तधन्वा दुष्यन्तः इदानीं तव शरणं भवतु इत्यन्वयः ।

अभिनवकण्ठशोणितार्थी—अभिनवं=नूतनम्, उष्णमित्यर्थः । यत् कण्ठशोणितं = गलरक्तम्, प्रवाहेणागतं धारोष्णं रक्तमिति यावत् । तत् अर्थयते = काङ्क्षति यस्तादृशः अहम् शार्दूलः = व्याघ्रः । "शार्दूलद्वीपिनौ व्याघ्रे" इत्यमरः । पशुमिव चेष्टमानम् = इतस्ततो लुठन्तम्; मद्ग्रासान्मुक्तये यतमानं त्वाम् एष हन्मि = मारयामि । आर्तानां = पीडितानां भयं = भीतिम् अपनेतुं = दूरीकर्तुम् आत्तधन्वा = गृहीतचापः । अनेन स्वाभाविकः क्रोधावेगः सूच्यते । दुष्यन्तः = तन्नामको राजा इदानीम् = अस्मिन् मत्पराक्रमप्रकाशक्षणे तव शरणं = रक्षकः भवतु; यदि तस्य शक्तिरस्ति ।

राजा—(सरोषम्) कथं मामेवोद्दिशति ! तिष्ठ [1]कुणपाशन;

आस्तां तावद्दुष्यन्तः प्राकृतेषु प्रभुः, मम पुरस्तस्य का वार्ता ? पश्यत॰स्तस्य त्वामयमहं हन्मि इति उद्दीपनाशयः। अभिनवेत्यादि विशेषणं हनने हेतुः। शार्दूलः पशुमिवेत्युपमया तत्र अनायासः प्रकाश्यते। पशुमिव चेष्टमान॰मित्यादिना बीभत्सो रसः प्रकाश्यते। आर्तानां भयमपनेतुमित्यादिना च राज्ञि गम्भीराक्षेपो ध्वन्यते। उपमाऽलङ्कारः। प्रहर्षिणी वृत्तम्।

नेपथ्ये माधव्यस्य करुणकूजितं श्रुत्वा तस्य रक्षणाय गृहीतसशरशरासनो राजा यावत्परिक्रामति, तावदेव नेपथ्ये केनाप्यदृश्यपुरुषेण कथ्यमानमित्थमश्रौषीत्—गोमृगादिपशूनां कवोष्णं कण्ठशोणितमभिलषन् शार्दूल इतस्ततो लुठतस्तद्ग्रासात्स्व॰मुक्तये यतमानान् तान् यथा हन्ति, तथैव अभिनवमत एवोष्णं तव कण्ठशोणि॰तमभिलषन्नहं मुक्तये इतस्ततश्चेष्टमानं त्वामवश्यं हन्मि। पीडितानां भयनिवार॰णाय गृहीतचापो दुष्यन्तो यदि शक्नोति, तर्हि मम करगतं त्वां मोचयतु। अहं तु मन्ये नास्य तथा शक्तिरस्ति। स खलु प्राकृतानामेव भयं निवारयितुं प्रभवति। मम पुरस्तस्य का शक्तिरस्ति ? पश्यतस्तस्य त्वामहं हन्मि। यदि स प्रभवति तर्हि त्वां मोचयतु' इति भावः ॥ २७ ॥

आर्तानामित्यादिगम्भीराक्षेपस्य फलं दर्शयति—**सरोषमित्यादि**। कथमिति वितर्के। मामेवोद्दिशति = मामेवाभिलक्ष्य भाषते इत्यर्थः। जानन्नप्ययमपरा॰ध्यति, तस्माद्वध्य एवेति भावः। कुणपाशन—कुणपं = शवम्, "कुणपः शवम॰स्त्रियाम्" **इत्यमरः**। अशनं = भक्षणं यस्य तत्संबुद्धौ। राक्षसेत्यर्थः।

---

१ कौणपापसद।

त्वमिदानीं न भविष्यसि । (शार्ङ्गमारोप्य) वेत्रवति ! सोपानमार्गमादेशय ।

**प्रतीहारी**—इदो इदो देवो ।

इत इतो देवः ।

(सर्वे सत्वरमुपसर्पन्ति ।)

**राजा**—(समन्ताद्विलोक्य) शून्यं खल्विदम् !

(नेपथ्ये)

अविहा अविहा ! अहं अत्तभवन्तं पेक्खामि, तुमं मं ण पेक्खसि ! बिडालग्गहीदो मूसओ विअ णिरासो ह्मि जीविदे संवुत्तो ।

---

त्वमिदानीं न भविष्यसि = त्वामधुनैव हन्मि, त्वं त्वरितं मरिष्यसीत्यर्थः । शार्ङ्ग-मारोप्य = धनुरधिज्यं कृत्वा । वेत्रवतीति प्रतीहारीनाम । प्रतीहारी वदति—**इदो इति** । 'इत इतो देवः' इति संस्कृतम् । राज्ञः समन्ताद्विलोकनमदृश्य-पुरुषोपलम्भार्थम् । तत्र कमप्यनालोक्य राजा वदति—**शून्यं खल्विदमिति** । अनेन विस्मयो ध्वन्यते ।

**नेपथ्ये—अविहा इति** । 'अविहा अविहा ! अहमत्रभवन्तं पश्यामि, त्वं मां न पश्यसि; बिडालगृहीतो मूषक इव निराशोऽस्मि जीविते संवृत्तः' इति संस्कृतम् । अविहा इति खेदे । बिडालगृहीतः—बिडालेन = आखु-भुजा मार्जारेण गृहीतः = धृतः मूषक इव आखुरिव जीविते = प्राणेषु निराशः = आशारहितः संवृत्तः = जातः । तत्र कारणम्—अहं त्वां पश्यामि, त्वं मां न पश्यसीति । अपश्यन् भवान् मां कथं त्रायेतेत्यर्थः । बिडालगृहीतो मूषक इवेत्युपमया जीवितनाशस्यावश्यंभावो द्योत्यते ।

अविहा अविहा ! अहमत्रभवन्तं पश्यामि, त्वं मां न पश्यसि ! बिडालगृहीतो मूषक इव निराशोऽस्मि जीविते संवृत्तः !

**राजा**—भोस्तिरस्करिणीगर्वित ! मदीयं शस्त्रं त्वां द्रक्ष्यति। एष तमिषुं संदधे,

यो हनिष्यति वध्यं त्वां रक्ष्यं [1]रक्षति च द्विजम्।
हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः ॥२८॥

(इत्यस्त्रं संधत्ते।)

(ततः प्रविशति विदूषकमुत्सृज्य मातलिः।)

---

राजा वदति—**भोस्तिरस्करिणीगर्वितेति**। तिरस्करिणीगर्वित—तिरस्करिण्या = अदर्शनविद्यया गर्वित = साहंकार ! तस्मात्तव गर्वमपहरामीति भावः। मया अदृश्योऽपि त्वं ममास्त्रेण द्रक्ष्यसे, तेन च हनिष्यसे; तत् अदृष्टोऽहमिति ते गर्वो मा भूत्। एषः = अहं तं = वक्ष्यमाणगुणम् इषुं = बाणं संदधे = धनुषि योजयामि।

तमिषुं वर्णयति—**य इति**। यः वध्यं त्वां हनिष्यति, रक्ष्यं द्विजं च रक्षति; (तमिषुम् एष संदधे)। हि हंसः क्षीरमादत्ते, तन्मिश्रा अपः वर्जयति इत्यन्वयः। यः = इषुः वध्यं = पापकरणात् वधार्हं त्वां हनिष्यति = प्रहरिष्यति, रक्ष्यं = रक्षणार्हं द्विजं = ब्राह्मणं विदूषकं माधव्यं रक्षति = रक्षिष्यतीत्यर्थः। तमिषुं संदधे इति संबन्धः। वध्यं रक्ष्यमिति च हेतुगर्भम्। रक्ष्यत्वे हेतुर्द्विजमिति। एकस्य उभयकारित्वे दृष्टान्तमाह—**हंस इति**। हि = यस्मात् कारणात् हंसः = मरालः क्षीरं = दुग्धम् आदत्ते = गृह्णाति। तन्मिश्राः—तेन = क्षीरेण मिश्राः =

---

१ रक्षिष्यति।

मातलिः—

कृताः शरव्यं हरिणा तवासुराः
शरासनं तेषु विकृष्यतामिदम् ।
प्रसादसौम्यानि सतां सुहृज्जने
पतन्ति चक्षूंषि न दारुणाः शराः ॥२९॥

---

संभिन्नाः अपः = जलानि वर्जयति = त्यजति । हंस इव मे बाणः, क्षीरमिव त्वम्, आप इवायं ब्राह्मणः, तत्त्वमेव मे बाणस्य ग्राह्यः, ब्राह्मणस्त्याज्य इत्याशयः । तथा च स्वभाव एवायमिति भावः ।

अत्र दृष्टान्तालंकारः । अनुष्टुप् वृत्तम् ।

तिरस्करिणीगर्वितं साक्षाच्चक्षुषा अपश्यन् तस्य वधाय धनुषि बाणं संयोजयन् राजा तमाह—'भोस्तिरस्करिणीविद्यागर्वित ! यद्यपि त्वामहं द्रष्टुं न शक्नोमि, तथापि मदीयं शस्त्रं तु त्वामवश्यं द्रक्ष्यति, हनिष्यति च । तमिमं तव हननाय धनुषि बाणं योजयामि । यो बाणः अपराधित्वाद्वधार्हं त्वां हनिष्यति, रक्षणार्हं द्विजं साधव्यं च रक्षिष्यति । यथा हंसो जलमिश्रात् क्षीरात् क्षीरमात्रमादत्ते, जलमात्रं परित्यजति, एवं हंसस्थानीयो मे बाणः क्षीरस्थानीयं त्वामेव आददीत, जलस्थानीयमिमं ब्राह्मणं तु परित्यजेदेव । तस्मान्नास्ति ते शरणमधुना' इति भावः ॥ २८ ॥

राजोक्तौ भोस्तिरस्करिणीगर्वितेत्यादिना एतदन्तेन प्रबन्धेन व्यवसायो नाम अङ्गमुपक्षिप्तम् । तल्लक्षणं **दशरूपके** यथा—"व्यवसायः स्वशक्त्युक्तिः" इति । अत्र राज्ञा स्वशक्तेराविष्करणात् ।

अथ मातलिर्निजागमनकार्यं संपादयितुं राज्ञः कोपं शमयितुमुपक्रमते—कृता

इति । हरिणा असुराः तव शरव्यं कृताः, तेषु इदं शरासनं विकृष्यताम् । सतां सुहृज्जने प्रसादसौम्यानि चक्षूंषि पतन्ति; दारुणाः शरा न इत्यन्वयः ।

हरिणा = इन्द्रेण असुराः = दैत्याः तव = दुष्यन्तस्य शरव्यं = लक्ष्यं कृताः = विहिताः । दैत्यास्त्वया हन्यन्तामिति हरेरभिलाष इत्यर्थः । "लक्षं लक्ष्यं शरव्यं च" इत्यमरः । अतः तेषु = लक्ष्यीकृतेषु दैत्येषु इदं = सज्जं शरासनं = सन्धितशरं धनुः विकृष्यताम् = आकृष्यताम् । तदर्थमेवाहमागतोऽस्मि; स्वयमिन्द्रेण प्रार्थितस्त्वं दैत्यान् जहि; माऽस्तु ते मयि शरत्याग इत्याशयः । सतां = सज्जनानां भवादृशां सुहृज्जने = तादृशे बान्धवजने प्रसादसौम्यानि—प्रसादेन = प्रसन्नतया सौम्यानि = अनुग्राणि, आह्लादकानीति यावत् । चक्षूंषि = नेत्राणि पतन्ति । अत्र पतन्तीति लटा अव्यभिचारः प्रकाश्यते । दारुणाः = मर्मभेदिनः शराः = बाणा न । पतन्तीत्यनुषज्यते । एतेन भवता हरिणा लक्ष्यीकृतेषु दैत्येषु धनुराकर्षणमात्रं न कर्तव्यम्, अपि तु शरपातोऽपि कर्तव्य इति सूच्यते ।

अत्र 'तव' 'मयि' इति विशेषे वक्तव्ये तथाऽनुक्त्वा 'सताम्' 'सुहृज्जने' इति सामान्यवचनात्सामान्यनिबन्धना अप्रस्तुतप्रशंसा । सतां तादृशचक्षुषा सुहृज्जनसंबन्धप्रतीतेश्च समालंकारो व्यङ्ग्यः । न दारुणा इति व्यतिरेकः । वंशस्थं वृत्तम् ।

राजानं कुपितं दृष्ट्वा विदूषकमुत्सृज्य राजकोपशमनायोपक्रममाणो मातलिराह —'हे राजन् ! तव सुहृदो महेन्द्रस्य सेवकः तत्संबन्धेन तवापि सुहृन्मातलिरहं खलु; किं मय्येव भवान् बाणं मुमुक्षति ? अनुचितमिदं नाम ! तव सुहृदा हरिणा तव बाणस्य लक्ष्याणि असुराः कृताः सन्त्येव । मित्रकार्यं सम्पादयन् भवान् तेष्वेव सन्धितशरमिदं शरासनं विकर्षतु । यतो भवादृशानां साधूनां स्वकीये मादृशे बान्धवजने सर्वदा प्रसादेन अनुग्राण्याह्लादकान्येव चक्षूंषि निपतन्ति; न मर्मभेदिनो बाणाः पतन्ति । अहं तु बान्धवतया भवतः

**राजा**—(अस्त्रमुपसंहरन्) अये ! मातलिः ! स्वागतं महेन्द्रसारथे !

(प्रविश्य)

**विदूषकः**—अहं जेण इट्टिपसुमारं [1]मारिदो सो इमिणा साअदेण अहिणन्दीअदि !

अहं येनेष्टिपशुमारं मारितः सोऽनेन स्वागतेनाभिनन्द्यते !

**मातलिः**—(सस्मितम्) आयुष्मन् ! श्रूयतां यदस्मि हरिणा भवत्सकाशं प्रेषितः।

**राजा**—अवहितोऽस्मि।

---

प्रसङ्गदृष्टेरेव पात्रम्, न शरपातस्येति त्वरितमुपसंह्रियतां निजमायुधम्' इति भावः ॥ २९ ॥

अस्त्रं = बाणम् उपसंहरन् = तूणीरे प्रतिप्रेरयन्। राजोक्तौ—**अये ! मातलिरिति**। अये इत्याश्चर्ये। मातलेर्महत्त्वमिन्द्रसारथित्वेनेति महेन्द्रसारथे इत्युक्तिः।

राज्ञा क्रियमाणं मातलेः स्वागतं दृष्ट्वा विदूषकः सासूयं वदति—**अहं इति**। 'अहं येन इष्टिपशुमारं मारितः, सोऽनेन स्वागतेनाभिनन्द्यते' इति संस्कृतम्। इष्टिपशुमारम्—इष्टेः = यज्ञस्य यः पशुः स इव मारितः = ईषदूनं हतः। यथा यागे पशुर्मार्यते तथेत्यर्थः। स्वागतेन = स्वागतशब्दोच्चारणेन अभिनन्द्यते = सत्क्रियते। विसदृशमेतद्द्वयस्यस्येति भावः।

**सस्मितमिति**। विदूषकवचनेन स्मितम्, तेन सहेत्यर्थः। मातलिर्वदति—**आयुष्मन्निति**। अस्मीत्यहमर्थे निपातः। हरिणा = इन्द्रेण। राजा वदति—**अवहितोऽस्मीति**। सावधानोऽस्मीत्यर्थः। अनेन श्रवणादरं द्योतयन् इन्द्रे

---

१ मारिदुं पाविदो।

**मातलिः**—अस्ति कालनेमिप्रसूतिर्दुर्जयो नाम दानवगणः।

**राजा**—अस्ति। श्रुतपूर्वं मया नारदात्।

**मातलिः**—

**सख्युस्ते स किल शतक्रतोरजय्य-**
**स्तस्य त्वं रणशिरसि स्मृतो निहन्ता।**
**उच्छेत्तुं प्रभवति यन्न सप्तसप्ति-**
**स्तन्नैशं तिमिरमपाकरोति चन्द्रः ॥३०॥**

---

बहुमानं प्रकाशयति। मातलिर्वदति—**अस्तीति**। कालनेमिप्रसूतिः—कालनेमेः = तन्नाम्नो दैत्यस्य प्रसूतिः = सन्ततिः दुर्जयो नाम = दुर्जय इति प्रसिद्धः। दानवगणः = दैत्यसमूहः अस्ति। राजा वदति—**अस्तीति**। नारदान्मया पूर्वमेवेदं श्रुतमस्तीत्यर्थः।

मातलिर्वदति—**सख्युरिति**। सः ते सख्युः शतक्रतोः अजय्यः किल; त्वं तस्य रणशिरसि निहन्ता स्मृतः। सप्तसप्तिः यत् नैशं तिमिरम् उच्छेत्तुं न प्रभवति, तत् चन्द्रः अपाकरोति इत्यन्वयः।

सः = दुर्जयो नाम दानवगणः ते = तव सख्युः = मित्रस्य शतक्रतोः = इन्द्रस्य अजय्यः = प्रयत्नसहस्रैरपि जेतुमशक्य इत्यर्थः। "क्षय्यजय्यौ शक्यार्थे" इति निपातः। किलेति प्रसिद्धौ निश्चये वा। शतक्रतोरित्यनेन इन्द्रस्य पराक्रमातिशयो व्यज्यते। त्वं = दुष्यन्तः तस्य = दुर्जयाख्यदानवगणस्य रणशिरसि = संग्रामाग्रे निहन्ता = घातकः स्मृतोऽसि। इन्द्रेणेति शेषः। पूर्वं साहाय्यानुष्ठानात् इदानीं दुर्जयाख्यदानवजयार्थमिन्द्रस्त्वां स्मरतीत्यर्थः। यद्वा विधिनियोगादिन्द्रेणाप्यजय्यस्य दुर्जयाख्यदानवगणस्य निहननाय त्वमेव निश्चितोऽसीति तत्कार्य-

स भवानात्तशस्त्र एव इदानीं तमैन्द्ररथमारुह्य विजयाय प्रतिष्ठताम् ।

सम्पत्तये इन्द्रस्त्वां स्मरतीति नेयम् । ननु शतक्रतोरप्यजय्यः सः कथं मम जय्यः स्यादित्याशङ्कां परिहर्तुं दृष्टान्तमाह—उच्छेत्तुमिति । सप्तसप्तिः = सप्ताश्वः सूर्यः यत् नैशं = निशासंबन्धि, रात्रिजातमित्यर्थः । तिमिरं = तमः उच्छेत्तुं = नाशयितुं न प्रभवति = न शक्नोति, तत् = तिमिरं चन्द्रः = इन्दुः अपाकरोति = निरस्यति ।

अत्र दृष्टान्तालंकारः । तेन शतक्रतोस्तद्दानवहननाशक्तिरदृष्टविशेषेणैवेति व्यज्यते । तथा च शतक्रतोर्न कोऽप्यपकर्षः । अत्र स्वस्वामिनो महेन्द्रस्य सूर्योपमानत्वेन तेजस्वित्वं वदता तदशक्यकरत्वेन अस्य राजर्षेश्चन्द्रोपमानत्वं च वदता मातलिना उभयत्र औचित्यं ध्वनितम् । प्रहर्षिणी वृत्तम् ।

दुर्जयाख्यदानवगणस्य वधाय राजानं प्रेरयन् मातलिराह—'हे राजन् ! स दुर्जयाख्यो दानवगणो महापराक्रमस्य शतक्रतुसंपादकस्यापि ते सुहृदो महेन्द्रस्य विधिनियोगवशात्प्रयत्नसहस्रेणापि जेतुमशक्य एवेति निश्चितम् । किञ्च विधिनियोगेनैव तथाविधस्यापि तस्य संग्रामाग्रे त्वमेव निहन्ताऽसीत्यपि निश्चितमेव । शतक्रतुना अजय्यो भवता कथं विजेष्यते इत्यपि न विशङ्कनीयम् । प्रसिद्धो हि लोके दृष्टान्तः यत् सहस्रकरेण प्रभामण्डलभासुरेण लोकचक्षुषाऽपि भगवता सवित्रा रात्रावनुदितत्वात् यत् रात्रिकृतं तिमिरम् उच्छेत्तुं न पार्यते, तत् षोडशकलोऽपि उदयमान एव शशाङ्को दूरीकरोति । तद्वदेव प्रकृतेऽपि भविष्यति । अतो निःशङ्केन भवता सुहृदोऽनुरोधाद्दानवजयाय त्वरितः प्रस्थातव्यम्' इति भावः ॥ ३० ॥

स भवान् = तथाविधस्त्वम् आत्तशस्त्र एव = असुरवधार्थं गृहीतशस्त्र एव ।

**राजा**—अनुगृहीतोऽहमनया मघवतः संभावनया। अथ माधव्यं प्रति भवता किमेवं प्रयुक्तम् ?

**मातलिः**—तदपि कथ्यते, किंचिन्निमित्तादपि मनःसंतापादायुष्मान्मया विक्लवो दृष्टः; पश्चात्कोपयितुमायुष्मन्तं तथा कृतवानस्मि । कुतः !

ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणां कुरुते ।
[1]प्रायः स्वं महिमानं क्षोभात्प्रतिपद्यते हि जनः ॥ ३१ ॥

---

अत्र एवकारेण सहायान्तरव्यवच्छेदः अविलम्बश्च प्रकाश्यते । इदानीम् = अस्मिन्नेव क्षणे तं = प्रसिद्धम् ऐन्द्ररथम् = इन्द्रसंबन्धिकं स्यन्दनम् । विजयाय प्रतिष्ठताम् = विजयं सम्पादयितुं प्रस्थानं करोत्वित्यर्थः। राजा सविनयमनुवदति—**अनुगृहीत इति**। मघवतः = इन्द्रस्य अनया संभावनया = अनेन सम्मानेन । यदसौ देवेन्द्रो मामत्र कर्मणि समर्थं मन्यते, सोऽयं तस्य महाननुग्रह इत्यर्थः ।

वयस्यपरिभवे हेतुं पृच्छति—**अथेति** । अथेत्यारम्भे । प्रस्तुतमुपसंहृत्य प्रस्तावान्तरमारभते इत्यर्थः । माधव्यं प्रति = मम सुहृदो विदूषकस्य विषये । एवम् = ईदृशमाक्रमणमारणादि प्रयुक्तम् = अनुष्ठितम् । मातलिरुत्तरयति—**तदपीति** । किञ्चिन्निमित्तादपि—किञ्चित् = किमपि अज्ञातं वस्तु निमित्तं = कारणं यस्य तस्मादपि। विक्लवः = विह्वलः। भवन्नयनार्थमागतवान्मोहं गतं च भवन्तं दृष्टवानिति बुद्धिस्थः समुच्चयः अपेरर्थः। तथा कृतवानस्मि=भवन्मित्रं माधव्यमाक्रान्तवानस्मि ।

कोपोत्पादने कारणमाह—**कुतः!—ज्वलतीति**। अग्निः चलितेन्धनः (सन्)

---

[1] तेजस्वी संक्षोभात् प्रायः प्रतिपद्यते तेजः ।

ज्वलति । पन्नगः विप्रकृतः ( सन् ) फणां कुरुते । हि जनः प्रायः क्षोभात् स्वं महिमानं प्रतिपद्यते इत्यन्वयः ।

अग्निः = वह्निः चलितेन्धनः—चलितानि = घट्टितानि, चलनं प्राप्तानि इन्धनानि = एधांसि यस्य तादृशः सन् ज्वलति = निजस्वरूपं प्रकाशयति । पन्नगः = फणी विप्रकृतः = कोपितः उद्वेजितो वा सन् फणां कुरुते = फटामूर्ध्वं कुरुते इत्यर्थः । "फटायां तु फणा द्वयोः" इत्यमरः । हि = निश्चितम्, जनः = सर्वो लोकः प्रायः= बाहुल्येन क्षोभात् = चित्तक्षोभात्, अभिघातात, परकृतधर्षणाद्वा स्वं = निजं महिमानं = प्रभावं प्रतिपद्यते = गृह्णाति प्राप्नोति वा । वयस्यस्य माधव्यस्य निग्रहात् मया क्षोभितो भवान् प्रकृतिमापन्नः; एतदुद्दिश्यैव माधव्यं प्रति मया एवं प्रवृत्तमित्याशयः ।

अत्र मालादृष्टान्तालङ्कारः । दृष्टान्तद्वयोक्तिश्चेतनाचेतनसाधारण्यप्रदर्शनार्था । उत्तरार्धे भवानिति विशेषे प्रस्तुते जन इति सामान्योक्तेः सामान्यनिबन्धना अप्रस्तुतप्रशंसा । अर्थान्तरन्यासो वा । आर्या जातिः ।

राज्ञः कोपोत्पादनस्य कारणं वर्णयन् मातलिराह—'हे आयुष्मन् ! केनापि निमित्तेनमनःसन्तापमनुभवन् भवान् मया विह्वलो दृष्टः । विचारितं च मया, अनुत्पाद्य कोपं न पार्यते भवान् प्रकृतिमापादयितुमिति भवतः कोपोत्पादनाय भवन्मित्रं माधव्यो मयाऽऽक्रान्तः । अस्ति च लोके दृष्टान्तः कोपोत्पादनेन प्रकृतिमापद्यते इति । पश्यत्वायुष्मान्—अग्निर्विघट्टितेन्धनः सन्नेव प्रज्वलितो भवति । अन्यदा बिलेशयोऽपि फणी केनापि पदाहतः सन्नेव फणामूर्ध्वं कृत्वा साटोपं फूत्कुरुते । एवमेव सर्वोऽपि लोकः क्षोभमापादित एव स्वां प्रकृतिं गृह्णाति । भवानपि तथैवेति प्रत्यक्षमेव' इति भावः ॥३१॥

**राजा**—(जनान्तिकम्) वयस्य! अनतिक्रमणीया दिवस्पतेराज्ञा। तदत्र परिगतार्थं कृत्वा मद्वचनादमात्यपिशुनं ब्रूहि—

**त्वन्मतिः केवला तावत्परिपालयतु प्रजाः।**
**अधिज्यमिदमन्यस्मिन्कर्मणि व्यापृतं धनुः॥ ३२॥**

इति।

---

मातलेर्वचनं श्रुत्वा राजा जनान्तिकं विदूषकं वदति—**वयस्येति**। अनतिक्रमणीया = अलङ्घनीया दिवस्पतेः = इन्द्रस्य। इदानीमेव मया गन्तव्यमित्यर्थः। तत् = तस्मात् अत्र = अस्मिन् विषये। अमात्यपिशुनं = पिशुनाख्यममात्यं परिगतार्थं = विदितवृत्तान्तं कृत्वा मद्वचनात् = मद्वचनमवलम्ब्य ब्रूहि। सत्वरं जिगमिषुरहं स्वयं वक्तुमसमर्थोऽस्मि; त्वं मदीयगमनकारणमुक्त्वा वक्ष्यमाणं च ब्रूहीत्यर्थः।

वक्ष्यमाणमाह—**त्वन्मतिरिति**। केवला त्वन्मतिः तावत् प्रजाः परिपालयतु। अधिज्यम् इदं धनुः अन्यस्मिन् कर्मणि व्यापृतम् इत्यन्वयः।

केवलः = एकाकिनी, असहायेत्यर्थः। धनुषः सहायकस्याभावादिति भावः। एतेन नायकस्य उभयायत्तसिद्धित्वं दर्शितम्। त्वन्मतिः = सर्वदर्शिनी त्वदीया बुद्धिरेव तावत् = अद्य, तदवधि; मत्प्रत्यागमनपर्यन्तमित्यर्थः। प्रजाः = प्रकृतीः परिपालयतु = सुष्ठु रक्षतु। उक्तार्थे हेतुमाह—**अधिज्यमिति**। अधिज्यं = दत्तगुणम् इदं = मद्धस्तवर्ति धनुः = चापम् अन्यस्मिन्कर्मणि = दानवहनने। एतेन लोकद्वयरक्षकत्वमस्य ध्वनितम्। अधिज्यमित्यनेन एतत्समयमारभ्य दानवमारणपर्यन्तं ज्याऽनुत्तारणं ध्वनितम्। व्यापृतं = नियुक्तम्।

अनेन उत्साहातिशयः प्रकाश्यते। व्यापृतत्वं च आत्मनिष्ठमारोप्यते धनुषि।

विदूषकः—जं भवं आणवेदि ।

यद्भवानाज्ञापयति । ( इति निष्क्रान्तः । )

मातलिः—आयुष्मान् रथमारोहतु ।

( राजा रथाधिरोहणं नाटयति । )

( इति निष्क्रान्ताः सर्वे । )

इति षष्ठोऽङ्कः ।

---

यथा "विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः" इत्यादौ । अत्र वीररसस्य परिपोषः कृतः । काव्यलिङ्गमलङ्कारः । अनुष्टुप् वृत्तम् ।

दिवस्पतेराज्ञया दानवमारणार्थं सत्वरं प्रस्थास्यन् राजा माधव्यमुखेन अमात्यमार्यपिशुनं सन्दिशन्नाह—'अद्य यावत् मम अधिज्येन धनुषा सहायभूतेन सह कार्याकार्यदर्शिनी तव बुद्धिः प्रजाः सम्यक् परिपालयति स्म । इदानीं सा एकलैव मम प्रत्यागमनपर्यन्तं प्रजाः परिपालयतु । तव बुद्धेः सहायभूतमधिज्यमिदं मे धनुर्दिवस्पतेराज्ञया दानवमारणात्मके कार्यान्तरे नियुक्तमस्ति । तस्मात्संप्रति त्वदेकायत्तं मे राज्यम्' इति भावः ॥३२॥

विदूषकः प्रत्युत्तरयति—जं इति । 'यद्भवानाज्ञापयति' इति संस्कृतम् ।

मातलिर्वदति—आयुष्मान् रथमारोहत्विति । रथाधिरोहणं नाटयतीति । इदम् ऊर्ध्वजानुचर्या । तल्लक्षणं तु सङ्गीतरत्नाकरे—

कुञ्चितोत्क्षिप्तपादः स्याज्जानुः स्तनसमं यदा ।
यस्तस्याधः कृतोऽन्योऽङ्घ्रिरूर्ध्वजानुस्तदा भवेत् ॥ इति ।

इति षष्ठोऽङ्क इति । अस्मिन्नङ्के विप्रलम्भपरिपोषात्मके धीवरस्य धनलाभः, राजश्यालस्य रक्षिणोश्च तत्संविभागलाभः, चेट्योरभयदानलाभः, सानुमत्याः शकु-

न्तलामनोरथपूरणसम्पत्तिः, विदूषकादेः सेवायामौचित्येन स्वामिप्रसादलाभः, नायकस्य पश्चात्तापपराधीनस्य अङ्गुलीयचित्रदर्शनादिना लतादिसादृश्यदर्शनेन विदूषकसेवाविशेषेण च विनोदलाभश्चेति फलान्युन्नेयानि । पर्यवसाने मातलिप्रवेशेन तत्कर्मणा च राज्ञो वीर्यसन्धुक्षणं चेत्यलम् ।

इति नारायणोन्नीते लक्ष्मीरित्यभिधाऽङ्किते ।
शाकुन्तलस्य व्याख्याने षष्ठोऽङ्कोऽयं समाप्तिमैत् ॥



इति श्रीमन्नारायणशास्त्रिणा प्रणीतायामभिज्ञानशाकुन्तलाभिनवटीकायां लक्ष्मीसमाख्यायां षष्ठोऽङ्कः ।



# सप्तमोऽङ्कः ।

( ततः प्रविशत्याकाशयानेन रथाधिरूढो राजा मातलिश्च । )

**राजा**—मातले ! अनुष्ठितनिदेशोऽपि मघवतः सत्क्रियाविशेषादनुपयुक्तमिवात्मानं समर्थये ।

---

अस्मिन्नङ्के राजपुत्रस्य शकुन्तलाया मरीचेश्च क्रमात्प्रवेशः । रसस्तु वीरोऽद्भुतश्च । भावात्मना परिणता मुनिविषयिणी रतिश्च । शकुन्तलाप्रवेशानन्तरमङ्गी शृङ्गाररसोऽपि बाढमभिव्यज्यते । अन्यच्च यथाऽवसरं वक्ष्यते । अङ्कसमाप्तिं यावन्निर्वहणसन्धिः ।

अथ अतीतेऽङ्के सानुमतीवचनेनोपक्षिप्तं नायिकासंगमं नायकेन सह वर्णयिष्यन् कविः—"अङ्कान्तपात्रैरङ्कास्यमुत्तराङ्कार्थसूचना" इत्युक्तलक्षणेन अङ्कास्येन नायकस्य राज्ञो दुष्यन्तस्य मातलिना सह प्रवेशमाह—**तत इत्यादिना** । आकाशयानेनेत्यनेन मरीच्याश्रमगमनं ध्वनितम् ।

विजितदुर्जयदानवगणः सन्तुष्टेन भगवता पुरन्दरेण सबहुमानं विसृष्टो विमानद्वारा भूलोकमवतरन् राजा स्वानुभूतं देवराजस्य सत्कारातिशयं विचिन्तयन् मातलिमाह—**मातले इति** । संबोधनेन हर्षातिशयः सूच्यते । अनुष्ठितनिदेशोऽपि—अनुष्ठितः = साधितः निदेशः = महासुरवधरूपो येन सोऽपि । आत्मना उपयोगे जातेऽपीत्यर्थः । मघवत इति उभयत्रान्वेति । सत्क्रियाविशेषात् = संमानाधिक्यात् । अत्र सत्क्रिया न केवलं सत्कारमात्रम्, किन्तु तदतिशयः, सोऽपि न यस्य कस्यचित्, अपि तु त्रिभुवनमहनीयस्य इन्द्रस्य; तस्मादित्यर्थः । अनुप-

**मातलिः**—( सस्मितम् ) आयुष्मन् ! [1]उभयमप्यपरितोषं समर्थये।

[2]प्रथमोपकृतं मरुत्वतः
प्रतिपत्त्या लघु मन्यते भवान्।
गणयत्यवदानविस्मितो[3]
भवतः सोऽपि न [4]सत्क्रियागुणान्॥ १॥

---

युक्तमिव = उपयोगरहितमिव। इवेति वाक्यालङ्कारे। इन्द्रं प्रति यन्मया कार्यं कृतं तदिन्द्रकृतसत्कारस्य सहस्रांशेनापि तुलयितुं न क्षममिति। एतेन इन्द्रस्य प्रत्युपकारशीलत्वम्, गुणग्राहित्वं च; आत्मनस्तु परमशौर्यशालित्वम्, इन्द्रेण तथा पूजितत्वादत्यन्तसौभाग्यास्पदत्वं च व्यज्यते। समर्थये = मन्ये। अत्र विनयाद्युपस्कृता राज्ञो देवराजविषयिका रतिर्व्यज्यते। मातलिः सस्मितमाह—**आयुष्मन्निति**। उभयम् = भवदुपकृतम्, इन्द्रसत्कृतं च। त्वं तु आत्मोपकृतमेव तथा समर्थयसे, अहं पुनरुभयमपि। न विद्यते परितोषो यत्र, अर्थात् कर्त्रोस्तदपरितोषं समर्थये। इन्द्रस्तु स्वत्कर्म अधिकं मन्यते, त्वं तु इन्द्रकृतां पूजामधिकां मन्यसे इति भावः।

तत्प्रकारमाह—**प्रथमोपकृतमिति**। भवान् मरुत्वतः प्रतिपत्त्या प्रथमोपकृतं लघु मन्यते; सोऽपि भवतः अवदानविस्मितः सत्क्रियागुणान् न गणयति इत्यन्वयः।

भवान् = त्वं मरुत्वतः = देवराजस्य इन्द्रस्य। मरुतः = देवाः सन्त्यस्येति

---

१ उभयोरप्यसन्तोषमवगच्छ। २ उपकृत्य हरेस्तथा भवान् लघु सत्कारमवेक्ष्य मन्यते। ३ सस्मिताम्। ४ सत्क्रियामिमाम्।

विग्रहेण देवानामपि प्रतिपत्तिर्द्योत्यते । प्रतिपत्त्या = बहुमानेन, तत्कार्येण पश्चात्कृतेन सत्कारेणेति यावत् । प्रथमोपकृतम्—प्रथमं = सत्कारात्पूर्वम्, न तु सामान्यजनस्येव ततः परमिति भावः । उपकृतं = त्वया दानववधेन कृत उपकारः, तत् लघु = स्वल्पम्, तुच्छं मन्यते = सम्भावयति । अहं तु तत् बह्वेव मन्ये इति भावः । सोऽपि = इन्द्रोऽपि । भवतः = तव । इदमुभयान्वयि । अवदानविस्मितः—अवदानेन = भवत्कृतेन दानववधात्मना शुद्धेन कर्मणा । "अवदानं कर्मवृत्तम्" इत्यमरः । "अवदानं खण्डने स्यादितिवृत्ते च कर्मणि" इति **मेदिनी** च । विस्मितः = साश्चर्यः सन् । सत्क्रियागुणान्—सत्क्रियायाः = स्वकृतसंमानस्य गुणान् = आदरातिशयादीन्, अथवा आवृत्तीः, पौनः पुन्येन कृतान् सत्कारानित्यर्थः । न गणयति = कथनयोग्यां न मन्यते । तव कर्म स्मृत्वा मया तस्य संमानना कृतेति तस्य चेतस्यपि नायातीत्यर्थः ।

भवान् इन्द्रश्चोभावपि न परितुष्यतः, अहो द्वयोरपि सौजन्यमिति मातलेर्विस्मयो हर्षश्च । अत एव तेन स्मितं कृत्वैवाभिधातुमारब्धम् । विस्मयाद्युपकृता उभयविषयिका रतिः प्राधान्येन व्यज्यते । क्रिया चेत्, कथं गुणा इति शब्दशक्तिमूलो विरोधाभासो व्यङ्ग्यः । उदात्तालङ्कारः । राजमरुत्वतोः परस्परसाम्यप्रतीतेः उपमयोपमा व्यङ्ग्या । परस्परं क्रियाजननादन्योन्यमपि । वैतालीयं वृत्तम् ।

मघवतः सत्क्रियाविशेषादनुपयुक्तमिवात्मानं समर्थयमानं राजानं मातलिराह—'हे आयुष्मन् ! उभावपि युवामुपकारे सत्कारे चापरितोषं भावयावहे । दुर्जयाख्यदानवगणस्य वधेन यद्भवता सदेवस्य देवराजस्य प्रथममुपकृतम्, देवराजकृतसत्कारातिशयमनुभवता भवता उपकारात्मकं तदात्मनः कर्म तुच्छत्वेन गण्यते । इत्थमयं भवतः स्वकर्मणा अपरितोषः । अथ देवराजोऽपि भवत्कृतानेकविधसाहाय्यदानात्मककर्मविशेषस्मरणविस्मितः सन् पौनःपुन्येन आत्मना क्रिय-

**राजा**—मातले ! मा मैवम् । स खलु मनोरथानामप्यभूमिर्विसर्जनावसरसत्कारः । मम हि दिवौकसां समक्षमर्धासनोपवेशितस्य—

अन्तर्गतप्रार्थनमन्तिकस्थं जयन्तमुद्वीक्ष्य कृतस्मितेन ।
आमृष्टवक्षोहरिचन्दनाङ्का मन्दारमाला हरिणा पिनद्धा ॥२॥

---

माणायाः भवत्सत्क्रियाया अतितुच्छतया तां कथनयोग्यामपि न मन्यते । इत्थं युवामन्योन्यस्य कृतज्ञौ स्वः' इति भावः ॥१॥

राजा वदति--**मातले इति** । मा मैवम्—इन्द्रस्य अपरितोषस्य नावकाश इति भावः । अहमत्र न प्रशंसनीय इति भावो वा । सः = तदानीं मयाऽनुभूतः । अत्र तच्छब्दस्य अनुभूतार्थत्वात् यच्छब्दोपादानमनपेक्षितम् । मनोरथानां = मनीषितानाम् अभूमिः = अविषयः । विसर्जनावसरसत्कारः—विसर्जनस्य = राजधानीं प्रति प्रेरणस्य अवसरे = समये यः सत्कारः = सम्भावनम् । ईदृशो मे सत्कारो भविष्यतीति मया मनसाऽपि नावधारितमासीदित्यर्थः । सत्कारस्य मनोरथाविषयत्वमुपपादयति—**मम हीति** । दिवौकसां समक्षम् = आस्थानमण्डपे देवेषु पश्यत्स्वेवेत्यर्थः । अर्धासनोपवेशितस्य—अर्धासने=सिंहासनस्य समेंऽशे उप= समीपे, स्वांससंसर्गं वेशितस्य = हरिणा स्वयं गृहीत्वा स्थापितस्य । अत्र मम = मनुष्यमात्रस्य दिवौकसः = देवस्य न, अपि तु सकलदिवौकसां देवानाम्; श्रूयमाणतया न, अपि तु समक्षं = प्रत्यक्षम्; आसनमात्रे न, अपि तु स्वार्धासने; निविष्टस्य न, अपि तु उपवेशितस्येत्येते सर्वेऽपि सत्कारप्रकारा वक्ष्यमाणस्य मालासमर्पणस्य अङ्गभूताः ।

मालासमर्पणं वर्णयति—**अन्तर्गतप्रार्थनमिति** । अन्तिकस्थम् अन्तर्गतप्रार्थनं जयन्तमुद्वीक्ष्य कृतस्मितेन हरिणा आमृष्टवक्षोहरिचन्दनाङ्का मन्दारमाला पिनद्धा इत्यन्वयः ।

अन्तिकस्थं = समीपवर्तिनं न दूरस्थम् अत एव प्रीतिमन्तम् अन्तर्गतप्रार्थनम्—अन्तर्गता = हृद्गता, अङ्कुरितेत्यर्थः । प्रार्थना = मन्दारमालाविषयकोऽभिलाषो यस्य स तं जयन्तं = जयन्तनामकं स्वपुत्रम् उद्वीक्ष्य = निपुणं निरीक्ष्य कृतस्मितेन = कृतमन्दहास्येन । जयन्तमनोगतं मालाविषयकमभिलाषं ज्ञात्वा इदानीं त्वत्तोऽप्ययमस्याः सविशेषमधिकारीति बोधयितुं स्मितं कृतवतेत्यर्थः । अत्र जयन्तप्रार्थनाविषयत्वोक्त्या मालाया वैशिष्ट्यं द्योत्यते । यद्वा मन्दारमालयैवायं राजा सत्कार्य इति जयन्तस्य मनोगतोऽभिप्रायः; तं ज्ञात्वा तथैव चिकीर्षामीति बोधयितुं कृतस्मितेनेति योज्यम् । अत एव तत्सूचनाय अन्तिकस्थमिति विशेषणमपि संगच्छते । हरिणा = इन्द्रेण आमृष्टवक्षोहरिचन्दनाङ्का—आमृष्टं = संश्लिष्टं यत् वक्षोहरिचन्दनं = वक्षसि यः सुरभिचन्दनानुलेपः सः अङ्कः = चिह्नं यस्याः सा तादृशी मन्दारमाला = मन्दाराख्यसुरद्रुमपुष्पमालिका । अत्र अङ्कपदोपादानेन मालायास्तत्कालधारणम्, तस्यास्तत्कालकृतं चन्दनानुलेपत्वं च व्यज्यते । तेन तत्कण्ठयोग्यत्वाम्लानत्वात्यन्तसुरभित्वमनोहरत्वादिकं च ध्वन्यते । पिनद्धा—'दिवौकसां समक्षमर्धासने उपवेशितस्य मम' इत्यस्यात्र सम्बन्धः । स्ववक्षस उन्मुच्य मम कण्ठे वक्षोऽवलम्बिता कृतेत्यर्थः ।

स्वयं परिधापिता, न तु दत्तेत्यनेन गौरवाधिक्यम् । अखिलमहीमण्डलसम्राजोऽस्य राज्ञः किमन्यद्देयमिति विमृश्य हरिणा प्रीतिदायस्वरूपेण स्वकीया मालैव दत्तेति तात्पर्यम् । अत्र गौरवाधिक्यवर्णनादुदात्तालङ्कारः । राज्ञो हरिविषयिका, हरेश्च राजविषयिका रतिर्भावः । इन्द्रवज्रोपेन्द्रवज्रयोर्द्वितीयोपजातिः ।

इन्द्रकृतात्मसत्कारातिशयं वर्णयन् राजा मातलिमाह—'मातले ! महामहिमशालिना भगवता पुरन्दरेण मम विसर्जनावसरे यादृशः सत्कारः कृत आसीत्स खलु मया मनसाऽपि न कदाऽपि कल्पिताऽसीत् । पश्य, स खलु त्रिलोकीसाम्राज्य-

मातलिः—किमिव नामायुष्मानमरेश्वरान्नार्हति ? पश्य—

सुखपरस्य हरेरुभयैः कृतं
त्रिदिवमुद्धृतदानवकण्टकम् ।
तव शरैरधुना नतपर्वभिः
पुरुषकेसरिणश्च पुरा नखैः ॥ ३ ॥

लक्ष्मीपतिरपि सकलदेवाधिपोऽपि सविस्मयं पश्यत्स्वेव सर्वेष्वमरेषु महामहिमशाली पुरन्दरः सामान्यमनुष्यं मामात्मनः सिंहासनस्यार्धेऽशे बलादुपवेश्य समीपस्थितेन मुखमुद्रया स्वपितृकण्ठगतमालाविषयेऽभिलाषं सूचयता जयन्तेन प्रार्थ्यमानामपि सुरभिचन्दनानुलिप्तनिजोरःस्थलसम्पर्कलब्धचन्दनचिह्नितां मन्दाराख्यकल्पवृक्षपुष्पमालां सस्मितं सुतमुखं पश्यन् त्वमस्या नाधिकारीति तं स्मितेन सूचयन् स्ववक्षस उन्मुच्य प्रणयातिरेकेण मम कण्ठे वक्षोऽवलम्बिनीं कृतवान् इत्थं हरिणा स्वार्धासनोपवेशनेन प्रार्थयमानं पुत्रमुपेक्ष्य मय्येव मालासमर्पणेन, तत्रापि स्वोपभुक्तपदार्थार्पणद्वारा सविशेषप्रणयाविष्करणेन चेति बहुभिः प्रकारैर्मघवताऽहं बाढं सत्कृतोऽस्मि । अत्र सर्वेऽप्येते प्रकारा मया मनसाऽप्यचिन्तिता आसन्निति सत्यमेव मनोरथानामप्यभूमिर्मम विसर्जनावसरसत्कारः' इति भावः ॥२॥

मातलिर्वदति—**किमिवेति** । किमिति प्रश्ने । इवेत्यनिश्चये । अमरेश्वरात्=देवराजात् । आदातुमिति शेषः । न अर्हति = लब्धुं योग्यो न भवति ? यदतिप्रियम्, अतिरम्यम्, अत्युत्कृष्टम्; जीवितोपमं तदप्यर्हतीति भावः ।

कुत इत्यत्राह—**सुखपरस्येति** । अधुना आनतपर्वभिः तव शरैः पुरा च

पुरुषकेसरिणः नखैः उभयैः सुखपरस्य हरेः त्रिदिवम् उद्धृतदानवकण्टकं कृतम् इत्यन्वयः ।

अधुना = संप्रति आनतपर्वभिः—आनतानि = अनुन्नतानि, मसृणानीत्यर्थः । पर्वाणि = ग्रन्थयो येषां तैः । एतेन सरलत्वम्, शीघ्रगत्वम्, मनोहरत्वं च ध्वनितम् । तव = परमशूरस्य विख्यातपौरुषस्य राजर्षेः शरैः = बाणैः । अत्र तव शरैः, नान्यस्येति सम्बन्धस्य व्यञ्जकत्वं बोध्यम् । पुरा च = पूर्वं च, कृतयुगे इत्यर्थः । पुरुषकेसरिणः = नरसिंहरूपस्य भगवतो नारायणस्य नखैः = नखरैः । आनतपर्वभिरिति विशेषणमत्रापि योज्यम् । दूरावगाढैरिति भावः । उभयैः = द्वाभ्यां गणाभ्याम् । शराणां नखानां च प्रत्येकं बहुत्वाद्बहुवचनम् । सुखपरस्य—सुखमेव परं = प्रधानं यस्य, दानवोद्धरणादिति भावः । यद्वा सुखे परः सुखपरस्तस्य । यद्वा हरेः = इन्द्रस्य यत्सुखं तत्परस्य = तत्संपादनपरस्येति तव पुरुषकेसरिण इति द्वयोर्विशेषणं हेतुगर्भम् । त्रिदिवं = स्वर्गः । "त्रिदिवं सुखे स्वर्गे च" इति हैमः । उद्धृतदानवकण्टकम्—उद्धृताः = उन्मूलिताः दानवा एव कण्टकाः = शत्रवो यस्मात्तत् कृतं = विहितम् ।

अत्र उद्धृतपदेन दानवानां समूलनाशादत्यन्ताभावो द्योत्यते । दुःखप्रदत्वं साधर्म्यं गम्यम् । कण्टकपदेन शब्दशक्त्या सूच्यग्रतादात्म्यं ध्वन्यते । तेन नखानां तदुद्धरणस्यौचित्यं च प्रतीयते । अत्र प्रकृतानां शराणामप्रकृतानां नखानां च उद्धरणक्रियाकारकत्वरूपैकधर्मान्वयात् दीपकम् । तेन शराणां नखसाम्यम्, राज्ञो नृसिंहसाम्यम्, राजपराक्रमस्य लोकोत्तरत्वं च ध्वन्यते । अत्र मातलिनिष्ठा राजविषयिणी रतिर्भावो वीरोपस्कृतो ध्वन्यते । द्रुतविलम्बितं वृत्तम् ।

इन्द्रेण कृतमात्मसत्कारं वर्णयन्तं दुष्यन्तं मातलिर्वदति—'हे राजन् ! भवान् खलु देवेश्वरस्य प्रधानसहायको हार्दः सखा, किं तव ? यद्भवानमरेश्वरादधिगन्तुं

राजा—अत्र खलु शतक्रतोरेव महिमा स्तुत्यः !

सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
संभावनागुणमवेहि तमीश्वराणाम् ।
किं वाऽभविष्यदरुणस्तमसां विभेत्ता[1]
तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥ ४ ॥

नार्हति ! भवते अदेयं तस्य किमपि नास्त्येव । पश्य, सर्वदा दिव्यविलाससुखैकतत्परस्य देवेश्वरस्य युवाभ्यामुभाभ्यामेव सहायभूताभ्यां त्रिदिवराज्यं निष्कण्टकं क्रियते । पुरा हिरण्यकशिपुप्रभृतिभिर्दानवैस्त्रिदिवे समाक्रान्ते सति भगवान्नारायणो नरसिंहवपुर्भूत्वा दुरावगाढैस्तीक्ष्णैर्नखाग्रैर्हिरण्यकशिपोर्वक्षो विदार्य विद्राव्य दैत्यवाहिनीं हुङ्कारैरेव देवेन्द्रं निष्कण्टकं चकार । संप्रति नरेषु सिंहायमानो भवान् तीक्ष्णैर्बाणैर्दानवान् दारयित्वा स्वर्गराज्यं निष्कण्टकं करोति । इत्थं कार्यान्तराभावात् निश्चिन्ततया च सर्वदा सुखैकतत्परोऽमरेन्द्रः युवयोः साहाय्येनैव निष्कण्टकं राज्यं भुङ्क्ते । अद्यत्वे च समापतितदानवत्रासससमुत्सारणेन प्रत्यग्रमुपकृतवते भवते न किमप्यदेयमस्ति मघोनः' इति भावः ॥३॥

राजा वदति—अत्रेति । अत्र = मद्बाणद्वारा कण्टकोद्धारे खलु = नूनं शतक्रतोरेव = इन्द्रस्यैव, न ममेत्यर्थः । महिमा = प्रभावः स्तुत्यः = प्रशस्यः । मम विजयोऽपीन्द्रस्यैव प्रसादादित्यत्र मम का स्तुतिरिति भावः ।

तदेव दर्शयति—सिद्ध्यन्तीति । महत्स्वपि कर्मसु नियोज्याः सिद्ध्यन्ति (इति) यत् तम् ईश्वराणां संभावनागुणम् अवेहि । अरुणः तमसां विभेत्ता किं वा अभविष्यत् ? चेत् सहस्रकिरणः तं धुरि न अकरिष्यत् इत्यन्वयः ।

१ वधाय ।

महत्स्वपि कर्मसु = कष्टसाध्येष्वपि गुरुषु कार्येषु नियोज्याः = सेवकाः, भृत्या इत्यर्थः । सिद्ध्यन्ति = सिद्धिमन्तो भवन्ति, कार्यनिष्पादका भवन्ति; फलं घटयन्तीत्यर्थः । इति यत् = भृत्यानां या कृतार्थता तम् ईश्वराणां = शक्तिमतां स्वामिनां संभावनागुणम्—संभावना = नियोज्यविषयको बहुमानः, तस्याः गुणम् = उत्कर्षम्, महिमानं वा । अयमस्मिन्कर्मणि क्षमः इत्याकारिकां समर्थनामित्यर्थः । अवेहि = जानीहि, प्रभुमहत्त्वेनैव तत्कार्यसिद्धिः, सेवकगुणः कोऽपि नास्तीति भावः । "संभावना वासनायां गौरवे ध्यानकर्मणि" इत्यजयः । अत्र इन्द्रे आत्मनि च विशेषे प्रस्तुते अप्रस्तुतप्रभुभृत्यवचनादप्रस्तुतप्रशंसा । तया च स्वस्य भृत्यत्वं शक्रस्य प्रभुत्वं च द्योत्यते । समानः प्रयोगो यथा किरातार्जुनीये—"संभावना ह्यधिकृतस्य तनोति तेजः" इतिः । उक्तं सामान्यं विशेषेण समर्थयति—किं वेति । अरुणः = विनतासुतः सूर्यसारथिः तमसां = ध्वान्तानां विभेत्ता = नाशकः किं वा अभविष्यत् = कथमभविष्यत् ? चेत् = यदि सहस्रकिरणः = रविः । अत्र सहस्रं किरणा यस्येत्युक्त्या तस्य शक्तिमत्त्वं सूच्यते । तमोनिहननसामर्थ्यं च ध्वन्यते । धुरि = अग्रे, यानमुखे इत्यर्थः । न अकरिष्यत् = नास्थापयिष्यत् ।

दृष्टान्तालंकारः । पूर्वार्धे रूपकं हेतुर्वा । शक्रविषयिका रतिर्भावः । वसन्ततिलका वृत्तम् ।

आत्मना कृते दानवोद्धरणे नात्मनः किञ्चिद्गौरवं किन्तु शक्रस्यैवायं प्रभाव इति विनयं द्योतयन् राजा मातलिं वदति—'सखे देवराजसारथे ! मैवं संभाव्यताम्; नाहमत्र प्रशंसार्हः । भगवतः शतक्रतोरेवायं महिमा, यतेन मद्द्वारा कार्यमिदं संपादितम् । पश्य, कष्टसाध्येषु गुरुष्वपि कार्येषु शक्तिमन्तः स्वामिनो यद् भृत्यान् नियोजयन्ति, नियुक्ताश्च ते तानि कार्याणि सम्यक् संपादयन्ति, नात्र नियोज्यानां किञ्चिद् गौरवम्, योग्यतापरीक्षणकुशलाः प्रभवो हि यत् कार्यसाधकत्वसंभावनया भृत्यान्नियोजयन्ति, सैव संभावना खलु भृत्येषु तादृशकार्यसंपादन-

**मातलिः**—सदृशमेवैतत् । ( स्तोकमन्तरमतीत्य ) आयुष्मन् ! इतः पश्य नाकपृष्ठप्रतिष्ठितस्य सौभाग्यमात्मयशसः ।

विच्छित्तिशेषैः सुरसुन्दरीणां
वर्णैरमी कल्पलतांऽशुकेषु ।
विचिन्त्य गीतक्षममर्थजातं[1]
दिवौकसस्त्वच्चरितं लिखन्ति ॥ ५ ॥

---

कौशलं समुद्भावयति । एतावता प्रभूणामेवैष महिमा, न भृत्यानामिति सिद्ध्यति । ऊरुविकलः, अत एव चलितुमप्यक्षमो विनतासुतः सूर्यसारथिररुणः यदि सूर्येण रथस्य मुखे न स्थापितोऽभविष्यत्, तमोभेत्तृत्वं कथं तस्य प्रसिद्ध-मभविष्यत् ? सहस्रकिरणो भगवान् रविः स्वैककिरणलेशेनापि यानि तमांसि भेत्तुमलम्, तेषामेव भेदाय तेन अरुणः पुरस्तान्नियोज्यते, तत्र सूर्यस्य तमो-भेदनाक्षमत्वं न हेतुः, किन्तु अरुणस्य तमोभेदकत्वेन प्रसिद्धिप्रापणमेव हेतुः' इति भावः ॥ ४ ॥

मातलिर्वदति—**सदृशमेवैतदिति** । एतत् = विनयवचनम् । आत्मनो-ऽवदानस्य शतक्रतावारोपणमित्यर्थः । सदृशमेव = योग्यमेव, शूरा अविकत्थना भवन्तीति भावः । स्तोकमन्तरमतीत्य = अल्पमवकाशमतिक्रम्येत्यर्थः । इतः = अस्यां दिशीत्यङ्गुल्या निर्देशः । नाकपृष्ठप्रतिष्ठितस्य—नाकपृष्ठे = स्वर्गतले प्रति-ष्ठितस्य = स्थिरीकृतस्य आत्मयशसः = दानवजयजातायाः स्वकीर्तेः सौभाग्यं = लालनीयत्वम् । पश्येति संबन्धः ।

सौभाग्यमेवोपपादयति—**विच्छित्तीति** । अमी दिवौकसः गीतक्षममर्थजातं

---

१ अर्थबन्धम् ।

विचिन्त्य सुरसुन्दरीणां कल्पलतांशुकेषु विच्छित्तिशेषैर्वर्णैस्त्वच्चरितं लिखन्ति इत्यन्वयः ।

अमी = दूरे दृश्यमानाः दिवौकसः = स्वर्गवासिनो देवाः गीतक्षमं = गातुं योग्यम्, सुरसुन्दरीभिर्गानार्हमित्यर्थः । अर्थजातम्—अर्थानां = वस्तूनां जातं = समूहम्, पदावलीमित्यर्थः । "अर्थः प्रकारे विषये वित्तकारणवस्तुषु" इति, "जातं जात्योघजन्मसु" इति च विश्वः । विचिन्त्य = विचार्य; सम्यग्विरचय्येत्यर्थः । सुरसुन्दरीणां = देवाङ्गनानां कल्पलतांशुकेषु = कल्पपादपलब्धेषु, निजवनितावसनेष्वित्यर्थः । विच्छित्तिशेषैः—विच्छित्तिः = तिलकादिरङ्गरागात्मकोऽलङ्कारः, तच्छेषैः = तदुपयुक्तशेषैः । "विच्छित्तिरङ्गरागेऽपि" इति विश्वः । वर्णैः = हरिचन्दनादिभिः, सितपीतादिभिर्वर्णैर्वा त्वच्चरितं = दानवविजयानुरूपं तवावदानं लिखन्ति । लिखन्तीति वर्तमाननिर्देशेन तस्यापरिसमाप्तिः कथ्यते ।

अत्र दिवौकसः स्वकान्ताभिः समं स्वहस्तेन तासामङ्गरागं कृत्वा अवशेषितैर्वर्णकैस्तासां कल्पवल्लीवस्त्रेषु ताभिर्गेयं तव चरितं लिखन्तीति कथनेन तव यशसः सौभाग्यम्, त्वच्चरितानामतिप्रियत्वं च सूच्यते । प्रियजनेन गेयं प्रियप्रसाधनवर्णेन प्रियपरिहितवसनेषु स्वहस्तेन लिखितं ते यशः ! अहो सौभाग्यं ते इति भावः । विशिष्टकर्तृविशिष्टकरणविशिष्टाधिकरणनिर्देशेन चरितलेखनस्य वर्णितत्वादुदात्तालंकारः । तेन च देवानां तत्प्रसादात्सर्वदेदृशश्रृङ्गाररसोपभोगयोग्या स्थितिरिति वस्तुध्वनितम् । विच्छित्तिविशेषस्य यक्षकर्दमादेर्वर्णकत्वेन निरूपणात्, तस्य च प्रकृतोपयोगित्वाच्च परिणामालङ्कारोऽपि । वीरोपस्कृतो मातलेर्विस्मयो राजभावस्याङ्गम् । इन्द्रवज्रोपेन्द्रवज्रयोरष्टमी उपजातिः ।

राजर्षेर्दुष्यन्तस्य सुयशःसौभाग्यं वर्णयन् मातलिराह—'हे राजन् ! पुरः पश्य, इदं त्वत्सुयशःसौभाग्यं नाकपृष्ठमधितिष्ठति । त्वत्प्रसादात्समुद्धृतदानव-

**राजा**——मातले ! असुरसंप्रहारोत्सुकेन पूर्वेद्युर्दिवमधिरोहता न लक्षितः [1]स्वर्गमार्गः । कतरस्मिन्मरुतां पथि वर्तामहे ?

---

कण्टकाः निश्चिन्ताः श्रृङ्गारोपभोगैकपरायणा अमी देवाः स्वहस्तैरेव सुन्दरीणां स्वप्रियतमानां शरीरेषु हरिचन्दनादिभिस्तिलकाद्यलङ्कारान् परिकल्प्य अवशिष्टैर्वर्णकैस्तासां कल्पलताकल्पितेषु वसनेषु ताभिर्गातुं योग्यं गाथारूपेण त्वच्चरितं सम्यग्विरचय्य लिखन्ति । तथा च लोकोत्तरास्त्वच्चरितलेखकाः लोकोत्त त्वच्चरितलिखनसाधनं लोकोत्तरं च तदधिकरणमिति महत्सौभाग्यं ते सुयशसः । त्वयोपकृता देवाः संप्रति त्वच्चरितमेव कान्ताभिः समं गायन्ति' इति भावः ॥५॥

महापुरुषत्वाद्राजर्षेर्दुष्यन्तस्य स्वस्तुतिश्रवणं लज्जाकरम् । मातलिरपि स्तुतिकरणान्न विरमतीति राजा तं विषयान्तरे संचारयन्नाह—**मातले इति** । असुरसंप्रहारोत्सुकेन—असुरैः = दानवैः सह यः संप्रहारः = युद्धं तत्र उत्सुकेन = उत्कण्ठितेन मया पूर्वेद्युः = पूर्वस्मिन् दिने न लक्षितः = सम्यङ् न निरूपितः स्वर्गमार्गः = स्वर्गारोहणपदवी । मरुतां पथि = वायुस्कन्धे वर्तामहे = तिष्ठामः । कस्मिन् वायुस्कन्धे तिष्ठाम इति न ज्ञातमिति भावः । सप्त वायुस्कन्धाः प्रसिद्धाः । यथोक्तं **महाभारते**—

आवहः प्रवहश्चैव ततश्चानुवहस्तथा ।
संवहो विवहश्चैव ततश्चोर्ध्वं परावहः ॥
द्विजाः परिवहश्चैव वायोर्वै सप्त नेमयः । इति ।

ब्रह्माण्डे तु परिवहो वायुः षष्ठ इत्युक्तम् । **सिद्धान्तशिरोमणावपि**—

---

१ अय प्रदेशः ।

मातलिः—

त्रिस्रोतसं वहति यो गगनप्रतिष्ठां
ज्योतींषि वर्तयति च [1]प्रविभक्तरश्मि ।
[2]तस्य द्वितीयहरिविक्रमनिस्तमस्कं
वायोरिमं परिवहस्य वदन्ति मार्गम् ॥ ६ ॥

---

भूवायुरावह इह प्रवहस्तदूर्ध्वं
स्यादुद्वहस्तदनुसंवहसंज्ञकश्च ।
अन्यस्ततोऽपि सुवहः प्रतिपूर्वकोऽस्मा-
द्बाह्यः परावह इमे पवनाः प्रसिद्धाः ॥ इति ।

अत्र हि राजा विनयात्कथान्तरावतारणया आत्मस्तुतिप्रस्तावं परिहरति । मातलिरुत्तरयति—त्रिस्रोतसमिति । यः गगनप्रतिष्ठां त्रिस्रोतसं वहति, ज्योतींषि प्रविभक्तरश्मि वर्तयति च; तस्य परिवहस्य वायोर्द्वितीयहरिविक्रम-निस्तमस्कमिमं मार्गं वदन्ति इत्यन्वयः ।

यः मार्गः गगनप्रतिष्ठाम्—गगने = आकाशे प्रतिष्ठा = स्थितिर्यस्या एवंभूतां त्रिस्रोतसम् = आकाशगङ्गां वहति = धारयति, नयति वा । उक्तं च विष्णुपुराणे—

विष्णोर्बिभर्ति यां भक्त्या शिरसाऽहर्निशं ध्रुवः ।
ततः सप्तर्षयो यस्यां प्राणायामपरायणाः ॥
तिष्ठन्ति वीचिमालाभिः सिच्यमानजटाजले ।
वायोर्वै सन्ततैर्यस्याः प्लावितं शशिमण्डलम् ॥

---

१ चक्रविभक्तरश्मिः । २ तस्य व्यपेतरजसः प्रवहस्य वायोर्मार्गो द्वितीयहरि-विक्रमपूत एषः ।

भूयोऽधिकतमां कान्तिं वहत्येतदहक्षये ।

मेरुपृष्ठे वहत्युच्चैर्निष्क्रान्ता शशिमण्डलात् ॥ इति ।

यो मार्गः ज्योतींषि = ध्रुवादिनक्षत्रान्तानि तेजांसि प्रविभक्तरश्मि—प्रविभक्ताः = यथाभागं व्यवस्थापिताः रश्मयः = रज्ज्वाकारा वायुरूपा यस्मिन् कर्मणि तत् वर्तयति च = मण्डलशः परिभ्रमयति, संचारयति वा । तथा च **विष्णुपुराणे**—

सूर्याचन्द्रमसौ तारा नक्षत्राणि ग्रहैः सह ।

वातानीकमयैर्बन्धैर्ध्रुवैर्बद्धानि तानि वै ॥ इति ।

ग्रहर्क्षताराधिष्ण्यानि ध्रुवे बद्धान्यशेषतः ।

भ्रमन्त्युचितचारेण मैत्रेयानिलरश्मिभिः ॥ इति च ।

तस्य परिवहस्य = परिवहनाम्नो वायोः द्वितीयहरिविक्रमनिस्तमस्कम्—द्वितीयः = भूगतविक्रमापेक्षया अन्यः हरेः = वामनस्य विक्रमः = पादनिक्षेपः, तेन निस्तमस्कं = निष्पापं शोकरहितं च । "तमोऽन्धकारे स्वर्भानौ पापे शोके गुणान्तरे" इति हैमः । उक्तं च **वामनपुराणे**—

क्रमत्रये तोयमवेक्ष्य दत्तं महासुरेन्द्रेण विभुर्यशस्वी ।

चक्रे ततो लङ्घयितुं त्रिलोकं त्रिविक्रमं रूपमनन्तशक्तिः ॥

कृत्वाऽनुरूपं दितिजांश्च हत्वा प्रणम्य चर्षीन्प्रथमक्रमेण ।

महीं महीध्रैः सहितां महार्णवाज्जहार रत्नाकरपत्तनैर्युताम् ॥

भुवं सनाकं त्रिदिशाधिवासं सोमार्कऋक्षैरभिनन्दितं नभः ।

देवो द्वितीयेन जहार वेगात्क्रमेण देवप्रियमीड्सुरीश्वरः ॥ इति ।

इमं मार्गं = पन्थानं वदन्ति = कथयन्ति । आवहप्रवहादिषु वायुषु द्वितीयस्य प्रवहस्य वायोरेवाधिकार इत्यर्थः । स्वयं ज्योतिर्विभागकर्तृत्वादत्र तमसः कथैव

राजा—मातले ! अतः खलु सबाह्यकरणो ममान्तरात्मा प्रसीदति। (रथाङ्गमवलोक्य) मेघपदवीमवतीर्णौ स्वः !

मातलिः—कथमवगम्यते ?

---

नास्ति, मन्दाकिनीधारणाच्च रजोऽपि दूरीभूतम्। इत्थं च हरिपादपातेन पूतो रजस्तमोरहितः सत्त्वैकाश्रयोऽयं पन्था इति भावः।

अत्र अङ्गभूतमहापुरुषवर्णनादुदात्तालंकारः। वसन्ततिलका वृत्तम्।

कतमोऽयं स्वर्गमार्ग इति राज्ञः प्रश्नमुत्तरयन् मातलिराह—'हे राजन् ! सप्तसु वायुस्कन्धेषु परिवहाख्यस्य वायोरयं मार्गः, यत्र वयं संप्रति वर्तामहे। सकलजगत्पावनीं मन्दाकिनीं बिभ्रदसौ मार्गः रजोरहितः पावनतम इति किं वक्तव्यम् ! किञ्च ध्रुवादिनक्षत्रान्तं समग्रं ज्योतिर्मण्डलमनेनैव यथाभागं व्यवस्थाप्य संचार्यते। तथा चात्र तमःकथाऽपि नास्ति। वामनात्मनो भगवतो हरेर्द्वितीयेन पादपातेन पावनानामपि पावनोऽयं परिवहवाय्वधिष्ठितः स्वर्गमार्गः, यत्र सुरकार्यसंपादनात्संप्रति निश्चिन्तो भवान् रथेन गच्छति। निपुणं निरीक्षतामिममायुष्मान्' इति भावः॥ ६॥

राजा वदति—मातले इति। अतः = उक्तगुणविशिष्टप्रवहाख्यवायुस्कन्धवर्तनात् सबाह्यकरणः = बाह्येन्द्रियवर्गसहितः अन्तरात्मा = मनः प्रसीदति = सत्त्वसंपर्कजमात्मप्रसादं लभते। रथाङ्गमवलोक्य = रथचक्रं दृष्ट्वा मेघपदवीं = मेघानां स्थानम्, समनन्तरस्य भूवायोरावहस्य मार्गमित्यर्थः। अवतीर्णौ स्वः = उपरिमार्गादधोमार्गमागतावित्यर्थः। मातलिः पृच्छति—कथमवगम्यत इति? केन प्रमाणेन मेघमण्डलावतरणमनुमीयत इत्यर्थः।

राजा—

[1]अयमरविवरेभ्यश्चातकैर्निष्पतद्भि-
हरिभिरचिरभासां तेजसा चानुलिप्तैः ।
गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते शीकरक्लिन्ननेमिः ॥ ७ ॥

राजोत्तरयति—अयमिति । अयं ते शीकरक्लिन्ननेमिः रथः अरविवरेभ्यो निष्पतद्भिः चातकैः अचिरभासां तेजसा अनुलिप्तैः हरिभिश्च वारिगर्भोदराणां घनानामुपरि गतं पिशुनयति इत्यन्वयः ।

अयम् = अङ्गुल्या निर्दिष्टः ते = तव, शीकरक्लिन्ननेमिः—शीकरैः = जलकणैः क्लिन्नाः = आर्द्रा नेमयः = चक्रधारा यस्य तथाभूतः रथः = स्यन्दनः अरविवरेभ्यः—अराणां = चक्राङ्गविशेषाणां विवरेभ्यः = अन्तरालेभ्यः निष्पतद्भिः = निर्गच्छद्भिः, उड्डीय बहिरागच्छद्भिरित्यर्थः । चातकैः = तन्नामकैर्मेघप्रियैः पक्षिभिः । मेघमार्गे चातकसंचारः कविप्रसिद्धः । अचिरभासां = विद्युतां तेजसा दीप्त्या अनुलिप्तैः = परीतैः, रञ्जितैरित्यर्थः । अत्र अनुलेपनेन मिश्रणं लक्ष्यते । परभागलाभो व्यङ्ग्यः । हरिभिश्च = त्वदीयैरश्वैश्च वारिगर्भोदराणाम्—वारिगर्भं जलपूर्णम् उदरम् = अभ्यन्तरं येषां तथाविधानाम् । अनेन संपूर्णजलभरितत्वं ध्वनितम् । अयं च शीकरक्लिन्नत्वे हेतुः । घनानां = मेघानाम् उपरि = पृष्ठे गतं = गमनं पिशुनयति = सूचयति । "पिशुनौ खलसूचकौ" इत्यमरः ।

वृष्टिपातप्रत्याशया संनिहिताश्चातकाश्चक्राङ्गाणामवकाशे निःसरन्ति, अश्वाश्च ते विद्युत्प्रभारञ्जिताः, आर्द्रं च चक्राङ्गम् । तन्मन्ये समतीत्य सुरवर्त्म मेघमार्गमवती-

१ अयमगविवरेभ्यः ।

मातलिः—क्षणादायुष्मान्स्वाधिकारभूमौ वर्तिष्यते ।

राजा—( अधोऽवलोक्य ) वेगावतरणादाश्चर्यदर्शनः संलक्ष्यते मनुष्यलोकः । तथा हि—

---

र्णा वयमिति निष्कृष्टोऽर्थः । अत्र चातकनिष्पतनं विद्युत्प्रभाऽनुलेपनं नेमिक्लेदश्च मेघमार्गानुमापकानीत्यनुमानमलङ्कारः । मतिर्भावः । मालिनी वृत्तम् ।

'आवां मेघमार्गमवतीर्णौ स्वः' इति स्वोक्तिं समर्थयन् राजा मातलिं वदति—'सखे ! देवराजसारथे ! पश्य, एते वयं समतीत्य सुरवर्त्म मेघमार्गमवतीर्णावेव । यतः अस्य त्वत्परिचालितस्य रथस्य नेमयः मेघमण्डलसंघर्षात् ततो निष्पतद्भिर्जलकणैरार्द्रा लक्ष्यन्ते, इदं तावत्प्रथमं सूचकम् । रथसङ्घट्टनेन निष्पततः कतिपयान् जलबिन्दूनास्वाद्य वृष्टिपातप्रत्याशया अमी चातकाः अस्मद्रथचक्राङ्गाणामवकाशे निस्सरन्ति, द्वितीयमेतत्सूचकम् । एतेऽस्मद्रथसंबन्धिनोऽश्वाश्च मेघमण्डलसहचरीणां विद्युतां दीप्त्या रञ्जिताश्च प्रतिभान्ति । एतच्च तृतीयं लिङ्गम् । तन्मन्ये सुरमार्गमतिक्रम्य संप्रति वयं मेघमण्डलोपरिष्टाद्वर्तामहे' इति भावः ॥ ७ ॥

अथ मातलिरासन्नो भूलोक इत्याह—**क्षणादिति** । क्षणात्=क्षणमतिवाह्य । ल्यब्लोपे पञ्चमी । अनेन रथवेगः सूच्यते । स्वाधिकारभूमौ—स्वस्य=आत्मनः अधिकारः=नियोगो यस्यां सा स्वाधिकारा, सा चासौ भूमिश्च तस्याम्, भूपृष्ठे इत्यर्थः । वर्तिष्यते=स्थास्यति । अधोऽवलोकयन् राजा वदति—**वेगावतरणादिति** । वेगेन=जवेन अवतरणात्=अधोगमनाद्धेतोः आश्चर्यदर्शनः—आश्चर्य=विचित्रं दर्शनं यस्य तथाविधः मनुष्यलोकः—मनुष्याणां लोकः=भुवनम्, पृथ्वीत्यर्थः । संलक्ष्यते=भाति ।

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी
पर्णस्वान्तरलीनतां विजहति स्कन्धोदयात्पादपाः ।
¹संतानैस्तनुभावनष्टसलिला व्यक्तिं भजन्त्यापगाः
केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते ॥ ८ ॥

मनुष्यलोकस्य आश्चर्यदर्शनत्वमुपपादयति—तथा हि—शैलानामित्यादिना । पश्य, मेदिनी उन्मज्जतां शैलानां शिखरात् अवरोहतीव; पादपाः स्कन्धोदयात् पर्णस्वान्तरलीनतां विजहति; तनुभावनष्टसलिला आपगाः सन्तानैर्व्यक्तिं भजन्ति; भुवनमुत्क्षिपता केनापि मत्पार्श्वमानीयते इव इत्यन्वयः ।

पश्य=साश्चर्यमवलोकय । वक्ष्यमाणार्थः कर्म । मेदिनी = पृथ्वी उन्मज्जतां= सहसोत्प्लुत्येव प्रकटीभवताम् । अत्र उन्मज्जनेन कारणेन प्राकट्यं कार्यं लक्षयता तद्गतमल्पत्वं ध्वन्यते । शैलानां = पर्वतानां शिखरात्=अग्रभागात् । इदं जात्येकवचनम् । अवरोहतीव=अधोयातीवेत्युत्प्रेक्षा । नहि शैला उन्मज्जन्ति, नापि मेदिनी अवरोहति; किन्तु वेगात् शैलानामुन्मज्जनम्, मेदिन्याश्चावरोहणं द्वयमेतदाश्चर्यं दृश्यते इति तात्पर्यम् । पादपाः = वृक्षाः स्कन्धोदयात्—स्कन्धानां= प्रकाण्डानाम् उदयात्=आविर्भावात् । “अस्त्री प्रकाण्डः स्कन्धः स्यात्” इत्यमरः । अत्र उदयशब्दः आविर्भावं लक्षयन् तदतिशयं ध्वनयति । पर्णस्वान्तरलीनताम्— पर्णानां = पत्राणां सु=अतिशयेन यदन्तरं = मध्यं तत्र लीनतां = तदाकारताम्, पृथगनुपलब्धिमित्यर्थः । विजहति = त्यजन्ति; प्रकटीभवन्तीत्यर्थः । पूर्वं पत्रपुञ्जमात्ररूपेण दृष्टाः पादपाः इदानीं काण्डादिमन्तो दृश्यन्ते इति तात्पर्यम् । एतच्चाश्चर्यं वेगाज्जातम् । तनुभावनष्टसलिलाः—तनुभावेन = क्षीणतया नष्टानि=

१ संधानं तनुभागनष्टसलिलव्यक्त्या व्रजन्त्यापगाः ।

अलक्षितानि सलिलानि = जलानि यासां तथाविधाः; तनुभावेन नष्टसलिलत्वेन प्रतीयमाना इत्यर्थः । आपगाः = नद्यः सन्तानैः = विस्तारैः । "सन्तानो विस्तृतौ देववृक्षे चापत्यगोत्रयोः" इति धरणिः । व्यक्तिं = प्रकटतां भजन्ति = यान्ति । यत्र यत्र दूरात् सूक्ष्मतया जलं न दृष्टम्, सहसा सजला नद्यस्तत्र दृश्यन्ते । इदमप्याश्चर्यं वेगादेव । भुवनं = मनुष्यलोकः उत्क्षिपता = ऊर्ध्वं प्रेरयता केनापि = अतिसुरासुरसत्त्वेन सत्त्वेन मत्पार्श्वं = मम समीपम् आनीयत इव = उपस्थाप्यत इवेति गम्योत्प्रेक्षा । "पार्श्वं कक्षाधरे चक्रोपान्ते पर्शुगणेऽपि च" इति विश्वः । वस्तुतस्तु अहमेवाधः पतामि, वेगात् पुनर्भुवनमुत्पततीव भाति । यद्धि दूरादेकपृष्ठमेकवर्णं च भाति स्म, तदेव भुवनं सहसा गिरितरुसरिदादिरूपेण विभक्तपृष्ठभागमुत्पततीवेत्यहो आश्चर्यम् !

अत्र चतुर्भिः पादैर्वर्णितानामनुभवानां क्रमो विवक्षितः । स्वभावोक्तिकाव्यलिङ्गोत्प्रेक्षासंसृष्टिः । विस्मयो भावः । शार्दूलविक्रीडितं वृत्तम् ।

अधोऽवलोकयन् मनुष्यलोकस्य आश्चर्यदर्शनत्वं समर्थयमानो राजा मातलिमाह—'सखे मातले ! पश्य, वेगावतरणात् आश्चर्यदर्शनः संलक्ष्यते मनुष्यलोकः । तथा हि—पूर्वं दूरतया ये शैला अस्पष्टा इव प्रतीयन्ते स्म, त एवेदानीमुन्मग्ना इव लक्ष्यन्ते । तेषां शिखरेभ्यश्च मेदिनी अधोयान्तीव प्रतीयते । वस्तुतस्तु न शैला उन्मज्जन्ति, नापि मेदिन्यवरोहति; किन्तु रथवेगात् शैलानामुन्मज्जनं मेदिन्याश्चावरोहणमाश्चर्यं प्रतीयते । पूर्वं दूरतया पत्रपुञ्जमात्रात्मतया दृष्टाः पादपाः इदानीं काण्डादिमन्तो दृश्यन्ते । इदमपि रथवेगजन्यमेवाश्चर्यम् । पूर्वं दूरतया याः सरितस्तनुतया प्रतीयमानाः नष्टसलिला अलक्ष्यन्त, ता एवेदानीमविच्छिन्नप्रवाहतां दधाना विस्तृता इव लक्ष्यन्ते । इदमप्याश्चर्यं वेगजन्यमेव । मन्ये केनापि अतिसुरासुरसत्त्वेन सत्त्वेन मनुष्यलोकोऽयं मत्समीपमुपस्थाप्यत

**मातलिः**—साधु दृष्टम् । ( सबहुमानमवलोक्य ) अहो उदाररमणीया पृथिवी !

**राजा**—मातले ! कतमोऽयं पूर्वापरसमुद्रावगाढः कनकरसनिष्यन्दः सांध्य इव मेघपरिघः सानुमानालोक्यते ?

**मातलिः**—आयुष्मन् ! एष खलु हेमकूटो नाम किंपुरुषपर्वत-

---

इव । वस्तुतस्तु अहमेवाधः पतामि, वेगात्पुनर्भुवनमुत्पततीव भाति । यच्च दूरादेकपृष्ठमेकरूपं चाभात्, तदेवेदानीं सहसा गिरितरुसरिदादिरूपेण विभज्यमानावयवं प्रतीयत इत्यहो आश्चर्यदर्शनोऽयं मनुष्यलोकः' इति भावः ॥ ८ ॥

राजोक्तिमनुमोदमानो मातलिर्वदति—**साधु दृष्टमिति** । सबहुमानमवलोक्येति तक्रियाऽनुवादकं कविवाक्यम् । अहो इत्याश्चर्ये । उदाररमणीया—उदारा = महती रमणीया=दर्शनीया चेति विस्मयोक्तिः । तत्स्थानस्थितत्या एकदैव सर्वस्या दृग्गोचरत्वादेव मुक्तिः ।

राजा पृच्छति—**मातले इति** । पूर्वापरसमुद्रावगाढः—पूर्वापरसमुद्रयोः = पूर्वपश्चिमसमुद्रयोः अवगाढः = प्रविष्टः, संबद्ध इत्यर्थः । कनकरसनिष्यन्दः = कनकरसस्य = सुवर्णद्रवस्य निष्यन्दः = स्रवः, तद्वान्, द्रवसुवर्णोद्गारी; कनकमयधातुरसनिष्यन्दीत्यर्थः । अत एव उपमाने सान्ध्य इति । सन्ध्याकालोद्भव इत्यर्थः । मेघपरिघः—परिघाकारो मेघः, मेघपरिघः । मेघोऽर्गल इवेत्यर्थः । अर्गलेनौपम्यं दैर्घ्यज्ञापनार्थम् । कतमः सानुमान् पर्वत इति प्रश्नः । मातलिरुत्तरयति—**आयुष्मन्निति** । हेमकूटो नाम = हेमकूट इति प्रसिद्धः । किंपुरुषपर्वतः = किम्पुरुषवर्षस्य मर्यादापर्वत इत्यर्थः । तपः-

स्तपःसंसिद्धिक्षेत्रम् । पश्य—

स्वायंभुवान्मरीचेर्यः प्रबभूव प्रजापतिः ।
सुरासुरगुरुः सोऽत्र सपत्नीकस्तपस्यति ॥ ९ ॥

संसिद्धिक्षेत्रम्—तपःसंसिद्धेः = अभिलषितसिद्धेः क्षेत्रम् = उत्पत्तिस्थानम् । अनेनात्र मारीचस्यावस्थितिः सूच्यते । किम्पुरुषपर्वतस्य मर्यादापर्वतत्वमुक्तं यथा भागवते—"दक्षिणेनेलाव्रतं निषधो हेमकूटो हिमालय इति त्रयो हरिवर्ष-किम्पुरुषभारतानां मर्यादागिरयः" इति । विष्णुपुराणे च ।

हिमवान् हेमकूटश्च निषधस्तस्य दक्षिणे ।
नीलः श्वेतश्च भृङ्गी च उत्तरे वर्षपर्वताः ॥
लक्ष्यमाणौ द्वौ मध्यौ·········। इति,
भारतं प्रथमं वर्षं ततः किम्पुरुषं स्मृतम् ।
हरिवर्षं तथैवान्यन्मेरोर्दक्षिणतो द्विज ॥ इति च ।

तदेव स्थानमाहात्म्यं दर्शयति—**पश्य—स्वायंभुवादिति** । स्वायम्भुवात् मरीचेः यः प्रजापतिः प्रबभूव, सुरासुरगुरुः स सपत्नीकः अत्र तपस्यति इत्यन्वयः ।

स्वायम्भुवात्—स्वयंभूर्ब्रह्मा, तस्यापत्यं स्वायम्भुवः = ब्रह्मणो मानसः पुत्रः तस्मात् मरीचेः = मरीचिसंज्ञकात् ब्रह्मणो मानसपुत्रात् यः प्रजापतिः = लोकस्रष्टा कश्यप इति प्रबभूव = जज्ञे, सुरासुरगुरुः—सुराणां = देवानाम् असुराणां = दानवानां च गुरुः = पिता, सः = मारीचः सपत्नीकः—पत्न्या=अदित्या सह अत्र = अस्मिन् हेमकूटे तपस्यति=तपश्चरति ।

अत्र महर्षेर्मारीचस्य स्वायम्भुवपुत्रत्वोक्तिः सुरासुरगुरुत्वोक्तिश्च जन्मना

**राजा**—तेन ह्यनतिक्रमणीयानि श्रेयांसि। प्रदक्षिणीकृत्य भगवन्तं गन्तुमिच्छामि।

---

ज्ञानादिना च समुत्कर्षं द्योतयन्ती अवश्यं नमस्कार्यत्वं ध्वनयति। सपत्नीक इत्यनेन तवाप्यत्र पत्नीयोगो भविष्यतीति ध्वन्यते। स्वयं सर्वलोकगुरुरपि मारीचः अत्र तपस्यतीति कथनेन हेमकूटस्य माहात्म्यातिशयो द्योत्यते। छेक-वृत्त्यनुप्रासौ। अनुष्टुप् वृत्तम्।

हेमकूटपर्वतस्य माहात्म्यातिशयं वर्णयन् मातलिराह--'आयुष्मन्! पश्य, एष खलु हेमकूटो नाम किम्पुरुषवर्षमर्यादापर्वतः, तपःसिद्धिभूमिश्च सिद्धानाम्। यत्र ब्रह्मणः साक्षान्मानसपुत्रान्मरीचेः समुत्पन्नो ब्रह्मणः पौत्रः सुराणामसुराणां च जनकः सर्वलोकनमस्यो भगवान् कश्यपः पत्न्या सकल-देवमात्रा अदित्या सह तपश्चरन् सुखेन निवसति। तस्मात् सर्वलोकातिशायी सर्वतीर्थातिक्रान्तो महिमा हेमकूटस्य वर्तते' इति भावः ॥९॥

राजा वदति—**तेन हीति**। तेन हि = निमित्तेन, यतोऽत्र प्रजापतिरास्ते तत इत्यर्थः। अनतिक्रमणीयानि = अतिक्रम्य गन्तुमनर्हाणि, आदरणीयानीत्यर्थः। निषेधमुखेनोक्तिरतिक्रमणे प्रत्यवायं व्यञ्जयति। एवंविधः प्रयोगो यथा **रघुवंशे**— "प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः" इति। श्रेयांसि = शुभानि। श्रेयः-पदेन तद्धेतुर्लक्ष्यते, फलाव्यभिचारश्च व्यज्यते। प्रदक्षिणीकृत्य = प्रदक्षिणक्रियया प्रपूज्य। भगवन्तं = कश्यपम्। उक्तं च—

मृदङ्गं दैवतं विप्रं घृतं मधु चतुष्पथम्।
प्रदक्षिणानि कुर्वीत प्रख्यातं च वनस्पतिम् ॥ इति।

मातलिः—प्रथमः कल्पः !

( नाट्येनावतीर्णौ। )

राजा—( सविस्मयम् )—

उपोढशब्दा न रथाङ्गनेमयः
प्रवर्तमानं न च दृश्यते रजः।
अभूतलस्पर्शतया निरुन्धत-[1]
स्तवावतीर्णोऽपि रथो न लक्ष्यते ॥ १० ॥

---

राजोक्तं मातलिरनुमोदते—प्रथमः कल्प इति। मुख्यः पक्ष इत्यर्थः। "मुख्यः स्यात् प्रथमः कल्पः" इत्यमरः। नाट्येनावतीर्णौ = अभिनयकर्मणा अवतरणमभिनीय स्थिताविव्यर्थः। कविवाक्यमिदम्।

अवतरणे विस्मयमनुभवन् राजा वदति—उपोढशब्दा इति। अभूतलस्पर्शतया रथाङ्गनेमयः उपोढशब्दा न। रजश्च प्रवर्त्तमानं न दृश्यते। निरुन्धतस्तव रथः अवतीर्णोऽपि न लक्ष्यते इत्यन्वयः।

अभूतलस्पर्शतया—अविद्यमानो भूतलस्पर्शः = भूमिसम्पर्को यस्य तस्य भावेन, भूमिसम्पर्कविरहादित्यर्थः। रथाङ्गनेमयः—रथाङ्गानां = चक्राणां नेमयः = प्रान्ताः उपोढशब्दाः—उपोढाः = प्रारब्धाः शब्दा यैस्तथाविधाः न = न भवन्ति। येनाहं शब्दविरामात् क्रान्तः पन्था इति वक्तुं शक्नुयाम्। रजश्च = रथनेम्युद्धता धूलिश्च। जातावेकवचनम्। प्रवर्तमानं = चक्रैरश्वखुरैश्चोत्क्षिप्तं सत् प्रसर्पत् न दृश्यते = नावलोक्यते। येन रजसामप्रवृत्तिं दृष्ट्वा गमननिवृत्तिं जानीयाम्। निरुन्धतः = रथवेगं स्तम्भयतः। इदं हेतुगर्भम्, भूतलस्पर्शं विना स्तम्भि-

---

१ निरुद्धतिः।

**मातलिः**—एतावानेव शतक्रतोरायुष्मतश्च विशेषः।

**राजा**—मातले! कतमस्मिन्प्रदेशे मारीचाश्रमः?

---

तत्वात्। तव = मातलेः रथः = स्यन्दनः अवतीर्णोऽपि = स्वर्गमार्गात् हेमकूट-शिखरमुपागतोऽपि न लक्ष्यते = अवतीर्ण इति न ज्ञायते।

अभूतलस्पर्शतयेति त्रिष्वपि हेतुत्वेन योज्यम्। अवतरणरूपे कारणे सत्यपि तत्कार्याभावोक्त्या विशेषोक्तिरलंकारः। अवतीर्णोऽपि न लक्ष्यत इति विरोधा-भासोऽपि। वंशस्थं वृत्तम्।

अवतरणे विस्मयमनुभवन् राजा मातलिं वदति—'सखे! देवराजसारथे! लोकोत्तरं तव रथसंचालनचातुर्यम्! यस्मात्ते रथो भूतलोपरि न चलति, ततो भूतलस्पर्शाभावेन रथचक्राणां प्रान्ताः शब्दं न कुर्वते। चक्रैरश्वखुरैश्च समुत्क्षिप्तं प्रसर्पत् रजो न दृश्यते। तथा च उद्दिष्टस्थानप्राप्त्या रथवेगं स्तम्भयतस्तवायं रथोऽवतीर्ण इत्यपि न ज्ञायते। तत्र सर्वत्र भूतलस्पर्शाभावमेव हेतुमहं संभा-वयामि। भूतले तु गच्छतामस्माकं रथाङ्गनेमयः शब्दं कुर्वते; शब्दविरामे च क्रान्तः पन्था इति वक्तुं शक्नुमः। किञ्च चक्रैरश्वखुरैश्च समुद्धूतं रजोऽपि प्रसर्पति; रजसामप्रवृत्तिं दृष्ट्वा गमननिवृत्तिर्ज्ञातुं शक्यते; रथसंस्तम्भनं च अनुभूतिविषयीभवति। इह तु भूतलस्पर्शाभावात् त्वदीयरथसंचालनचातुर्याच्च सर्वमेव विलक्षणमित्यहो आश्चर्यम्!' इति भावः॥ १०॥

मातलिः स्तुतिगर्भमनुवदति—**एतावानिति**। एतावानेव = रथस्य भूतल-स्पर्शाभाव एव। अत्र व्यतिरेकालंकारः। भुवि संचरणे शतक्रतो रथः अस्पृष्टो गच्छति, तव तु स्पृष्टः। अन्यथा स इव भवानप्यानाकरथवर्त्मा इति भावः। राजा पृच्छति—**कतमस्मिन्निति**। अनेन मारीचदर्शनौत्सुक्य गम्यते।

**मातलिः**—( हस्तेन दर्शयन् )—

वल्मीकार्धनिमग्नमूर्तिरुरसा संदष्टसर्पत्वचा[1]
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसंपीडितः ।
अंसव्यापि शकुन्तनीडनिचितं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ॥ ११ ॥

---

**हस्तेन दर्शयन्निति ।** हस्तेन = उत्तानितेन पताकेनेत्यर्थः ।

तथाविधं प्रदर्शयन् मातलिर्वदति—**वल्मीकार्धनिमग्नमूर्तिरिति ।** यत्र असौ वल्मीकार्धनिमग्नमूर्तिः संदष्टसर्पत्वचा उरसा जीर्णलताप्रतानवलयेन कण्ठे अत्यर्थसंपीडितः अंसव्यापि शकुन्तनीडनिचितं जटामण्डलं बिभ्रत् स्थाणुरिव अचलो मुनिः अभ्यर्कबिम्बं स्थितः इत्यन्वयः ।

यत्र = यस्मिन् प्रदेशे असौ = दूरे दृश्यमानः वल्मीकार्धनिमग्नमूर्तिः—वल्मीकस्य = पिपीलिकाकृतमृत्पुञ्जस्तूपविशेषस्य अर्धे यथा तथा निमग्ना = विहिता मूर्तिः = शरीरं यस्य तथाविधः, परित उद्गतेन वल्मीकेन तिरोहितनाभ्यधःकाय इत्यर्थः । अनेन वक्ष्यमाणैर्लिङ्गैश्च मुनेस्तपश्चर्यायाश्चिरकालप्रवृत्तत्वं प्रकाश्यते । संदष्टसर्पत्वचा—संदष्टाः = संलग्नाः सर्पत्वचाः = निर्मोका यस्मिन्, वल्मीकस्य सर्पाधिवासत्वात् । तथाविधेन उरसा = वक्षसा, उपलक्षित इत्यर्थः । अचलत्वोपलक्षणमिदम् । उपलक्षणे तृतीया । जीर्णलताप्रतानवलयेन—जीर्णानां = शुष्काणां लताप्रतानानां = वलयाकाराणां वल्लीतन्तूनां वलयेन = वेष्टनेन; वलयितलतातन्तुभिरित्यर्थः । यद्वा लताप्रतानं = वल्लीसमूहः स वलय इव = कण्ठरोमाणीवेत्युपमितसमासः । "वलयः कण्ठरोग्नि स्याद्वलयं कङ्कणेऽपि च" इति **विश्वः ।**

---

१ उरगत्वग् ब्रह्मसूत्रान्तरः ।

राजा—नमोऽस्मै कष्टतपसे ।

---

कण्ठे = ग्रीवायाम् अत्यर्थसंपीडितः—अत्यर्थम् = अत्यन्तं संपीडितः = निबन्धनेन क्लेशितः अंसव्यापि—अंसौ = स्कन्धौ व्याप्नोति यत्तादृशं शकुन्तनीडनिचितम्—शकुन्तानां = पक्षिणां नीडैः = कुलायैः निचितं = व्याप्तं जटामण्डलम्—जटानां मण्डलं = समूहं बिभ्रत् = धारयन् अत एव स्थाणुरिव = काण्डशेषो वृक्ष इव अचलः = निःष्पन्दः, स्थिर इत्यर्थः । मुनिः = मारीचः अभ्यर्कबिम्बं = सूर्यबिम्बं लक्ष्यीकृत्य स्थितः, इति तदानीन्तनावस्था । यत्र स्थितः स मारीचाश्रम इति वाक्यशेषः । स्थाणुपक्षेऽपि विशेषणानि योज्यानि । तथा हि—उरसा = मध्येन कण्ठे = उपकण्ठे समीपे इति यावत् । अंसः = स्कन्धः, जटा = प्ररोहरूपा । अन्यत्समानम् ।

परिकरश्लेषोपमाऽलंकाराः । शार्दूलविक्रीडितं वृत्तम् ।

कतमस्मिन् प्रदेशे मारीचाश्रम इति राज्ञः प्रश्नमुत्तरयन् मातलिर्हस्तेन दर्शयन्नाह-'आयुष्मन् ! पश्य, यत्र बहोः कालादारभ्य प्रवृत्ततपश्चरणतया परितः समुद्गते वल्मीके यस्य शरीरार्धं निमग्नमस्ति तथाविधः, सर्वभूताभयदान-दीक्षितत्वेन निःशङ्कं चरतां सर्पाणां निर्मोकैर्यस्य वक्षःस्थलं संदष्टं वर्तते तादृशः, जीर्णानि लताप्रतानवलयानि यस्य कण्ठमत्यर्थमावेष्ट्य संस्थितानि लक्ष्यन्ते तादृशः, स्कन्धोपरि लम्बमानं पक्षिवृन्दकृतनिजकुलायव्याप्तं पृथु जटामण्डलं बिभ्रत् तथा-विधः, स्थाणुरिव सर्वथा निःष्पन्दोऽसौ मुनिरर्कबिम्बं लक्ष्यीकृत्य तिष्ठति, स एव मारीचाश्रम इति भवताऽवगन्तव्यम्' इति भावः ॥ ११ ॥

तथाविधं मुनिं दृष्ट्वा तं नमस्कुर्वन् राजा वदति—नमोऽस्मै कष्टतपसे इति । कष्टतपसे—कष्टं = कृच्छ्रम् , कष्टकरमित्यर्थः; तपो यस्य तस्मै । अत्र

**मातलिः**—( संयतप्रग्रहं रथं कृत्वा ) महाराज ! एतावदितिपरिवर्धितमन्दारवृक्षं प्रजापतेराश्रमं प्रविष्टौ स्वः ।

**राजा**—स्वर्गादधिकतरं निर्वृतिस्थानम् ! अमृतह्रदमिवावगाढोऽस्मि ।

**मातलिः**—( रथं स्थापयित्वा ) अवतरत्वायुष्मान् ।

**राजा**—( अवतीर्य ) मातले ! भवान्कथमिदानीम् ?

**मातलिः**—संयन्त्रितो मया रथः; वयमप्यवतरामः । (तथा कृत्वा) इत आयुष्मन् ! ( परिक्रम्य ) दृश्यन्तामत्रभवतामृषीणां तपोवनभूमयः ।

---

भक्तिबहुमानादयो व्यज्यन्ते । **संयतप्रग्रहं रथं कृत्वेति** । संयताः = नियमिताः प्रग्रहाः = रश्मिरज्जवो यत्र तम्, तथाविधं रथं कृत्वेत्यर्थः। कृत्वेति कविवचनम् । मातलिर्वदति—**महाराज ! एताविति** । एतौ = इमौ आवाम् अदितिपरिवर्धितमन्दारवृक्षम्—अदित्या = मारीचपत्न्या परिवर्धिताः = लालिताः मन्दारवृक्षा यत्र तत् प्रजापतेः = कश्यपस्य आश्रमं प्रविष्टौ स्व इति संबन्धः । अथ स्वभावतः सात्त्विको राजा सत्त्वोद्दीपकपुण्याश्रमसंसर्गेण प्रवृद्धसत्त्वगुणः प्रहृष्यन्नाह—**स्वर्गादिति** । स्वर्गादधिकतरं = स्वर्गापेक्षयाऽप्यधिकसौभाग्यास्पदं निर्वृतिस्थानम्—निर्वृतेः = शान्तेः स्थानम् = आस्पदम् । निर्वृतिस्वरूपमाह—**अमृतह्रदमिवेति** । अमृतस्य = सुधायाः ह्रदं = कुण्डम् अवगाढ इव = प्रविष्ट इवास्मि । नेदृशं स्वर्गेऽपि लभ्यं सुखं मयेति भावः । रथं स्थापयित्वा = सुसंयतं कृत्वेत्यर्थः ।

राजा रथादवतीर्य मातलिं वदति—**मातले इति** । भवान् कथमिदानीम् ? अवतरति वा न वेत्यर्थः । यद्वा किं करिष्यतीत्यर्थः । मातलिर्वदति—**संयन्त्रित**

राजा—ननु विस्मयादवलोकयामि ।

प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे धर्माभिषेकक्रिया ।
ध्यानं रत्नशिलातलेषु विबुधस्त्रीसंनिधौ संयमो
यत्काङ्क्षन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥१२॥

---

इति। संयन्त्रितः = सम्यक्स्थापितः। तथा कृत्वा = अवतीर्य। दृश्यन्तामिति। दृश्यबुद्ध्या विलोक्यन्तामित्यर्थः। अत्रभवतां = पूज्यानाम्। तपोवनभूमयः = तपोवनसंबन्धिनो भूभागाः। मातल्युक्तमनुमोदमानो राजा आह—नन्विति। विस्मयात् = विस्मयमवलम्ब्य अवलोकयामि = पश्यामि।

विस्मयावहत्वमुपपादयति—प्राणानामिति। सत्कल्पवृक्षे वने उचिता प्राणानां वृत्तिः अनिलेन (भवति)। काञ्चनपद्मरेणुकपिशे तोये पुण्या अभिषेकक्रिया (भवति)। रत्नशिलातलेषु ध्यानं (भवति)। विबुधस्त्रीसन्निधौ संयमः (भवति)। अन्यमुनयः तपोभिः यत् काङ्क्षन्ति, तस्मिन् अमी तपस्यन्ति इत्यन्वयः।

सत्कल्पवृक्षे—सन्तः = विद्यमानाः कल्पवृक्षाः=वाञ्छापूरकाः सुरद्रुमा यस्मिन् तथाभूतेऽपि वने, कल्पतरुकाननेऽपीत्यर्थः। उचिता = तपश्चरणयोग्या, अवश्य-कर्तव्या च प्राणानां वृत्तिः = जीवनधारणम् अनिलेन = वायुना भवति। एकोऽपि कल्पपादपो बहुभोगाय प्रभवति; अत्र कल्पपादपकाननमेव वर्तते; तथाप्येते वायुभक्षा जीवन्ति। तदपि तपसे यावत्पर्याप्तं तावन्मात्रमेव भवति। सत्कल्प-वृक्ष इत्यनेन स्वादुभोजनसुलभत्वं व्यज्यते। काञ्चनपद्मरेणुकपिशे—काञ्चनपद्मानां सुवर्णकमलानां रेणुभिः = परागैः कपिशे = पिङ्गलवर्णे तोये = जले पुण्या = पावनी अभिषेकक्रिया = नियमस्नानकर्म भवति = क्रियते। सुचारुपङ्कजं जलं

विहारप्रवृत्तिं जनयितुमलम् । अत्र तु सौवर्णानि पङ्कजानि सन्ति । तथाऽप्यसी सर्वथा विहारविमुखा नियमस्नानमात्रपरायणाः सन्तीत्यहो समुत्कर्षस्तपसामिति भावः । काञ्चनेत्यादिना जलक्रीडायोग्यत्वं सूच्यते । रत्नशिलातलेषु = रत्नविकाराः याः शिलास्तासां तलेषु ध्यानम् = इष्टदेवतासाक्षात्कारार्थं पद्मासनबन्धपूर्वकं मनोनियमनं भवति । रत्नशिलातलानि भोगायैव संपद्यन्ते, अमी तु आधार-मात्रपर्यवसितत्वात्तेषु ध्यानमेवाभ्यस्यन्तीत्यहो भोगवैमुख्यमिति भावः । रत्नेत्यादिना सरसगोष्ठीयोग्यत्वं सूच्यते । विबुधस्त्रीसन्निधौ—विबुधस्त्रियः = देवाङ्गनाः तासां सन्निधौ = समीपे संयमः = पञ्चेन्द्रियनिग्रहो भवति = अभ्य-स्यते । स्त्रीसन्निधानमेव तपसो विघ्नः, अत्र तु सुरस्त्रीणां सान्निध्यम्, तथाप्येते जितेन्द्रिया वर्तन्ते इत्यहो एतेषां वशित्वमिति भावः । विबुधेत्यादिना संभोग-योग्यता द्योत्यते । अन्यमुनयः = अन्ये मुनयो भूमिष्ठा विश्वामित्रादयः तपोभिः = अनुष्ठानैः यत् = स्थानम् , यत्काङ्क्षया अन्ये तपांसि चरन्तीत्यर्थः । काङ्क्षन्ति = लब्धुमिच्छन्ति, तपःफलत्वेनेच्छन्तीत्यर्थः । तस्मिन् = स्थितमपि तदनादृत्य । अनादरे भावलक्षणे सप्तमी । अमी = दृश्यमाना मारीचाश्रमगता मुनयः तप-स्यन्ति = तपश्चरन्ति ।

अत्र कल्पवृक्षादीनां कारणानां सद्भावे सति तत्कार्याभावे वक्तव्ये तद्विरुद्धानि-लप्राणवृत्तित्वाद्युक्तेरुक्तनिमित्ता मालाविशेषोक्तिः । एतया च एतन्निवासिनां तपस्विनां धैर्यातिशयो व्यज्यते । तपोवने वृक्षाः कल्पतरवः, पद्मानि काञ्चनानि, शिलातलानि रत्नमयानि, स्त्रियोऽप्सरस इति सामान्यात्सर्वत्र व्यतिरेकः । तथा मुनीनां मुन्यन्तराच्चेति व्यतिरेकालङ्कारः । आश्रमस्य स्वर्गसाम्यम्, भोगयोग्ये स्थाने योगमभ्यस्यन्तीति मुनीनां धैर्यातिशयश्च व्यज्यते । राज्ञो विस्मयः, तदुपस्कृता मुन्यालम्बना रतिश्च भावः । शार्दूलविक्रीडितं वृत्तम् ।

**मातलिः**—उत्सर्पिणी खलु महतां प्रार्थना । ( परिक्रम्य आकाशे ) अये ! वृद्धशाकल्य ! किमनुतिष्ठति भगवान्मारीचः ? किं ब्रवीषि ?

---

मारीचाश्रमावलोकने सर्वतो विस्मयमनुभवन् राजा मातलिं प्राह—'सखे देवराजसारथे ! पश्य, अस्मिन्नाश्रमे सर्वमेव मे विस्मयातिरेकं जनयति । कल्पवृक्षाणामिदं काननम्, अत्र स्थितानां सुस्वादुभोजनानि इच्छामात्रेणैव लब्धुं शक्यानि, तथापि अत्र स्थिता मुनयः प्राणधारणपर्याप्तमेव वायुं भक्षयित्वा तावतैव सुहितास्तपस्यन्ति । काञ्चनपद्मानां परागैः कपिशानि अत्रत्यानि स्वच्छानि सरोजलानि वीक्ष्य सर्वेषामेव विहारवाञ्छा समुदेति, परंत्वेते मुनयस्तथाविधेषु सरोजलेषु नियमस्नानकर्ममात्रं निर्वर्तयन्ति । विस्मयजनकमेतेषां विहारवैमुख्यम् । तथा च अत्र सर्वत्र रत्नमयानि शिलातलानि वर्तन्ते, तेषूपविश्य सरसगोष्ठीविहारेच्छा सर्वस्यैव समुदेति, एते मुनयस्तु तथाविधेषु तेषु शिलातलेषूपविष्टा ध्यानधारणादियोगाङ्गान्यभ्यस्यन्ति । देवाङ्गनाश्चात्र इतस्ततो विहरन्ति, तासां सान्निध्येऽपि एतैर्मुनिभिः पञ्चेन्द्रियनिग्रहाः समभ्यस्यन्ते । यत्र सामान्यस्त्रीसन्निधानमेव तपोविघ्नकरं भवति, तत्र सुरस्त्रीणां सान्निध्येऽपि एते मुनयः सर्वथा जितेन्द्रिया वर्तन्ते, इत्यहो वशित्वमेषाम् ! किं बहुना ? अन्ये भूमिष्ठा मुनयस्तपश्चरणफलत्वेन यत्स्थानं लब्धुं वाञ्छन्ति, तस्मिन्स्थाने स्थिता अप्येते तदनादृत्य तपश्चरन्तीति सर्वथा विस्मयातिरेकजनकोऽयं मारीचाश्रमः' इति भावः ॥ १२ ॥

राजोक्तौ विस्मयस्य नावकाश इत्याशयेन मातलिराह—**उत्सर्पिणीति** । महतां = महाजनानां प्रार्थना = आशंसा उत्सर्पिणी खलु = ऊर्ध्वं प्रसरणशीला, ऊर्ध्वोर्ध्वफलापेक्षिणीति यावत् । पूर्वोक्तश्लोकपूर्वार्धस्यानेन वाक्येन समर्थनादर्थान्तरन्यासः । **अये वृद्धशाकल्य इति** । पात्रप्रवेशं विना उत्तरप्रमेयप्रस्तावार्थ-

दाक्षायण्या पतिव्रताधर्ममधिकृत्य पृष्टस्तस्यै महर्षिपत्नीसहितायै कथयतीति !

**राजा**—( कर्णं दत्त्वा ) अये ! प्रतिपाल्यावसरः खलु प्रस्तावः !

**मातलिः**—( राजानमवलोक्य ) अस्मिन्नशोकवृक्षमूले तावदास्तामायुष्मान्, यावत्त्वामिन्द्रगुरवे निवेदयितुमन्तरान्वेषी भवामि ।

**राजा**—यथा भवान्मन्यते । ( इति स्थितः । )

**मातलिः**—आयुष्मन् ! साधयाम्यहम् । ( इति निष्क्रान्तः । )

**राजा**—( निमित्तं सूचयित्वा )—

मनोरथाय नाशंसे किं बाहो ! स्पन्दसे वृथा ।
पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते ॥ १३ ॥

---

मिदमुपन्यस्तम् । अत एव च किं ब्रवीषीत्युक्तम् । तदुत्तरमनुवदति—**दाक्षायण्येति** । दाक्षायण्या = दक्षकन्यया अदित्या पतिव्रताधर्मं = सतीत्वम् अधिकृत्य = उद्दिश्य । दाक्षायण्या सतीत्वमाहात्म्यविषयके प्रश्ने कृते सति महर्षीणां पत्नीभिः सहितायै तस्यै उत्तरं कथयतीति ब्रवीषि किमिति योजना ।

कर्णं दत्त्वा = श्रवणमभिनीय । राजा वदति—**अये इति** । प्रतिपाल्यावसरः—प्रतिपाल्यः = प्रतीक्ष्यः अवसरो यस्य । प्रस्तावः = प्रस्तुतोऽर्थः । मातली राजानमवलोक्य वदति—**अस्मिन्निति** । अशोकवृक्षमूले = अशोकवृक्षतले । अत्र अशोकेत्यन्वर्थेन अत्रावस्थितौ राज्ञः शोकराहित्यं भविष्यतीति द्योत्यते । इन्द्रगुरवे—इन्द्रस्य गुरवे = पित्रे, मारीचायेत्यर्थः । अन्तरान्वेषी—अन्तरम् = अवकाशं साधु अन्विष्यति यस्तादृशो भवामि । अथ उत्तरप्रमेयबिन्दुमाह—**निमित्तं सूचयित्वेति** । निमित्तं = दक्षिणबाहुस्पन्दनरूपम् ।

तस्य प्रियाप्राप्तिसूचकत्वेन समुद्बुद्धप्रियापरित्यागखेदो राजा सानुशयमाह—**मनोरथायेति** । मनोरथाय न आशंसे; हे बाहो ! मुधा किं स्पन्दसे ?

( नेपथ्ये )

मा क्खु चावलं करेहि। [1]कहं ! गदो जेव अत्तणो पकिदिं ?

मा खलु चापलं कुरु। कथम् ! गत एवात्मनः प्रकृतिम् ?

श्रेयः पूर्वावधीरितम् ; दुःखं हि परिवर्धते इत्यन्वयः।

मनोरथाय = मनोरथविषयाय प्रियायै, तामवाप्तुमित्यर्थः। अत्र विषये विषय्युपचारः। नाशंसे = नेच्छामि, मम प्रिया न सन्निवर्तेतेति भावः। तस्मात् हे बाहो = हे दक्षिणभुज ! मुधा = निष्फलं किं स्पन्दसे = किं स्फुरसि ? तव स्पन्दनं वृथैवेत्यर्थः। उक्त प्रथमवाक्यार्थं सामान्येन उत्तरार्धार्थेन समर्थयति—**पूर्वावधीरितमिति**। श्रेयः = मङ्गलं पूर्वावधीरितम्—पूर्वं = प्राक् अवधीरितम् = अवज्ञातं मया, न तु त्यक्तम्। तदेव श्रेयः कल्याणमिदानीं दुःखं हि = दुखं यथा स्यात् तथा परिवर्धते = व्यावर्तते।

अर्थान्तरन्यासोऽलंकारः। विषादो भावः। अनेन रतेरनुसंधानं दर्शितम्। अनुष्टुप् वृत्तम्।

मारीचाश्रमे स्पन्दमानदक्षिणबाहू राजा तादृशस्पन्दनस्य प्रियाप्राप्तिसूचकत्वात् प्रियाप्राप्तेश्चासंभाव्यत्वात् सानुशयमाह—'हे मम दक्षिणबाहो ! इदानीं तव स्फुरणं वृथैव। स्पन्दनानुमेयं यच्छ्रेयः प्रियाप्राप्तिरूपं तत्तु मूढात्मना मया पूर्वमेव तिरस्कृतम्, तदेवेदानीं दुःखरूपेण परिणमति। प्रागेव शकुन्तलां त्यक्त्वा दुःखैः परिवृतोऽस्मि। तत्प्राप्तिविषये सर्वथा निराश एवाहम्। वृथैवायं मे बाहुः स्पन्दते' इति भावः॥ १३॥

अथ बालप्रवेशं वक्तुमुपक्रमते—**नेपथ्ये इति**। अथ उपमातृस्थानीये द्वे तापस्यौ केसरिकिशोरकं कर्षन्तं कमपि बालकं निषेधतः—**मा क्खु इति**।

[1] जहिं तहिं ज्जेव अत्तणो पइदिं दंसेसि ?

**राजा**—( कर्णं दत्त्वा ) अभूमिरियमविनयस्य ! को नु खल्वेष निषिध्यते ? ( शब्दानुसारेणावलोक्य, सविस्मयम् ) अये ! को नु खल्वय-मनुबध्यमानस्तपस्विनीभ्यामबालसत्त्वो बालः ?

अर्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम् ।
प्रक्रीडितुं सिंहशिशुं बलात्कारेण कर्षति ॥१४॥

---

'मा खलु चापलं कुरु । कथम् ! गत एवात्मनः प्रकृतिम् ?' इति संस्कृतम् । चापलम्—चपलस्य कर्म चापलम् = अकृत्यम् मा कुरु = न विधेहीति निषेधः । अगणिते निषेधे कथमित्याश्चर्योक्तिः । आत्मनः = क्षत्रियस्य बालस्य वा प्रकृतिं = स्वभावम्, स्वभावचापलं कृतवानेवेत्यर्थः ।

कर्णं ददानस्तच्छृण्वन् राजा स्वगतमाह—**अभूमिरिति** । इयम् अविनयस्य अभूमिः, अत्र मारीचाश्रमे अविनयस्यावकाशो नास्तीति भावः । सकौतुकमाह—**को नु खल्वेष निषिद्ध्यत इति** । निषिद्ध्यते = अविनयाद्वार्यते । शब्दानुसा-रेणावलोक्य—यतः शब्द आयातस्तं देशं प्रति नेत्रं प्रेर्येत्यर्थः । सविस्मयमाह—**अये इति** । अये इति विस्मये । अनुबद्ध्यमानः = कृच्छ्रादनुगम्यमानः । अबाल-सत्त्वः—अबालम् = अस्तोकम्, प्रभूतमिति यावत् । सत्त्वं = पराक्रमो यस्य । "सत्त्वोऽस्त्री जन्तुषु क्लीबं व्यवसाये पराक्रमे" इति **केशवः** । ईदृशः को न्वयं बालः सिंहशिशुं कर्षतीति परेण संबन्धः ।

बालकस्याबालसत्त्वत्वमुपपादयति—**अर्धेति** । प्रक्रीडितुम् आमर्दक्लिष्टकेसरम् अर्धपीतस्तनं सिंहशिशुं बलात्कारेण मातुः कर्षति इत्यन्वयः ।

प्रक्रीडितुं = क्रीडां कर्तुम्, मनोविनोदनार्थमिति भावः । आमर्दक्लिष्टकेसरम्—आमर्दन = स्वकृताकर्षणवेगेन, मातुर्जिह्वया लेहनेन, ऊधसो हननेन वा क्लिष्टाः =

( ततः प्रविशति यथानिर्दिष्टकर्मा तपस्विनीभ्यां बालः । )

**बालः**—जिम्भ सिङ्घ; दन्ताइं दे गणइस्सं ।

जृम्भस्व सिंह; दन्तांस्ते गणयिष्ये ।

**प्रथमा**—अविणीद ! किं णो अपच्चणिव्विसेसाणि सत्ताणि वि-

---

विकीर्णाः केसराः = सटा यस्य तम् अर्धपीतस्तनम्—अर्धम् = असमग्रं यथा तथा पीतः स्तनो येन तादृशम्, अत एव स्वेच्छया अनायान्तं सिंहशिशुं = केसरिकिशोरं बलात्कारेण = प्रसह्य मातुः = तज्जनन्याः सिंह्याः सकाशात्, सिंहीकोपमप्यगणयित्वेत्यर्थः। कर्षति = अपनयति ।

एकेन शिशुना अन्यशिशुकर्षणमेव दुष्करम्, तत्रापि सिंहशिशुकर्षणं, तत्राप्यन्यस्मात, तत्रापि मातुः क्रोडात्, तत्रापि स्तनन्धयन्तमिति सर्वोत्कर्षो व्यज्यते । उदात्तं स्वभावोक्तिश्चालंकारौ । अनुष्टुप् वृत्तम् ।

तथाविधं बालकं दृष्ट्वा राजा सकौतुकं साश्चर्यं च वदति—'कोऽयमबालसत्त्वो बालः ? यः किल क्रीडया मनोविनोदनमात्रमेव कर्तुं सिंहीस्तनं पिबन्तम् आमर्दविशीर्णसटं केसरिकिशोरं तन्मातुः सकाशात् बलात्कारेण कर्षति । नूनं लोकातिगसत्त्वोऽयं लक्ष्यते । न सामान्यबालकेन सिंहीशिशुः समाक्रष्टुं शक्यते; नूनं विस्मयकरोऽयं बालः' इति भावः ॥ १४ ॥

**तत इति** । यथानिर्दिष्टकर्मा—यथानिर्दिष्टं = सिंहबालकाकर्षणरूपं कर्म यस्य सः । तपस्विनीभ्यामिति सहार्थे तृतीया । बालस्य क्रीडाप्रकारं दर्शयति—**जिम्भ इति** । 'जृम्भस्व सिंह; दन्तांस्ते गणयिष्ये' इति संस्कृतम् । जम्भस्व = विदारितास्यो भवेत्यर्थः । दन्तान् = दंष्ट्राः । यदा त्वया मुखं व्यादास्यते, तदा ते दन्तान् गणयिष्ये इति भावः । तपस्विन्योः प्रथमा वदति—**अविणीद इति** ।

प्पअरेसि ? हन्त ! वड्डइ दे संरम्भो ! ठाणे क्खु इसिजणेण सव्वद-मणो त्ति किदणामहेओ सि ।

अविनीत ! किं नोऽपत्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि ? हन्त ! वर्धते तव संरम्भः ! स्थाने खलु ऋषिजनेन सर्वदमन इति कृतनामधेयोऽसि ।

राजा—किं नु खलु बालेऽस्मिन्नौरस इव पुत्रे स्निह्यति मे मनः ? नूनमनपत्यता मां वत्सलयति !

---

'अविनीत ! किं नोऽपत्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि ? हन्त ! वर्धते तव संरम्भः ! स्थाने खलु ऋषिजनेन सर्वदमन इति कृतनामधेयोऽसि' इति संस्कृतम् । अविनीत = दुःशील ! नः = अस्माकम्, ऋषिजनानामित्यर्थः । अपत्यनिर्विशेषाणि = औरससन्तानसाम्येन पालितानीत्यर्थः । सत्त्वानि = प्राणिन इति सामान्योक्तिः । सिंहशिशुमिति भावः । विप्रकरोषि = बाधसे । हन्तेति खेदे । संरम्भः = उत्साहः । स्थाने खलु = युक्तमेव । सर्वदमन इति = सर्वेषां दमनकरणादन्वर्थंनामेत्यर्थः ।

अथ राजा "आत्मा प्रविश्य जायायां पुत्ररूपेण जायते" इति नियमानुसारेण स्वस्वरूपस्य पुत्रस्य दर्शनेन वात्सल्याकुलहृदयस्तद्धेतुमजानन् विमृशति—किं न्विति । किंन्विति वितर्कगर्भः प्रश्नः । खल्वित्यवधारणे । औरसे इव—उरसः = हृदयाज्जाते इव ।

अङ्गादङ्गाद्विनिष्क्रान्तो हृदयादभिजायसे ।
आत्मा वै पुत्रनामासि जीवस्व शरदां शतम् ॥

इत्युक्तेः । स्निह्यति = सस्नेहं भवति । अत्र हेतुमुत्प्रेक्षते—नूनमिति । अनपत्यता = सन्ततिशून्यता वत्सलयति = वात्सल्ययुक्तं करोति । अहमनपत्यो-ऽस्मीति हेतोरेव सुन्दराकारेऽस्मिन् बालके मम चेतः स्नेहेन समाकृष्टं भवति; नात्र कश्चिदन्यो हेतुरिति भावः ।

**द्वितीया**—एसा क्खु केसरिणी तुमं लङ्घेदि, जइ से पुत्तअं ण मुञ्चेसि ।

एषा खलु केसरिणी त्वां लङ्घयिष्यति, यदि तस्याः पुत्रकं न मुञ्चसि ।

**बालः**—(सस्मितम्) अह्महे ! बलिअं क्खु भीदो ह्मि ।

अहो ! बलीयः खलु भीतोऽस्मि । (इत्यधरं दर्शयति ।)

**राजा**—

महतस्तेजसो बीजं बालोऽयं प्रतिभाति मे ।
स्फुलिङ्गावस्थया वह्निरेधापेक्ष इव स्थितः ॥१५॥

---

अथ द्वितीया तापसी बालं निवर्तयितुं भीषयति—**एसा क्खु इति** । 'एषा खलु केसरिणी त्वां लङ्घयिष्यति, यदि तस्याः पुत्रकं न मुञ्चसि' इति संस्कृतम् । केसरिणी = सिंही लङ्घयिष्यति = अभिभविष्यति । अथ बालः सर्वदमनः बिभीषिकाश्रवणेन सस्मितं सोल्लुण्ठं च तामाह—**अह्महे इति** । 'अहो ! बलीयः खलु भीतोऽस्मि' इति संस्कृतम् । अह्महे आश्चर्ये । बलीयः = अत्यर्थम् । अत्र विपरीतलक्षणा । सिंहीतो न मनागपि बिभेमीत्यर्थः । अतो नैतं मुञ्चामीति भावः । **अधरं दर्शयतीति** । अनेन अनादरो द्योत्यते । रोषानुभावोऽयमिति केचित् ।

तद्दृष्ट्वा राजा सविस्मयं कथयति--**महत इति** । महतः तेजसः बीजम् अयं बालः स्फुलिङ्गावस्थया एधापेक्षः स्थितो वह्निरिव मे प्रतिभाति इत्यन्वयः ।

महतः = प्रबलस्य तेजसः = प्रतापस्य बीजं = निदानम्, यथा बीजम् अङ्कुरादिक्रमेण महातरुर्भवति तथा महातेजा भविष्यन्नित्यर्थः । अयं = पुरोवर्ती, सिंहशिशुमाकर्षन् बालः स्फुलिङ्गावस्थया—स्फुलिङ्गस्य = अग्निकणस्य अवस्था = रूपं तया । हेतौ तृतीया । एधापेक्षः—एधान् = काष्ठानि अपेक्षते स्वरूपलाभार्थं यस्तादृशः वह्निरिव = अग्निरिव मे = मम प्रतिभाति = प्रकाशते ।

**प्रथमा**—वच्छ ! एदं बालमिइन्दअं मुञ्च; अवरं दे कीलणअं दाइस्सं।

वत्स ! एनं बालमृगेन्द्रं मुञ्च, अपरं ते क्रीडनकं दास्यामि।

**बालः**—कहिं ? देहि णं।

कुत्र ? देह्येतत्। ( इति हस्तं प्रसारयति। )

**राजा**—कथम् ! चक्रवर्तिलक्षणमप्यनेन धार्यते ! तथा ह्यस्य—

---

महतस्तेजसो बीजमित्यस्य प्रतिबिम्बम् एधापेक्ष इति। उपमाऽनुप्रासौ। अनुष्टुप् वृत्तम्।

आत्मानं भीषयन्तीं तापसीमधरदर्शनेन अवजानन्तं सिंहशिशुक्रीडैकरभसं दुर्दमं बालमालोक्य तस्य नैसर्गिकीं तेजस्वितामवधारयन् राजा कथयति—'अयं बालको नूनं महातेजा भविष्यन् प्रतीयते। बाल्यान्महन्निगूढं तेजोऽस्मिन् वर्तते। स्फुलिङ्गावस्थया स्थितोऽग्निः स्वरूपलाभार्थं यथा काष्ठान्यपेक्षते, परतश्च ज्वलति; तथैवायमचिरादेव तेजसा जाज्वल्यमानो जगदभिभविष्यतीत्यहं मन्ये' इति भावः ॥ १५ ॥

पुनः प्रथमा तापसी वदति—**वच्छ इति**। 'वत्स ! एनं बालमृगेन्द्रं मुञ्च, अपरं ते क्रीडनकं दास्यामि' इति संस्कृतम्। बालमृगेन्द्रम्—बालो मृगेन्द्रः = सिंहः बालमृगेन्द्रः, त्वया पीड्यमानत्वादनुकम्पार्हं सिंहशिशुमित्यर्थः। मुञ्च = तदाकर्षणं परित्यज। क्रीडनकं = क्रीडासाधनम्। बालो याचते—**कहिं इति**। 'कुत्र ? देह्येतत्' इति संस्कृतम्। इति हस्तं प्रसारयति—अत्र हस्तप्रसारणं क्रीडनकादानार्थम्।

अथ बालकस्य प्रसारिते हस्ते राजचिह्नानि पश्यन् राजा साश्चर्यं कथयति—**कथमिति**। कथमिति विस्मये। चक्रवर्तिलक्षणमपि—चक्रे = राजमण्डले वर्तते

प्रलोभ्यवस्तुप्रणयप्रसारितो
विभाति जालग्रथिताङ्गुलिः करः ।
अलक्ष्यपत्रान्तरमिद्धरागया
नवोषसा भिन्नमिवैकपङ्कजम् ॥१६॥

---

प्रभुभावेन यस्तस्य लक्षणं = चिह्नम्, तदेव केवलं न, महापुरुषलक्षणमपीत्यपि-शब्दार्थः ।

बालकस्य चक्रवर्तिलक्षणान्युपपादयति—**तथा ह्यस्य—प्रलोभ्येति**। तथा हि प्रलोभ्यवस्तुप्रलयप्रसारितः जालग्रथिताङ्गुलिः अस्य करः इद्धरागया नवोषसा भिन्नम् अलक्ष्यपत्रान्तरम् एकपङ्कजमिव विभाति इत्यन्वयः ।

तथाहि = यस्मादस्य करे एवंविधानि वक्ष्यमाणलक्षणानि सन्ति, तस्माच्चक्रवर्तिलक्षणोऽयं बाल इत्यर्थः । प्रलोभ्यवस्तुप्रणयप्रसारितः—प्रलोभ्यस्य = लोभयोग्यस्य क्रीडनीयस्य वस्तुनः = पदार्थस्य प्रणयः = याच्ञा, तेन प्रसारितः = उन्मीलितः । इदं स्वभाववर्णनम्, तेन विना दर्शनानुपपत्तेः । जालग्रथिताङ्गुलिः = जालवत् ग्रथिताः = परस्परं निरन्तरसंश्लिष्टा अङ्गुलयो यस्य तादृशः । उक्तं च **सामुद्रके—**

अतिरक्तः करो यस्य ग्रथिताङ्गुलिको मृदुः ।
चापाङ्कुशाङ्कितः सोऽपि चक्रवर्ती भवेद् ध्रुवम् ॥ इति ।

अस्य = बालकस्य करः = पाणिः इद्धरागया—इद्धः = समृद्धः रागः = लौहित्यं यस्यास्तथाविधया । स्वयं समृद्धरागत्वात्परेभ्यस्तत्प्रदानसौकर्यम्, तेन चोषसो विकासनसामर्थ्यं ध्वन्यते । नवोषसा—नवया = अचिरप्रवृत्तया उषसा = प्रभातेन, उषःप्रारम्भेणेत्यर्थः । अत्रोषःशब्दः स्त्रीलिङ्गः । "अथोषस्युपवृत्तायाम्"

द्वितीया—सुव्वदे ! ण सक्को एसो वाआमेत्तेण विरमयिदुं । गच्छ तुमं; ममकेरए उडए मक्कण्डेअस्स इसिकुमारअस्स वण्णचित्तिदो मित्तिआमोरओ चिट्ठदि, तं से उवहर ।

सुव्रते ! न शक्य एष वाचामात्रेण विरमयितुम् । गच्छ त्वम्; मदीये उटजे मार्कण्डेयस्यर्षिकुमारस्य वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति, तमस्योपहर ।

---

इति श्रीभागवतेऽपि । भिन्नं = स्फुटितम्, न तु सम्यग् विकासितम् अलक्ष्यपत्रान्तरम्—अलक्ष्याणि = अविभाव्यानि पत्राणां = दलानाम् अन्तराणि = इतरेतरान्तरालानि, सन्धिविभागा यस्य तत् एकपङ्कजमिव—एकं = मुख्यम्, तस्यैव प्राथम्येन विकसितत्वात् । पङ्कजं = पद्ममिव विभाति = शोभते, रक्ततलोऽस्य पाणिरित्यर्थः ।

अत्र वर्णनीयस्य करस्यैकत्वादेकपङ्कजमित्युक्तम् । प्रसारितमित्यस्य प्रतिबिम्बं भिन्नमिति, जालग्रथितेत्यस्य प्रतिबिम्बमलक्ष्यपत्रमिति च दर्शितम् । अत्र काव्यलिङ्गमुपमा चालङ्कारौ । वंशस्थं वृत्तम् ।

क्रीडनकयाचनात्र तापस्याः पुरो हस्तं प्रसारयतो बालकस्य पाणौ रक्तिमातिशयं जालवद्ग्रथिताङ्गुलिकत्वं च दृष्ट्वा नूनमिमानि चक्रवर्तिलक्षणानीति निर्द्धारयन् राजा वदति—'ध्रुवं चक्रवर्तिलक्षणोऽयं बालः, यतोऽनेन तापस्युक्तक्रीडनकयाचनाय प्रसारित एको जालवत्परस्परसंश्लिष्टाङ्गुलिररुणतलोऽस्य करः उषःप्रारम्भे स्फुटितमविभाव्यमानदलसन्धिविभागं रक्तमेकपङ्कजमिव विशेषेण शोभते । तस्मादनेन चक्रवर्तिना राजनन्दनेन भाव्यम्'इति भावः ॥ १६॥

द्वितीया तापसी प्रथमां वदति—सुव्वदे इति। 'सुव्रते ! न शक्य एष वाचामात्रेण विरमयितुम् । गच्छ त्वम्; मदीये उटजे मार्कण्डेयस्यर्षिकुमारस्य वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति, तमस्योपहर' इति संस्कृतम् । सुव्रता इति

**प्रथमा**—तह ।

तथा । ( इति निष्क्रान्ता । )

**बालः**—इमिणा एव्व दाव कीलिस्सं ।

अनेनैव तावत्क्रीडिष्यामि । ( इति तापसीं विलोक्य हसति । )

**राजा**—स्पृहयामि खलु दुर्ललितायास्मै ।

आलक्ष्यदन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान्वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥१७॥

---

प्रथमाया नाम । वाचामात्रेण = केवलेन वचसा । अत्र वाचाशब्द आबन्तः । विरमयितुं = निवर्तयितुम् । वर्णचित्रितः = वर्णैः—रक्तपीतादिविविधवर्णैः चित्रितः = आलेपितः मृत्तिकामयूरः = मृत्तिकानिर्मितो मयूरः । तं = मयूरम् अस्य = बालकस्य । सम्बन्धसामान्ये षष्ठी । उपहर = प्रापय । प्रथमा वदति—**तह इति** । 'तथा' इति संस्कृतम् । बालो वदति—**इमिणा एव्व इति** । 'अनेनैव तावत् क्रीडिष्यामि' इति संस्कृतम् । अनेनैव = सिंहशिशुनैवेत्यर्थः । तावत् = यावन्मयूरो नानीयते तावदित्यर्थः । **हसतीति** । अनेन बालस्वभावो दर्शितः ।

तथाविधं तं दृष्ट्वा राजा स्वगतं वदति—**स्पृहयामीति** । दुर्ललिताय = दुर्दान्ताय अस्मै = बालाय । स्पृहयामि = वाञ्छामि । "स्पृहेरीप्सितः" इति सम्प्रदानत्वे चतुर्थी । दुर्दान्तेऽप्यस्मिन् बालके बाढमाकृष्टं मे चेत इति भावः ।

अथ तथाविधबालकावलोकनसमुद्बोधितानपत्यताखेदो राजा स्वगतमनुशोचति—**आलक्ष्येति** । धन्याः अनिमित्तहासैः आलक्ष्यदन्तमुकुलान् अव्यक्त-

**तापसी**—होदु; ण मं अअं गणेदि ! ( पार्श्वमवलोकयति । ) को

---

वर्णरमणीयवचःप्रवृत्तीन् अङ्काश्रयप्रणयिनः तनयान् वहन्तः तदङ्गरजसा मलिनी-भवन्ति इत्यन्वयः ।

धन्याः = सुकृतिनो जनाः अनिमित्तहासैः—अनिमित्तैः = निरभिसन्धिभिः हासैर्हेतुभूतैः आलक्ष्यदन्तमुकुलान्—आलक्ष्याः—ईषद्दृश्याः दन्तमुकुलाः = दन्ताङ्कुरा नवोद्गता दन्ता येषां तान् अव्यक्तवर्णरमणीयवचःप्रवृत्तीन्—अव्यक्ताः = अपरिस्फुटाः वर्णाः = अक्षराणि यत्र, अत एव रमणीया = श्राव्या वचःप्रवृत्तिः = वाक्प्रसरो वाक्योच्चारणं येषां तान् अङ्काश्रयप्रणयिनः—अङ्के = उत्सङ्गे य आश्रयः = स्थितिः तत्र प्रणयः = वाञ्छा अस्त्येषां तान् तनयान् = औरसान् पुत्रान् वहन्तः = क्रोडेकुर्वन्तः तदङ्गरजसा = तदङ्गपङ्काङ्गरागेण मलिनी-भवन्ति = धूलिधूसरा भवन्ति । अत एव ते धन्याः ।

अत्र एतद्बालेति प्रस्तुतविशेषमनुक्त्वाऽप्रस्तुतसामान्यवचनात् प्रस्तुतविशेष-प्रतीतेरप्रस्तुतप्रशंसा । यतोऽहमीदृशं तनयं वहंस्तदङ्गधूलिभिर्न धूसरो भवामि, ततोऽधन्योऽस्मीति ध्वन्यते । बालस्वभाववर्णनात् स्वभावोक्तिश्च । वसन्त-तिलका वृत्तम् ।

तं तथाविधं दुर्ललितं बालं दृष्ट्वा समुद्बुद्धानपत्यताखेदो राजा स्वगतमनु-शोचन्नाह—'ये खलु सुकृतिनः जन्मान्तरेषु कृतपुण्यपुञ्जाः, त एव ईदृशान् अकारणहासैरीषल्लक्ष्यनवदन्तकोरकान् वर्णोच्चारणस्यास्फुटतया श्रवणसुभगवाक्प्र-सरान् सर्वदा पितुः क्रोडमारोढुमभ्युद्यतान् औरसान् तनयान् क्रोडे वहन्ति, तदङ्गपङ्काङ्गरागेण च मलिनतां बिभ्राणा आत्मनो धन्यान् मन्यन्ते । अहं तु दुष्कृती अधन्य एवास्मि, यदीदृशानि न मे भागधेयानि' इति भावः ॥१७॥

तापसी वदति—होदु इति । 'भवतु; न मामयं गणयति ! कोऽत्र ऋषि-

एत्थ इसिकुमाराणं ? ( राजानमवलोक्य ) भद्दमुह ! एहि दाव, मोएहि इमिणा दुम्मोअहत्थग्गहेण डिम्भलीलाए बाहीअमाणं बालमिइन्दअं ।

भवतु; न मामयं गणयति ! कोऽत्र ऋषिकुमाराणाम् ? भद्रमुख ! एहि तावत्; मोचयानेन दुर्मोकहस्तग्रहेण डिम्भलीलया बाध्यमानं बालमृगेन्द्रम् ।

राजा—( उपगम्य, सस्मितम् ) अयि भो महर्षिपुत्र !

एवमाश्रमविरुद्धवृत्तिना
संयमः किमिति जन्मतस्त्वया ।
सत्त्वसंश्रयसुखोऽपि दूष्यते
कृष्णसर्पशिशुनेव चन्दनः ॥१८॥

---

कुमाराणाम् ? भद्रमुख ! एहि तावत् , मोचय अनेन दुर्मोकहस्तग्रहेण डिम्भलीलया बाध्यमानं बालमृगेन्द्रम्' इति संस्कृतम् । न मामयं गणयति—मामनादृत्य सिंहशिशुक्रीडां करोतीत्यर्थः । बालकं स्वयं वारयितुमशक्ता पार्श्वमवलोक्य ऋषिकुमारानन्वेषयन्ती वदति—क इति । स आगच्छत्विति संबन्धः । पुरतो राजानमवलोक्य वदति—भद्रमुखेति । भद्रमुख = सौम्य ! मान्यं प्रतीदं संबोधनम् । दुर्मोकहस्तग्रहेण—दुर्मोकः = मोचयितुमशक्यः हस्तेन ग्रहः = ग्रहणं, मुष्टिरित्यर्थः; यस्य, अर्थादस्माभिस्तेन । डिम्भलीलया = बालसुलभया क्रीडया बाध्यमानं = पीड्यमानं बालमृगेन्द्रं = सिंहशिशुं मोचयेति संबन्धः ।

राजा उपगम्य सस्मितं वदति—अयि भो महर्षिपुत्रेति । अयीति कोमलामन्त्रणे । महर्षिपुत्रेति सौम्यताभिप्रायेण संबोधनम् ।

एवमिति । एवम् आश्रमविरुद्धवृत्तिना त्वया जन्मतः सत्त्वसंश्रयसुखोऽपि संयमः कृष्णसर्पशिशुना चन्दन इव किमिति दूष्यते इत्यन्वयः ।

**तापसी**—भद्दमुह ! ण क्खु अअं इसिकुमारओ ।

एवम् = अनेन प्रकारेण, सिंहशिशुपीडनादिना आश्रमविरुद्धवृत्तिना—आश्रमस्य = तपोवनस्य विरुद्धा = विसंवादिनी वृत्तिः = व्यापारो यस्य तादृशेन त्वया जन्मतः = जन्मारभ्य, ब्राह्मणजातित्वात् जन्मनैव लब्ध इत्यर्थः। सत्त्वसंश्रयसुखः—सत्त्वानां = जन्तूनां संश्रयः, सुखयतीति सुखः, सत्त्वसंश्रयश्चासौ सुखश्चेति सः। यद्वा सत्त्वस्य = सत्त्वगुणस्य संश्रयेण सुखः = सुखकरः। ईदृशोऽपि संयमः = आत्मदमनम्, हिंसादिभ्य उपरम इत्यर्थः। कृष्णसर्पशिशुना = उद्दीप्तगरलजातीयकृष्णसर्पबालकेन चन्दन इव = तदाख्यो गन्धवृक्ष इव किमिति = कथं दूष्यते = कलुषीक्रियते ? न दूष्यतामित्यर्थः। तस्माद् बालमृगेन्द्रं मुञ्चेति भावः।

चन्दनोऽपि सत्त्वानां = प्राणिनां संश्रये छायादिना सुखकरो भवतीति संयमे चन्दने च योजयितुं सुशकम्। उपमया संयमस्य स्वभावतः सौम्यत्वम्, बालकस्य नैसर्गिकं तीक्ष्णत्वं च ध्वन्यते। उपमाऽलंकारः। स्वागता वृत्तम्।

तापस्या बालकहस्ताद् बालमृगेन्द्रं मोचयितुं प्रार्थितो राजा बालकमुपगम्य सस्मितमाह—'अयि भो महर्षिपुत्र ! ब्राह्मणस्य भवतः सौम्यत्वम्, अहिंसकत्वं च जन्मसिद्धो गुणो भवितुमर्हति। भवांस्तु तद्विसंवादिचेष्टितः पशून् पीडयति। सर्वप्राणिनां छायासौगन्ध्यशीतलत्वापादनादिना सुखकरः स्वभावतः सौम्योऽपि चन्दनतरुः कृष्णसर्पशिशुना समालिङ्गितः तदीयविषफूत्कारैर्दूषितः सन् यथा जनैः परित्यज्यते, एवं भवताऽपि जन्मतो लब्धः सत्त्वगुणाश्रयेण सुखकरः संयमः इत्थंविधपरपीडनादिभिर्दूष्यते चेत् वाच्यतामुपैष्यति। तस्मात् नेदमुचितं ब्राह्मणशिशोस्तव, मुञ्चैनं बालमृगेन्द्रम्' इति भावः॥ १८॥

तापसी वदति—**भद्दमुह** इति। 'भद्रमुख ! न खल्वयमृषिकुमारः' इति

भद्रमुख ! न खल्वयम् ऋषिकुमारः ।

**राजा**—आकारसदृशं चेष्टितमेवास्य कथयति । स्थानप्रत्ययात्तु वयमेवंतर्किणः । ( यथाऽभ्यर्थितमनुतिष्ठन्बालस्पर्शमुपलभ्य, आत्मगतम् )

अनेन कस्यापि कुलाङ्कुरेण
स्पृष्टस्य गात्रेषु सुखं ममैवम् ।
कां निर्वृतिं चेतसि तस्य कुर्या-
द्यस्यायमङ्गात्कृतिनः प्ररूढः ॥१९॥

---

संस्कृतम् । नायमृषिकुमारस्तस्मान्न ब्राह्मणबालक इत्यर्थः । राजा वदति—**आकारसदृशमिति** । आकारसदृशम्—आकारस्य = आकृतेः सदृशम् = अनुरूपं चेष्टितमेव = कर्मैव कथयति = प्रत्याययति । आकारव्यापाराभ्यां नायमृषिकुमार इत्यवगम्यत एवेत्यर्थः । कथं तर्हि अन्यथा शङ्कितमित्याह—**स्थानप्रत्ययादिति** । स्थाने = अत्राश्रमे यः प्रत्ययः = विश्वासस्तस्मात् । ऋषिजुष्टमिदं स्थानमिति विश्वासादित्यर्थः । एवन्तर्किणः—एवम् = ईदृशं महर्षिपुत्रत्वं तर्कयन्ति = अनुमिन्वन्ति तथाविधा वयं जाताः । अत्र ऋषय एव निवसन्तीति तेषामेवान्यतमस्यायं पुत्र इति संभावितमस्माभिरित्यर्थः । "अस्मदो द्वयोश्च" इति बहुवचनम् । यथाऽभ्यर्थितमनुतिष्ठन्—तापसीप्रार्थनया बालमृगेन्द्रं मोचयन्नित्यर्थः ।

अथ "न वाससां न रामाणां नापां स्पर्शस्तथाविधः" इति **महाभारतोक्त्य**नुसारेण बालकस्पर्शेन कमप्यनिर्वचनीयं मोदमनुभवन् राजा आत्मगतं विमृशति—**अनेनेति** । कस्यापि कुलाङ्कुरेण अनेन गात्रेषु स्पृष्टस्य मम एवं सुखम् । अय कृतिनो यस्याङ्गात् प्ररूढः तस्य चेतसि कां निर्वृतिं कुर्यात् इत्यन्वयः ।

तापसी—(उभौ निर्वर्ण्य) अच्छरिअं ! अच्छरिअं !

---

कस्यापि = अविज्ञातस्य पुरुषस्य कुलाङ्कुरेण—कुलस्य = वंशस्य अङ्कुरेण = प्ररोहेण, अल्पदिनजातत्वकोमलत्वमनोहरत्वादिना साम्यम् । एवमुक्त्या स्वसंबन्धित्वाभावः सूच्यते । अनेन = बालकेन गात्रेषु = केषुचित् द्वित्रेष्ववयवेषु, सर्वस्मिन्कलेवरे वा । "गात्रमङ्गे कलेवरे" इति विश्वः । गात्रेष्विति बहुवचनेन सुखस्य सर्वाङ्गव्याप्तिः सूच्यते । स्पृष्टस्य = कृतस्पर्शस्य, न त्वालिङ्गितस्य मम एवम् = अनुभवैकवेद्यम्, वाचा वर्णयितुमशक्यम् सुखम् = आह्लादः भवति । अयं = बालः कृतिनः = कृतकृत्यस्य धन्यस्य यस्य = पुरुषस्य अङ्गात् = देहात् प्ररूढः = वृद्धिं प्राप्तः तस्य = पुरुषस्य चेतसि = चित्ते कां निर्वृतिं = किं प्रभूतं सुखं कुर्यात् ! इति न ज्ञायते इति भावः ।

अत्र अर्थापत्तिः, रूपकं चालंकारौ । पुत्रप्रीतिर्भावः । इन्द्रवज्रोपेन्द्रवज्रयोः प्रथमोपजातिः ।

तापसीप्रार्थनया बालकहस्तग्रहात् बालमृगेन्द्रं मोचयन् बालस्पर्शं चानुभवन् राजा स्वगतं विमृशन्नाह—'कोऽयं कस्य कुमार इत्यविज्ञातोऽपि बालकोऽयं क्षणिकेन स्पर्शेन मम सर्वस्मिन् कलेवरे कामप्यनिर्वचनीयामाह्लादलहरीमाविर्भावयति । इदमित्थं नाम बालकस्पर्शसौख्यम् । अविज्ञातसंबन्धस्यापि बालकस्य स्पर्शे यदीदृशं सौख्यम्, तर्हि यस्य धन्यस्य अङ्गादसौ वृद्धिं प्राप्तस्तस्य चेतसि कीदृशमाह्लादं जनयेदिति नानुमातुं शक्नोमि । अनुत्पन्नौरसपुत्रोऽहं न जानामि कीदृशं तदालिङ्गने सुखं भवति ! सर्वथा धन्याः खलु पुत्रवन्तः' इति भावः ॥ १९ ॥

तापसी राजानं बालकं चेत्युभौ निर्वर्ण्य वदति--अच्छरिअं इति ।

आश्चर्यम् ! आश्चर्यम् !

**राजा**—आर्ये ! किमिव ?

**तापसी**—इमस्स बालअस्स दे वि संवादिणी आकिदी त्ति विह्माविदह्मि, अपरिइदस्स वि दे अप्पडिलोभो संवुत्तो त्ति ।

अस्य बालस्य तेऽपि संवादिन्याकृतिरिति विस्मापिताऽस्मि, अपरिचितस्यापि तेऽप्रतिलोभः संवृत्त इति ।

**राजा**—( बालकमुपलालयन् ) न चेन्मुनिकुमारोऽयम्, अथ कोऽस्य व्यपदेशः ?

**तापसी**—पुरुवंसो ।

पुरुवंशः ।

---

'आश्चर्यम् ! आश्चर्यम् !' इति संस्कृतम् । आश्चर्यकारणं जिज्ञासू राजा पृच्छति—**आर्ये ! किमिवेति** । किमाश्चर्यजनकं संजातमित्यर्थः । तापसी आश्चर्यकारणं वदति—**इमस्स इति** । 'अस्य बालस्य तेऽपि संवादिनी आकृतिरिति विस्मापिताऽस्मि, अपरिचितस्यापि ते अप्रतिलोमः संवृत्त इति' इति संस्कृतम् । संवादिनी—संवदति = संगच्छते या तादृशी, सदृशीत्यर्थः । अपरिचितस्यापि = अदृष्टपूर्वस्य, अत एव असंस्तुतस्यापि ते = तव अप्रतिलोमः = अविरुद्धः, अनुकूल इत्यर्थः । संवृत्तः = जातः । इति हेतोर्विस्मापिताऽस्मीति संबन्धः । अथ राजा बालकमुपलालयन् इच्छानुरूपं प्रवर्तमानं बालकं प्रेरयन् तापसीं पृच्छति—**न चेदिति** । यद्यसौ न मुनिकुमार इत्यर्थः । अथेति प्रश्ने । अस्य = बालकस्य, व्यपदेशः कः = कुलं किमित्यर्थः । तापसी समुत्तरयति—**पुरुवंसो इति** । 'पुरुवंशः' इति संस्कृतम् । पुरुवंशोत्पन्नोऽयमित्यर्थः ।

राजा—( आत्मगतम् ) कथमेकान्वयो मम ! अतः खलु मदनुकारिणमेनमत्रभवती मन्यते । अस्त्येतत्पौरवाणामन्त्यं कुलव्रतम् ।

भवनेषु [1]रसाधिकेषु पूर्वं
क्षितिरक्षार्थमुशन्ति ये निवासम् ।
नियतैकपतिव्रतानि[2] पश्चा-
त्तरुमूलानि गृहीभवन्ति तेषाम् ॥२०॥

---

तापस्या उत्तरं श्रुत्वा राजा स्वगतं विमृशति—कथमिति । कथमित्याश्चर्ये । ममेति संबन्धसामान्ये षष्ठी । एकान्वयः—एकः अन्वयः = वंशो यस्य सः । मदनुकारिणं = मामनुकरोति, मया सह संवदति रूपेण यस्तादृशम् । अत्रभवती = तापसी मन्यते = संभावयति । पुरुवंशस्य बालस्य आश्रमसद्भावसंगतिं वितर्कयति—अस्तीति । एतत् = वक्ष्यमाणम् पौरवाणां = पुरुवंशोत्पन्नानां राज्ञाम् अन्त्यं = वानप्रस्थाश्रमविषयम् । क्षत्रियाणां वानप्रस्थाश्रम एवान्त्याश्रमः, तेषां संन्यासानधिकारात् । तथा च स्मृतिः—

मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम् ।
बाहुजातोरुजातानामयं धर्मो न विद्यते ॥ इति ।

कुलव्रतं = कुलाचारः ।

तदेव स्फुटयति—भवनेष्विति । पूर्वं ये क्षितिरक्षार्थं रसाधिकेषु भवनेषु निवासमुशन्ति, पश्चात् तेषां नियतैकपतिव्रतानि तरुमूलानि गृहीभवन्ति इत्यन्वयः ।

पूर्वं = वार्धकादर्वाचीने वयसि ये = पुरुवंशोद्भवा राजानः क्षितिरक्षार्थम्—क्षितेः = पृथिव्याः रक्षार्थं = रक्षणाय, न त्विन्द्रियसेवार्थम् । अनेन भोगस्यानु-

---

१. सुधासितेषु । २ यतिव्रतानि ।

षड्गिकत्वं सूच्यते। रसाधिकेषु—रसः = रागः, शृङ्गारादिश्च, मधुरादिः, आस्वादश्च, एते अधिकाः येषु; एतैर्वा अधिकानि = उत्तमानि तेषु।

रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः।
शृङ्गारादौ द्रवे वीर्ये देहधात्वम्बुपारदे॥

इति विश्वः। भवनेषु = गृहेषु निवासं = स्थितिम् उशन्ति = वाञ्छन्ति। केवलं पृथ्वीरक्षणायैव तादृशभवनेषु स्थितिवाञ्छा, न तत्त्वतः स्थितिरिति भावः। पश्चात् = अन्त्ये वयसि तेषां = पुरुवंशीयानां राज्ञां नियतैकपतिव्रतानि— नियता = नियमयुक्ता, सर्वदा भर्तृशुश्रूषणतत्परा एका पतिव्रता = धर्मपत्नी येषु तानि। एकेत्यनेन परिजनान्तरव्यवच्छेदः कथ्यते। वनं विविक्षू राजा पुत्रेषु भार्यां न्यस्य सहैव वा गच्छेदिति पक्षयोर्मध्ये द्वितीयः पक्षोऽत्र वर्णितः। तथा च रघुवंशे—"वार्धके मुनिवृत्तीनाम्" इति। तरुमूलानि = वृक्षतलानि गृहीभवन्ति = गृहाणि संपद्यन्ते।

सर्वदा धर्मोत्तराः पौरवा धर्मरक्षार्थमेव यौवने गृहिणो भवन्ति, वार्धके च मुनिव्रतास्तरुतलं भजन्ते इत्यर्थः। रूपकालंकारः। मालभारिणी वृत्तम्।

पुरुवंशोऽयं बाल इति तापस्या उत्तरं श्रुत्वा तस्य आश्रमसद्भावसंगतिं वितर्कयन् राजा वदति—'इदं ह्यस्माकं पौरवाणां कुलव्रतमेव। ये हि राजानः पूर्वं वार्धकादर्वाचीने वयसि केवलं पृथ्वीरक्षणायैव, न भोगस्पृहया, नानाविधरूपरसगन्धादिसर्वेन्द्रियाह्लादकविषयसमृद्धिशालिषु भव्येषु प्रासादेषु निवासं कुर्वन्ति त एव चरमे वयसि योग्ये पुत्रे प्रजारक्षणभारं विन्यस्य पतिव्रतां स्वशुश्रूषणतत्परामेकां प्रधानमहिषीमेव समादाय निरस्तनिखिलजनपरिजनाः समुत्सृष्टराजचिह्ना वानप्रस्थाश्रमं विधाय तपोवनेषु निवसन्ति। तेषामेवान्यतमस्य

( प्रकाशम् ) [1]न पुनरात्मगत्या मानुषाणामेष विषयः ।

**तापसी**—जह भद्दमुहो भणादि अच्छरासंबन्धेण इमस्स जणणी एत्थ देवगुरुणो तवोवणे पसूदा ।

यथा भद्रमुखो भणति अप्सरःसंबन्धेनास्य जनन्यत्र देवगुरोस्तपोवने प्रसूता ।

**राजा**—( अपवार्य ) हन्त ! द्वितीयमिदमाशाजननम् ! (प्रकाशम्) अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी ?

---

कस्याप्ययं बालः स्यादिति तपोवनेऽपि पुरुवंशीयस्यास्य सद्भावो युज्यते' इति भावः ॥ २० ॥

इत्थं मनसि विमृश्य राजा तापसीं प्रकाशं पृच्छति—**न पुनरिति** । एषः = देशः, मारीचाश्रम इत्यर्थः । आत्मगत्या = स्वभावगत्या, मानुषगत्या, स्वेच्छया वा । मानुषाणां न विषयः = मनुष्याणामभूमिः । अत्र मानुषा देवयोनिभिर्दैवैर्वा प्रेरिता आगन्तुं शक्नुयुः, नहि स्वेच्छया; तत्कथमिह पौर्वाः प्राप्ता इति पृच्छामीति भावः । तापसी उत्तरयति—**जह इति** । 'यथा भद्रमुखो भणति, अप्सरः-संबन्धेनास्य जनन्यत्र देवगुरोस्तपोवने प्रसूता' इति संस्कृतम् । भद्रमुखः = सौम्यो भवान् यथा भणति तत्तथैव; सत्यमेव मानुषा अत्रागन्तुमशक्ता इत्यर्थः । अप्सरःसंबन्धेन—अप्सरोभिः = देवाङ्गनाभिर्यः संबन्धस्तेन । अस्य = बालकस्य । देवगुरोः—देवानां गुरोः = कश्यपस्य ।

पुनरपि राजा विमृशति—**हन्तेति** । हन्तेति हर्षे । द्वितीयं = प्रथमं भुज-स्पन्दनं ततोऽन्यत् । अत्र द्वितीयत्वं पुरुवंश्यत्वापेक्षया । इदम् = अप्सरः-संबन्धकथनम् । शकुन्तलाया मेनकापत्यत्वादिति भावः । आशाजननम् = अभिलाष-पूर्तिहेतु । प्रकाशं पृच्छति--**अथेति** । अथेति प्रश्ने । सा तत्रभवती = अस्य

---

१ कथं पुनः ।

**तापसी**—को तस्स धम्मदारपरिच्चाइणो णाम संकीत्तिदुं चिन्तिस्सदि !

कस्तस्य धर्मदारपरित्यागिनो नाम संकीर्तयितुं चिन्तयिष्यति !

**राजा**—( स्वगतम् ) इयं खलु कथा मामेव लक्ष्यीकरोति । यदि तावदस्य शिशोर्मातरं नामतः पृच्छामि ! अथवाऽनार्यः परदारव्यवहारः ।

( प्रविश्य मृण्मयूरहस्ता )

**तापसी**—सव्वदमण ! सउन्दलावण्णं पेक्ख ।

---

बालकस्य जननी किमाख्यस्य = किंनामधेयस्य, यस्य सा पत्नी तस्य का आख्येत्यर्थः । तापस्युत्तरयति--**को तस्स** इति । 'कस्तस्य धर्मदारपरित्यागिनो नाम संकीर्तयितुं चिन्तयिष्यति' इति संस्कृतम् । धर्मदारपरित्यागिनः = अकारणं धर्मपत्नीं परित्यक्तवतः संकीर्तयितुं चिन्तयिष्यति = उच्चारयितुं हृदि विचारयिष्यति । संकीर्तनार्थं हृदि चिन्तनेऽपि दोषः, संकीर्तने पुनः किं वक्तव्यम् ? तस्मात् पापिनस्तस्य नाम न कथयामीति भावः ।

तापसीवचनं श्रुत्वा राजा स्वगतं चिन्तयन्नाह--**इयमिति** । इयं कथा = दारत्यागकथा मामेव लक्ष्यीकरोति = मामेव विषयभूतं करोति । यदि = यद्येषा पितुर्नाम न कथयति तर्हीत्यर्थः । नामतः--तृतीयार्थे तसिः, नाम्नेत्यर्थः । अथवा = मातुर्नाम न पृच्छामीत्यर्थः । कुत इत्याह—**अनार्य इति** । परदारव्यवहारः = परदारसंबन्धिनी आलोचना कथा वा । अनार्यः = आर्यजनविगर्हितः । अस्त्येतत्पौरवाणामित्यादिना परदारव्यवहार इत्यन्तेन विबोधनामकमङ्गमुपक्षिप्तम् । तल्लक्षणं तु—"कार्यस्यान्वेषणं युक्त्या विबोधः परिकीर्तितः" इति ।

अथ मृण्मयूरहस्ता तापसी प्रविश्य बालकं वदति—**सव्वदमण इति** ।

सर्वदमन ! शकुन्तलावण्यं प्रेक्षस्व ।

**बालः**—( सदृष्टिक्षेपम् ) कहिं वा मे अज्जु ?

कुत्र वा मम माता ?

**उभे**—णामसारिस्सेण वञ्चिदो माउवच्छलो !

नामसादृश्येन वञ्चितो मातृवत्सलः !

**द्वितीया**—वच्छ ! इमस्स मित्तिआमोरअस्स रम्मत्तणं देक्ख त्ति भणिदो सि ।

वत्स ! अस्य मृत्तिकामयूरस्य रम्यत्वं पश्येति भणितोऽसि ।

**राजा**—(आत्मगतम्) किं वा शकुन्तलेत्यस्य मातुराख्या ! सन्ति

---

'सर्वदमन ! शकुन्तलावण्यं प्रेक्षस्व' इति संस्कृतम्। शकुन्तस्य = मृत्तिकामयूरस्य लावण्यं = सौन्दर्यं पश्येत्यर्थः । बालकः सदृष्टिक्षेपं 'सउन्दलावण्णं' इत्यस्य शकुन्तलावर्णमित्यर्थं कल्पयित्वा पृच्छति—**कहिं** इति । 'कुत्र वा मम माता' इति संस्कृतम् । अज्जुशब्दस्य मातेत्यर्थः । "अज्ज अज्जु च मातरि" इति देशी कोषः। बालकोक्तिं श्रुत्वा तापस्यौ वदतः—**णामसारिस्सेण** इति । 'नामसादृश्येन वञ्चितो मातृवत्सलः' इति संस्कृतम् । नामसादृश्येन—'सउन्दलावण्णं' इत्यत्र शकुन्तलेति मातृनामाक्षराण्याकर्ण्य तत्सादृश्येन वञ्चित इत्यर्थः । द्वितीया तापसी बालकस्य अन्यथा प्रतिपत्तिं व्यपोहति—**वच्छेति** । 'वत्स ! अस्य मृत्तिकामयूरस्य रम्यत्वं पश्येति भणितोऽसि' इति संस्कृतम् । 'सउन्दलावण्णं पेक्ख' इति वाक्येन शकुन्तस्य = मृत्तिकामयूरस्य लावण्यं = रम्यत्वं पश्य इति मया भणितोऽसि, न तु शकुन्तलावर्णमित्यर्थः ।

राजा बालकस्य तापस्याश्च व्यवहारात् अवगतमर्थमात्मगतं चिन्तयति—**किं वेति** । अस्य मातुः शकुन्तलेत्याख्या = नाम अस्ति किम् ? अस्य माता

पुनर्नामधेयसादृश्यानि। अपि नाम मृगतृष्णिकेव नाममात्रप्रस्तावो मे विषादाय कल्पते!

**बालः**—अज्जुए! रोअदि मे एसो भद्दमोरओ।

मातः! रोचते म एष भद्रमयूरः। (इति क्रीडनकमादत्ते।)

**प्रथमा**—(विलोक्य सोद्वेगम्) अह्महे! रक्खाकरण्डअं से मणि-बन्धे ण दीसदि!

अहो! रक्षाकरण्डकमस्य मणिबन्धे न दृश्यते!

---

शकुन्तला, तदयं मत्पुत्र एवेति भावः। इदं तृतीयमाशाजननं विधूय पुनरपाय-माशङ्कते—**सन्तीति**। नामधेयसादृश्यानि—नामधेयेषु = नामसु सादृश्यानि = तुल्यताः सन्ति। अन्यस्या अपि शकुन्तलेत्येवं नाम संभवतीत्यर्थः। **अपि नामेति**। इदं संभावनायाम्, ईश्वरप्रार्थनायां वा। मृगतृष्णिकेव = सूर्यमरीचिपूदकबुद्धिरिव। नाममात्रप्रस्तावः—नाममात्रस्य = केवलस्य शकुन्तलानाम्नः प्रस्तावः = अवतारणा। मे = मम विषादाय = विषादं जनयितुं कल्पते = शक्नोति। मृगतृष्णिका यथा जलसादृश्यं प्रदर्श्य जलाभावेन विषादाय कल्पते, तथा शकुन्तलेति नाममात्रावतारणा अधुना आशां जनयित्वा विषादं घटयितुं प्रवृत्तेत्यर्थः। अत्र काक्वा वितर्को व्यज्यते।

बालको वदति—**अज्जुए इति**। मातः! 'रोचते मे एष भद्रमयूरः' इति संस्कृतम्। भद्रमयूरः = सुन्दरोऽयं मयूरः। मे = मह्यम्। प्रीतोऽहमनेनेत्यर्थः। "रुच्यर्थानाम्" इति संप्रदानत्वाच्चतुर्थी।

प्रथमा तापसी विलोक्य ससंभ्रमं वदति—**अह्महे इति**। 'अहो! रक्षा-करण्डकमस्य मणिबन्धे न दृश्यते' इति संस्कृतम्। अह्महे इति खेदे। रक्षा-करण्डकं = रक्षावीटिका, "करण्डो मधुकोषे स्याद्वीटिका खड्गकोषयोः" इत्यमरः।

**राजा**—अलमलमावेगेन। नन्विदमस्य सिंहशावविमर्दात्परिभ्रष्टम्। (इत्यादातुमिच्छति।)

**उभे**—मा क्खु एदं अवलम्बिअ। कहं? गहीदं णेण!
मा खल्विदमवलम्ब्य। कथम्? गृहीतमनेन! (इति विस्मयादुरोनिहितहस्ते परस्परमवलोकयतः।)

**राजा**—किमर्थं प्रतिषिद्धाः स्मः?

**प्रथमा**—सुणादु महाराओ, एसा अवराजिदा णाम ओसही

---

अस्य = बालकस्य मणिबन्धे = प्रकोष्ठे न दृश्यते। तददर्शनात्तापस्या उद्वेगः। राजा वदति—**अलमलमिति**। अलमलमिति निषेधे। आवेगो न कर्तव्य इत्यर्थः। अङ्गुल्या निर्दिशन्नाह—**नन्विदमिति**। इदं = रक्षाकरण्डकम्। सिंह॰ शावविमर्दात्—सिंहशावेन = सिंहशिशुना यो विमर्दः = संघर्षस्तस्मात् परिभ्रष्टं = च्युतं सत् भूमौ पतितम्। आदातुमिच्छति = ग्रहीतुमुपक्रमते।

तापस्यौ राजानं निषेधतः—**मा क्खु इति**। 'मा खल्विदमवलम्ब्य। कथम्? गृहीतमनेन!' इति संस्कृतम्। मा खल्विति निषेधे। अवलम्ब्य = आदाय। "अलंखल्वोः" इति क्त्वा। म्रियसे इति वाक्यशेषः। असमासे एव वाक्ये राजा तदादत्ते, न तु म्रियते; इति विस्मयात् ते आहतुः कथमिति। कथमित्याश्चर्ये। उरोनिहितहस्ते—उरसि = वक्षसि निहितः = स्थापितः हस्तो याभ्यां तथाविधे। राजा एवायमिति प्रत्यये जाते विस्मयाधिक्यात् वचसि निरुद्धे तापस्यौ परस्परावलोकनमात्रं कुरुतः, न च किंचिद्वदतः।

राजा पृच्छति—**किमर्थमिति**। रक्षाकरण्डकमाददाना वयं भवतीभ्यां कस्मा॰ द्धेतोर्निषिद्ध्यामहे इत्यर्थः। प्रथमा तापसी वदति—**सुणादु इति**। 'श्रृणोतु महाराजः, एषा अपराजिता नामौषधिरस्य जातकर्मसमये भगवता मारीचेन दत्ता।

इमस्स जातकम्मसमए भअवदा मारीएण दिण्णा । एदं किल मादापिदरो अप्पाणं च वज्जिअ अवरो भूमिपडिदं ण गेण्हादि ।

शृणोतु महाराजः, एषाऽपराजिता नामौषधिरस्य जातकर्मसमये भगवता मारीचेन दत्ता । एतां किल मातापितरावात्मानं च वर्जयित्वाऽपरो भूमिपतितां न गृह्णाति ।

**राजा**—अथ गृह्णाति ?

**प्रथमा**—तदो तं सप्पो भविअ दंसइ ।

ततस्तं सर्पो भूत्वा दशति ।

**राजा**—भवतीभ्यां कदाचिदस्याः प्रत्यक्षीकृता विक्रिया ?

**उभे**—अणेअसो ।

अनेकशः ।

---

एतां किल मातापितरौ आत्मानं च वर्जयित्वा अपरो भूमिपतितां न गृह्णाति' इति संस्कृतम् । ओषध्या विकाराभावादयमस्य बालकस्य पितेति निश्चिन्वाना तापसी आह महाराज इति । एताम् = अपराजितां नामौषधिम् । भूमिपतितेयं पितृभ्यामात्मना च ग्रहीतुं शक्यते, नेतरेणेत्यर्थः । राजा पृच्छति—**अथ गृह्णातीति** । अत्र काका यद्यन्यः कश्चिद् गृह्णाति, तर्हि किं स्यादित्यर्थः । प्रथमा तापसी उत्तरयति—**तदो इति** । 'ततस्तं सर्पो भूत्वा दशति' इति संस्कृतम् । एषौषधिरित्यनुषज्यते । एषौषधिर्भूमिपतिता यद्यन्येन गृह्यते तर्हि सैव सर्पो भूत्वा तं दशतीत्यर्थः । राजा पुनर्निर्णेतुं पृच्छति—**भवतीभ्यामिति** । अस्याः = ओषधेः विक्रिया = विकारः, सर्पीभवनम्; कदाचित्प्रत्यक्षीकृता = साक्षाद् दृष्टा किम् ? उभे वदतः—**अणेअसो इति** । 'अनेकशः' इति संस्कृतम् । अनेकशः = बहुषु बहुषु कालेषु विक्रिया प्रत्यक्षीकृतेत्यर्थः ।

**राजा**—( सहर्षम्, आत्मगतम् ) कथमिव संपूर्णमपि मे मनोरथं नाभिनन्दामि ? ( इति बालं परिष्वजते । )

**द्वितीया**—सुव्वदे ! एहि; इमं वुत्तन्तं णिअमव्वावुडाए सउन्दलाए णिवेदेह्म ।

सुव्रते ! एहि; इमं वृत्तान्तं नियमव्यापृतायै शकुन्तलायै निवेदयावः ।

( इति निष्क्रान्ते । )

**बालः**—मुञ्च मं, जाव अज्जुएसआसं गमिस्सं ।

मुञ्च माम् , यावन्मातुः सकाशं गमिष्यामि ।

**राजा**—पुत्रक ! मया सहैव मातरमभिनन्दिष्यसि ।

---

अथ ओषधिविकाराभावात् अयम् औरस एवेति निश्चिन्वानो राजा सहर्षमात्मगतमाह—**कथमिवेति** । संपूर्णमपि मे मनोरथम् = अनुरूपपुत्रलाभरूपम् । कथमिव = किमिति । नाभिनन्दामि = न संभावयामि । अनुचितमेतत् ! तदेष अभिनन्दामि, इति बालं परिष्वजते = आलिङ्गति । बालकपरिष्वङ्गेण आनन्दमनुभवतीत्यर्थः ।

द्वितीया वदति—**सुव्वदे इति** । 'सुव्रते ! एहि; इमं वृत्तान्तं नियमव्यापृतायै शकुन्तलायै निवेदयावः' इति संस्कृतम् । नियमव्यापृतायै—नियमे = तपश्चरणे व्यापृतायै = नियुक्तायै । "कर्मणा यमभिप्रैति" इति संप्रदानत्वाच्चतुर्थी । तापस्यौ निष्क्रान्ते । अत्र राज्ञे बालवृत्तान्तस्य शकुन्तलायै राजवृत्तान्तस्य च बोधनं तापस्योः प्रवेशनस्य फलं स्पष्टम् ।

राज्ञा परिष्वक्तो बालो राजानं वदति—**मुञ्च मं इति** । 'मुञ्च माम्, यावन्मातुः सकाशं गमिष्यामि' इति संस्कृतम् । यावदित्यवधारणे । तमात्मनः पुत्रं मन्वानो राजा वदति—**पुत्रकेति** । अनुकम्पायां कः । मया सहैव मातुः

**बालः**—मम क्खु तादो दुस्सन्दो, ण तुमं।

मम खलु तातो दुष्यन्तः, न त्वम्।

**राजा**—( सस्मितम् ) एवं विवाद एव प्रत्याययति !

( ततः प्रविशत्येकवेणीधरा शकुन्तला। )

**शकुन्तला**—विआरकाले वि पकिदित्थं सव्वदमणस्स ओसहिं सुणिअ ण मे आसा आसि अत्तणो भाअहेएसु। अहवा जह साणुमदीए आचक्खिदं तह संभावीअदि एदं !

विकारकालेऽपि प्रकृतिस्थां सर्वदमनस्यौषधिं श्रुत्वा न म आशाऽऽसीदात्मनो भागधेयेषु। अथवा यथा सानुमत्याऽऽख्यातं तथा संभाव्यत एतत् !

---

सकाशं गमिष्यसि, न त्वेकल इत्यर्थः। राज्ञा पुत्रक इत्यामन्त्रितो बालस्तं पुनर्वदति—**ममेति**। 'मम खलु तातो दुष्यन्तः, न त्वम्' इति संस्कृतम्। दुष्यन्त॰पुत्रोऽहम्, स एव मां पुत्रक इत्यामन्त्रयितुं शक्नोति, न त्वमित्यर्थः। बालकस्य वचनेन प्रहृष्टो राजा सस्मितमाह—**एवमिति**। विवादः—विरुद्धो वादः विवादः, पुत्रक इत्यामन्त्रणस्य विरुद्धः प्रतिवाद इत्यर्थः। प्रत्याययति = प्रत्ययं जनयति। 'मम खलु तातो दुष्यन्तः' इति स्पष्टोक्तेः प्रत्यय इत्यर्थः। अनेन एतावत्पर्यन्तं प्रत्ययो नोत्पन्न इति गम्यते।

अथ शकुन्तलायाः प्रवेशमाह—**ततः प्रविशति एकवेणीधरेति**। एकवेणीधरा = एकस्या वेण्या धरा, एकामेव वेणीं धारयन्तीत्यर्थः। प्रोषितपतिकाया एकवेणीधारणमाचारः। विरहचिह्नमिदम्। अथ सानुमत्या कथितेन कान्तवृत्तान्तेन किंचिदाश्वस्ता पुनस्तापसीभ्यां निवेदितं वृत्तान्तं निशम्य 'अपायदर्शी स्नेहः' इति नीत्या शकुन्तला चिन्तयति—**विआरकाले इति**। 'विकारकालेऽपि प्रकृतिस्थां सर्वदमनस्यौषधिं स्मृत्वा न मे आशाऽऽसीदात्मनो भागधेयेषु।

राजा—( शकुन्तलां विलोक्य ) अये ! सेयमत्रभवती शकुन्तला ! यैषा—

वसने परिधूसरे वसाना
नियमक्षाममुखी धृतैकवेणिः ।
अतिनिष्करुणस्य शुद्धशीला
मम दीर्घं विरहव्रतं बिभर्ति ॥ २१ ॥

---

अथवा यथा सानुमत्या आख्यातं तथा संभाव्यत एतत्' इति संस्कृतम् । विकारकालेऽपि = विकारयोग्यकालेऽपि । सर्वदमनस्यौषधिं = रक्षाकरण्डकवर्तिनीमपराजिताम् । प्रकृतिस्थाम् = अविकाराम् । श्रुत्वाऽपि = तच्छ्रवणेन भर्त्रागमने निश्चितेऽपीत्यर्थः । आत्मनः = स्वस्य भागधेयेषु = भाग्येषु विषये । अत्र कार्ये कारणोपचारः । भर्तृकर्तृकस्वीकरणे इत्यर्थः । मे = मम आशा न आसीत्—प्रसन्नं मे भाग्यमिति प्रत्ययो मे न जातः । अथवा = पक्षान्तरे मे आशास्थानमस्ति । कुत इत्यत्राह—यथेत्यादि । अनेन सानुमतीप्रसंगः सुष्ठु संघटितः । तथा = सानुमतीकथितस्य भर्तुर्बहुमुखानुरागस्य ज्ञानादित्यर्थः । एतत् = भर्तृस्वीकरणम् । अनेन समयाख्यमङ्गमुपक्षिप्तम् । तल्लक्षणम्—"दुःखस्यापगमो यस्तु समयः स निगद्यते" इति ।

शकुन्तलां विलोकयन् राजा आह—अये इति । अये इति हर्षे विषादे च । अत्रभवतीति प्रशंसागर्भम् ।

**वसने इति** । या एषा परिधूसरे वसने वसाना नियमक्षाममुखी धृतैकवेणिः सा इयं शुद्धशीला शकुन्तला अतिनिष्करुणस्य मम दीर्घं विरहव्रतं बिभर्ति इत्यन्वयः ।

या एषा = दृश्यमाना परिधूसरे—परितः = सर्वतो धूसरे = संस्काराद्यभावा- न्मलिने वसने = अन्तरीयोपसंव्याने अधरोत्तरवस्त्रे वसाना = परिदधाना नियम- क्षाममुखी—नियमैः = व्रताङ्गैरुपवासादिभिः क्षामं = क्षीणं मुखं यस्याः सा धृतैकवेणिः—धृता एका वेणिर्यया, एतादृशी। अत्र विशेषणत्रयेण विरहव्रत- स्वरूपमुक्तम्। तादृशी इतोमुखमागच्छन्ती सा इयं शुद्धशीला—शुद्धं = निष्कलङ्कं शीलं = स्वभावो यस्यास्तादृशी, साध्वीत्यर्थः। अयं व्रताचरणे हेतुः। एवं शकुन्तलायाः शोचनीयां दशामवलोक्य तत्प्रयोजकमात्मानं प्रति सामर्षमाह— **अतिनिष्करुणस्येति**। सुतरां क्रूरस्येत्यर्थः। ममेति संबन्धे षष्ठी। मम क्रौर्य- मेकमेवात्र निमित्तमिति भावः। दीर्घं = बहुकालिकं विरहव्रतं = विरहोचित- माचारं बिभर्ति = धारयति।

अत्र वसने परिधूसरे वसानेत्यनेन इन्द्रियप्रीतिपरित्यागः, नियमेत्यादिना प्राणधारणमात्रप्रयासः, धृतेत्यादिना देहसंस्काराद्यपेक्षा, अतिनिष्करुणस्येत्यनेन अनुरागक्षयादेर्हेतुः, तथापि तदभावः, शुद्धशीलेत्यनेन, दीर्घमित्यनेन व्रतं याव- त्समागमं यावज्जीवं वेति, व्रतमित्यनेन संगमरूपफलश्रद्धा च शकुन्तलायाः प्रकाश्यते। गुरुणा शोकेन रूपे विकृते प्रथमं मलिनवसना रमणीमात्रमिति ज्ञानम्; ततो नातिदूरे क्षामेण कपोलेन कठोरं तपश्चरन्ती काचित्तापसीति; ततश्च समीपे एकमात्रया वेण्या नेयं तापसी, किन्तु विरहिणीति; अनन्तरं प्रत्यभिज्ञा 'अये! सेयं शुद्धशीला शकुन्तला' इति। अपि च क्रूरस्य ममैव विरह- व्रतमिति, तेनविगातिशय इति। काव्यलिङ्गं स्वभावोक्तिश्च। नायिकागतो विप्र- लम्भः, नायकगतो विषादाद्युपस्कृतो निर्वेदश्च ध्वन्यते। मालभारिणी वृत्तम्।

शकुन्तलामुपागतां दृष्ट्वा राजा स्वगतमाह—'अये! सेयं मम प्राणप्रिया अत्रभवती शकुन्तला पुरो दृश्यते! यैषा परितो धूसरे अनुज्ज्वले अन्तरीयोपसं-

**शकुन्तला**—( पश्चात्तापविवर्णं राजानं दृष्ट्वा ) ण क्खु अज्जउत्तो विअ। तदो को एसो दाणिं किदरक्खामङ्गलं दारअं मे गत्तसंसग्गेण दूसेदि ?

न खल्वार्यपुत्र इव। ततः क एष इदानीं कृतरक्षामङ्गलं दारकं मे गात्रसंसर्गेण दूषयति ?

---

ध्याने वसने वसाना व्रतोपवासादिना कृशाङ्गी म्लानवदना एकवेणीधारिणी अत एव शुद्धस्वभावा महापतिव्रता अकारणपरित्यागदारुणस्य सुतरां निष्करुणस्य मम संबन्धे दीर्घं विरहव्रतं बिभर्तीव। गुरुणा शोकेन विकृतरूपा मलिनवसनेयं प्रथमतः शकुन्तलेति न परिज्ञाता, किन्तु रमणीमात्रमित्येवावगतम्। तदनु क्षामं कपोलमालोक्य कठोरं तपश्चरन्ती काचित्तापसीति। ततः परमेकमात्रया वेण्या नेयं तापसी, किन्तु विरहिणीति। अनन्तरं प्रत्यभिज्ञातम्—अये! शुद्धशीला शकुन्तलेति। एतादृशीयम् अत्यन्तं क्रूरस्य ममैव कारणात् कठोरं विरहव्रतं बिभर्तीत्यस्याः पुरो नूनं सापराधोऽहम्' इति भावः॥ २१॥

अथ शकुन्तला पश्चात्तापेन विवर्णं राजानं दृष्ट्वा वदति—**ण क्खु इति।** 'न खलु आर्यपुत्र इव। ततः क एष इदानीं कृतरक्षामङ्गलं दारकं मे गात्रसंसर्गेण दूषयति ?' इति संस्कृतम्। तमज्ञात्वा आहेति शेषः। पश्चात्तापवैवर्ण्यमज्ञाने हेतुः। न खलु = न नूनम्, आर्यपुत्र इव—इवेति प्रतीतौ। यदि नायमार्यपुत्रस्ततः क एष इदानीं कृतरक्षामङ्गलम्—कृतं = विहितं रक्षारूपं मङ्गलं = शुभं यस्य तादृशं मे दारकं = मम पुत्रं गात्रसंसर्गेण = स्वशरीरसंपर्केण दूषयति = कलुषीकरोति। एतेन रक्षामङ्गलस्यापि दूषणं जातमिति भावः। अपराजितामप्यभिभूय बालं मे लङ्घयत्ययं कः? इति शङ्कागर्भो वितर्कः। दूरत्वादश्रुतमेतद्राज्ञा।

**बालः**—( मातरमुपेत्य ) अज्जुए ! एसो कोवि पुरिसो मं पुत्त त्ति आलिङ्गदि !

मातः ! एष कोऽपि पुरुषो मां पुत्र इत्यालिङ्गति ।

**राजा**—प्रिये ! क्रौर्यमपि मे त्वयि प्रयुक्तमनुकूलपरिणामं संवृत्तम्, यदहमिदानीं त्वयाऽप्रत्यभिज्ञातमात्मानं पश्यामि ।

**शकुन्तला**—( आत्मगतम् ) हिअअ ! अस्सस, अस्सस ! परिच्चत्तमच्छरेण अणुअम्पिम्ह हि देव्वेण । अज्जउत्तो क्खु एसो !

---

बालको मातरमुपेत्य वदति—**अज्जुए इति**। 'मातः ! एष कोऽपि पुरुषो मां पुत्र इत्यालिङ्गति !' इति संस्कृतम् । पुत्र इत्यालिङ्गति = पुत्रेति कथयन्नालिङ्गतीत्यर्थः ।

राजा, शकुन्तलां दृष्ट्वा आह—**प्रिये ! इति** । त्वयि = त्वां प्रति प्रयुक्तम् = आचरितं क्रौर्यमपि = क्रूरताऽपि, तत्कार्यं प्रत्याख्यानमित्यर्थः । अनुकूलपरिणामम्—अनुकूलः = सरसः परिणामः = पश्चात्तापलक्षणो विपाको यस्य । परिणामो नाम उपादानस्य स्वाकारपरित्यागपूर्वकमाकारान्तरग्रहणम् । यथा मृदादेर्घटाद्याकारः । प्रकृते तु प्रत्याख्यानं पश्चात्तापतया परिणतमित्यर्थः । तस्य आनुकूल्यं तुल्यदुःखकारित्वात् । तदेव दर्शयन्नाह—**यदिति** । अप्रत्यभिज्ञातमिति च्छेदः । तुल्यदुःखहेतुपश्चात्तापजनितवैवर्ण्यतानवादिना हि अप्रत्यभिज्ञानमिति भावः । यद्वा प्रत्यभिज्ञातमिति च्छेदे त्वया प्रत्यभिज्ञातं = संस्मृतमात्मानं पश्यामीत्यर्थः । साधु ते शीलम् ! यन्मया विमानिताऽपि मयि न विरक्ताऽसीति भावः ।

अथ शकुन्तला स्वरेण राजानं प्रत्यभिजानती स्वगतमाह—**हिअअ इति** । 'हृदय ! आश्वसिहि, आश्वसिहि । परित्यक्तमत्सरेणानुकम्पिताऽस्मि दैवेन !

---

१ तदहम् । २ इच्छामि ।

हृदय ! आश्वसिहि, आश्वसिहि ! परित्यक्तमत्सरेणानुकम्पिताऽस्मि दैवेन । आर्यपुत्रः खल्वेषः !

राजा—प्रिये !

स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थिताऽसि मे सुमुखि !
उपरागान्ते शशिनः समुपगता रोहिणी योगम् ॥२२॥

---

आर्यपुत्रः खल्वेषः' इति संस्कृतम् । परित्यक्तमत्सरेण—परित्यक्तः = परिहृतः मत्सरः = मच्छुभद्वेषो येन तथाविधेन दैवेन = विधिना अनुकम्पिताऽस्मि । पुरा यो विधिर्वामो भूत्वा आर्यपुत्रेण मम संगतिं न सेहे, स एवाद्य सदयो भूत्वा तमिह समानीय मया योजितवानिति भावः ।

अथ राजा पूर्ववृत्तविस्मरणान्मया त्वयि क्रौर्यं प्रवृत्तमिति दर्शयन् तामाश्वर्जयितुमाह—प्रिये !—स्मृतिभिन्नेति । हे सुमुखि ! दिष्ट्या स्मृतिभिन्नमोहतमसः मे प्रमुखे स्थिताऽसि । शशिनः उपरागान्ते रोहिणी योगं समुपगता इत्यन्वयः ।

हे सुमुखि = प्रसन्नवदने ! अत्र सुमुखीति साभिप्रायम्, सुमुखस्यैव संमुखे स्थातुं योग्यत्वात् । कुमुखस्य गोपनीयत्वाच्च । दिष्ट्या = सौभाग्येन स्मृतिभिन्नमोहतमसः—स्मृत्या = प्रतिप्राप्तेन स्मरणेन भिन्नं = दूरीकृतं मोहतमो यस्य तस्य । मोहस्तमः = राहुरिव मोहतमः । अनेनोपमानेन राज्ञा तस्य गाढत्वमुक्तम् । "तमस्तु राहुः स्वर्भानुः" इत्यमरः । मे = मम प्रमुखे = संमुखे स्थिताऽसि, तव योगो मम जात इति भावः । सुमुखीत्यनेन अद्भुतं तव प्रत्याख्यानव्यलीकराहित्यमिति द्योत्यते । शशिनः = चन्द्रस्य उपरागान्ते—उपरागः = राहुग्रसनं तस्य अन्ते—निवृत्तौ रोहिणी = नक्षत्रविशेषात्मिका चन्द्रस्य प्रिया योगं = भर्तृसान्निध्यरूपं सम्बन्धं समुपगता = संप्राप्ता ।

**शकुन्तला**—जेदु जेदु अज्जउत्तो…!

जयतु जयत्वार्यपुत्रः…! ( इत्यर्धोक्ते बाष्पकण्ठी विरमति । )

**राजा**—सुन्दरि !

बाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया ।
यत्ते दृष्टमसंस्कारपाटलोष्ठपुटं मुखम् ॥२३॥

---

अत्र निदर्शना दृष्टान्तश्चालंकारौ, तयोः संदेहसंकरो वा । आर्या जातिः ।

प्रियामावर्जयन् राजा आह—'प्रिये ! शकुन्तले ! पूर्वं मोहान्धेन मया समुखागताऽपि त्वं प्रत्याख्याताऽभूः । इदानीं सौभाग्येन स्मृत्युद्गमद्वारा मम मोहो नष्टः, सुमुखी त्वं च मे संमुखे स्थिता । यथा राहुणा ग्रस्तश्चन्द्रमाः प्रियया रोहिण्या वियुज्यते, मुक्तश्च राहुणा प्रियया रोहिण्या संयुज्यते । एवमेव मोहात्मकेन राहुणा ग्रस्तोऽहं प्रियया त्वया वियुक्तोऽभवम् । इदानीमावयोः सौभाग्येन मोहतमोमुक्तोऽहं प्रियया त्वया संयुक्तोऽस्मीति सुदिनमेतत्' इति भावः ॥२२॥

अथ प्ररूढप्रहर्षातिरेका शकुन्तला राजानं वर्धापयति—**जेदु जेदु** इति । 'जयतु जयत्वार्यपुत्रः' इति संस्कृतम् । बाष्पकण्ठी—बाष्पः = दुखज ऊष्मा कण्ठे यस्यास्तादृशी । बाष्पोद्गमः स्मर्यमाणस्य दुःखस्य अनुभूयमानस्यानन्दस्य चानुभावः ।

राजा चाटूक्तिं कुर्वन् शकुन्तलामाह—**सुन्दरि !—बाष्पेणेति** । हे सुन्दरि ! जयशब्दे बाष्पेण प्रतिषिद्धेऽपि मया जितम् । यत् असंस्कारपाटलोष्ठपुटं ते मुखं दृष्टम् इत्यन्वयः ।

हे सुन्दरि = इदानीं विशेषहृद्ये इत्यर्थः । "क्रोधाश्रुहर्षभीत्यादेः संकरः किलकिञ्चितम्" इत्युक्तलक्षणलक्षितो भावो हि स्त्रीणां विशेषहृद्यतामावहति ।

**बालः**—अज्जुए ! को एसो ?

मातः ! क एषः ?

जयशब्दे = जयस्य शब्दे, राजसंनिधावुच्चारणीये 'जयतु जयतु' इति शब्दे बाष्पेण = दुःखजेनोष्मणा प्रतिषिद्धेऽपि = निरुद्धेऽपि, स्पष्टमनुच्चारितेऽपीत्यर्थः । मया जितं = मया ऋद्धिः प्राप्ता । जयशब्दे प्रतिषिद्धेऽपि तदर्थो मया लब्ध इत्यर्थः । कुत एवमित्याह—**यदिति** । यत् = यस्मात् असंस्कारपाटलोष्ठपुटम्—संस्कारः = अलक्तकादिना रञ्जनं तस्याभावात् असंस्कारात् पाटलम् = ईषद्रक्तम् । यद्वा असंस्कारेऽपि पाटलं = स्वभावतो रक्तम् ओष्ठयोः पुटं यस्मिंस्तत्, अकृत्रिममनोहरमित्यर्थः । ते = तव मुखं = वदनं दृष्टम् = अवलोकितम् । भूयोऽपि त्वां द्रक्ष्यामीत्याशा नासीत्, तथापि त्वं यदद्य मया दृष्टा, महानसौ मे विजय इत्यर्थः ।

अत्र जयशब्दे प्रतिषिद्धेऽपि जितमिति विरोधाभासः, जितं प्रत्युत्तरार्धार्थस्य हेतुत्वेनोपादानात् काव्यलिङ्गम्, तथापि पाटलो रक्त इत्यर्थकरणाद्विभावनाऽपीत्यलंकाराः । अनुष्टुप् वृत्तम् ।

बाष्पसन्नकण्ठीं तत्कालविशेषदृश्यां प्रियां शकुन्तलां चाटुभिः प्रीणयन् राजा वदति—'सुन्दरि ! प्रवृद्धेन बाष्पोद्गमेन कण्ठप्रतिरोधात् त्वयोच्चार्यमाणे जयशब्दे निरुद्धेऽपि मया तदर्थो लब्ध एव । यस्मात् मन्निमित्तविरहव्रतधारणात् परित्यक्तालक्तकरञ्जनादिसंस्कारायास्तव असंस्कारेऽपि निसर्गत एव रक्तोष्ठपुटं वदनं मया दृष्टम् । एतादृशविशिष्टमुखदर्शनेनैव मम विरहपीडा अपगता । धन्योऽहं यदीदृशं निष्करुणं मामुद्दिश्य भवती दीर्घं विरहव्रतं बिभर्ति स्म । भवदाननदर्शनात्परं को मम विजयः !' इति भावः ॥ २३ ॥

राजानं स्वमात्रा सह संलपन्तं दृष्ट्वा बालो मातरं पृच्छति—**अज्जुए इति** ।

**शाकुन्तला**—वच्छ ! दे भाअहेआइं पुच्छेहि !

वत्स ! ते भागधेयानि पृच्छ !

**राजा**—( शकुन्तलायाः पादयोः प्रणिपत्य )—

सुतनु ! हृदयात्प्रत्यादेशव्यलीकमपैतु ते
किमपि मनसः संमोहो मे तदा बलवानभूत् ।
प्रबलतमसामेवंप्राया: शुभेषु हि वृत्तयः
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥२४॥

---

'मातः ! क एषः ?' इति संस्कृतम् । शकुन्तला तमुत्तरयति—**वच्छेति** । 'वत्स ! ते भागधेयानि पृच्छ' इति संस्कृतम् । भागधेयानि पृच्छ—अत्र क एष इत्यस्योत्तरं ते भाग्यमेव दातुं प्रभवति, प्रत्यादिष्टाऽहं कथं ब्रूयां क एष इति ! यदि सम्राट्सुतश्चक्रवर्ती भवेरिति ते भाग्यं तदा 'अयं ते पिता' इति वक्तुं न्याय्यम् ; अथेदृशं ते भाग्यं यदिहैव वने वसन् तपश्चरिष्यसि तदा 'धराधिपोऽयं दुष्यन्तः' इत्येवास्य पर्याप्तः परिचय इति गूढोऽभिसन्धिः । प्रकाशं तु येषां फलमस्य दर्शनलाभस्तानि भाग्यानि पृच्छेत्यर्थः । यद्वा कार्ये कारणोपचारः, एतं पृच्छेत्यर्थः ।

**पादयोः प्रणिपत्येति** । इदं परित्यागापराधपरिहारार्थम् ।

राजा शकुन्तलां प्रार्थयन्नाह—**सुतन्विति** । हे सुतनु ! ते हृदयात् प्रत्यादेशव्यलीकम् अपैतु । तदा किमपि बलवान् मे मनसः संमोहः अभूत् । शुभेषु प्रबलतमसां वृत्तयः एवंप्रायाः । हि अन्धः शिरसि क्षिप्तां स्रजमपि अहिशङ्कया धुनोति इत्यन्वयः ।

**हे सुतनु** = हे शोभनाङ्गि ! **ते** = तव **हृदयात्** = मनसः **प्रत्यादेशव्यलीकम्**—प्रत्यादेशात् = प्रत्याख्यानात् जातं यत् व्यलीकम् = अप्रियं तत् **अपैतु** = दूरी-

भवतु । "व्यलीकं त्वप्रियेऽनृते" इत्यमरः । अप्रियस्य हृदयात् त्यागेऽर्थतः सिद्धेऽपि पुनः हृदयादिपदोपादानं संस्कारोन्मूलनपूर्वकमप्रियत्यागं ध्वनयति । किमर्थमप्रियं कृतं तत्राह—**किमपीति** । तदा = प्रत्याख्यानकाले, पूर्वं त्वदागमनकाले किमपि = कुतोऽप्यनिर्वचनीयात्कारणात् बलवान् = अधिकः, केनाप्यनिवर्तनीयः मे = मम मनसः = चित्तस्य संमोहः = अज्ञानम्, विस्मृतिः अभूत् = जातः । अनेन तदानीं मया त्वत्परिणयविषये मुहुर्मुहुर्विचारितमासीदिति द्योत्यते । बलवतः संमोहादेव मया तव प्रत्याख्यानं कृतमिति त्वया क्षम्यतां मेऽपराध इत्यर्थः । शुभेषु = श्रेयःसाधनेषु प्रबलतमसाम्—प्रबलम् = अधिकं तमः = तमोगुणो येषां तेषां वृत्तयः = मनोवृत्तयः एवंप्रायाः = शुभत्यागरूपा भवन्ति । मम प्रबलतमस्त्वमेवं संमोहे हेतुरिति भावः । अत्र आत्माधिक्षेपः । उक्तार्थे दृष्टान्तमाह—**स्रजमपीति** । हि = यतः अन्धः चक्षुर्हीनः शिरसि = मस्तके क्षिप्तां = परिधापितां स्रजमपि = सुरभिपुष्पमालामपि अहिशङ्कया = सर्पभ्रान्त्या धुनोति = तिरस्करोति, शिरसो व्यस्यतीत्यर्थः ।

प्रबलतमसामित्यंशे सामान्यनिबन्धना अप्रस्तुतप्रशंसा । अहिशङ्कयेत्यंशे भ्रान्तिमान् । प्रतिवस्तूपमा च । हरिणी वृत्तम् ।

शकुन्तलाहृदयात् प्रत्याख्यानदुःखं दूरीकर्तुं प्रयतमानो राजा तां प्रार्थयन्नाह—'शोभनाङ्गि ! प्रिये शकुन्तले ! पूर्वं मदन्तिके समागता त्वं यन्मया प्रत्याख्याताऽभूः; तत्प्रत्याख्यानदुःखं त्वया स्वहृदयात् समूलं निष्कासनीयम् । जानता मया नैवं कृतम् । तदानीं किल मम हृदये कुतोऽप्यनिर्वचनीयाद्धेतोः प्रबलः संमोहः समुदपद्यत । तेन चित्ताभावात्कृतमिदं त्वया क्षन्तव्यमेव । ये हि मादृशाः प्रबलतमोगुणा भवन्ति तेषामात्मनः श्रेयस्करेष्वपि कार्येषु तत्प्रत्याख्यानरूपाश्चेष्टाः संपद्यन्ते । यथा चक्षुर्हीनः पुरुषः केनापि स्वशिरसि परिधापितां मल्लीमालामपि

**शकुन्तला**—उट्ठेदु अज्जउत्तो ! णूणं मे सुअरिअप्पडिबन्धअं पुराकिदं तेसु दिअहेसु परिणाममुहं आसी जेण साणुक्कोसो वि अज्जउत्तो मइ विरसो संवुत्तो ।

उत्तिष्ठत्वार्यपुत्रः ! नूनं मे सुचरितप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणाम-मुखमासीद्येन सानुक्रोशोऽप्यार्यपुत्रो मयि विरसः संवृत्तः ।

( राजोत्तिष्ठति । )

---

सर्पशङ्कया सद्यः शिरसो व्यस्य दूरमुत्क्षिपति, तथैव मयाऽपि तदानीं चित्तहीनेन स्वयमुपस्थिताऽपि मम सौभाग्यदेवता त्वं प्रत्याख्याता । अनुभूतं च महद्दुःखम्, क्लेशिता च भवती घोरम् । तदेतदखिलमज्ञानकृतमिति क्षम्यताम्’ इति भावः ॥ २४ ॥

अथ बाढमनुतप्तं पादयोः प्रणतं राजानमुत्थापयन्ती शकुन्तला प्राह—उट्ठेदु इति । ‘उत्तिष्ठतु आर्यपुत्रः ! नूनं मे सुचरितप्रतिबन्धकं पुरा कृतं तेषु दिवसेषु परिणाममुखमासीत्, येन सानुक्रोशोऽप्यार्यपुत्रो मयि विरसः संवृत्तः’ इति संस्कृतम् । नूनं = तर्कयामि सुचरितप्रतिबन्धकम्—सुचरितस्य = पुण्यकर्मणः, तत्कार्यस्य सुखस्य प्रतिबन्धकं = प्रतिरोधकम्, पुराकृतम् = अर्थाद्दुष्कृतं तेषु दिवसेषु = प्रत्याख्यानवेलासु परिणाममुखं = पाकाभिमुखम् । येन=हेतुना सानु-क्रोशोऽपि=सदयोऽपि, सानुरागोऽपि विरसः=अपरक्तः संवृत्तः = जातः । मया पुरा किञ्चित्पुण्यमाचरितमासीत, तेन त्वयाऽहं संगता, पापं चासीत्किंचित्सं-चितम् यत् प्रत्याख्यानवेलायां विपक्वमासीत्; तेन पुण्यफलं निरुद्धम्, अहं च प्रत्याख्याता । इत्थं ममैव पापस्यायं विपाकः, न ते दोष इति भावः । अत्र अनेन वाक्येन शकुन्तलायाः सौशील्यादिगुणातिशयः कविना प्रकाश्यते ।

शकुन्तला—अह कहं अज्जउत्तेण सुमरिदो दुक्खभाई अअं जणो ?

अथ कथमार्यपुत्रेण स्मृतो दुःखभाग्ययं जनः ?

राजा—उद्धृतविषादशल्यः कथयिष्यामि ।

मोहान्मया सुतनु ! पूर्वमुपेक्षितस्ते
यो बाष्पबिन्दुरधरं परिबाधमानः ।
तं तावदाकुटिलपक्ष्मविलग्नमद्य
बाष्पं प्रमृज्य विगतानुशयो भवेयम् ॥२५॥

---

अथ पुनः शकुन्तला राजानं पृच्छति—अह इति । 'अथ कथमार्यपुत्रेण स्मृतो दुःखभागी अयं जनः' इति संस्कृतम् । अथेति प्रश्ने । दुःखभागी=दुःखैकमात्रभोगी । अयं जन इति आत्मनिर्देशः, अहमित्यर्थः । कथं स्मृत इति संबन्धः । राजोत्तरयति—उद्धृतविषादशल्य इति । उद्धृतविषादशल्यः—उद्धृतम् = उत्खातं विषादरूपं शल्यं=शङ्कुर्येन यस्माद्वा, तादृशो भूत्वा कथयिष्यामि ।

शल्योद्धरणप्रकारमाह—मोहादिति । हे सुतनु ! यः बाष्पबिन्दुः पूर्वं ते अधरं परिबाधमानो मया मोहादुपेक्षितः, आकुटिलपक्ष्मविलग्नं तं बाष्पम् अद्य प्रमृज्य विगतानुशयो भवेयं तावत् इत्यन्वयः ।

हे सुतनु = शोभनाङ्गि ! यः बाष्पबिन्दुः—बाष्पस्य = नेत्रजलस्य बिन्दुः, इदं जात्येकवचनम् । पूर्वं = प्रत्याख्यानकाले ते=तव अधरम् = अधरोष्ठं परिबाधमानः—परितः = सर्वतः बाधमानः = पीडयन् , नेत्रयोर्निर्गत्य, कपोलावर्ति-

क्रम्य, अधरे न केवलं स्थितः, किन्तु एकैकशः इयद्दूरमागत्य उपचयेन चिराव-स्थानेन च अधरं पीडयन्नित्यर्थः। अनेन बिन्दूनामनवरतपातिता, स्थूलतोष्णता, अद्य यावत्स्थितिश्च ध्वनिता। तेन मार्जनकारणसामग्र्यां सत्यामपि तदनुत्पत्ते-र्विशेषोक्तिः। मया = परमविवेकिना, धर्मभीरुणा, परमविदग्धेन दुष्यन्तेनेत्यर्था-न्तरसंक्रमितम्। मोहात् = अज्ञानात् उपेक्षितः = अपरिमृष्टः, आकुटिलपक्ष्मवि-लग्नम्—आकुटिलेषु = ईषद्वक्रेषु पक्ष्मसु = नेत्रलोमसु विलग्नं = संबद्धं तं = तथा-विधं बाष्पं = नेत्रजलबिन्दुम्। तं बाष्पमित्यनेन पूर्वतनाद्यतनबाष्पयोरैक्यमध्य-वसीयते। आकुटिलपक्ष्मविलग्नमित्यनेन अद्यतनबाष्पस्य अधरपरिबाधनाभावः सूच्यते। अद्य = इदानीं प्रमृज्य = शोधयित्वा विगतानुशयः—विगतः = अपगतः अनुशयः = पश्चात्तापो यस्य तथाविधः भवेयमेव। तावदित्यवधारणे।

पूर्वं पश्चात्तापविमुक्तो भवेयम्, पश्चात् कथयिष्यामीति सम्बन्धः। इदमे-वोद्धृतविषादशल्यत्वम्। अपराधादिनाऽनुशयो हि विषादः। तदुक्तम्—"अपराध-परिज्ञानादनुतापस्तु यो भवेत्। स विषादः" इति। वसन्ततिलकं वृत्तम्।

शकुन्तलया आत्मनः स्मरणहेतुं पृष्टो राजा कथयति—'प्रिये शकुन्तले! आवयोर्हृद्गतं विषादशल्यं यावन्नोद्ध्रियते, तावद्भवत्याः स्मरणहेतुं कथयितुं न पारयामि। भूयान्विषादस्तु ममैव चेतसि वर्तते। हे सुतनु! त्वं पूर्वं यदा मत्समीपमुपागताऽऽसीः, तदा मोहादचेतस्केन मया त्वं प्रत्याख्याताऽभूः। मदीय-प्रत्याख्यानपारुष्यविदीर्णहृदयया भवत्या मम पुरश्चिरं रुदितम्, तदानीं बिन्दु-सातत्येन पतन् अधरमपि परिबाधमानो तव बाष्पौघः क्रूरेण मया न किञ्चिदि-त्युपेक्षितः! अद्य ईषत्कुटिलपक्ष्मविलग्नं नेत्रप्रणाल्या बहिरनागतमेव तं ते बाष्पौघं स्वकरेण परिमृज्य यावद्विगतपश्चात्तापो न भवेयं, तावत् किमपि संलपितुं प्रष्टु-मुत्तरयितुं च नोत्सहे। अतोऽनुजानीहि मां बाष्पपरिमार्जनाय' इति भावः ॥२५॥

( इति यथोक्तमनुतिष्ठति । )

**शकुन्तला**—(नाममुद्रां दृष्ट्वा) अज्जउत्त ! एदं ते अङ्गुलीअअं ?

आर्यपुत्र ! इदं तेऽङ्गुलीयकम् ?

**राजा**—अस्मादङ्गुलीयोपलम्भात्खलु स्मृतिरुपलब्धा ।

**शकुन्तला**—विसमं किदं णेण जं तदा अज्जउत्तस्स पच्चअकाले दुल्लहं आसि !

विषमं कृतमनेन यत्तदाऽऽर्यपुत्रस्य प्रत्ययकाले दुर्लभमासीत् !

**राजा**—तेन ह्यृतुसमवायचिह्नं प्रतिपद्यतां लता कुसुमम् ।

---

यथोक्तमनुतिष्ठति = बाष्पं प्रमार्ष्टीत्यर्थः । बाष्पप्रमार्जनसमये राज्ञः करेऽङ्गुलीयकं दृष्ट्वा शकुन्तला तं पृच्छति—**अज्जउत्तेति** । 'आर्यपुत्र ! इदं तेऽङ्गुलीयकम् ?' इति संस्कृतम् । अयं काक्वा प्रश्नः । इदं पूर्वं मदङ्गुलौ निवेशितमासीदिति गूढोऽभिसन्धिः । राजोत्तरयति—**अस्मादिति** । अङ्गुलीयोपलम्भात्—अङ्गुलीयस्य उपलम्भः = प्राप्तिस्तस्मात्, धीवरद्वाराऽङ्गुलीयकप्राप्तेरित्यर्थः । अनेन राज्ञा स्वापराधपरिमार्जनं सूचितम् । स्मृतिः = स्मरणम् उपलब्धा = प्राप्ता ।

शकुन्तला उपालभते—**विसमं इति** । 'विषमं कृतमनेन, यत्तदाऽऽर्यपुत्रस्य प्रत्ययकाले दुर्लभमासीत्' इति संस्कृतम् । विषमं = विसदृशम्, कष्टमित्यर्थः । अनेन = अङ्गुलीयकेन, यत् = यस्मात् । प्रत्ययकाले = प्रत्यायनकाले इत्यर्थः । राजा वदति—**तेन हीति** । तेन हि = यद्येतेनैव प्रत्यायनं तत इत्यर्थः । लता = लतेव तन्वी त्वम् ऋतुसमवायचिह्नम्—ऋतुना = वसन्तेन ( मया इति गूढम् ) यः समवायः = समागमः, पुनःसमागम इत्यर्थः । तस्य चिह्नं = सूचकं कुसुमम् = अङ्गुलीयकमित्यर्थः । भवती मत्समागमचिह्नमिदमङ्गुलीयकं धारयत्वित्यर्थः ।

**शकुन्तला**—ण से विस्ससामि। अज्जउत्तो एव्व णं धारेदु।

नास्य विश्वसिमि। आर्यपुत्र एवैतद्धारयतु।

(ततः प्रविशति मातलिः।)

**मातलिः**—दिष्ट्या धर्मपत्नीसमागमेन पुत्रमुखदर्शनेन चायुष्मान्वर्धते ?

**राजा**—अभूत्संपादितस्वादुफलो मे मनोरथः। मातले ! न खलु विदितोऽयमाखण्डलेन वृत्तान्तः स्यात् !

**मातलिः**—(सस्मितम्) किमीश्वराणां परोक्षम् ? एत्वायुष्मान्, भगवान्मारीचस्ते दर्शनं वितरति।

---

सादृश्यनिबन्धनाऽप्रस्तुतप्रशंसा। शकुन्तला वदति—णेति। 'नास्य विश्वसिमि, आर्यपुत्र एवैतद्धारयतु' इति संस्कृतम्। अस्य = अङ्गुलीयकस्य, सम्बन्धमात्रविवक्षया षष्ठी। न विश्वसिमि = न प्रामाण्यं मन्ये। पूर्वं प्रत्यायनकाले असान्निध्येन विषमाचरणादिति भावः।

अत्रान्तरे प्रविष्टो मातलिर्वदति—**दिष्ट्येति**। दिष्ट्येत्यानन्दे। भवद्वृद्ध्या मे हर्षो जात इति भावः। राजोत्तरयति—**अभूदिति**। संपादितस्वादुफलः—संपादितं = साधितम्, युष्माभिर्दैवेन वेति शेषः। स्वादु = मधुरं फलं = पुत्रकलत्ररूपं यस्य तादृशो मे मनोरथोऽभूदिति सम्बन्धः। अयं वृत्तान्तः = मम पुत्रपत्नीसमागमरूपः आखण्डलेन = इन्द्रेण न खलु विदितः स्यात्, मम मनोरथफलावाप्तिराखण्डलेन न वेद्यते किमित्यर्थः। मातलिः सस्मितमनुवदति—**किमिति**। ईश्वराणां = प्रभूणां परोक्षम् = अगोचरम्। विज्ञातमेवैतदिन्द्रस्येति भावः। मारीचप्रवेशं सूचयन्नाह—**एत्विति**। दर्शनं = दर्शनावसरम्।

राजा—शकुन्तले ! अवलम्ब्यतां पुत्रः । त्वां पुरस्कृत्य भगवन्तं द्रष्टुमिच्छामि ।

शकुन्तला—हिरिआमि अज्जउत्तेण सह गुरुसमीवं गन्तुं ।

जिह्रेम्यार्यपुत्रेण सह गुरुसमीपं गन्तुम् ।

राजा—अप्याचरितव्यमभ्युदयकालेषु ! एह्येहि ।

( सर्वे परिक्रामन्ति । )

( ततः प्रविशत्यदित्या सार्धमासनस्थो मारीचः । )

मारीचः—( राजानमवलोक्य ) दाक्षायणि !

---

मातलेर्वचनमङ्गीकुर्वन् राजा आह—शकुन्तले इति । अथ राजनियोगानुष्ठानमङ्गीकुर्वती शकुन्तला सलज्जमाह—हिरिआमि इति । 'जिह्रेम्यार्यपुत्रेण सह गुरुसमीपं गन्तुम्' इति संस्कृतम् । जिह्रेमि = लज्जे । आर्यपुत्रसाहचर्यं लज्जाया हेतुः । शकुन्तलाया लज्जां परिहरन् राजा आह—अपीति । अभ्युदयकालेषु = मङ्गलोत्सवादिसमयेषु आचरितव्यमपि = आचरितव्यमेवेत्यर्थः । आभ्युदयिककालेषु भर्त्रा सह गुरुसाक्षात्करणमाचार एवेति तत्र लज्जाकरणमनुचितमेवेति भावः ।

वक्ष्यमाणेन मारीचवचनेन विस्मरणस्य शापहेतुकत्वावगमः, तेन नायिकाया नायके निरपराधित्वनिश्चयः, तस्मात् मिथोऽनुरागस्य भूयस्त्वम्, तथा पुत्रस्य चक्रवर्तित्वनिवेदनेन परमप्रीतिश्चेति द्रष्टव्यम् । आसनस्थो मारीच इति कथनेन तस्य कृतकर्मत्वेन वन्दनयोग्यावसरत्वं व्यज्यते ।

ततः अदित्या सार्धमासनस्थः प्रविष्टो मारीचः राजानं दृष्ट्वा स्वपत्नीं

पुत्रस्य ते रणशिरस्ययमग्रयायी
दुष्यन्त इत्यभिहितो भुवनस्य भर्ता ।
चापेन यस्य विनिवर्तितकर्म जातं
तत्कोटिमत्कुलिशमाभरणं मघोनः ॥२६॥

वदति—दाक्षायणि !—पुत्रस्येति । अयं दुष्यन्त इति अभिहितः भुवनस्य भर्ता ते पुत्रस्य रणशिरसि अग्रयायी ( अस्ति ) । यस्य चापेन विनिवर्तितकर्म ( सत् ) कोटिमत् तत् कुलिशं मघोनः आभरणं जातम् इत्यन्वयः ।

दाक्षायणि = दक्षपुत्रि ! अनेन अदितेराभिजात्यं द्योत्यते । अयम् = एष दृश्यमानो जनो दुष्यन्त इति अभिहितः = दुष्यन्त इति ख्यातः, दुष्यन्तनामधेयक इत्यर्थः । भुवनस्य भर्ता = भूमण्डलस्य पालकः ते = तव पुत्रस्य = इन्द्रस्य रणशिरसि = समरमूर्धनि अग्रयायी = अग्रेसरः, पुरोगामीत्यर्थः । साक्षाद्भुवो भर्ता, परोक्षतो दिवोऽपीति भावः । यस्य = दुष्यन्तस्य चापेन = धनुषा विनिवर्तितकर्म—विनिवर्तितं = शमितम्, असुरसंहारादिति भावः । कर्म = कार्यं शत्रुहननरूपं यस्य तथाविधं सत् कोटिमत् = निर्व्यापारत्वेन कुण्ठिताग्रमित्यर्थः । तत् = प्रसिद्धं कुलिशं = वज्रं मघोनः = इन्द्रस्य आभरणं = भूषणमात्रम्, शोभामात्रफलकत्वादित्यर्थः । जातं = संपन्नम् ।

अत्र ते पुत्रस्येति कथनेन शक्रस्य दाक्षायणीप्रीतिपात्रत्वं व्यज्यते । रणशिरस्यग्रयायीत्यनेन राज्ञो वीर्यातिरेकः, दुष्यन्त इत्यभिहित इत्यनेन लोकप्रसिद्धिः, भुवनस्य भर्तेत्यनेन चक्रवर्तित्वम्, भर्ता न तु स्वामीति कथनेन प्रजावात्सल्यं च प्रदर्श्यते । अत्र वीर्यसंपद्वर्णनादुदात्तम् । चापकर्तृककुलिशकर्मविनिवर्तनरूपकार्येण निखिलपरिपन्थिसंहारलक्षणं कारणं गम्यत इति पर्यायोक्तं प्रस्तुताङ्कुरो वा । वीररसोपस्कृता राजविषयिका रतिर्भावः । वसन्ततिलका वृत्तम् ।

**अदितिः**—संभावणीआणुभावा से आकिदी !

संभावनीयानुभावाऽस्याकृतिः !

**मातलिः**—आयुष्मन् ! एतौ पुत्रप्रीतिपिशुनेन चक्षुषा दिवौकसां पितरावायुष्मन्तमवलोकयतः, तावुपसर्प ।

---

दाक्षायण्या सह आसनस्थः, परिसमाप्ताह्निकक्रियो महर्षिर्मारीचो राजानं दुष्यन्तमालोक्य तत्प्रभावं वर्णयन् दाक्षायणीमाह—'दाक्षायणि ! दुष्यन्त इति नाम्ना जगति प्रसिद्धः, ते पुत्रस्य शतक्रतोः परमं मित्रं तत्पक्षीयो नाम भूत्वा देवासुरसंग्रामेषु अग्रेसरो भवन् न केवलं भूमण्डलस्य भर्ता, अपितु देवासुरसंग्रामेषु साहाय्यकरणात् परोक्षतो दिवोऽपि पालकश्चक्रवर्ती राजाऽयमस्ति । यस्य चापेनैव संपादितशत्रुहननादिव्यापारं मघोनः कुलिशं निर्व्यापारत्वात् कुण्ठिताग्रं सत् संप्रति हस्ताभरणमात्रं संपन्नम् । अस्मिन् राजनि बाढं विश्वस्य शत्रुहननादिव्यापारजातमेतदधीनं कृत्वा तव पुत्रो मघवा सुखं शेते । एतादृशोऽयं महापराक्रमो भूपालः' इति भावः ॥ २६ ॥

अदितिर्वदति—**संभावणीआणुभावा** इति । 'संभावनीयानुभावा अस्य आकृतिः' इति संस्कृतम् । अस्य = राज्ञः आकृतिः = शरीरम् । संभावनीयानुभावा—संभावनीयः = ऊह्यः अनुभावः = प्रभावो यया तथाविधा, 'यत्राकृतिस्तत्र गुणाः' इति न्यायात् अस्याकृत्या तादृशमनुभावं संभावयामीत्यर्थः ।

मातली राजानं वदति—**आयुष्मन्निति** । एतौ दिवौकसां = देवानां पितरौ = जनकौ अदितिकश्यपौ पुत्रप्रीतिपिशुनेन—पुत्रप्रीतिः = पुत्रसहचरत्वाद्राज्ञः स्नेहः तस्याः पिशुनेन = सूचकेन चक्षुषा = नेत्रेण आयुष्मन्तं = त्वाम् अवलोकयतः = इन्द्रतुल्येन स्नेहेन त्वां पश्यत इत्यर्थः । तावुपसर्प = समीपं गच्छ ।

राजा—मातले ! एतौ—

प्राहुर्द्वादशधा स्थितस्य मुनयो यत्तेजसः कारणं
भर्तारं भुवनत्रयस्य सुषुवे यद्यज्ञभागेश्वरम् ।
यस्मिन्नात्मभुवः परोऽपि पुरुषश्चक्रे भवायास्पदं
द्वन्द्वं दक्षमरीचिसंभवमिदं तत्स्रष्टुरेकान्तरम् ॥२७॥

अदितिकश्यपौ दृष्ट्वा राजा मातलिं प्राह—**मातले ! एतौ—प्राहुरिति ।** हे मातले ! इदं तत् दक्षमरीचिसंभवं स्रष्टुः एकान्तरं द्वन्द्वम् । यत् मुनयः द्वादशधा स्थितस्य तेजसः कारणं प्राहुः । यत् भुवनत्रयस्य भर्तारं यज्ञभागेश्वरं सुषुवे । यस्मिन् आत्मभुवः परः पुरुषोऽपि भवाय आस्पदं चक्रे इत्यन्वयः ।

इदं = पुरोदृश्यमानं तत् = प्रसिद्धं दक्षमरीचिसंभवम्—दक्षश्च मरीचिश्च संभवः = उत्पत्तिस्थानं यस्य अत एव स्रष्टुः = ब्रह्मणः एकान्तरम्—एकः = दक्षो मरीचिश्च अन्तरे = मध्ये यस्य तत्, ब्रह्मपौत्रमित्यर्थः । द्वन्द्वं = मिथुनम् । यत् = द्वन्द्वं मुनयः = ऋषयः द्वादशधा स्थितस्य तेजसः—द्वादशसु मासेषु द्वादश-मूर्तिधरस्य तेजसः = सूर्यस्य कारणं = निदानं प्राहुः = आमनन्ति । जगत्प्रदीप-भूतद्वादशादित्योत्पादकत्वेन प्रकृतस्य द्वन्द्वस्य तेजोराशित्वं ध्वन्यते । द्वादशा-दित्योत्पत्तिर्यथा विष्णुपुराणे—

तत्र विष्णुश्च शक्रश्च जज्ञाते पुनरेव हि ।
अर्यमा चैव धाता च त्वष्टा पूषा तथैव च ॥
विवस्वान् सविता चैव मित्रो वरुण एव च ।
अंशुर्भगश्चादितिज आदित्या द्वादश स्मृताः ॥ इति ।

यद्वा द्वादशधा स्थितस्येत्यस्य द्वादशकलात्मकस्येत्यर्थः । ताश्च द्वादश

क्ता यथा—

तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः ।
सुषुम्णा भोगदा विश्वा बोधिनी धारिणी क्षमा ॥ इति ।

यत् = द्वन्द्वं भुवनत्रयस्य = भूर्भुवःस्वर्लक्षणस्य लोकत्रयस्य भर्तारं = पालकम्, पोषकत्वेन धारणसमर्थमित्यर्थः । यज्ञभागेश्वरम्—यज्ञे = क्रतौ भागः = अंशो येषां ते यज्ञभागा देवाः, तेषामीश्वरम् = इन्द्रं सुषुवे = जनयामास । यस्मिन् = द्वन्द्वे आत्मभुवः = ब्रह्मणः परः = उत्कृष्टः पुरुषोऽपि = पुरुषोत्तमोऽपि भवाय = जन्मने आस्पदं = प्रतिष्ठां चक्रे = कृतवान् । इन्द्रावरजत्वेनावतीर्ण इत्यर्थः । तथा च **विष्णुपुराणम्**—

मन्वन्तरे च संप्राप्ते तथा वैवस्वते द्विज ।
वामनः कश्यपाद्विष्णुरदित्यां संबभूव ह ॥ इति ।

अत्र आद्यं वाक्यत्रयं दक्षमरीचिसंभवस्य द्वन्द्वस्य महिमोत्कर्षं प्रतिपादयति । पादत्रये अङ्गभूतमहापुरुषचरितकथनादुदात्तम् । आदित्यादिविषयकरत्याद्युपस्कृता दक्षमरीचिसंभवद्वन्द्वविषयिका रतिर्भावः । शार्दूलविक्रीडितं वृत्तम् ।

मातलिवचनेन दाक्षायणीसहचरं मारीचं द्रष्टुमुपसर्पन् राजा तद् द्वन्द्वं पुरतो दृष्ट्वा सादरं वर्णयन्नाह—'मातले ! अद्यैतददितिमारीचयोर्द्वन्द्वं दृष्ट्वा कृतकृत्योऽहं जातोऽस्मि । यदेतद् द्वन्द्वं द्वादशसु मासेषु द्वादशमूर्तिधरस्य सूर्यात्मकस्य तेजसः कारणमिति मुनयो वदन्ति । जगत्प्रदीपस्तेजोराशिर्भगवान् सूर्योऽपि येन मिथुनेन जनितस्तस्य तेजस्वित्वं कया वाचा वर्णयितुं शक्यते ! त्रिलोक्याः पालको यज्ञभागभुजां देवानामीश्वरो भगवान् शतक्रतुरपि येनैव जनितः । किं बहुना ! आत्मभुवो ब्रह्मणोऽपि जनकत्वेन श्रेष्ठतमो भगवान् विष्णुरपि बलिदैत्यदमनाय वामनरूपेणावतितीर्षुर्यत्रैव विशुद्धतमे द्वन्द्वे पुत्रत्वेना-

**मातलिः**—अथकिम्!

**राजा**—(उपगम्य) उभाभ्यामपि वासवनियोज्यो दुष्यन्तः प्रणमति।

**मारीचः**—वत्स! चिरं जीव; पृथिवीं पालय।

**अदितिः**—वच्छ! अप्पडिरहो होहि।

वत्स! अप्रतिरथो भव।

**शकुन्तला**—दारअसहिदा वो पादवन्दणं करेमि।

दारकसहिता वां पादवन्दनं करोमि।

**मारीचः**—वत्से!

---

विरासीत्। तदेतद्दाक्षायणीमारीचनामकं द्वन्द्वं साक्षाद् ब्रह्मणः पौत्ररूपमेव वर्तते। अहो! धन्यमिदं द्वन्द्वम्! प्रभूतेन सुकृतेनैतद्दर्शनभागहं जातः' इति भावः ॥२७॥

मातली राजोक्तमनुवदति—**अथकिमिति**। त्वं यदात्थ, तत्तथैवेत्यर्थः।

राजा सपत्नीकं मारीचमुपगम्य प्रणमन्नाह—**उभाभ्यामपीति**। वासवनियोज्यः—वासवस्य = इन्द्रस्य नियोज्यः = किंकरः। अनेन करुणापात्रत्वं सूच्यते। उभाभ्यामपि = उभे अपि अनुकूलयितुमित्यर्थः। प्रणमति = नमस्कुरुते। "क्रियार्थोपपदस्य" इति चतुर्थी। मारीच आशिषं प्रयुङ्क्ते—**वत्सेति**। वत्सेति पितृवद्व्यवहारेण वात्सल्यं सूच्यते। अदितिरप्याशिषं प्रयुङ्क्ते—**वच्छेति**। 'वत्स! अप्रतिरथो भव' इति संस्कृतम्। अप्रतिरथः = निसपत्न इत्यर्थः। तथात्वे च पृथिव्याः परिपालनं पुरन्दरस्य साहाय्यं चोपपद्येतेति भावः।

पुत्रसहिता शकुन्तलाऽपि प्रणमति—**दारअसहिदा इति**। 'दारकसहिता वां पादवन्दनं करोमि' इति संस्कृतम्। दारकसहिता = पुत्रसहिता।

आखण्डलसमो भर्ता जयन्तप्रतिमः सुतः ।
आशीरन्या न ते योग्या पौलोमीसदृशी[1] भव ॥२८॥

मारीच आशिषं प्रयुङ्क्ते—वत्से !—आखण्डलसम इति । वत्से ! भर्ता आखण्डलसमः, सुतः जयन्तप्रतिमः, त्वं पौलोमीसदृशी भव । अन्या आशीस्ते योग्या न इत्यन्वयः ।

वत्से = पुत्रि शकुन्तले ! भर्ता=पतिर्दुष्यन्तः आखण्डलसमः—आखण्डलेन= इन्द्रेण समः = तुल्यः, सुतः = पुत्रः सर्वदमनः जयन्तप्रतिमः = जयन्ताख्येन्द्रपुत्र-तुल्यः, अत एव त्वं पौलोमीसदृशी—पौलोम्या = इन्द्रपत्न्या शच्या सदृशी = तुल्या; सौभाग्येन, अवैधव्येन, महादेवीपदप्राप्त्यादिना चेति भावः । अन्या = एतदतिरिक्ता आशीः = शुभाशंसनं ते = तव योग्या न = अनुरूपा न । इय-मेवाशीर्युक्तेत्यर्थः ।

अत्र भवेति पदं भवत्विति विपरिणामेन आद्यवाक्ययोरपि सम्बध्यते चेदा-शीर्वादत्रयं संपद्यते । यद्वा अन्त्यवाक्य एवाशीः, पूर्ववाक्यद्वयं तत्साधकमिति काव्यलिङ्गम् । उपमा च । वात्सल्यं भावः । अनुष्टुप् वृत्तम् ।

पतिपुत्राभ्यां सह प्रणमन्तीं शकुन्तलां शुभाशीर्वादप्रदानेन संभावयन् मारीच आह—'पुत्रि शकुन्तले ! इन्द्रतुल्यपराक्रमः सम्राट् ते पतिर्दुष्यन्तः, जयन्ततुल्यश्च सर्वदमनस्तेऽयं सुतः । इत्थं च त्वमपि शचीव अखण्डसौभाग्यवती भव । एतदतिरिक्ता काऽपि त्वदनुरूपा आशीर्नोपलक्ष्यते । सर्वथा निरतिशय-सौभाग्यशालिनी भूयाः' इति भावः ॥ २८ ॥

१ मङ्गला ।

**अदितिः**—जादे ! भत्तुणो अभिमदा होहि । अवस्सं दीहाऊ वच्छओ उहअकुलणन्दणो होदु । उवविसह ।

जाते ! भर्तुरभिमता भव । अवश्यं दीर्घायुर्वत्स उभयकुलनन्दनो भवतु । उपविशत ।

( सर्वे प्रजापतिमभित उपविशन्ति । )

**मारीचः**—( एकैकं निर्दिशन् )—

दिष्ट्या शकुन्तला साध्वी सदपत्यमिदं भवान् ।
श्रद्धा वित्तं विधिश्चेति त्रितयं तत्समागतम् ॥२९॥

---

अदितिरप्याशिषं प्रयुङ्क्ते—**जादे इति**। 'जाते ! भर्तुरभिमता भव । अवश्यं दीर्घायुर्वत्सः उभयकुलनन्दनो भवतु । उपविशत' इति संस्कृतम् । अभिमता = पूजिता । वत्सः = पुत्रः सर्वदमनः उभयकुलनन्दनः = पैतृकमातृकोभयकुलप्रीतिप्रदः । उपविशतेति नियोगः ।

अदितिनियोगाङ्गीकारं दर्शयति—**सर्वे प्रजापतिमभित उपविशन्तीति**। प्रजापतिमभितः = प्रजापतिं परिवार्येत्यर्थः ।

**एकैकं निर्दिशन्निति**। प्रत्येकमङ्गुल्या दर्शयन्नित्यर्थः ।

इत्थं कुर्वन् प्रजापतिस्तेषां संगममभिनन्दति—**दिष्ट्येति**। दिष्ट्या साध्वी शकुन्तला, इदं सदपत्यम्, भवान्, श्रद्धा वित्तं विधिः इति तत्त्रितयं च समागतम् इत्यन्वयः ।

दिष्ट्येति हर्षे । अहो हर्ष इत्यर्थः । साध्वी = पतिव्रता शकुन्तला, इदम्= अङ्गुल्या निर्दिश्यमानं सत् = अभ्यर्हितम्, "प्रशस्तेऽभ्यर्हिते च सत्" इत्यमरः। अपत्यं = पुत्रः सर्वदमनः । भवान्—इदमर्थान्तरसंक्रमितम् । तत्तद्गुणगरिष्ठो

राजा—भगवन् ! प्रागभिप्रेतसिद्धिः; पश्चाद्दर्शनम् । अतोऽपूर्वः खलु वोऽनुग्रहः ! कुतः !

---

भवान् राजोत्तमो दुष्यन्त इत्यर्थः । स्वानुभवगोचरं दृष्टान्तमाह—**श्रद्धेति** । श्रद्धा = आस्तिक्यबुद्धिः वित्तं = द्रव्यसंचयः विधिः = यागादिक्रिया; इति = एवंरूप तत् = तदेव प्रसिद्धं त्रितयं = त्र्यवयवं वस्तु समागतम् = एकत्र मिलितम् । तद्दिष्ट्येति सम्बन्धो वा ।

अत्र निदर्शना । त्रितयं वः समागतमिति पाठे एकैकं निर्दिशन्निति योजनया अभिरूपसमागमात्समालंकारः । वः संगमः, श्रद्धादीनां संगम इवेत्युपमा च गम्यते । तया च संगमस्य रम्यत्वम् , जगदभ्युदयहेतुत्वम्, पृथग्भावस्य शोच्यत्वादिकं च द्योत्यते । अनुष्टुप् वृत्तम् ।

मारीचः सकुटुम्बं राजानं पुरः समुपस्थितं विलोक्य तत्रैकैकं निर्दिशन् तेषां समागममभिनन्दति—'हे राजन् ! दिष्ट्यैव भवतां समागमो जातः । सुशीला पतिव्रता चेयं शकुन्तला, उभयकुलनन्दनः पुत्रोऽयं सर्वदमनः, सर्वसद्गुणगरिष्ठश्चक्रवर्ती दुष्यन्तश्च भवान्; तदेतत् वस्त्रितयं श्रद्धावित्तविधीनां त्रितयमिव परस्परं संगतं सत् जगदभ्युदयकारणं भवतु'इति भावः ॥ २९ ॥

राजा वदति—**भगवन्निति** । भगवन् = ऐश्वर्यादिगुणपरिपूर्ण !

देवानामपि ये देवा महात्मानो महर्षयः ।
भगवन्निति ते वाच्या यास्तेषां योषितस्तथा ॥

इति **भरतोक्ते**र्भगवन्निति संबुद्धिः । अनेन तदनुग्रहस्य सर्वाभीप्सितसाधनसमर्थत्वं सूच्यते । अभिप्रेतसिद्धिः—अभिप्रेतस्य = पुत्रकलत्रसंगमस्य सिद्धिः = संपत्तिः अपूर्वः = पूर्वं क्वचिदपि न दृष्टः । प्राक् फलं पश्चाद्दर्शनमित्यपूर्वता ।

उक्तमर्थमुपपादयति—**कुतः !—उदेतीति** । पूर्वं कुसुममुदेति, ततः फलम्;

उदेति पूर्वं कुसुमं ततः फलं
घनोदयः प्राक्तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं क्रम-
स्तव प्रसादस्य पुरस्तु संपदः ॥३०॥

प्राग् घनोदयः; तदनन्तरं पयः; अयं निमित्तनैमित्तिकयोः क्रमः; तव प्रसादस्य तु पुरः संपदः ( भवन्ति ) इत्यन्वयः ।

पूर्वं = प्रथमं कुसुममुदेति = पुष्पमाविर्भवति, ततः = तदनन्तरं तत्कर्म फलम् उदेति; प्राक् = आदौ घनोदयः = मेघोद्गमः, उदेतीत्यध्याहार्यम् । तदनन्तरं = ततः परं पयः = जलम् उदेति; अयम् = एषः निमित्तनैमित्तिकयोः = कार्यकारणयोः क्रमः = उक्तपूर्वापरीभावरूपो नियमः । प्रथमं कारणं पश्चात्कार्यमित्येव कार्यकारणयोः क्रम इत्यर्थः । अस्तीति शेषः । व्यतिरेकमाह—तवेति । तव प्रसादस्य तु = भवतोऽनुग्रहस्य तु, तुशब्दो विशेषे । पुरः = पूर्वं संपदः = तत्कार्यभूताः पुत्रकलत्रलाभरूपाः संपत्तयः । नैमित्तिक्यः संपदो मम पूर्वमासन्, निमित्तभूतस्तव प्रसादस्तु पश्चादिति विशेष इत्यर्थः । अतः अपूर्व इति संबन्धः ।

अत्र विस्मयो भावः । उदेतीति क्रियायाः सर्वत्र योजनात् क्रियादीपकम् । प्रसादस्य पूर्वं संपद इति कार्यकारणविपर्ययादतिशयोक्तिः । मम कलत्रपुत्रलाभ इति प्रस्तुतं विशेषमनुक्त्वा संपद इति सामान्यवचनादप्रस्तुतप्रशंसा । वंशस्थं वृत्तम् ।

पुत्रकलत्रलाभं मारीचप्रसादोपनतं मन्यमानो राजा महर्षिं मारीचं स्तुवन्नाह—'भगवन् ! महात्मनां भवादृशां दर्शनमभिप्रेतसाधकं भवतीति किमत्राश्चर्यम् ? मम तु भवद्दर्शनात् प्रागेव अभीप्सितार्थसिद्धिर्जातेत्यपूर्वो मयि भव-

मातलिः—एवं विधातारः प्रसीदन्ति ।

राजा—भगवन् ! इमामाज्ञाकरीं वो गान्धर्वेण विवाहविधिनोपयम्य कस्यचित्कालस्य बन्धुभिरानीतां स्मृतिशैथिल्यात्प्रत्यादिशन्नपराद्धोऽस्मि तत्रभवतो युष्मत्सगोत्रस्य कण्वस्य । पश्चादङ्गुलीयकदर्शना-

---

तामनुग्रह इति मन्ये । तथा हि—लोके पूर्वं कुसुमोदयो दृश्यते, पश्चात्तत्कार्यं फलमाविर्भवति । एवमेव पूर्वं मेघमण्डलस्याविर्भावः, पश्चात्तत्कार्यं जलवर्षणम् । अयमेव कार्यकारणयोः पूर्वापरीभावक्रमो लोके नियतः । लोकोत्तरतपःसिद्धेर्भगवतस्तु दर्शनप्रदानरूपप्रसादप्राप्तेः पूर्वमेव तत्फलभूतपुत्रकलत्रलाभसंपत्तिर्मे जाता । तस्मात् धन्योऽहं भगवत्पादानामीदृशानुग्रहभाजनमस्मि' इति भावः ॥३०॥

नात्र विस्मयस्यावकाश इत्याशयेन मातलिराह—**एवमिति** । एवम् = अनेन विधिना विधातारः = ईश्वराः, समर्थपुरुषा इत्यर्थः । प्रसीदन्ति = अनुगृह्णन्ति । भवताऽयं लौकिकः कार्यकारणभाव उक्तः; अलौकिकस्तु भिन्न एव क्रमः । इच्छासिद्धय ईशा यदेवेच्छन्ति, तत्क्षणं तदेव संपद्यत इति भावः ।

अथ प्रियाविस्मरणकारणं जिज्ञासमानः पृच्छति—**भगवन्निति** । अनेन दिव्यज्ञानसंपत्तिः प्रकाश्यते । वः = युष्माकम् आज्ञाकरीं = परिचारिकां शकुन्तलाम् ( अङ्गुल्या निर्देशः ) । वः आज्ञाकरीमिति विनयोक्तिः । उपयम्य = परिणीय कस्यचित्कालस्य—अनन्तरमिति शेषः । किंचित्कालानन्तरमित्यर्थः । आनीतां = मत्समीपमुपस्थापितां स्मृतिशैथिल्यात् = स्मृतेर्दुर्बलत्वात् । अनेन न तत्त्वतः स्मृतेरभाव इति सूचितम् । तेन स्थायिन्या रतेरविच्छेदः । प्रत्यादिशन् = निराकुर्वन् । युष्मत्सगोत्रस्य = भवद्वंशीयस्येत्यर्थः । तत्रभवतः = पूज्यस्य, कण्वस्येति संबन्धसामान्ये षष्ठी । अपराद्धोऽस्मि = कृतापराधोऽस्मि । पश्चात् =

दूढपूर्वां तद्दुहितरमवगतोऽहम् । तच्चित्रमिव मे प्रतिभाति !

यथा [1]गजो नेति समक्षरूपे
[2]तस्मिन्नपक्रामति संशयः स्यात् ।
पदानि दृष्ट्वा तु भवेत्प्रतीति-
स्तथाविधो मे मनसो विकारः ॥३१॥

प्रत्याख्यानकृतादपराधात्परम् ऊढपूर्वां = पूर्वं परिणीताम् । अवगतोऽहं = ज्ञातवानहम् । तत् = साक्षाद्दृष्टायामज्ञानम्, अङ्गुलीयकदर्शनाज्ज्ञानं चित्रमिव = आश्चर्यमिव ।

अथ स्वप्रतीतेरसंभवदृष्टान्तप्रदर्शनेन चित्रत्वमुपपादयति—यथेति । यथा समक्षरूपे गजो न इति, अपक्रामति तस्मिन् संशयः स्यात्, पदानि दृष्ट्वा तु प्रतीतिः भवेत्, मे मनसो विकारस्तथाविधः ( अस्ति ) इत्यन्वयः ।

यथा = येन प्रकारेण, यादृशेन विकारेणेत्यर्थः । समक्षरूपे—समक्षं = प्रत्यक्षं रूपं = स्वरूपं यस्य तादृशे कस्मिंश्चित्सत्त्वे गजो न = नायं हस्तीति ! मिथ्या ज्ञानम्, ततः अपक्रामति = तिरोहिते सति तस्मिन् = गजो नेति मिथ्याज्ञानविषयीभूते तस्मिन् सत्त्वे संशयः स्यात् = गजो वा न वेति संदेहः स्यात्, पदानि = भूमौ पादन्यासप्रतिबिम्बानि । तस्येति विपरिणामेन तस्मिन्नित्यस्यात्रानुषङ्गः । दृष्ट्वा = विलोक्य प्रतीतिः = सत्यं मया दृष्टो गज एवेति सत्प्रत्ययो भवेत्; मे = मम मनसो विकारः = चित्तभ्रमः, पूर्वमस्यामुपस्थितायामियं न मम भार्येति, पुनस्तिरोहितायां भार्या वा न वेति, पश्चादङ्गुलीयकदर्शने मम भार्यैवेति

१ गजे साधु । २ कस्मिन्नपि ।

मारीचः---वत्स ! अलमात्मापराधशङ्कया ! संमोहोऽपि त्वय्यु[1]-पपन्नः । श्रूयताम् ।

---

च प्रतीतिरित्यर्थः । तथाविधः = तादृशः अस्ति । अङ्गुलीयकदर्शनसाध्या प्रतीतिः साक्षाद्दर्शनेन कथं न जातेति चित्रं मया न बुध्यत इति भावः ।

अत्र उपमा, निदर्शना वा । इन्द्रवज्रोपेन्द्रवज्रयोर्द्वादशी उपजातिः ।

पूर्वं शकुन्तलाया विस्मरणम्, पश्चादङ्गुलीयकदर्शनेन स्मृत्युद्गमश्चेति स्वमनोव्यापारस्य] हेतुमजानन् राजा तद्विषये ऋषिं जिज्ञासति—'भगवन् ! इमां च आज्ञाकारीं शकुन्तलां गान्धर्वेण विधिना परिणीय स्वनगरं प्रत्यागतोऽहं पश्चात् महर्षिणा कण्वेन स्वशिष्यैः सह प्रेषितां तां न प्रत्यभ्यजानाम् । अपसृतायां तस्यां धीवरद्वारा स्वकीयमङ्गुलीयकं लब्ध्वा समुद्भूतस्मृतिरद्य यावत्पश्चात्तापेन तप्यमानोऽभवम् । किमिदम् ? यथा प्रत्यक्षं पुरः समुपस्थिते गजे नायं गज इति मिथ्याज्ञानं स्यात्, तस्मिन्नपसरति अयं गजो वा न वेति संशयः स्यात्, तस्य पादन्यासप्रतिबिम्बानि दृष्ट्वा सत्यं गज एवेति निश्चयः स्यात् । तथैव मे मनोविकारोऽपि । प्रियायां शकुन्तलायां स्वयमुपस्थितायाम् इयं न मम भार्येति मिथ्याज्ञानमुदभूत् । तिरोहितायां तस्यां भार्या वा न वेति संशयः समुदपद्यत, पश्चादङ्गुलीयकदर्शनेन मम भार्यैवेति च दृढप्रतिपत्तिर्जाता । अङ्गुलीयकदर्शन-साध्या प्रतीतिः साक्षाद्दर्शनेन कथं न जातेति महदाश्चर्यमस्ति' इति भावः ॥३१॥

मारीचो राजानं सान्त्वयन्नाह—**वत्सेति** ! आत्मापराधशङ्कया = अपराद्धोऽहं कण्वस्येति ज्ञानेनेत्यर्थः । अलम् = ईदृशी शङ्का माऽस्त्वित्यर्थः । सर्वदा प्रबुद्धस्य मम कथं तदा संमोहोऽभूदित्याशङ्कामप्यपनयति—**संमोहोऽपीति** ! संमोहोऽपि—

---

१ त्वय्यनुपपन्नः ।

**राजा**—अवहितोऽस्मि।

**मारीचः**—यदैवाप्सरस्तीर्थावतरणात्प्रत्यक्षवैक्लव्यां शकुन्तलामादाय मेनका दाक्षायणीमुपगता तदैव ध्यानादवगतोऽस्मि दुर्वाससः शापादियं तपस्विनी सहधर्मचारिणी[४] त्वया प्रत्यादिष्टा नान्यथेति। स चायमङ्गुलीयकदर्शनावसानः।

**राजा**—(सोच्छ्वासम्) एष वचनीयान्मुक्तोऽस्मि!

---

त्वयि यस्तदा संमोहः = चेतोविकृतिरभूत् सोऽपि उपपन्नः = युक्त एव, कारणाधीन इत्यर्थः। श्रूयतां = संमोहकारणं वर्णयामि, आकर्णयेत्यर्थः। राजा वदति—**अवहितोऽस्मीति**।

मारीचः संमोहकारणमुपपादयति—**यदैवेति**। अप्सरस्तीर्थावतरणात्—अप्सरस्तीर्थे = शक्रतीर्थे यदवतरणं = पर्यायप्राप्तं सान्निध्यं कर्तुं गमनं तस्माद्धेतोः प्रत्यक्षवैक्लव्याम्—प्रत्यक्षं = साक्षाद् दृष्टं वैक्लव्यं कातरता यस्यास्तां दाक्षायणीं = दक्षकन्यामदितिम् उपगता = प्राप्ता, स्वयं कन्यायाः शोकं पश्यन्ती अनुकम्पमाना तां गृहीत्वा प्राप्तेत्यर्थः। तदैव = तस्मिन्नेव क्षणे ध्यानादवगतोऽस्मि = योगजेन प्रत्यक्षेण ज्ञातवानस्मि दुर्वाससः = तन्नाम्नो महर्षेः शापात् = अनिष्टाशीर्वचनात् तपस्विनी = दीना प्रत्यादिष्टा = प्रत्याख्याता; नान्यथा = नापरोऽत्र हेतुः। स च = अयं शापः अङ्गुलीयकदर्शनावसानः = अङ्गुलीयकदर्शनमवसानं यस्य सः, अङ्गुलीयकदर्शनमात्रोद्धार इत्यर्थः।

**सोच्छ्वासमिति**। उच्छ्वासो भयविच्छेदानुभावः। भयं च लोकापवादात्। तदेव दर्शयन् राजा आह—**एष इति**। एषः = अयमहं वचनीयात् = लोकाप-

---

४ सहधर्मचारिणा।

**शकुन्तला**—( स्वगतम् ) दिट्ठिआ अकारणपच्चादेसी ण अज्जउत्तो ! ण हु सत्तं अत्ताणं सुमरे मि ! अहवा पत्तो मए स हि सावो विरहसुण्णहिअआए ण विदिदो । अदो सहीहिं संदिट्ठह्मि भत्तुणो अङ्गुलीअअं दंसइदव्वं त्ति ।

दिष्ट्याऽकारणप्रत्यादेशी नार्यपुत्रः ! न खलु शप्तमात्मानं स्मरामि ! अथवा प्राप्तो मया स हि शापो विरहशून्यहृदयया न विदितः । अतः सखीभ्यां संदिष्टाऽस्मि भर्तुरङ्गुलीयकं दर्शयितव्यमिति ।

**मारीचः**—वत्से ! विदितार्थाऽसि । सहधर्मचारिणं प्रति न त्वया

---

वादात् मुक्तोऽस्मि, धर्मदारत्यागी अयं दुष्यन्तः, अस्य नाम न वक्तव्यमिति या मे निन्दाऽऽसीत्साऽद्यापगतेत्यर्थः ।

राजकृतप्रत्याख्यानकारणं ज्ञात्वा शकुन्तला स्वगतमाह—**दिट्ठिआ** इति । 'दिष्ट्या अकारणप्रत्यादेशी नार्यपुत्रः । न खलु शप्तमात्मानं स्मरामि ! अथवा प्राप्तो मया स हि शापो विरहशून्यहृदयया न विदितः । अतः सखीभ्यां संदिष्टाऽस्मि, भर्तुरङ्गुलीयकं दर्शयितव्यमिति' इति संस्कृतम् । दिष्ट्येति हर्षे । अकारणप्रत्यादेशी = अकारणपरित्यागी न । आर्यपुत्रेण शापकारणादेवाहं प्रत्यादिष्टा, न त्वकारणमिति नात्र आर्यपुत्रस्य दोषः । विरहशून्यहृदयया = विरहवशादचेतस्कयेत्यर्थः । सखीभ्यां संदिष्टाऽस्मि—प्रत्यभिज्ञानमन्थरायार्यपुत्राय अङ्गुलीयकं दर्शयितव्यमित्याश्रमपरित्यागकाले सखीभ्यामुक्ताऽस्मीत्यर्थः । असति शापे ताभ्यामेवमुक्तं न भवेत् ।

अथ शकुन्तलायाः संशयं समूलमुन्मूलयितुं मारीचस्तामाह—**वत्से !** इति । विदितार्था = ज्ञातवस्तुतत्त्वा सहधर्मचारिणं = पतिम् । मन्युः = कोपः । सहधर्मचारिणमित्यनेन तं प्रति मन्युकरणे प्रत्यवायः स्यादित्यपि सूच्यते ।

मन्युः कार्यः । पश्य,

शापादसि प्रतिहता स्मृतिरोधरूक्षे
भर्तर्यपेततमसि प्रभुता तवैव ।
छाया न मूर्च्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभावकाशा ॥३२॥

---

मारीचो दुष्यन्तकृतप्रत्याख्यानस्य वास्तविकं हेतुं दर्शयन्नाह—**पश्य**,—**शापादिति**। शापात् स्मृतिरोधरूक्षे भर्तरि प्रतिहता असि। अपेततमसि (तस्मिन्) तवैव प्रभुता (अस्ति)। छाया मलोपहतप्रसादे दर्पणतले न मूर्च्छति, शुद्धे तु सुलभावकाशा (भवति) इत्यन्वयः।

शापात् = दुर्वाससा दत्तादनिष्टाशीर्वचनात् स्मृतिरोधरूक्षे—स्मृतेः = स्मरणस्य रोधः = स्मरणावरकं तम इत्यर्थः। तेन रूक्षे = निःस्नेहे इव कर्कशे, अमसृणे इत्यर्थः। भर्तरि = पत्यौ, पत्युर्मनसीत्यर्थः। प्रतिहताऽसि = प्राप्तप्रतिघाताऽसि, अलब्धप्रवेशाऽसि, भर्त्रा प्रत्याख्याताऽसीत्यर्थः। शापादिति स्मृतिरोधेत्यत्र हेतुः। तेन राज्ञो दोषाभावः प्रकाश्यते। अपेततमसि—अधुना अपेतं = दूरीभूतं तमः = शापलक्षणं स्मृतिरोधकमज्ञानं यस्मात्तस्मिन्, अङ्गुलीयकदर्शनेन शापनिवृत्त्या विगताज्ञाने इत्यर्थः। भर्तरीत्यनुषज्यते। तवैव = भवत्या एव प्रभुता = सामर्थ्यमस्ति। सुप्रतिपत्तये दृष्टान्तमाह—**छायेति**। छाया = प्रतिबिम्बं मलोपहतप्रसादे—मलेन = आगन्तुकेन दोषेण, श्यामिकयेत्यर्थः। उपहतः = दूरीकृतः प्रसादः = निर्मलता यस्य तस्मिन् दर्पणतले—दर्पणस्य = आदर्शस्य तले = पृष्ठे न मूर्च्छति = न प्रसरति। शुद्धे तु = निर्मले पुनस्तस्मिन् सुलभावकाशा—सुलभः = सुखप्राप्यः अवकाशः = स्थानं यया तादृशी भवति। अत्यन्तं व्यक्ता दृश्यत इत्यर्थः।

राजा—यथाऽऽह भगवान् ।

मारीचः—वत्स ! कच्चिदभिनन्दितस्त्वया विधिवदस्माभिरनुष्ठितजातकर्मा पुत्र एष शाकुन्तलेयः ?

---

अत्र दृष्टान्तोऽलंकारः । तेन राज्ञो मनःप्रसादस्य नैसर्गिकत्वं सूच्यते । वसन्ततिलका वृत्तम् ।

महर्षिर्मारीचः शकुन्तलामुपदिशन्नाह—'वत्से शाकुन्तले ! दुर्वासःशापप्रभावादेव प्रतिरुद्धस्मरणेन भर्त्रा प्रत्याख्याताऽसीति प्रत्याख्यानस्य वास्तविकं हेतुं जानासि । नात्र तव भर्तुः कश्चिद्दोषः । अतस्तं प्रति भवत्या नेषदपि कोपः कार्यः । स तु पुरेव त्वयि बाढं सस्नेहोऽस्ति । पश्य, यदा शापप्रभावात् तव भर्तुश्चेतः अज्ञानावृतमासीत्, तदैव त्वं तत्र लब्धप्रवेशा नाभूः । इदानीमङ्गुलीयकदर्शनेन शापनिवृत्त्या विगताज्ञाने तस्य चेतसि तवैव प्रभुताऽस्ति । त्वां विहाय नान्या तस्य हृदयेश्वरी भवितुमर्हति । आगन्तुकेन श्यामिकादिदोषेण मलिनतामुपगते दर्पणतले प्रतिबिम्बं न प्रसरति । मृजावदाते पूर्ववन्निर्मले तस्मिन् पुनस्तदेव प्रतिबिम्बं सुखेनावकाशं प्राप्नोति । तथैव त्वमपि पत्युश्चेतसि लब्धप्रवेशा तस्य हृदयेश्वरी भूत्वा सुखमास्स्व' इति भावः ॥ ३२ ॥

राजा मारीचोक्तमनुवदति—**यथाऽऽह भगवानिति** । मारीचो राजानं पुनः पृच्छति—**वत्सेति** । कच्चिदिति कामप्रवेदने । अस्माभिः = मया आश्रमस्थऋषिगणसाहाय्येन विधिवत् = यथाविधि अनुष्ठितजातकर्मा—अनुष्ठितं=संपादितं जातकर्म = जननोत्तरं सद्य एव विधातव्यः संस्कारविशेषो यस्य तथाविधः एष पुत्रः—एष इत्यङ्गुल्या निर्देशः । शाकुन्तलेयः = शकुन्तलानन्दनः त्वया अभिनन्दितः कच्चित्—उत्सङ्गादानादिना त्वया संभावितो भवत्विति मे काम इत्यर्थः ।

**राजा**—भगवन् ! अत्र खलु मे वंशप्रतिष्ठा ।

**मारीचः**—तथा भाविनमेनं चक्रवर्तिनमवगच्छतु भवान् । पश्य,

रथेनानुद्घातस्तिमितगतिना तीर्णजलधिः
 पुरा सप्तद्वीपां जयति वसुधामप्रतिरथः ।
इहायं सत्त्वानां प्रसभदमनात्सर्वदमनः
 पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात् ॥ ३३ ॥

---

राजा वंशस्याविच्छेदमवजिगमिषुर्मुनिं पृच्छति—**भगवन्निति**। काक्वा प्रश्नः । अत्र खलु = अस्मिन् शाकुन्तलेये बालके एव मे = मम वंशप्रतिष्ठा—वंशस्य = कुलस्य प्रतिष्ठा = स्थितिः, पुरुवंशसंततेरयं निदानम् । मारीच उत्तरयति—**तथा भाविनमिति** । तथा भाविनं = वंशप्रतिष्ठाकरं भविष्यन्तं चक्रवर्तिनं = सम्राजं च अवगच्छतु = जानातु । अयं भवतो वंशप्रतिष्ठाकरश्चक्रवर्ती च भविष्यतीति भवता ज्ञातव्यमित्यर्थः ।

चक्रवर्तित्वमुपपादयति—**पश्य,—रथेनेति** । अयम् अप्रतिरथः अनुद्घातस्तिमितगतिना रथेन तीर्णजलधिः पुरा सप्तद्वीपां वसुधां जयति । इह सत्त्वानां प्रसभदमनात् सर्वदमनः । पुनः लोकस्य भरणात् भरत इति आख्यां यास्यति इत्यन्वयः ।

अयम् = एष शाकुन्तलेयः अप्रतिरथः—न विद्यते प्रतिद्वन्द्वी रथो यस्य सः अप्रतिरथः, निःसपत्न इत्यर्थः । अनुद्घातस्तिमितगतिना—अनुद्घातेन = उद्घाताभावात्, शत्रुकृतप्रतिरोधविरहादित्यर्थः । स्तिमिता = स्थिरा, निश्चला, अविक्षुब्धेति यावत् । गतिर्यस्य तादृशेन रथेन = स्यन्दनेन तीर्णजलधिः—तीर्णाः = लङ्घिताः

राजा—भगवता कृतसंस्कारे सर्वमस्मिन्वयमाशास्महे ।

---

जलधयः = सप्तद्वीपपरिखाभूताः सप्त सागरा येन तथाविधः सन् पुरा सप्तद्वीपाम्—सप्त = पुष्करक्रौञ्चादीनि द्वीपानि यस्यां तां वसुधां = रत्नधात्रीं पृथिवीं जयति = जेष्यति । पुरा इति भविष्यदासत्तौ अव्ययम् । तद्योगे "यावत्पुरानिपातयोर्लट्" इति लट् । इह = आश्रमे सत्त्वानां = सिंहव्याघ्रादीनां प्राणिनां प्रसभदमनात्—प्रसभं = हठेन दमनात् = शासनाद्धेतोः सर्वदमनः = सर्वदमन इत्याख्यां प्राप्तः । पुनः = भूयोऽपि लोकस्य = जनस्य, भुवनस्य वा, "लोकस्तु भुवने जने" इत्यमरः । भरणात् = रक्षणात्, पोषणाद्वा भरत इति आख्यां = नाम यास्यति = लप्स्यते ।

अत्र भाविकं काव्यलिङ्गं च । शिखरिणी वृत्तम् ।

राज्ञा शाकुन्तलेयस्य स्वपुत्रस्य वंशप्रतिष्ठाकरत्वमुद्दिश्य पृष्टो महर्षिर्मारीचस्तस्य भाविशुभफलं वर्णयन्नाह—'राजन् ! सत्यमसौ शाकुन्तलेयस्ते पुत्रो वंशप्रतिष्ठाकरो भविष्यति । किंच चक्रवर्त्यप्यसौ भविष्यति । पश्य, यदाऽसौ दिग्विजयाय प्रस्थास्यते, तदा मध्येमार्गं केऽपि शत्रवो नैनं रोद्धुमागच्छेयुः । तथा च शत्रुकृतप्रतिरोधाभावात् निश्चलाविक्षुब्धगतिः सानन्दं रथेन गच्छन्नसौ भुवं जेष्यति । सप्तद्वीपपरिखाभूतान् सप्तसागरांश्च लङ्घयित्वा सप्तद्वीपां वसुमतीं विजित्य एकच्छत्रः सम्राडसौ भविष्यति । इहास्माकमाश्रमे जानुचङ्क्रमणावस्थात एवासौ सिंहव्याघ्रादीन् क्रूरानपि प्राणिनः प्रसभं दमयतीति अस्माभिः सर्वदमन इत्याख्ययैवाहूतोऽस्ति । किंच अग्रे असौ जनानां रक्षणात्, भुवनानां पोषणाच्च भरत इत्याख्यां लप्स्यते । तथा च महाप्रभावश्चिरायुः सौभाग्यसंपन्नश्चायं ते पुत्रः । अस्य भाविसौभाग्यविषये भवता निश्चिन्तेन भाव्यम्' इति भावः ॥३३॥

मारीचोक्तं श्रुत्वा राजा वदति—भगवतेति । कृतसंस्कारे—कृतः = विहितः

**अदितिः**—भअवं ! इमाए दुहिदुमणोरहसंपत्तीए कण्णो वि दाव सुदवित्थारो करीअदु । दुहिदुवच्छला मेणआ इह एव्व उपचरन्ती चिट्ठदि ।

भगवन् ! अनया दुहितृमनोरथसंपत्त्या कण्वोऽपि तावच्छ्रुतविस्तारः क्रियताम् । दुहितृवत्सला मेनकेहैवोपचरन्ती तिष्ठति ।

**शकुन्तला**—( आत्मगतम् ) मणोरहो क्खु मे भणिदो भअवदीए !

मनोरथः खलु मे भणितो भगवत्या !

---

संस्कारः = जातकर्मादिर्यस्य तस्मिन् शाकुन्तलेये आशास्महे = संभावयामः । सर्वाः संपदोऽस्य भगवत्कृतसंस्कारशक्तिमूलाः संपत्स्यन्ते इत्याशयः ।

अथ अदितिः कर्तव्यं विमृश्याह— **भअवं** इति । 'भगवन् ! अनया दुहितृमनोरथसंपत्त्या कण्वोऽपि तावत् श्रुतविस्तारः क्रियताम् । दुहितृवत्सला मेनका इहैवोपचरन्ती तिष्ठति' इति संस्कृतम् । दुहितृमनोरथसंपत्त्या—दुहितुः = शकुन्तलायाः यो मनोरथः = अभिलाषः भर्त्रा प्रतिग्रहरूपः तस्य या संपत्तिः = सिद्धिस्तया । श्रुतविस्तारः—श्रुतः = आकर्णितः विस्तारः = व्यासोक्तिः, आमूलवर्णनं येन तादृशः क्रियताम्, कण्वस्याप्येतदभ्युदयसंविभागो भवत्विति भावः । दुहितृवत्सला—दुहितरि = शकुन्तलायां वत्सला = स्नेहवती । इहैव = आश्रमे एव उपचरन्ती = सेवमाना । श्रुतविस्तारैव सेत्याशयः ।

शकुन्तला अदित्युक्तमभिनन्दति— **मणोरहो** इति । 'मनोरथः खलु मे भणितो भगवत्या' इति संस्कृतम् । यदहमिच्छामि तदेव भगवत्या प्रस्तुतमित्यर्थः ।

**मारीचः**—तपःप्रभावात्प्रत्यक्षं सर्वमेव तत्रभवतः ।

**राजा**—अतः खलु मम नातिक्रुद्धो मुनिः !

**मारीचः**—तथाप्यसौ प्रियमस्माभिः प्रष्टव्यः । कः कोऽत्र भोः ?

( प्रविश्य )

**शिष्यः**—भगवन् ! अयमस्मि ।

**मारीचः**—गालव ! इदानीमेव विहायसा गत्वा मम वचनात्तत्रभवते कण्वाय प्रियमावेदय यथा पुत्रवती शकुन्तला तच्छापनिवृत्तौ स्मृतिमता दुष्यन्तेन प्रतिगृहीतेति ।

---

मारीच उत्तरयति—**तपःप्रभावादिति** । कण्वस्य महर्षेः सति ध्याने सर्वमेव प्रत्यक्षं भवति, अतो नात्र संदेष्टव्यमित्यर्थः ।

राजा वदति—**अत इति** । अतः = अस्माद्धेतोः, ध्यानबलाद्विदितस वृत्तान्तत्वादित्यर्थः । मुनिः = कण्वः नातिक्रुद्धः = लघुकोप एवेत्यर्थः ।

अथ मारीचो लौकिकविचारमनुसरन्नाह—**तथापीति** । तथापि = कण्वे ध्यानबलाद्विदितवृत्तान्तेऽपि । असौ अस्माभिः प्रियं प्रष्टव्यः = 'प्रियमेतद्वृत्तं विदितं किं ते ?' इत्याभाषितव्यः । कः कोऽत्रेति संदेशप्रेषणार्थम् । शिष्यः प्रविश्य वदति— **भगवन्निति** । मारीचस्तमाज्ञापयति— **गालवेति** । गालवेति शिष्यनाम । इदानीमेवेत्यविलम्बार्थम् । विहायसा = आकाशमार्गेण । एतेन शीघ्रगमनं सूच्यते । मम वचनात् = मम वचनमवलम्ब्य, ल्यब्लोपे पञ्चमी । तच्छापनिवृत्तौ—तस्याः = शकुन्तलायाः शापः, तया प्राप्तत्वात्; तस्य निवृत्तौ = अवसाने

**शिष्यः**——यदाज्ञापयति भगवान् । (इति निष्क्रान्तः ।)

**मारीचः**——वत्स ! त्वमपि स्वापत्यदारसहितः सख्युराखण्डलस्य रथमारुह्य ते राजधानीं प्रतिष्ठस्व ।

**राजा**——यदाज्ञापयति भगवान् ।

**मारीचः**——वत्स ! किं ते भूयः प्रियमुपकरोमि ?

**राजा**——अतः परमपि प्रियमस्ति ? यदिह भगवान्प्रियं कर्तुमिच्छति तर्हीदमस्तु भरतवाक्यम्—

---

स्मृतिमता = लब्धस्मृतिना । मारीचादेशं मानयन् शिष्य आह—**यदाज्ञापयतीति** ।

अथोपसंहर्तुमिच्छन् मारीचो राजानमाह—**वत्सेति** । स्वापत्यदारसहितः—अपत्येन = शाकुन्तलेयेन दारैः = शकुन्तलया च सहितः । आखण्डलस्य = इन्द्रस्य । तद्वचनं मानयन् राजा आह—**यदाज्ञापयतीति** ।

इत्थं पत्नीपुत्रप्राप्तिप्रमुदितं शक्रस्य रथमारुह्य स्वराजधानीं प्रतिष्ठमानं राजानं पुनरपि प्रियचिकीर्षया मारीचो वदति—**वत्सेति** । ते = तव भूयः = पुनरपि, पत्नीपुत्रप्राप्त्यधिकमित्यर्थः । प्रियम् = इष्टम् । अनेन मारीचस्यौदार्यं कविना प्रकाश्यते । राजा मुनिं प्रार्थयते—**अतः परमिति** । अतः = अस्मात्, मनोरथसिद्धेः, आशिषश्चेत्यर्थः । परम् = अधिकं प्रियमस्ति किम् ? नास्त्येवेति काकुः । तथापि यदि भगवान् किमपि प्रियं चिकीर्षत्येव तर्हि इदं = वक्ष्यमाणं भरतवाक्यम्—भरतस्य = नटस्य वाक्यं = वचनम् । भरतः = नटः तस्य प्रस्तुतानुकार्याभेदेन मङ्गलाशासनतत्परं वाक्यमित्यर्थः । निर्वहणसन्धेरन्त्यं प्रशस्तिरूपमङ्गमिदम् ।

प्रवर्ततां प्रकृतिहिताय पार्थिवः

सरस्वती [1]श्रुतिमहतां महीयताम् ।

ममापि च क्षपयतु नीललोहितः

पुनर्भवं परिगतशक्तिरात्मभूः ॥३४॥

( इति निष्क्रान्ताः सर्वे । )

—*—

इति सप्तमोऽङ्कः ।

❀ समाप्तमिदमभिज्ञानशाकुन्तलं नाम नाटकम् ❀

---

इदमित्यादिनोक्तं भरतवाक्यमाह—**प्रवर्ततामिति**। पार्थिवः प्रकृतिहिताय प्रवर्तताम् । श्रुतिमहतां सरस्वती महीयताम् । परिगतशक्तिः आत्मभूः नीललोहितः ममापि च पुनर्भवं क्षपयतु इत्यन्वयः ।

पार्थिवः = पृथ्वीपतिः प्रकृतिहिताय—प्रकृतिः = सप्ताङ्गी तस्या हिताय, न स्वात्मतुष्टये, पौरश्रेणिहितं कर्तुमेवेत्यर्थः । प्रवर्ततां = तत्रैव सर्वात्मना संसक्तो भवतु । प्रवर्ततामित्यनेन तथा सत्येव प्रजानां राज्ञश्च सुखमिति सूच्यते । अनेन राजानं लोकं प्रति चाशीः कृता । विदुषामाशिषमाह—**सरस्वतीति**। श्रुतिमहताम्—श्रुत्या = वेदज्ञानेन शास्त्रश्रवणेन वा महतां = गरिष्ठानाम्, अनूचानानां ब्राह्मणानामित्यर्थः । सरस्वती = वाणी महीयताम् = उत्कृष्टां पूजां लभताम् । यद्वा श्रुतिमहितेति पाठे श्रोत्रेन्द्रियपूजिता चमत्कारकारिणीत्यर्थः, सरस्वती = कविवाणीति योजना । आत्मनो विषये आशिषमाह—**ममापीति**।

---

१ श्रुतिमहती न हीयताम् ।

परिगतशक्तिः—परिगता = मिलिता, नित्यसमवायिनी, देहार्धतादात्म्यमापन्नेति यावत् । शक्तिः = शिवा यस्य तादृशः । तथा चोक्तम् ।

वामे मरकतश्यामा दक्षिणे विद्रुमारुणा ।
देवता दम्पतिमयी सा मे कामदुघा भवेत् ॥ इति ।

आत्मभूः—आत्मना भवतीत्यात्मभूः परमेश्वरः, नीललोहितः = वामे नीलः दक्षिणे लोहितश्चेति, शिव इत्यर्थः । विशेषणाभ्यामुपास्यस्वरूपं दर्शितम् । ममापि= तपोऽनुष्ठानादिकमकुर्वतोऽपि तद्भक्तस्य ममापीत्यर्थः । पुनर्भवं = पुनर्जन्म, संसारे पुनर्यातायातमित्यर्थः । क्षपयतु = विच्छिनत्तु, दूरीकरोत्वित्यर्थः ।

अत्र परिगतशक्तिरित्यनेन शक्तिसेवाद्वारा पुनर्जन्मनिवृत्तिरिति, आत्मभूरित्यनेन शक्तिस्तदायत्तेति च द्योत्यते । समुच्चयालंकारः । परमेश्वरविषयकरतिश्च भावः । अत्र परममाहेश्वरेण महाकविना कालिदासेनोपक्रमोपसंहारयोरेकरूपं मङ्गलमनुतिष्ठता प्रकृतपद्ये स्वाशंसाऽपि प्रकाशिता । तथाहि—सरस्वती=कविताऽऽत्मिका मम वाणी श्रुतिमहतां = विदुषां सविधे महीयतां = प्रकर्षेण संमानं लभतामिति । किञ्च महाकविना प्रकृतपद्ये भगवतः शंकरस्य सकल-सकलनिष्कल-निष्कलेषु स्वरूपेषु सकलस्यैव त्रिलोचनत्वनीलकण्ठत्वत्रामार्धविग्रहत्वादिविशिष्टस्य स्वरूपस्य सकलसाधकाभीष्टप्रदानसामर्थ्यं संभावयता तदेवात्र वर्णितम् । रुचिरा वृत्तम् ।

मारीचप्रसादात् पूर्णमनोरथोऽपि राजा पुनरपि प्रियं चिकीर्षन्तं तं प्रार्थयते—'भगवन् ! भवत्प्रसादात् पूर्णमनोरथोऽस्मि । नातः परं किमपि प्रियं संभाव्यते । तथापि यदि भगवान् प्रियं चिकीर्षत्येव, तर्हि इदमस्तु—भूपालः आत्मनः सर्वाः क्रियाः प्रकृतिहितेष्वेव नियोजयन् स्वसुखनिरपेक्षः सन् सर्वदा प्रजाहिते एव प्रवर्तताम् । राज्ञः सुशासनेन निरस्तसमस्तोपद्रवाः विद्वांसोऽनूचाना ब्राह्मणा वेदाध्ययनादौ प्रवर्तन्ताम् । महाकवीनां सरसाः कविताश्च रसिकानां हृदयेषु

चमत्कारं जनयन्त्यः सर्वत्र संमानं लभन्ताम् । भगवत्प्रसादाल्लब्धैहिकसकलभोगस्य भगवद्भक्त्येकशरणस्य ममापि समस्तशक्तिचक्रैकनायकः सर्वेश्वर आत्मभूरुमासहायः परमेश्वरः संसारबीजभूतवासनानिवर्तकशुद्धज्ञानप्रदानद्वारा जन्मान्तरं संसारे यातायातं च निवर्तयतु । तावताऽहं कृतकृत्यो भवेयम्' इति भावः ॥ ३४ ॥

इति नारायणोन्नीते लक्ष्मीरित्यभिधाऽङ्किते ।
शाकुन्तलस्य व्याख्याने सप्तमोऽङ्कः समाप्तिमैत् ॥

इति श्रीमन्नारायणशास्त्रिणा प्रणीतायामभिज्ञानशाकुन्तलाभिनवटीकायां
लक्ष्मीसमाख्यायां सप्तमोऽङ्कः ।



श्रीगङ्गाधरसद्गुरुप्रतिफलत्सारस्वतज्योतिषः
श्रीरामाङ्घ्रिनिषेवणाप्तसुमतेः संतीर्णशास्त्राम्बुधेः ।
श्रीमद्भैरवनायकात्मजनुषः सद्धर्मलक्ष्मीजुषः
श्रीनारायणशर्मणः कृतिरियं विद्वन्मुदे जायताम् ॥

——:०:——

# श्लोकसूची ।